अनिमिषं चरंतीर्न ये वातस्य प्रमिनंत्यभ्वं ॥६॥ अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः। नीचीनाः स्थुरुपरि बुध्न एषामस्मे अंतर्निहिताः केतवः स्युः ॥७॥ उरुं हि राजा वरुणश्चकार सूर्याय पंथामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥८॥ शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु। बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥९॥ अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि विचाकशच्चंद्रमा नक्तमेति ॥१०॥१४॥ तत्त्वा यामि ब्रह्मणा वंदमानस्तदा शास्ते यजमानो हविर्भिः। अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥११॥ तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे। शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥१२॥ शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः। अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥१३॥ अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥१४॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥१५॥१५॥

---

॥ २५ ॥ १—२१ शुनःशेप आजीगर्तिः ॥ वरुणः ॥ गायत्री ॥

॥२५॥ यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतं। मिनीमसि द्यविद्यवि ॥१॥ मा नो वधाय हत्नवे जिहीळानस्य

अनिऽमिषं चरंती॒ः न ये वातस्य प्रऽमिनंति अभ्वं ॥६॥ अबुध्ने राजा वरुणः वनस्य ऊर्ध्वं स्तूपं ददते पूतऽदक्षः नीचीनाः स्थुः उपरि बुध्नः एषां अस्मे अंतः निऽहिताः केतवः स्युः॰ ॥७॥ उरुं हि राजा वरुणः चकार सूर्याय पंथां अनुऽएतवै ऊं अपदे पादा प्रतिऽधातवे अकः उत अपऽवक्ता हृदयऽविधः चित् ॥८॥ शतं ते राजन् भिषजः सहस्रं उर्वी गभीरा सुऽमतिः ते अस्तु बाधस्व दूरे निःऽऋतिं पराचैः कृतं चित् एनः प्र मुमुग्धि अस्मत् ॥९॥ अमी ये ऋक्षाः निऽहितासः उच्चा नक्तं ददृश्रे कुह चित् दिवा ईयुः अदब्धानि वरुणस्य व्रतानि विऽचाकशत् चंद्रमाः नक्तं एति ॥१०॥१४॥ तत् त्वा यामि ब्रह्मणा वंदमानः तत् आ शास्ते यजमानः हविःऽभिः अहेळमानः वरुण इह बोधि उरुऽशंस मा नः आयुः प्र मोषीः ॥११॥ तत् इत् नक्तं तत् दिवा मह्यं आहुः तत् अयं केतः हृदः आ वि चष्टे शुनःशेपः यं अह्वत् गृभीतः सः अस्मान् राजा वरुणः मुमोक्तु ॥१२॥ शुनःशेपः हि अह्वत् गृभीतः त्रिषु आदित्यं द्रुपदेषु बद्धः अव एनं राजा वरुणः ससृज्यात् विद्वान् अदब्धः वि मुमोक्तु पाशान् ॥१३॥ अव ते हेळः वरुण नमःऽभिः अव यज्ञेभिः ईमहे हविःऽभिः क्षयन् अस्मभ्यं असुर प्रऽचेतः॰ राजन् एनांसि शिश्रथः कृतानि ॥१४॥ उत् उत्ऽतमं वरुण पाशं अस्मत् अव अधमं वि मध्यमं श्रथय अथ वयं आदित्य व्रते तव अनागसः अदितये स्याम ॥१५॥१५॥

---

॥२५॥ यत् चित् हि ते विशः यथा प्र देव वरुण व्रतं मिनीमसि द्यविऽद्यवि ॥१॥ मा नः वधाय हत्नवे जिहीळानस्य

रीरधः । मा हृणानस्य मन्यवे ॥ २ ॥ वि मृळीकाय ते मनो रथीरश्वं न संदितं । गीर्भिर्वरुण सीमहि ॥ ३ ॥ परा हि मे विमन्यवः पतंति वस्यइष्टये । वयो न वसतीरुप ॥ ४ ॥ कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृळीकायोरुचक्षसं ॥ ५ ॥ १६ ॥ तदित्समानमाशाते वेनंता न प्र युच्छतः । धृतव्रताय दाशुषे ॥ ६ ॥ वेदा यो वीनां पदमंतरिक्षेण पततां । वेद नावः समुद्रियः ॥ ७ ॥ वेद मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ॥ ८ ॥ वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ॥ ९ ॥ नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा । साम्राज्याय सुक्रतुः ॥ १० ॥ १७ ॥ अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ॥ ११ ॥ स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् । प्र ण आयूंषि तारिषत् ॥ १२ ॥ बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजं । परि स्पशो नि षेदिरे ॥ १३ ॥ न यं दिप्संति दिप्सवो न द्रुह्वाणो जनानां । न देवमभिमातयः ॥ १४ ॥ उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा ॥ १५ ॥ १८ ॥ परा मे यंति धीतयो गावो न गव्यूतीरनु । इच्छंतीरुरुचक्षसं ॥ १६ ॥ सं नु वोचावहै पुनर्यतो मे मध्वाभृतं । होतेव क्षदसे प्रियं ॥ १७ ॥ दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥ १८ ॥ इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥ १९ ॥ त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥ २० ॥ उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे ॥ २१ ॥ १९ ॥

रीरधः मा हृणानस्य मन्यवे ॥२॥ वि मृळीकाय ते मनः रथीः
अश्वं न संऽदितं गीःऽभिः वरुण सीमहि ॥३॥ परा हि मे
विऽमन्यवः पतंति वस्यःऽइष्टये वयः न वसतीः उप ॥४॥ कदा
क्षत्रऽश्रियं नरं आ वरुणं करामहे मृळीकाय उरुऽचक्ष-
सं ॥५॥१६॥ तत् इत् समानं आशाते वेनंता न प्र युच्छतः
धृतऽव्रताय दाशुषे ॥६॥ वेद यः वीनां पदं अंतरिक्षेण पततां
वेद नावः समुद्रियः ॥७॥ वेद मासः धृतऽव्रतः द्वादश प्रजाऽवतः
वेद यः उपऽजायते ॥८॥ वेद वातस्य वर्तनिं उरोः ऋष्वस्य
बृहतः वेद ये अधिऽआसते ॥९॥ नि ससाद धृतऽव्रतः वरुणः
पस्त्यासु आ सांऽराज्याय सुऽक्रतुः ॥१०॥१७॥ अतः विश्वानि
अद्भुता चिकित्वान् अभि पश्यति कृतानि या च कर्त्वा ॥११॥
सः नः विश्वाहा सुऽक्रतुः आदित्यः सुऽपथा करत् प्र नः आयूंषि
तारिषत् ॥१२॥ बिभ्रत् द्रापिं हिरण्ययं वरुणः वस्त निःऽनिजं
परि स्पशः नि सेदिरे ॥१३॥ न यं दिप्संति दिप्सवः न द्रुह्वाणः
जनानां न देवं अभिऽमातयः ॥१४॥ उत यः मानुषेषु आ यशः
चक्रे असामि आ अस्माकं उदरेषु आ ॥१५॥१८॥ परा मे यंति
धीतयः गावः न गव्यूतीः अनु इच्छंतीः उरुऽचक्षसं ॥१६॥ सं
नु वोचावहै पुनः यतः मे मधु आऽभृतं होताऽइव क्षदसे
प्रियं ॥१७॥ दर्शं नु विश्वऽदर्शतं दर्शं रथं अधि क्षमि एताः जुषत
मे गिरः ॥१८॥ इमं मे वरुण श्रुधि हवं अद्य च मृळय त्वां
अवस्युः आ चके ॥१९॥ त्वं विश्वस्य मेधिर दिवः च ग्मः
च राजसि सः यामनि प्रति श्रुधि ॥२०॥ उत् उत्ऽतमं
मुमुग्धि नः वि पाशं मध्यमं चृत अव अधमानि जी-
वसे ॥२१॥१९॥

॥ २६ ॥ १—१० शुनःशेप आजीगर्तिः ॥ अग्निः ॥ गायत्री ॥

॥२६॥ वसि॑ष्वा॒ हि मि॑येध्य॒ वस्त्रा॑ण्यूर्जां पते। सेमं नो॑ अध्व॒रं य॑ज॥१॥ नि नो॒ होता॒ वरे॑ण्यः॒ सदा॑ यविष्ठ॒ मन्म॑भिः। अग्ने॑ दि॒वित्म॑ता॒ वचः॑॥२॥ आ हि ष्मा॑ सू॒नवे॑ पि॒ताऽऽपिर्यज॑त्या॒पये॑। सखा॒ सख्ये॒ वरे॑ण्यः॥३॥ आ नो॑ ब॒र्ही रि॒शाद॑सो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा। सीद॑न्तु॒ मनु॑षो यथा॥४॥ पूर्व्य॑ होतर॒स्य नो॒ मन्द॑स्व स॒ख्यस्य॑ च। इ॒मा उ॒ षु श्रु॑धी॒ गिरः॑॥५॥२०॥ यच्चि॒द्धि शश्व॑ता॒ तना॑ दे॒वंदे॑वं॒ यजा॑महे। त्वे इद्धू॑यते ह॒विः॥६॥ प्रि॒यो नो॑ अस्तु वि॒श्पति॒र्होता॑ म॒न्द्रो वरे॑ण्यः। प्रि॒याः स्व॒ग्नयो॑ व॒यम्॥७॥ स्व॒ग्नयो॒ हि वार्यं॑ दे॒वासो॑ दधि॒रे च॑ नः। स्व॒ग्नयो॑ मनामहे॥८॥ अथा॑ न उ॒भये॑षा॒ममृ॑त॒ मर्त्या॑नाम्। मि॒थः स॑न्तु॒ प्रश॑स्तयः॥९॥ विश्वे॑भिरग्ने अ॒ग्निभि॑रि॒मं य॒ज्ञमि॒दं वचः॑। चनो॑ धाः सहसो यहो॥१०॥२१॥

---

॥ २७ ॥ १—१३ शुनःशेप आजीगर्तिः ॥ १—१२ अग्निः । १३ विश्वे देवाः ॥
१—१२ गायत्री । १३ त्रिष्टुप् ॥

॥२७॥ अश्वं॒ न त्वा॒ वार॑वन्तं व॒न्दध्या॑ अ॒ग्निं नमो॑भिः। स॒म्राज॑न्तमध्व॒राणा॑म्॥१॥ स घा॑ नः सू॒नुः शव॑सा पृ॒थुप्र॑गामा सु॒शेवः॑। मी॒ढ्वाँ अ॒स्माकं॑ बभूयात्॥२॥ स नो॑ दू॒राच्चा॒साच्च॒ नि मर्त्या॑दघा॒योः। पा॒हि सद॒मिद्वि॒श्वायुः॑॥३॥ इ॒मम् ऊ॒ षु त्वम॒स्माकं॑ स॒निं गा॑य॒त्रं नव्यां॑सम्। अग्ने॑ दे॒वेषु॒ प्र वो॑चः॥४॥ आ नो॑ भज पर॒मेष्वा वाजे॑षु मध्य॒मेषु॑। शिक्षा॒ वस्वो॒ अन्त॑मस्य॥५॥२२॥ वि॒भ॒क्तासि॑ चित्रभानो॒ सिन्धो॑रू॒र्मा उ॑पा॒क आ। स॒द्यो दा॒शुषे॑ क्षरसि॥६॥ यम॑ग्ने पृ॒त्सु मर्त्य॒मवा॒ वाजे॑षु॒ यं जु॒नाः। स यन्ता॒ शश्व॑ती॒रिषः॑॥७॥ नकि॑रस्य सहन्त्य पर्ये॒ता कय॑स्य चित्। वाजो॑ अस्ति श्र॒वाय्यः॑॥८॥ स वाजं॑ वि॒श्वच॑र्षणि॒रर्व॑द्भिरस्तु॒ तरु॑ता। विप्रे॑भिर-

॥२६॥ वसिष्व हि मियेध्य वस्त्राणि ऊर्जां पते सः इमं नः अध्वरं यज ॥१॥ नि नः होता वरेण्यः सदा यविष्ठ मन्मंऽभिः अग्ने दिवित्मता वचः ॥२॥ आ हि स्म सूनवे पिता आपिः यजति आपये सखा सख्ये वरेण्यः ॥३॥ आ नः बर्हिः रिशादसः वरुणः मित्रः अर्यमा सीदंतु मनुषः यथा ॥४॥ पूर्व्य होतः अस्य नः मंदस्व सख्यस्य च इमाः ऊं इति सु श्रुधि गिरः ॥५॥२०॥ यत् चित् हि शश्वता तना देवंऽदेवं यजामहे त्वे इति इत् हूयते हविः ॥६॥ प्रियः नः अस्तु विश्पतिः होता मंद्रः वरेण्यः प्रियाः सुऽअग्नयः वयं ॥७॥ सुऽअग्नयः हि वार्यं देवासः दधिरे च नः सुऽअग्नयः मनामहे ॥८॥ अथ नः उभयेषां अमृत मर्त्यानां मिथः संतु प्रऽशस्तयः ॥९॥ विश्वेभिः अग्ने अग्निऽभिः इमं यज्ञं इदं वचः चनः धाः सहसः यहो इति ॥१०॥२१॥

---

॥२७॥ अश्वं न त्वा वारंऽवंतं वंदध्यै अग्निं नमःऽभिः संऽराजंतं अध्वराणां ॥१॥ सः घ नः सूनुः शवसा पृथुऽप्रगामा सुऽशेवः मीढ्वान् अस्माकं बभूयात् ॥२॥ सः नः दूरात् च आसात् च नि मर्त्यात् अघऽयोः पाहि सदं इत् विश्वऽआयुः ॥३॥ इमं ऊं इति सु त्वं अस्माकं सनिं गायत्रं नव्यांसं अग्ने देवेषु प्र वोचः ॥४॥ आ नः भज परमेषु आ वाजेषु मध्यमेषु शिक्ष वस्वः अंतमस्य ॥५॥२२॥ विऽभक्ता असि चित्रऽभानो इति सिंधोः ऊर्मौ उपाके आ सद्यः दाशुषे क्षरसि ॥६॥ यं अग्ने पृत्ऽसु मर्त्यं अवाः वाजेषु यं जुनाः सः यंता शश्वतीः इषः ॥७॥ नकिः अस्य सहंत्य परिऽएता कयस्य चित् वाजः अस्ति श्रवाय्यः ॥८॥ सः वाजं विश्वऽचर्षणिः अर्वत्ऽभिः अस्तु तरुता विप्रेभिः

स्तु सनिता ॥९॥ जराबोध तद्विविड्ढि विशेविशे यज्ञियाय।
स्तोमं रुद्राय दृशीकं ॥१०॥२३॥ स नो महाँ अनिमानो धूम-
केतुः पुरुश्चंद्रः। धिये वाजाय हिन्वतु ॥११॥ स रेवाँ इव विश्प-
तिर्दैव्यः केतुः शृणोतु नः। उक्थैरग्निर्बृहद्भानुः ॥१२॥ नमो
महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः। यजाम
देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥१३॥२४॥

---

॥ २८ ॥ १–९ शुनःशेप आजीगर्तिः ॥ १–४ इंद्रः। ५.६ उलूखलं। ७.८ उलूखलमुसले।
९ प्रजापतिर्हरिश्चंद्रोऽधिषवणचर्म वा (सोमो वा) ॥ १–६ अनुष्टुप्। ७–९ गायत्री ॥

॥२८॥ यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे। उलूखल-
सुतानामवेद्विंद्र जल्गुलः ॥१॥ यत्र द्वाविव जघनाधिषवण्या
कृता। उलूखलसुतानामवेद्विंद्र जल्गुलः ॥२॥ यत्र नार्यपच्य-
वमुपच्यवं च शिक्षते। उलूखलसुतानामवेद्विंद्र जल्गुलः ॥३॥
यत्र मंथां विबध्नते रश्मीन्यमितवा इव। उलूखलसुताना-
मवेद्विंद्र जल्गुलः ॥४॥ यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे।
इह द्युमत्तमं वद जयतामिव दुंदुभिः ॥५॥२५॥ उत स्म ते वन-
स्पते वातो वि वात्यग्रमित्। अथो इंद्राय पातवे सुनु सोममुलू-
खल ॥६॥ आयजी वाजसातमा ता ह्युच्चा विजर्भृतः। हरी
इवांधांसि बप्सता ॥७॥ ता नो अद्य वनस्पती ऋष्वावृष्वेभिः
सोतृभिः। इंद्राय मधुमत्सुतं ॥८॥ उच्छिष्टं चम्वोर्भर सोमं
पवित्र आ सृज। नि धेहि गोरधि त्वचि ॥९॥२६॥

---

॥ २९ ॥ १–७ शुनःशेप आजीगर्तिः ॥ इंद्रः ॥ पंक्तिः ॥

॥२९॥ यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥१॥

अस्तु सनिता ॥ ९ ॥ जराऽबोध तत् विविड्ढि विशेऽविशे यज्ञियाय स्तोमं रुद्राय दृशीकं ॥ १० ॥ २३ ॥ सः नः महान् अनिऽमानः धूमऽकेतुः पुरुऽचंद्रः धिये वाजाय हिन्वतु ॥ ११ ॥ सः रेवान्ऽइव विश्पतिः दैव्यः केतुः शृणोतु नः उक्थैः अग्निः बृहत्ऽभानुः ॥ १२ ॥ नमः महत्ऽभ्यः नमः अर्भकेभ्यः नमः युवऽभ्यः नमः आशिनेभ्यः यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसं आ वृक्षि देवाः ॥ १३ ॥ २४ ॥

---

॥ २८ ॥ यत्र ग्रावा पृथुऽबुध्नः ऊर्ध्वः भवति सोतवे उलूखलऽसुतानां अव इत् ऊं इंद्र जल्गुलः ॥ १ ॥ यत्र द्वौऽइव जघना अधिऽसवन्या कृता उलूखलऽसुतानां अव इत् ऊं इंद्र जल्गुलः ॥ २ ॥ यत्र नारी अपऽच्यवं उपऽच्यवं च शिक्षते उलूखलऽसुतानां अव इत् ऊं इंद्र जल्गुलः ॥ ३ ॥ यत्र मंथां विऽबध्नते रश्मीन् यमितवैऽइव उलूखलऽसुतानां अव इत् ऊं इंद्र जल्गुलः ॥ ४ ॥ यत् चित् हि त्वं गृहेऽगृहे उलूखलक युज्यसे इह द्युमत्ऽतमं वद जयतांऽइव दुंदुभिः ॥ ५ ॥ २५ ॥ उत स्म ते वनस्पते वातः वि वाति अग्रं इत् अग्रों इंद्राय पातवे सुनु सोमं उलूखल ॥ ६ ॥ आऽयजी॰ वाजऽसातमा ता हि उच्चा विऽजर्भृतः हरींऽइव॰ अंधांसि बप्सता ॥ ७ ॥ ता नः अद्य वनस्पती ऋष्वौ ऋष्वेभिः सोतृऽभिः इंद्राय मधुऽमत् सुतं ॥ ८ ॥ उत् शिष्टं चम्वोः भर सोमं पवित्रे आ सृज नि धेहि गोः अधि त्वचि ॥ ९ ॥ २६ ॥

---

॥ २९ ॥ यत् चित् हि सत्य सोमऽपाः अनाशस्ताःऽइव स्मसि आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ १ ॥

शिप्रिन्वाजानां पते शचीवस्तव दंसना । आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥२॥ नि ष्वापया मिथूदृशा सस्तामबुध्यमाने । आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥३॥ ससंतु त्या अरातयो बोधंतु शूर रातयः । आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥४॥ समिंद्र गर्दभं मृण नुवंतं पापयामुया । आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥५॥ पताति कुंडृणाच्या दूरं वातो वनादधि । आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥६॥ सर्वं परिक्रोशं जहि जंभया कृकदाश्वं । आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥७॥२७॥

---

॥ ३० ॥ १–२२ शुनःशेप आजीगर्तिः ॥ १–१६ इंद्रः । १७–१९ अश्विनौ । २०–२२ उषाः ॥
१–१०. १२–१५. १७–२२ गायत्री । ११ पादनिचृद्गायत्री । १६ त्रिष्टुप् ॥

॥३०॥ आ व इंद्रं क्रिविं यथा वाजयंतः शतक्रतुं । मंहिष्ठं सिंच इंदुभिः ॥१॥ शतं वा यः शुचीनां सहस्रं वा समाशिरां । एदु निम्नं न रीयते ॥२॥ सं यन्मदाय शुष्मिण एना ह्यस्योदरे । समुद्रो न व्यचो दधे ॥३॥ अयमु ते समतसि कपोत इव गर्भधिं । वचस्तच्चिन्न ओहसे ॥४॥ स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ॥५॥२८॥ ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥६॥ योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इंद्रमूतये ॥७॥ आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवं ॥८॥ अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरं । यं ते पूर्वं पिता हुवे ॥९॥ तं त्वा वयं विश्ववारा शास्महे पुरुहूत । सखे वसो जरि-

शिप्रिन् वाजानां पते शचीऽवः तव दंसना आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ २ ॥ नि स्वापय मिथुऽदृशा सस्तां अबुध्यमाने आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ ३ ॥ ससंतु त्याः अरातयः बोधंतु शूर रातयः आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ ४ ॥ सं इंद्र गर्दभं मृण नुवंतं पापया अमुया आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ ५ ॥ पताति कुंडृणाच्या दूरं वातः वनात् अधि आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ ६ ॥ सर्वं परिऽक्रोशं जहि जंभय कृकदाश्वं आ तु नः इंद्र शंसय गोषु अश्वेषु शुभ्रिषु सहस्रेषु तुविऽमघ ॥ ७ ॥ २७ ॥

---

॥ ३० ॥ आ वः इंद्रं क्रिविं यथा वाजऽयंतः शतऽक्रतुं मंहिष्ठं सिंचे इंदुऽभिः ॥ १ ॥ शतं वा यः शुचीनां सहस्रं वा संऽआशिरां आ इत् ऊं निम्नं न रीयते ॥ २ ॥ सं यत् मदाय शुष्मिणे एना हि अस्य उदरे समुद्रः न व्यचः दधे ॥ ३ ॥ अयं ऊं ते सं अतसि कपोतःऽइव गर्भऽधिं वचः तत् चित् नः ओहसे ॥ ४ ॥ स्तोत्रं राधानां पते गिर्वाहः वीर यस्य ते विऽभूतिः अस्तु सूनृता ॥ ५ ॥ २८ ॥ ऊर्ध्वः तिष्ठ नः ऊतये अस्मिन् वाजे शतऽक्रतो॰ सं अन्येषु ब्रवावहै ॥ ६ ॥ योगेऽयोगे तवःऽतरं वाजेऽवाजे हवामहे सखायः इंद्रं ऊतये ॥ ७ ॥ आ घ गमत् यदि श्रवत् सहस्रिणीभिः ऊतिऽभिः वाजेभिः उप नः हवं ॥ ८ ॥ अनु प्रत्नस्य ओकसः हुवे तुविऽप्रतिं नरं यं ते पूर्वं पिता हुवे ॥ ९ ॥ तं त्वा वयं विश्वऽवार आ शास्महे पुरुऽहूत सखे वसो जरि-

तृभ्यः ॥१०॥२९॥ अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नां । सखे वज्रिन्त्सखीनां ॥११॥ तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त उश्मसीष्टये ॥१२॥ रेवतीर्नः सधमाद इंद्रे संतु तुविवाजाः । क्षुमंतो याभिर्मदेम ॥१३॥ आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्योः ॥१४॥ आ यद्दुवः शतक्रतवा कामं जरितॄणां । ऋणोरक्षं न शचीभिः ॥१५॥३०॥ शश्वदिंद्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि । स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥१६॥ आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ॥१७॥ समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥१८॥ न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥१९॥ कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥२०॥ वयं हि ते अमन्मह्यांतादा पराकात् । अश्वे न चित्रे अरुषि ॥२१॥ त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥२२॥३१॥६॥

---

॥३१॥ १–१८ हिरण्यस्तूप आंगिरसः ॥ अग्निः ॥ १–७. ९–१५. १७ जगती । ८. १६. १८ त्रिष्टुप् ॥

॥३१॥ त्वमग्ने प्रथमो अंगिरा ऋषिर्देवो देवानामभवः शिवः सखा । तव व्रते कवयो विद्मनापसोऽजायंत मरुतो भ्राजदृष्टयः ॥१॥ त्वमग्ने प्रथमो अंगिरस्तमः कविर्देवानां परि भूषसि व्रतं । विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥२॥ त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते । अरेजेतां रोदसी

तृऽभ्यः ॥ १० ॥ २९ ॥ अस्माकं शिप्रिणीनां सोमऽपाः सोमऽपाव्नां सखे वज्रिन् सखीनां ॥ ११ ॥ तथा तत् अस्तु सोमऽपाः सखे वज्रिन् तथा कृणु यथा ते उश्मसि इष्टये ॥ १२ ॥ रेवतीः नः सधऽमादे इंद्रे संतु तुविऽवाजाः क्षुऽमंतः याभिः मदेम ॥ १३ ॥ आ घ त्वाऽवान् त्मना आप्तः स्तोतृऽभ्यः धृष्णो इयानः ऋणोः अक्षं न चक्र्योः ॥ १४ ॥ आ यत् दुवः शतऽक्रतो आ कामं जरितॄणां ऋणोः अक्षं न शचीभिः ॥ १५ ॥ ३० ॥ शश्वत् इंद्रः पोप्रुथत्ऽभिः जिगाय नानदत्ऽभिः शाश्वसत्ऽभिः धनानि सः नः हिरण्यऽरथं दंसनाऽवान् सः नः सनिता सनये सः नः अदात् ॥ १६ ॥ आ अश्विनौ अश्वऽवत्या इषा यातं शवीरया गोऽमत् दस्रा हिरण्यऽवत् ॥ १७ ॥ समानऽयोजनः हि वां रथः दस्रौ अमर्त्यः समुद्रे अश्विना ईयते ॥ १८ ॥ नि अघ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः परि द्यां अन्यत् ईयते ॥ १९ ॥ कः ते उषः कधऽप्रिये भुजे मर्तः अमर्त्ये कं नक्षसे विभाऽवरि ॥ २० ॥ वयं हि ते अमन्महि आ अंतात् आ पराकात् अश्वे न चित्रे अरुषि ॥ २१ ॥ त्वं त्येभिः आ गहि वाजेभिः दुहितः दिवः अस्मे रयिं नि धारय ॥ २२ ॥ ३१ ॥ ६ ॥

---

॥ ३१ ॥ त्वं अग्ने प्रथमः अंगिराः ऋषिः देवः देवानां अभवः शिवः सखा तव व्रते कवयः विद्मनाऽअपसः अजायंत मरुतः भ्राजत्ऽऋष्टयः ॥ १ ॥ त्वं अग्ने प्रथमः अंगिरःऽतमः कविः देवानां परि भूषसि व्रतं विऽभुः विश्वस्मै भुवनाय मेधिरः द्विऽमाता शयुः कतिधा चित् आयवे ॥ २ ॥ त्वं अग्ने प्रथमः मातरिश्वने आविः भव सुक्रतुऽया विवस्वते अरेजेतां रोदसी

होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥३॥ त्वमग्ने मनवे
द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः । श्वात्रेण यत्पि-
त्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः ॥४॥ त्वमग्ने
वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः । य आहु-
तिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवास-
सि ॥५॥३२॥ त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि
विदथे विचर्षणे । यः शूरसाता परितक्म्ये धने दभ्रे-
भिश्चित्समृता हंसि भूयसः ॥६॥ त्वं तमग्ने अमृतत्व उत्तमे
मर्तं दधासि श्रवसे दिवेदिवे । यस्तातृषाण उभयाय जन्मने
मयः कृणोषि प्रय आ च सूरये ॥७॥ त्वं नो अग्ने सनये
धनानां यशसं कारुं कृणुहि स्तवानः । ऋध्याम कर्मापसा
नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥८॥ त्वं नो अग्ने पित्रो-
रुपस्थ आ देवो देवेष्वनवद्य जागृविः । तनूकृद्बोधि प्रमतिश्च
कारवे त्वं कल्याण वसु विश्वमोपिषे ॥९॥ त्वमग्ने प्रम-
तिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयं । सं त्वा रायः
शतिनः सं सहस्रिणः सुवीरं यंति व्रतपामदाभ्य ॥१०॥३३॥
त्वामग्ने प्रथममायुमायवे देवा अकृण्वन्नहुषस्य विश्पतिं ।
इळामकृण्वन्मनुषस्य शासनीं पितुर्यत्पुत्रो ममकस्य जा-
यते ॥११॥ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च
वंद्य । त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाण-
स्तव व्रते ॥१२॥ त्वमग्ने यज्यवे पायुरंतरोऽनिषंगाय चतु-
रक्ष इध्यसे । यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मंत्रं
मनसा वनोषि तं ॥१३॥ त्वमग्न उरुशंसाय वाघते
स्पार्हं यद्रेक्णः परमं वनोषि तत् । आध्रस्य चित्प्रमति-

होतृऽवूर्ये असम्नोः भारं अयजः महः वसो ॥३॥ त्वं अग्ने मनवे द्यां अवाशयः पुरूरवसे सुऽकृते सुकृत्ऽतरः श्वात्रेण यत् पित्रोः मुच्यसे परि आ त्वा पूर्वं अनयन् आ अपरं पुनः ॥४॥ त्वं अग्ने वृषभः पुष्टिऽवर्धनः उद्यतऽस्रुचे भवसि श्रवाय्यः यः आऽहुतिं परि वेद वषट्ऽकृतिं एकऽआयुः अग्रे विशः आऽविवासमि ॥५॥३२॥ त्वं अग्ने वृजिनऽवर्तनिं नरं सक्मन् पिपर्षि विदथे विऽचर्षणे यः शूरऽसाता परिऽतक्म्ये धने दुभ्रेभिः चित् संऽऋता हंसि भूयसः ॥६॥ त्वं तं अग्ने अमृतऽत्वे उत्ऽतमे मर्तं दधासि श्रवसे दिवेऽदिवे यः ततृषाणः उभयाय जन्मने मयः कृणोषि प्रयः आ च सूरये ॥७॥ त्वं नः अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः ऋध्याम कर्म अपसा नवेन देवैः द्यावापृथिवी प्र अवतं नः ॥८॥ त्वं नः अग्ने पित्रोः उपऽस्थे आ देवः देवेषु अनवद्य जागृविः तनूऽकृत् बोधि प्रऽमतिः च कारवे त्वं कल्याण वसु विश्वं आ ऊपिषे ॥९॥ त्वं अग्ने प्रऽमतिः त्वं पिता असि नः त्वं वयःऽकृत् तव जामयः वयं सं त्वा रायः शतिनः सं सहस्रिणः सुऽवीरं यंति व्रतऽपां अदाभ्य ॥१०॥३३॥ त्वां अग्ने प्रथमं आयुं आयवे देवाः अकृण्वन् नहुषस्य विश्पतिं इळां अकृण्वन् मनुषस्य शासनीं पितुः यत् पुत्रः ममकस्य जायते ॥११॥ त्वं नः अग्ने तव देव पायुऽभिः मघोनः रक्ष तन्वः च वंद्य त्राता तोकस्य तनये गवां असि अनिंऽमेषं रक्षमाणः तव व्रते ॥१२॥ त्वं अग्ने यज्यवे पायुः अंतरः अनिषंगाय चतुःऽअक्षः इध्यसे यः रातऽहव्यः अवृकाय धायसे कीरेः चित् मंत्रं मनसा वनोषि तं ॥१३॥ त्वं अग्ने उरुऽशंसाय वाघते स्पार्हं यत् रेक्णः परमं वनोषि तत् आध्रस्य चित् प्रऽमतिः

रुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥१४॥ त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः । स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥१५॥३४॥ इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् । आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानां ॥१६॥ मनुष्वदग्ने अंगिरस्वदंगिरो ययातिवत्सदने पूर्ववच्छुचे । अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियं ॥१७॥ एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा । उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥१८॥३५॥

---

॥ ३२ ॥ १—१५ हिरण्यस्तूप आंगिरसः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३२॥ इंद्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री । अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानां ॥१॥ अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष । वाश्रा इव धेनवः स्यंदमाना अंजः समुद्रमव जग्मुरापः ॥२॥ वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य । आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनां ॥३॥ यदिंद्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः । आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥४॥ अहन्वृत्रं वृत्रतरं व्यंसमिंद्रो वज्रेण महता वधेन । स्कंधांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥५॥३६॥ अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषं । नातारीद-

उच्यसे पिता प्र पाकं शास्सि प्र दिशः विदुःऽतरः ॥१४॥ त्वं अग्ने प्रयतऽदक्षिणं नरं वर्मऽइव स्यूतं परि पासि विश्वतः स्वादुऽक्षद्मा यः वसतौ स्योनऽकृत् जीवऽयाजं यजते सः उपऽमा दिवः ॥१५॥३४॥ इमां अग्ने शरणिं मीमृषः नः इमं अध्वानं यं अगाम दूरात् आपिः पिता प्रऽमतिः सोम्यानां भृमिः असि ऋषिऽकृत् मर्त्यानां ॥१६॥ मनुष्वत् अग्ने अंगिरस्वत् अंगिरः ययातिऽवत् सदने पूर्वऽवत् शुचे अच्छ याहि आ वह दैव्यं जनं आ सादय बर्हिषि यक्षि च प्रियं ॥१७॥ एतेन अग्ने ब्रह्मणा वावृधस्व शक्ती वा यत् ते चकृम विदा वा उत प्र नेषि अभि वस्यः अस्मान् सं नः सृज सुऽमत्या वाजऽवत्या ॥१८॥३५॥

---

॥३२॥ इंद्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री अहन् अहिं अनु अपः ततर्द प्र वक्षणाः अभिनत् पर्वतानां ॥१॥ अहन् अहिं पर्वते शिश्रियाणं त्वष्टा अस्मै वज्रं स्वर्यं ततक्ष वाश्राःऽइव धेनवः स्यंदमानाः अंजः समुद्रं अव जग्मुः आपः ॥२॥ वृषऽयमाणः अवृणीत सोमं त्रिऽकद्रुकेषु अपिबत् सुतस्य आ सायकं मघऽवा अदत्त वज्रं अहन् एनं प्रथमऽजां अहीनां ॥३॥ यत् इंद्र अहन् प्रथमऽजां अहीनां आत् मायिनां अमिनाः प्र उत मायाः आत् सूर्यं जनयन् द्यां उषसं तादीत्ना शत्रुं न किल विवित्से ॥४॥ अहन् वृत्रं वृत्रऽतरं विऽअंसं इंद्रः वज्रेण महता वधेन स्कंधांसिऽइव कुलिशेन विऽवृक्णा अहिः शयते उपऽपृक् पृथिव्याः ॥५॥३६॥ अयोद्धाऽइव दुःऽमदः आ हि जुह्वे महाऽवीरं तुविऽबाधं ऋजीषं न अतारीत्

स्य समृतिं वधानां सं रुजानाः पिपिष इंद्रशत्रुः ॥ ६ ॥
अपादहस्तो अपृतन्यदिंद्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥
नदं न भिन्नममुया शयानं मनो रुहाणा अति यंत्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥
नीचावया अभवद्वृत्रपुत्रेंद्रो अस्या अव वधर्जभार । उत्तरा
सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥
अतिष्ठंतीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरं ।
वृत्रस्य निण्यं वि चरंत्यापो दीर्घं तम आशयदिंद्र-
शत्रुः ॥ १० ॥ ३७ ॥ दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः
पणिनेव गावः । अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ
अप तद्ववार ॥ ११ ॥ अश्व्यो वारो अभवस्तदिंद्र सृके
यत्त्वा प्रत्यहन्देव एकः । अजयो गा अजयः शूर सोम-
मवासृजः सर्तवे सप्त सिंधून् ॥ १२ ॥ नास्मै विद्युन्न तन्यतुः
सिषेध न यां मिहमकिरद्ध्रादुनिं च । इंद्रश्च यद्युयुधाते
अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥ १३ ॥ अहेर्यातारं
कमपश्य इंद्र हृदि यत्ते जघ्नुषो भीरगच्छत् । नव च यन्न-
वतिं च स्रवंतीः श्येनो न भीतो अतरो रजांसि ॥ १४ ॥
इंद्रो यातोऽवसितस्य राजा शमस्य च शृंगिणो वज्र-
बाहुः । सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता
बभूव ॥ १५ ॥ ३८ ॥ २ ॥

---

॥ ३३ ॥ १—१५ हिरण्यस्तूप आंगिरसः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३३ ॥ एतायामोप गव्यंत इंद्रमस्माकं सु प्रमतिं
वावृधाति । अनामृणः कुविदादस्य रायो गवां केतं परमा-

अस्य संऽजृतिं वधानां सं रुजानाः पिपिषे इंद्रऽशत्रुः ॥ ६ ॥ अपात् अहस्तः अपृतन्यत् इंद्रं आ अस्य वज्रं अधि सानौ जघान वृष्णः वध्रिः प्रतिऽमानं बुभूषन् पुरुऽत्रा वृत्रः अशयत् विऽअस्तः ॥ ७ ॥ नदं न भिन्नं अमुया शयानं मनः रुहाणाः अति यंति आपः याः चित् वृत्रः महिना परिऽअतिष्ठत् तासां अहिः पत्सुतःऽशीः बभूव ॥ ८ ॥ नीचाऽवयाः अभवत् वृत्रऽपुत्रा इंद्रः अस्याः अव वधः जभार उत्ऽतरा सूः अधरः पुत्रः आसीत् दानुः शये सहऽवत्सा न धेनुः ॥ ९ ॥ अतिष्ठंतीनां अनिऽवेशनानां काष्ठानां मध्ये निऽहितं शरीरं वृत्रस्य निण्यं वि चरंति आपः दीर्घं तमः आ अशयत् इंद्रऽशत्रुः ॥ १० ॥ ३७ ॥ दासऽपत्नीः अहिऽगोपाः अतिष्ठन् निऽरुद्धाः आपः पणिनाऽइव गावः अपां बिलं अपिऽहितं यत् आसीत् वृत्रं जघन्वान् अप तत् ववार ॥ ११ ॥ अश्व्यः वारः अभवः तत् इंद्र सृके यत् त्वा प्रतिऽअहन् देवः एकः अजयः गाः अजयः शूर सोमं अव असृजः सर्तवे सप्त सिंधून् ॥ १२ ॥ न अस्मै विऽद्युत् न तन्यतुः सिसेध न यां मिहं अकिरत् ह्रादुनिं च इंद्रः च यत् युयुधाते अहिः च उत अपरीभ्यः मघऽवा वि जिग्ये ॥ १३ ॥ अहेः यातारं कं अपश्यः इंद्र हृदि यत् ते जघ्नुषः भीः अगच्छत् नव च यत् नवतिं च स्रवंतीः श्येनः न भीतः अतरः रजांसि ॥ १४ ॥ इंद्रः यातः अवऽसितस्य राजा शमस्य च शृंगिणः वज्रऽबाहुः सः इत् ऊं इति राजा क्षयति चर्षणीनां अरान् न नेमिः परि ता बभूव ॥ १५ ॥ ३८ ॥ २ ॥

---

॥ ३३ ॥ आ इत अयाम उप गव्यंतः इंद्रं अस्माकं सु प्रऽमतिं ववृधाति अनामृणः कुवित् आत् अस्य रायः गवां केतं परं

वर्जते नः ॥१॥ उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि । इंद्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥२॥ नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि । चोष्कूयमाण इंद्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥३॥ वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिंद्र । धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥४॥ परा चिच्छीर्षा ववृजुस्त इंद्रायज्वानो यज्वभिः स्पर्धमानाः । प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥५॥१॥ अयुयुत्सन्ननवद्यस्य सेनामयातयंत क्षितयो नवग्वाः । वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिंद्राच्चितयंत आयन् ॥६॥ त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इंद्र पारे । अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ॥७॥ चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुंभमानाः । न हिन्वानासस्तितिरुस्त इंद्रं परि स्पशो अदधात्सूर्येण ॥८॥ परि यदिंद्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीं । अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिंद्र ॥९॥ न ये दिवः पृथिव्या अंतमापुर्न मायाभिर्धनदां पर्यभूवन् । युजं वज्रं वृषभश्चक्र इंद्रो निर्ज्योतिषा तमसो गा अदुक्षत् ॥१०॥२॥ अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानां । सध्रीचीनेन मनसा तमिंद्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥११॥ न्याविध्यदिलीबिशस्य दृळ्हा वि शृंगिणमभिनच्छुष्णमिंद्रः । यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः

आऽवर्जते नः ॥१॥ उप इत् अहं धनऽदां अप्रतिऽइतं जुष्टां न
श्येनः वसतिं पतामि इंद्रं नमस्यन् उपऽमेभिः अर्कैः यः स्तो-
तृऽभ्यः हव्यः अस्ति यामन् ॥२॥ नि सर्वऽसेनः इषुऽधीन्
असक्त सं अर्यः गाः अजति यस्य वष्टि चोष्कूयमाणः इंद्र भूरि
वामं मा पणिः भूः अस्मत् अधि प्रऽवृद्ध ॥३॥ वधीः हि दस्युं
धनिनं घनेन एकः चरन् उपऽशाकेभिः इंद्र धनोः अधि विषु-
णक् ते वि आयन् अयज्वानः सनकाः प्रऽइतिं ईयुः ॥४॥ परा
चित् शीर्षा ववृजुः ते इंद्र अयज्वानः यज्वऽभिः स्पर्धमानाः प्र
यत् दिवः हरिऽवः स्थातः उग्र निः अव्रतान् अधमः रोद-
स्योः ॥५॥१॥ अयुयुत्सन् अनवद्यस्य सेनां अयातयंत क्षितयः
नवऽग्वाः वृषऽयुधः न वध्रयः निःऽअष्टाः प्रवत्ऽभिः इंद्रात्
चितयंतः आयन् ॥६॥ त्वं एतान् रुदतः जक्षतः च अयोधयः
रजसः इंद्र पारे अव अदहः दिवः आ दस्युं उच्चा प्र सुन्वतः स्तु-
वतः शंसं आवः ॥७॥ चक्राणासः परिऽनहं पृथिव्याः हिरण्येन
मणिना शुंभमानाः न हिन्वानासः तितिरुः ते इंद्रं परि स्पशः
अदधात् सूर्येण ॥८॥ परि यत् इंद्र रोदसी उभे अबुभोजीः
महिना विश्वतः सीं अमन्यमानान् अभि मन्यमानैः निः
ब्रह्मऽभिः अधमः दस्युं इंद्र ॥९॥ न ये दिवः पृथिव्याः अंतं आपुः
न मायाभिः धनऽदां परिऽअभूवन् युजं वज्रं वृषभः चक्रे इंद्रः
निः ज्योतिषा तमसः गाः अधुक्षत् ॥१०॥२॥ अनु स्वधां अक्ष-
रन् आपः अस्य अवर्धत मध्ये आ नाव्यानां सध्रीचीनेन मन-
सा तं इंद्रः ओजिष्ठेन हन्मना अहन् अभि द्यून् ॥११॥ नि
अविध्यत् इलीबिशस्य दृळ्हा वि शृंगिणं अभिनत् शुष्णं
इंद्रः यावत् तरः मघऽवन् यावत् ओजः वज्रेण शत्रुं अवधीः

पृतन्युं ॥१२॥ अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् । सं वज्रेणासृजद्वृत्रमिंद्रः प्र स्वां मतिमतिरच्छाशदानः ॥१३॥ आवः कुत्समिंद्र यस्मिंचाकन्प्रावो युध्यंतं वृषभं दशद्युं । शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥१४॥ आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गां । ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥१५॥३॥

---

॥३४॥ १—१२ हिरण्यस्तूप आंगिरसः ॥ अश्विनौ ॥ १—८.१०.११ जगती । ९.१२ त्रिष्टुप् ॥

॥३४॥ त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना । युवोर्हि यंत्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥१॥ त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः । त्रयः स्कंभासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥२॥ समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतं । त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतं ॥३॥ त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतं । त्रिर्नांद्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतं ॥४॥ त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः । त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथं ॥५॥ त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः । ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥६॥४॥ त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतं । तिस्रो

पृतन्युं ॥१२॥ अभि सिध्मः अजिगात् अस्य शत्रून् वि तिग्मेन वृषभेण पुरः अभेत् सं वज्रेण असृजत् वृत्रं इंद्रः प्र स्वां मतिं अतिरत् शाशदानः ॥१३॥ आवः कुत्सं इंद्र यस्मिन् चाकन् प्र आवः युध्यंतं वृषभं दशऽद्युं शफऽच्युतः रेणुः नक्षत द्यां उत् श्वैत्रेयः नृऽसह्याय तस्थौ ॥१४॥ आवः शमं वृषभं तुग्र्यासु क्षेत्रऽजेषे मघऽवन् श्वित्र्यं गां ज्योक् चित् अत्र तस्थिऽवांसः अक्रन् शत्रुऽयतां अधरा वेदना अकः॰ ॥१५॥३॥

---

॥३४॥ त्रिः चित् नः अद्य भवतं नवेदसा विऽभुः वां यामः उत रातिः अश्विना युवोः हि यंत्रं हिम्याऽइव वाससः अभिऽआयंसेन्या भवतं मनीषिऽभिः ॥१॥ त्रयः पवयः मधुऽवाहने रथे सोमस्य वेनां अनु विश्वे इत् विदुः त्रयः स्कंभासः स्कभितासः आऽरभे त्रिः नक्तं याथः त्रिः ऊं अश्विना दिवा ॥२॥ समाने अहन् त्रिः अवद्यऽगोहना त्रिः अद्य यज्ञं मधुना मिमिक्षतं त्रिः वाजऽवतीः इषः अश्विना युवं दोषाः अस्मभ्यं उषसः च पिन्वतं ॥३॥ त्रिः वर्तिः यातं त्रिः अनुऽव्रते जने त्रिः सुप्रऽअव्ये त्रेधाऽइव शिक्षतं त्रिः नांद्यं वहतं अश्विना युवं त्रिः पृक्षः अस्मे अक्षराऽइव पिन्वतं ॥४॥ त्रिः नः रयिं वहतं अश्विना युवं त्रिः देवऽताता त्रिः उत अवतं धियः त्रिः सौभगऽत्वं त्रिः उत श्रवांसि नः त्रिऽस्थं वां सूरे दुहिता आ रुहत् रथं ॥५॥ त्रिः नः अश्विना दिव्यानि भेषजा त्रिः पार्थि- वानि त्रिः ऊं दत्तं अत्ऽभ्यः ओमानं शंऽयोः ममकाय सूनवे त्रिऽधातु शर्म वहतं शुभः पती ॥६॥४॥ त्रिः नः अश्विना यजता दिवेऽदिवे परि त्रिऽधातु पृथिवीं अशायतं तिस्रः

नासत्या रथ्या परावतं आत्मेव वातः स्वसराणि गच्छतं ॥७॥
त्रिरश्विना सिंधुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतं ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तु-
भिर्हितं ॥८॥ क्व१ त्री चक्रा त्रिवृतो रथस्य क्व१ त्रयो वंधुरो ये
सनीळाः । कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्यो-
पयाथः ॥९॥ आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं
मधुपेभिरासभिः । युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं
घृतवंतमिष्यति ॥१०॥ आ नासत्या त्रिभिरेकादशैरिह देवे-
भिर्यातं मधुपेयमश्विना । प्रायुस्तारिष्टं नी रपांसि मृक्षतं
सेधतं द्वेषो भवतं सचाभुवा ॥११॥ आ नो अश्विना त्रिवृता
रथेनार्वांचं रयिं वहतं सुवीरं । शृण्वंता वामवसे जोहवीमि
वृधे च नो भवतं वाजसातौ ॥१२॥५॥

---

॥ ३५ ॥ १–११ हिरण्यस्तूप आंगिरसः ॥ १ अग्निर्मित्रावरुणौ रात्री सविता ।
२–११ सविता ॥ १. ९ जगती । २–८. १०. ११ त्रिष्टुप् ॥

॥३५॥ ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणा-
विहावसे । ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं
सवितारमूतये ॥१॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्न-
मृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुव-
नानि पश्यन् ॥२॥ याति देवः प्रवता यात्युद्वता याति
शुभ्राभ्यां यजतो हरिभ्यां । आ देवो याति सविता पराव-
तोऽप विश्वा दुरिता बाधमानः ॥३॥ अभीवृतं कृशनैर्वि-
श्वरूपं हिरण्यशम्यं यजतो बृहंतं । आस्थाद्रथं सविता
चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥४॥ वि जनाञ्छ्या-
वाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहंतः । शश्व-

नासत्या रथ्या पराऽवतः आत्माऽइव वातः स्वसराणि गच्छतं ॥७॥ त्रिः अश्विना सिंधुऽभिः सप्तमातृऽभिः त्रयः आऽहावाः त्रेधा हविः कृतं तिस्रः पृथिवीः उपरि प्रवा दिवः नाकं रक्षेथे द्युऽभिः अक्तुऽभिः हितं ॥८॥ क्व त्री चक्रा त्रिऽवृतः रथस्य क्व त्रयः वंधुरः ये सऽनीळाः कदा योगः वाजिनः रासभस्य येन यज्ञं नासत्या उपऽयाथः ॥९॥ आ नासत्या गच्छतं हूयते हविः मध्वः पिबतं मधुऽपेभिः आसऽभिः युवोः हि पूर्वं सविता उषसः रथं ऋताय चित्रं घृतऽवंतं इष्यति ॥१०॥ आ नासत्या त्रिऽभिः एकादशैः इह देवेभिः यातं मधुऽपेयं अश्विना प्र आयुः तारिष्टं निः रपांसि मृक्षतं सेधतं द्वेषः भवतं सचाऽभुवा ॥११॥ आ नः अश्विना त्रिऽवृता रथेन अर्वांचं रयिं वहतं सुऽवीरं शृण्वंता वां अवसे जोहवीमि वृधे च नः भवतं वाजऽसातौ ॥१२॥५॥

---

॥३५॥ ह्वयामि अग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणौ इह अवसे ह्वयामि रात्रीं जगतः निऽवेशनीं ह्वयामि देवं सवितारं ऊतये ॥१॥ आ कृष्णेन रजसा वर्तमानः निऽवेशयन् अमृतं मर्त्यं च हिरण्ययेन सविता रथेन आ देवः याति भुवनानि पश्यन् ॥२॥ याति देवः प्रऽवता याति उत्ऽवता याति शुभ्राभ्यां यजतः हरिऽभ्यां आ देवः याति सविता पराऽवतः अप विश्वा दुःऽइता बाधमानः ॥३॥ अभिऽवृतं कृशनैः विश्वऽरूपं हिरण्यऽशम्यं यजतः बृहंतं आ अस्थात् रथं सविता चित्रऽभानुः कृष्णा रजांसि तविषीं दधानः ॥४॥ वि जनान् श्यावाः शितिऽपादः अख्यन् रथं हिरण्यऽप्रउगं वहंतः शश्वत्

विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥५॥ तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् । आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥६॥६॥ वि सुपर्णो अंतरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः । क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥७॥ अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिंधून् । हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥८॥ हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अंतरीयते । अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥९॥ हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् । अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥१०॥ ये ते पंथाः सवितः पूर्व्यासोऽरेणवः सुकृता अंतरिक्षे । तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥११॥७॥७॥

---

॥ ३६ ॥ १–२० कण्वो घौरः ॥ १–१२. १५–२० अग्निः । १३. १४ यूपः ॥ प्रागाथं बार्हतं ॥

॥३६॥ प्र वो यह्वं पुरूणां विशां देवयतीनां । अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते ॥१॥ जनासो अग्निं दधिरे सहोवृधं हविष्मंतो विधेम ते । स त्वं नो अद्य सुमना इहाविता भवा वाजेषु संत्य ॥२॥ प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसं । महस्ते सतो वि चरंत्यर्चयो दिवि स्पृशंति भानवः ॥३॥ देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिंधते । विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥४॥ मंद्रो होता गृहपतिरग्ने दूतो विशामसि । त्वे

विशः सवितुः दैव्यस्य उपऽस्थे विश्वा भुवनानि तस्थुः ॥५॥
तिस्रः द्यावः सवितुः द्वौ उपऽस्था एका यमस्य भुवने विराषाट्
आणिं न रथ्यं अमृता अधि तस्थुः इह ब्रवीतु यः ऊं' तत् चि-
केतत् ॥६॥६॥ वि सुऽपर्णः अंतरिक्षाणि अख्यत् गभीरऽवेपाः
असुरः सुऽनीथः क्व इदानीं सूर्यः कः चिकेत कतमां द्यां रश्मिः
अस्य आ ततान ॥७॥ अष्टौ वि अख्यत् ककुभः पृथिव्याः त्री
धन्व योजना सप्त सिंधून् हिरण्यऽअक्षः सविता देवः आ
अगात् दधत् रत्ना दाशुषे वार्याणि ॥८॥ हिरण्यऽपाणिः
सविता विऽचर्षणिः उभे' द्यावापृथिवी' अंतः ईयते अप
अमीवां बाधते वेति सूर्यं अभि कृष्णेन रजसा द्यां ऋणो-
ति ॥९॥ हिरण्यऽहस्तः असुरः सुऽनीथः सुऽमृळीकः
स्वऽवान् यातु अर्वाङ् अपऽसेधन् रक्षसः यातुऽधानान्
अस्थात् देवः प्रतिऽदोषं गृणानः ॥१०॥ ये ते पंथाः सवितः'
पूर्व्यासः अरेणवः सुऽकृताः अंतरिक्षे तेभिः नः अद्य पथिऽभिः
सुऽगेभिः रक्ष च नः अधि च ब्रूहि देव ॥११॥७॥७॥

---

॥३६॥ प्र वः यह्वं पुरूणां विशां देवऽयतीनां अग्निं
सुऽउक्तेभिः वचःऽभिः ईमहे यं सीं इत् अन्ये ईळते ॥१॥
जनासः अग्निं दधिरे सहःऽवृधं हविष्मंतः विधेम ते सः त्वं नः
अद्य सुऽमनाः इह अविता भव वाजेषु संत्य ॥२॥ प्र त्वा दूतं
वृणीमहे होतारं विश्वऽवेदसं महः ते सतः वि चरंति अर्चयः
दिवि स्पृशंति भानवः ॥३॥ देवासः त्वा वरुणः मित्रः अर्यमा सं
दूतं प्रत्नं इंधते विश्वं सः अग्ने जयति त्वया धनं यः ते ददाश
मर्त्यः ॥४॥ मंद्रः होता गृहऽपतिः अग्ने दूतः विशां असि त्वे'

विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥५॥८॥ त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः। स त्वं नो अद्य सुमना उतापरं यक्षि देवान्सुवीर्या ॥६॥ तं घेमित्था नमस्विन उप स्वराजमासते। होत्राभिरग्निं मनुषः समिंधते तितिर्वांसो अति स्रिधः ॥७॥ घ्नंतो वृत्रमतरन्रोदसी अप उरु क्षयाय चक्रिरे। भुवत्कण्वे वृषा द्युम्न्याहुतः क्रंदश्वो गविष्टिषु ॥८॥ सं सीदस्व महाँ असि शोचस्व देववीतमः। वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतं ॥९॥ यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन। यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥१०॥९॥ यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि। तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥११॥ रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यं। त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥१२॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदंजिभिर्वाघद्भिर्विह्वयामहे ॥१३॥ ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह। कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥१४॥ पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः। पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥१५॥१०॥ घनेव विष्वग्वि जह्यराव्णस्तपुर्जंभ यो अस्मध्रुक्। यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥१६॥ अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगं। अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतं ॥१७॥ अग्निना तुर्वशं यदुं परावत

विश्वा सम्ऽगतानि व्रता ध्रुवा यानि देवाः अकृण्वत ॥५॥८॥ त्वे इत् अग्ने सुऽभगे यविष्ठ्य विश्वं आ हूयते हविः सः त्वं नः अद्य सुऽमनाः उत अपरं यक्षि देवान् सुऽवीर्या ॥६॥ तं घ ईं इत्था नमस्विनः उप स्वऽराजं आसते होत्राभिः अग्निं मनुषः सं इंधते तितिर्वांसः अति स्रिधः ॥७॥ घ्नंतः वृत्रं अतरन् रोदसी इति अपः उरु क्षयाय चक्रिरे भुवत् कण्वे वृषा द्युम्नी आऽहुतः क्रंदत् अश्वः गोऽइष्टिषु ॥८॥ सं सीदस्व महान् असि शोचस्व देवऽवीतमः वि धूमं अग्ने अरुषं मियेध्य सृज प्रऽशस्त दर्शतं ॥९॥ यं त्वा देवासः मनवे दधुः इह यजिष्ठं हव्यऽवाहन यं कण्वः मेध्यऽअतिथिः धनऽस्पृतं यं वृषा यं उपऽस्तुतः ॥१०॥९॥ यं अग्निं मेध्यऽअतिथिः कण्वः ईधे ऋतात् अधि तस्य प्र इषः दीदियुः तं इमाः ऋचः तं अग्निं वर्धयामसि ॥११॥ रायः पूर्धि स्वधाऽवः अस्ति हि ते अग्ने देवेषु आप्यं त्वं वाजस्य श्रुत्यस्य राजसि सः नः मृळ महान् असि ॥१२॥ ऊर्ध्वः ऊं इति सु नः ऊतये तिष्ठ देवः न सविता ऊर्ध्वः वाजस्य सनिता यत् अंजिऽभिः वाघत्ऽभिः विऽह्वयामहे ॥१३॥ ऊर्ध्वः नः पाहि अंहसः नि केतुना विश्वं सं अत्रिणं दह कृधि नः ऊर्ध्वान् चरथाय जीवसे विदाः देवेषु नः दुवः ॥१४॥ पाहि नः अग्ने रक्षसः पाहि धूर्तेः अराव्णः पाहि रिषतः उत वा जिघांसतः बृहत्ऽभानो इति यविष्ठ्य ॥१५॥१०॥ घनाऽइव विष्वक् वि जहि अराव्णः तपुःऽजंभ यः अस्मऽध्रुक् यः मर्त्यः शिशीते अति अक्तुऽभिः मा नः सः रिपुः ईशत ॥१६॥ अग्निः वव्ने सुऽवीर्यं अग्निः कण्वाय सौभगं अग्निः प्र आवत् मित्रा उत मेध्यऽअतिथिं अग्निः साता उपऽस्तुतं ॥१७॥ अग्निना तुर्वशं यदुं पराऽवतः

उग्रादेवं हवामहे । अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ॥१८॥ नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते । दीदेथ कण्व ऋतजात उक्षितो यं नमस्यंति कृष्टयः ॥१९॥ त्वेषासो अग्नेरमवंतो अर्चयो भीमासो न प्रतीतये । रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥२०॥११॥

---

॥३७॥ १–१५ कण्वो घौरः ॥ मरुतः ॥ गायत्री ॥

॥३७॥ क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभं । कण्वा अभि प्र गायत ॥१॥ ये पृषतीभिरृष्टिभिः साकं वाशीभिरंजिभिः । अजायंत स्वभानवः ॥२॥ इहेव शृण्व एषां कशा हस्तेषु यद्वदान् । नि यामंश्चित्रमृंजते ॥३॥ प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे । देवत्तं ब्रह्म गायत ॥४॥ प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतं । जंभे रसस्य वावृधे ॥५॥१२॥ को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः । यत्सीमंतं न धूनुथ ॥६॥ नि वो यामाय मानुषो दध्र उग्राय मन्यवे । जिहीत पर्वतो गिरिः ॥७॥ येषामज्मेषु पृथिवी जुजुर्वाँ इव विश्पतिः । भिया यामेषु रेजते ॥८॥ स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ॥९॥ उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥१०॥१३॥ त्यं चिद्घा दीर्घं पृथुं मिहो नपातममृध्रं । प्र च्यावयंति यामभिः ॥११॥ मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन । गिरीँरचुच्यवीतन ॥१२॥ यद्ध यांति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषां ॥१३॥ प्र यात शीभमाशुभिः संति कण्वेषु वो दुवः । तत्रो षु मादयाध्वै ॥१४॥ अस्ति हि ष्मा

उप्ऽदेवं हुवामहे अग्निः नयत् नवंऽवास्त्वं बृहत्ऽरथं तुवीतिं दस्यवे सहः ॥१८॥ नि त्वां अग्ने मनुः दुधे ज्योतिः जनाय शश्वते दीदेथ कण्वे ऋतऽजातः उक्षितः यं नमस्यंति कृष्टयः ॥१९॥ त्वेषासः अग्नेः अमंऽवंतः अर्चयः भीमासः न प्रतिऽइतये रक्ष्स्विनः सदं इत् यातुऽमावंतः विश्वं सं अत्रिणं दह ॥२०॥११॥

---

॥३७॥ क्रीळं वः शर्धः मारुतं अनर्वाणं रथेऽशुभं कण्वाः अभि प्र गायत ॥१॥ ये पृषतीभिः ऋष्टिऽभिः साकं वाशीभिः अंजिऽभिः अजायंत स्वऽभानवः ॥२॥ इहऽइव शृण्वे एषां कशाः हस्तेषु यत् वदान् नि यामन् चित्रं ऋंजते ॥३॥ प्र वः शर्धाय घृष्वये त्वेषऽद्युम्नाय शुष्मिणे देवत्तं ब्रह्म गायत ॥४॥ प्र शंस गोषु अघ्न्यं क्रीळं यत् शर्धः मारुतं जंभे रसस्य ववृधे ॥५॥१२॥ कः वः वर्षिष्ठः आ नरः दिवः च ग्मः च धूतयः यत् सीं अंतं न धूनुथ ॥६॥ नि वः यामाय मानुषः दुध्रे उग्राय मन्यवे जिहीत पर्वतः गिरिः ॥७॥ येषां अज्मेषु पृथिवी जुजुर्वान्ऽइव विश्पतिः भिया यामेषु रेजते ॥८॥ स्थिरं हि जानं एषां वयः मातुः निःऽएतवे यत् सीं अनु द्विता शवः ॥९॥ उत् ऊं त्ये सूनवः गिरः काष्ठाः अज्मेषु अत्नत वाश्राः अभिऽज्ञु यातवे ॥१०॥१३॥ त्यं चित् घ दीर्घं पृथुं मिहः नपातं अमृध्रं प्र च्यवयंति यामंऽभिः ॥११॥ मरुतः यत् ह वः बलं जनान् अचुच्यवीतन गिरीन् अचुच्यवीतन ॥१२॥ यत् ह यांति मरुतः सं ह ब्रुवते अध्वन् आ शृणोति कः चित् एषां ॥१३॥ प्र यात शीभं आशुऽभिः संति कण्वेषु वः दुवः तत्रो सु मादयाध्वै ॥१४॥ अस्ति हि स्म

मदा॑य वः स्मसि ष्मा व॒यमे॑षां । विश्वं॑ चि॒दायु॑र्जी॒-
वसे॑ ॥ १५ ॥ १४ ॥

॥ ३८ ॥ १—१५ कण्वो घौरः ॥ मरुतः ॥ गायत्री ॥

॥ ३८ ॥ कद्ध॑ नू॒नं क॑धप्रियः पि॒ता पु॒त्रं न हस्त॑योः । द॒धि॒ध्वे
वृ॑क्तबर्हिषः ॥ १ ॥ क्व॑ नू॒नं कद्वो॒ अर्थं॒ गन्ता॑ दि॒वो न पृ॑थि॒व्याः । क्व॑
वो॒ गावो॒ न र॑ण्यंति ॥ २ ॥ क्व॑ वः सु॒म्ना नव्यां॑सि॒ मरु॑तः॒ क्व॑ सु॒वि॒ता ।
क्वो॒३ विश्वा॑नि॒ सौभ॑गा ॥ ३ ॥ यद्यू॒यं पृ॑श्निमातरो॒ मर्ता॑सः॒ स्यात॑न ।
स्तो॒ता वो॑ अ॒मृतः॑ स्यात् ॥ ४ ॥ मा वो॑ मृ॒गो न यव॑से जरि॒ता
भू॒दजो॑ष्यः । प॒था य॒मस्य॑ गा॒दुप॑ ॥ ५ ॥ १५ ॥ मो षु णः॒ परा॑परा॒
निर्ऋ॑तिर्दु॒र्हणा॑ वधीत् । प॒दी॒ष्ट तृष्ण॑या स॒ह ॥ ६ ॥ स॒त्यं त्वे॒षा
अम॑वन्तो॒ धन्व॑ञ्चि॒दा रु॒द्रिया॑सः । मिहं॑ कृण्वंत्यवा॒ताम् ॥ ७ ॥ वा॒श्रेव॑
वि॒द्युन्मि॑माति व॒त्सं न मा॒ता सि॑षक्ति । यदे॑षां वृ॒ष्टिरस॑र्जि ॥ ८ ॥
दिवा॑ चि॒त्तमः॑ कृण्वंति प॒र्जन्ये॑नोदवा॒हेन॑ । यत्पृ॑थि॒वीं व्यु॒न्दं-
ति॑ ॥ ९ ॥ अध॑ स्व॒नान्म॒रुतां॒ विश्व॒मा सद्म॒ पार्थि॑वम् । अरे॑जन्त॒ प्र
मानु॑षाः ॥ १० ॥ १६ ॥ मरु॑तो वीळुपा॒णिभि॑श्चि॒त्रा रोध॑स्वती॒-
रनु॑ । या॒तेमखि॑द्रयामभिः ॥ ११ ॥ स्थि॒रा वः॑ सन्तु ने॒मयो॒ रथा॒
अश्वा॑स एषाम् । सुसं॑स्कृता अ॒भीश॑वः ॥ १२ ॥ अच्छा॑ वदा॒ तना॑ गि॒रा
ज॒रायै॒ ब्रह्म॑ण॒स्पति॑म् । अ॒ग्निं मि॒त्रं न द॑र्श॒तम् ॥ १३ ॥ मि॒मी॒हि श्लोक॑-
मा॒स्ये॑ प॒र्जन्य॑ इव ततनः । गाय॑ गाय॒त्रमु॒क्थ्य॑म् ॥ १४ ॥ वन्द॑स्व॒ मा-
रु॑तं ग॒णं त्वे॒षं प॑न॒स्युम॒र्किण॑म् । अ॒स्मे वृ॒द्धा अ॑सन्नि॒ह ॥ १५ ॥ १७ ॥

॥ ३९ ॥ १—१० कण्वो घौरः ॥ मरुतः ॥ प्रागाथं बार्हतं ॥

॥ ३९ ॥ प्र यदि॒त्था प॑रा॒वतः॑ शो॒चिर्न मान॒मस्य॑थ । कस्य॒
क्रत्वा॑ मरुतः॒ कस्य॒ वर्प॑सा॒ कं या॑थ॒ कं ह॑ धूतयः ॥ १ ॥ स्थि॒रा वः॑

मदाय वः स्मसि स्म वयं एषां विश्वं चित् आयुः जीवसे ॥ १५ ॥ १४ ॥

---

॥३८॥ कत् ह नूनं कधऽप्रियः पिता पुत्रं न हस्तयोः दधिध्वे वृक्तऽबर्हिषः ॥१॥ क्व नूनं कत् वः अर्थं गंत दिवः न पृथिव्याः क्व वः गावः न रण्यंति ॥२॥ क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता क्वो' विश्वानि सौभगा ॥३॥ यत् यूयं पृश्निऽमातरः मर्तासः स्यातन स्तोता वः अमृतः स्यात् ॥४॥ मा वः मृगः न यवसे जरिता भूत् अजोष्यः पथा यमस्य गात् उप ॥५॥१५॥ मो' सु नः पराऽपरा निःऽऋतिः दुःऽहना वधीत् पदीष्ट तृष्णया सह ॥६॥ सत्यं त्वेषाः अमऽवंतः धन्वन् चित् आ रुद्रियासः मिहं कृण्वंति अवातां ॥७॥ वाश्राऽइव विऽद्युत् मिमाति वत्सं न माता सिसक्ति यत् एषां वृष्टिः असर्जि ॥८॥ दिवा चित् तमः कृण्वंति पर्जन्येन उदऽवाहेन यत् पृथिवीं विऽउंदंति ॥९॥ अध स्वनात् मरुतां विश्वं आ सद्म पार्थिवं अरेजंत प्र मानुषाः ॥१०॥१६॥ मरुतः वीळुपाणिऽभिः चित्राः रोधस्वतीः अनु यात ईं अखिद्रयामऽभिः ॥११॥ स्थिराः वः संतु नेमयः रथाः अश्वासः एषां सुऽसंस्कृताः अभीशवः ॥१२॥ अच्छ वद तना गिरा जरायै ब्रह्मणः पतिं अग्निं मित्रं न दर्शतं ॥१३॥ मिमीहि श्लोकं आस्ये पर्जन्यःऽइव ततनः गाय गायत्रं उक्थ्यं ॥१४॥ वंदस्व मारुतं गणं त्वेषं पनस्युं अर्किणं अस्मे' वृद्धाः असन् इह ॥१५॥१७॥

---

॥३९॥ प्र यत् इत्था पराऽवतः शोचिः न मानं अस्यथ कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ॥१॥ स्थिराः वः

सं त्वायुधा पराणुदे वीळू उत प्रतिष्कभे । युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥२॥ परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु । वि याथन वनिनः पृथिव्या व्याशाः पर्वतानां ॥३॥ नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः । युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे ॥४॥ प्र वेपयंति पर्वतान्वि विंचंति वनस्पतीन् । प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥५॥१८॥ उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः । आ वो यामाय पृथिवी चिदश्रोदबीभयंत मानुषाः ॥६॥ आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे । गंता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ॥७॥ युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते । वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ॥८॥ असामि हि प्रयज्यवः कण्वं दद प्रचेतसः । असामिभिर्मरुत आ न ऊतिभिर्गंता वृष्टिं न विद्युतः ॥९॥ असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः । ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषं ॥१०॥१९॥

---

॥ ४० ॥ १-८ कण्वो घौरः ॥ ब्रह्मणस्पतिः ॥ प्रागाथं बार्हतं ॥

॥४०॥ उत्तिष्ठ ब्रह्मणस्पते देवयंतस्त्वेमहे । उप प्र यंतु मरुतः सुदानव इंद्र प्राशूर्भवा सचा ॥१॥ त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते । सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥२॥ प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पंक्तिराधसं देवा यज्ञं नयंतु नः ॥३॥ यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।

संतु आयुधा परा॒ऽनुदे॑ वीळु उत प्रति॒ऽस्कभे॑ युष्माक॑म् अस्तु तवि॑षी पनी॑यसी मा मर्त्य॑स्य मा॒यिनः॑ ॥२॥ परा॑ ह॒ यत् स्थि॒रं ह॒थ नरः॑ वर्तय॑थ गुरु वि या॒थन व॒निनः॑ पृथि॒व्याः वि आशाः॑ पर्वतानां ॥३॥ नहि वः॒ शत्रुः॑ विवि॒दे अधि॑ द्यवि॑ न भूम्यां॑ रि॒शाद॒सः युष्माक॑म् अस्तु तवि॑षी तना॑ युजा रुद्रा॑सः नु चि॒त् आ॒ऽधृषे॑ ॥४॥ प्र वेपयं॑ति॒ पर्व॑तान् वि विंचं॑ति॒ वन॒स्पती॑न् प्रो॑ आर॒त मरु॒तः दुर्मदाः॑ऽइव देवा॑सः सर्व॑या वि॒शा ॥५॥१८॥

उपो॑ रथे॑षु पृष॑तीः अयुग्ध्वं प्रष्टिः॑ वह॒ति॒ रोहि॑तः आ वः॒ या॒मा॑य पृथि॒वी चि॒त् अश्रोत् अबी॑भयंत मानु॑षाः ॥६॥ आ वः॒ म॒क्षु तना॑य कं रुद्राः॑ अवः॑ वृणी॒म॒हे गंत॑ नू॒नं नः॒ अव॑सा यथा॑ पु॒रा इ॒त्था कण्वा॑य बि॒भ्युषे॑ ॥७॥ युष्मा॒ऽइ॑षितः म॒रु॒तः मर्त्य॑ऽइ॒षितः आ यः नः॒ अभ्वः॑ ईष॑ते वि तं युयो॒त॒ शव॑सा वि ओज॑सा वि युष्माका॑भिः ऊति॒ऽभिः॑ ॥८॥ असा॑मि हि प्र॒ऽयज्य॒वः कण्वं॑ द॒द प्र॒ऽचे॒त॒सः असा॑मिऽभिः म॒रु॒तः आ नः॑ ऊति॒ऽभिः॑ गंत॑ वृष्टिं न वि॒ऽद्युतः॑ ॥९॥ असा॑मि ओजः॑ बिभृ॒थ सु॒ऽदा॒न॒वः असा॑मि धू॒त॒यः॒ शवः॑ ऋषि॒ऽद्विषे॑ म॒रु॒तः परि॒ऽमन्यवे॑ इषुं॑ न सृ॒जत॒ द्विषं॑ ॥१०॥१९॥

---

॥४०॥ उत् ति॒ष्ठ॒ ब्रह्म॒ण॒ः पते॒ दे॒व॒ऽयंतः॑ त्वा ई॒म॒हे॒ उप॑ प्र यं॒तु म॒रु॒तः॑ सु॒ऽदान॑वः इंद्र॑ प्रा॒शूः भ॒व सचा॑ ॥१॥ त्वां इत् हि सह॒सः पु॒त्र॒ मर्त्यः॑ उप॒ऽब्रूते धने॑ हि॒ते सु॒ऽवीर्यं॑ म॒रु॒तः आ सु॒ऽअश्व्यं॑ दधी॑त यः वः॒ आ॒ऽच॒के ॥२॥ प्र ए॒तु ब्रह्म॑णः पतिः॑ प्र दे॒वी ए॒तु सू॒नृता॑ अच्छ॑ वी॒रं नर्यं॑ पं॒क्तिऽरा॑धसं दे॒वाः य॒ज्ञं न॒यं॒तु॒ नः॒ ॥३॥ यः वा॒घते॑ ददा॑ति सू॒नरं॑ वसु॑ सः ध॒त्ते अक्षि॑ति श्रवः॑

तस्मा इळां सुवीरामा यंजामहे सुप्रतूर्तिमनेहसँ ॥४॥ प्र नूनं ब्रह्मणस्पतिर्मंत्रं वदत्युक्थ्यँ। यस्मिन्निंद्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥५॥२०॥ तमिद्वोचेमा विदथेषु शंभुवं मंत्रं देवा अनेहसँ। इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥६॥ को देवयंतमश्नवज्जनं को वृक्तबर्हिषं। प्रप्र दाश्वान्पस्त्याभिरस्थितांतर्वावत्क्षयं दधे ॥७॥ उप क्षत्रं पृंचीत हंति राजभिर्भये चित्सुक्षितिं दधे। नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ॥८॥२१॥

---

॥ ४१ ॥ १—९ कण्वो घौरः ॥ १—३. ७—९ वरुणमित्रार्यमणः । ४—६ आदित्याः ॥ गायत्री ॥

॥४१॥ यं रक्षंति प्रचेतसो वरुणो मित्रो अर्यमा। नू चित्स दभ्यते जनः ॥१॥ यं बाहुतेव पिप्रति पांति मर्त्यं रिषः। अरिष्टः सर्व एधते ॥२॥ वि दुर्गा वि द्विषः पुरो घ्नंति राजान एषां। नयंति दुरिता तिरः ॥३॥ सुगः पंथा अनृक्षर आदित्यास ऋतं यते। नात्रावखादो अस्ति वः ॥४॥ यं यज्ञं नयथा नर आदित्या ऋजुना पथा। प्र वः स धीतये नशत् ॥५॥२२॥ स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना। अच्छा गच्छत्यस्तृतः ॥६॥ कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः। महि प्सरो वरुणस्य ॥७॥ मा वो घ्नंतं मा शपंतं प्रति वोचे देवयंतं। सुम्नैरिद्व आ विवासे ॥८॥ चतुरश्चिद्ददमानाद्बिभीयादा निधातोः। न दुरुक्ताय स्पृहयेत् ॥९॥२३॥

---

॥ ४२ ॥ १—१० कण्वो घौरः ॥ पूषा ॥ गायत्री ॥

॥४२॥ सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात्। सक्ष्वा देव प्र णस्पुरः ॥१॥ यो नः पूषन्नघो वृको दुःशेव

तस्मै इळां सुवीरां आ यजामहे सुऽप्रतूर्तिं अनेहसं ॥४॥ प्र नूनं ब्रह्मणः पतिः मंत्रं वदति उक्थ्यं यस्मिन् इंद्रः वरुणः मित्रः अर्यमा देवाः ओकांसि चक्रिरे ॥५॥२०॥ तं इत् वोचेम विदथेषु शंऽभुवं मंत्रं देवाः अनेहसं इमां च वाचं प्रतिऽहर्यथ नरः विश्वा इत् वामा वः अश्नवत् ॥६॥ कः देवऽयंतं अश्नवत् जनं कः वृक्तऽबर्हिषं प्रऽप्र दाश्वान् पस्त्याभिः अस्थित अंतःऽवावत् क्षयं दधे ॥७॥ उप क्षत्रं पृंचीत हंति राजऽभिः भये चित् सुऽक्षितिं दधे न अस्य वर्ता न तरुता महाऽधने न अर्भे अस्ति वज्रिणः ॥८॥२१॥

॥४१॥ यं रक्षंति प्रऽचेतसः वरुणः मित्रः अर्यमा नु चित् सः दभ्यते जनः ॥१॥ यं बाहुताऽइव पिप्रति पांति मर्त्यं रिषः अरिष्टः सर्वः एधते ॥२॥ वि दुःऽगा वि द्विषः पुरः घ्नंति राजानः एषां नयंति दुःऽइता तिरः ॥३॥ सुऽगः पंथाः अनृक्षरः आदित्यासः ऋतं यते न अत्र अवऽखादः अस्ति वः ॥४॥ यं यज्ञं नयथ नरः आदित्याः ऋजुना पथा प्र वः सः धीतये नशत् ॥५॥२२॥ सः रत्नं मर्त्यः वसु विश्वं तोकं उत त्मना अच्छ गच्छति अस्तृतः ॥६॥ कथा राधाम सखायः स्तोमं मित्रस्य अर्यम्णः महि प्सरः वरुणस्य ॥७॥ मा वः घ्नंतं मा शपंतं प्रति वोचे देवऽयंतं सुम्नैः इत् वः आ विवासे ॥८॥ चतुरः चित् ददमानात् बिभीयात् आ निऽधातोः न दुःऽउक्ताय स्पृहयेत् ॥९॥२३॥

॥४२॥ सं पूषन् अध्वनः तिर वि अंहः विऽमुचः नपात् सक्ष्व देव प्र नः पुरः ॥१॥ यः नः पूषन् अघः वृकः दुःऽशेवः

आदिदेशति। अप स्म तं पथो जहि ॥२॥ अप त्यं परिपंथिनं मुषीवाणं हुरश्चितं। दूरमधि स्रुतेरज ॥३॥ त्वं तस्य द्वयाविनोऽघशंसस्य कस्य चित्। पदाभि तिष्ठ तपुषिं ॥४॥ आ तत्ते दस्र मंतुमः पूषन्नवो वृणीमहे। येन पितॄनचोदयः ॥५॥२४॥

अधा नो विश्वसौभग हिरण्यवाशीमत्तम। धनानि सुषणा कृधि ॥६॥ अति नः सश्चतो नय सुगा नः सुपथा कृणु। पूषन्निह क्रतुं विदः ॥७॥ अभि सूयवसं नय न नवज्वारो अध्वने। पूषन्निह क्रतुं विदः ॥८॥ शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरं। पूषन्निह क्रतुं विदः ॥९॥ न पूषणं मेथामसि सूक्तैरभि गृणीमसि। वसूनि दस्ममीमहे ॥१०॥२५॥

---

॥ ४३ ॥ १—९ कण्वो घौरः ॥ १. २. ४—६ रुद्रः। ३ मित्रावरुणौ। ७—९ सोमः ॥
१—८ गायत्री। ९ अनुष्टुप् ॥

॥४३॥ कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे। वोचेम शंतमं हृदे ॥१॥ यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे। यथा तोकाय रुद्रियं ॥२॥ यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति। यथा विश्वे सजोषसः ॥३॥ गाथपतिं मेधपतिं रुद्रं जलाषभेषजं। तच्छंयोः सुम्नमीमहे ॥४॥ यः शुक्र इव सूर्यो हिरण्यमिव रोचते। श्रेष्ठो देवानां वसुः ॥५॥२६॥ शं नः करत्यर्वते सुगं मेषाय मेष्ये। नृभ्यो नारिभ्यो गवे ॥६॥ अस्मे सोम श्रियमधि नि धेहि शतस्य नृणां। महि श्रवस्तुविनृम्णं ॥७॥ मा नः सोमपरिबाधो मारातयो जुहुरंत। आ न इंदो वाजे भज ॥८॥ यास्ते प्रजा अमृतस्य परस्मिन्धामन्नृतस्य। मूर्धा नाभा सोम वेन आभूषंतीः सोम वेदः ॥९॥२७॥८॥

आऽदिदेशति अप स्म तं पथः जहि ॥२॥ अप त्यं परिऽपंथिनं मुषीवाणं हुरःऽचितं दूरं अधि स्रुतेः अज ॥३॥ त्वं तस्य द्वयाविनः अघऽशंसस्य कस्य चित् पदा अभि तिष्ठ तपुषिं ॥४॥ आ तत् ते दस्र मंतुऽमः पूषन् अवः वृणीमहे येन पितॄन् अचोदयः ॥५॥२४॥ अध नः विश्वऽसौभग हिरण्यवाशीमत्ऽतम धनानि सुऽसना कृधि ॥६॥ अति नः सश्चतः नय सुऽगा नः सुऽपथा कृणु पूषन् इह क्रतुं विदः ॥७॥ अभि सुऽयवसं नय न नवऽज्वारः अध्वने पूषन् इह क्रतुं विदः ॥८॥ शग्धि पूर्धि प्र यंसि च शिशीहि प्रासि उदरं पूषन् इह क्रतुं विदः ॥९॥ न पूषणं मेथामसि सुऽउक्तैः अभि गृणीमसि वसूनि दस्मं ईमहे ॥१०॥२५॥

---

॥४३॥ कत् रुद्राय प्रऽचेतसे मीळ्हुःऽतमाय तव्यसे वोचेम शंऽतमं हृदे ॥१॥ यथा नः अदितिः करत् पश्वे नृऽभ्यः यथा गवे यथा तोकाय रुद्रियं ॥२॥ यथा नः मित्रः वरुणः यथा रुद्रः चिकेतति यथा विश्वे सऽजोषसः ॥३॥ गाथऽपतिं मेधऽपतिं रुद्रं जलाषऽभेषजं तत् शंऽयोः सुम्नं ईमहे ॥४॥ यः शुक्रःऽइव सूर्यः हिरण्यंऽइव रोचते श्रेष्ठः देवानां वसुः ॥५॥२६॥ शं नः करति अर्वते सुऽगं मेषाय मेष्ये नृऽभ्यः नारिऽभ्यः गवे ॥६॥ अस्मे' सोम श्रियं अधि नि धेहि शतस्य नृणां महि श्रवः तुविऽनृम्णं ॥७॥ मा नः सोमऽपरिबाधः मा अरातयः जुहुरंत आ नः इंदो' वाजे भज ॥८॥ याः ते प्रऽजाः अमृतस्य परस्मिन् धामन् ऋतस्य मूर्धा नाभा सोम वेनः आऽभूषंतीः सोम वेदः ॥९॥२७॥८॥

॥ ४४ ॥ १–१४ प्रस्कण्वः काण्वः ॥ १. २ अग्निरश्विनावुषाः । ३–१४ अग्निः ॥
प्रागाथं बार्हतं ॥

॥४४॥ अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य । आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥१॥ जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणां । सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥२॥ अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियं । धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियं ॥३॥ श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे । देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥४॥ स्तविष्यामि त्वामहं विश्वस्यामृत भोजन । अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥५॥२८॥ सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः । प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनं ॥६॥ होतारं विश्ववेदसं सं हि त्वा विश इंधते । स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥७॥ सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः । कण्वासस्त्वा सुतसोमास इंधते हव्यवाहं स्वध्वर ॥८॥ पतिर्ह्यध्वराणामग्ने दूतो विशामसि । उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥९॥ अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः । असि ग्रामेष्वविता पुरोहितोऽसि यज्ञेषु मानुषः ॥१०॥२९॥ नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजं । मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्यं ॥११॥ यद्देवानां मित्रमहः पुरोहितोऽंतरो यासि दूत्यं । सिंधोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजंते अर्चयः ॥१२॥ श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः । आ सीदंतु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरं ॥१३॥ शृण्वंतु स्तोमं

॥४४॥ अग्ने विवस्वत् उषसः चित्रं राधः अमर्त्य आ दाशुषे
जातऽवेदः वह त्वं अद्य देवान् उषःऽबुधः ॥१॥ जुष्टः हि दूतः
असि हव्यऽवाहनः अग्ने रथीः अध्वराणां सऽजूः अश्विऽभ्यां
उषसा सुऽवीर्यं अस्मे इति धेहि श्रवः बृहत् ॥२॥ अद्य दूतं वृणी-
महे वसुं अग्निं पुरुऽप्रियं धूमऽकेतुं भाःऽऋजीकं विऽउष्टिषु
यज्ञानां अध्वरऽश्रियं ॥३॥ श्रेष्ठं यविष्ठं अतिथिं सुऽआहुतं
जुष्टं जनाय दाशुषे देवान् अच्छ यातवे जातऽवेदसं अग्निं ईळे
विऽउष्टिषु ॥४॥ स्तविष्यामि त्वां अहं विश्वस्य अमृत भोजन
अग्ने त्रातारं अमृतं मियेध्य यजिष्ठं हव्यऽवाहन ॥५॥२८॥
सुऽशंसः बोधि गृणते यविष्ठ्य मधुऽजिह्वः सुऽआहुतः
प्रस्कण्वस्य प्रऽतिरन् आयुः जीवसे नमस्य दैव्यं जनं ॥६॥
होतारं विश्वऽवेदसं सं हि त्वा विशः इंधते सः आ वह पुरुऽहूत
प्रऽचेतसः अग्ने देवान् इह द्रवत् ॥७॥ सवितारं उषसं अश्विना
भगं अग्निं विऽउष्टिषु क्षपः कण्वासः त्वा सुतऽसोमासः इंधते
हव्यऽवाहं सुऽअध्वर ॥८॥ पतिः हि अध्वराणां अग्ने दूतः विशां
असि उषःऽबुधः आ वह सोमऽपीतये देवान् अद्य स्वःऽदृ-
शः ॥९॥ अग्ने पूर्वाः अनु उषसः विभाऽवसो इति दीदेथ वि-
श्वऽदर्शतः असि ग्रामेषु अविता पुरःऽहितः असि यज्ञेषु
मानुषः ॥१०॥२९॥ नि त्वा यज्ञस्य साधनं अग्ने होतारं ऋत्विजं
मनुष्वत् देव धीमहि प्रऽचेतसं जीरं दूतं अमर्त्यं ॥११॥ यत्
देवानां मित्रऽमहः पुरःऽहितः अंतरः यासि दूत्यं सिंधोःऽइव
प्रऽस्वनितासः ऊर्मयः अग्नेः भ्राजंते अर्चयः ॥१२॥ श्रुधि
श्रुत्ऽकर्ण वह्निऽभिः देवैः अग्ने सयावऽभिः आ सीदंतु बर्हिषि
मित्रः अर्यमा प्रातःऽयावानः अध्वरं ॥१३॥ शृण्वंतु स्तोमं

मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः। पिबंतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥ १४ ॥ ३० ॥

---

॥ ४५ ॥ १—१० प्रस्कण्वः काण्वः ॥ १—१०¹ अग्निः । १०² देवाः ॥ अनुष्टुप् ॥

॥४५॥ त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत। यजा स्वध्वरं जनं मनुजातं घृतप्रुषं ॥१॥ श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः। तान्रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥२॥ प्रियमेधवदत्रिवज्जातवेदो विरूपवत्। अंगिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवं ॥३॥ महिकेरव ऊतये प्रियमेधा अहूषत। राजंतमध्वराणामग्निं शुक्रेण शोचिषा ॥४॥ घृताहवन संत्येमा उ षु श्रुधी गिरः। याभिः कण्वस्य सूनवो हवंतेऽवसे त्वा ॥५॥ ३१॥ त्वां चित्रश्रवस्तम हवंते विक्षु जंतवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥६॥ नि त्वा होतारमृत्विजं दधिरे वसुवित्तमं। श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥७॥ आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः। बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ॥८॥ प्रातर्याव्णः सहस्कृत सोमपेयाय संत्य। इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥९॥ अर्वांचं दैव्यं जनमग्ने यक्ष्व सहूतिभिः। अयं सोमः सुदानवस्तं पात तिरोअह्न्यं ॥१०॥ ३२॥

---

॥ ४६ ॥ १—१५ प्रस्कण्वः काण्वः ॥ अश्विनौ ॥ गायत्री ॥

॥४६॥ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः। स्तुषे वामश्विना बृहत् ॥१॥ या दस्रा सिंधुमातरा मनोतरा रयीणां। धिया देवा वसुविदा ॥२॥ वच्यंते वां ककुहासो

मरुतः सुऽदानवः अग्निऽजिह्वाः ऋतऽवृधः पिबंतु सोमं वरुणः धृतऽव्रतः अश्विऽभ्यां उषसा सऽजूः ॥ १४ ॥ ३० ॥

---

॥ ४५ ॥ त्वं अग्ने वसून् इह रुद्रान् आदित्यान् उत यज स्वऽअध्वरं जनं मनुऽजातं घृतऽप्रुषं ॥ १ ॥ श्रुष्टीऽवानः हि दाशुषे देवाः अग्ने विऽचेतसः तान् रोहित्ऽअश्व गिर्वणः त्रयःऽत्रिंशतं आ वह ॥ २ ॥ प्रियमेधऽवत् अत्रिऽवत् जातऽवेदः विरूपऽवत् अंगिरस्वत् महिऽव्रत प्रस्कण्वस्य श्रुधि हवं ॥ ३ ॥ महिऽकेरवः ऊतये प्रियऽमेधाः अहूषत राजंतं अध्वराणां अग्निं शुक्रेण शोचिषा ॥ ४ ॥ घृतऽआहवन संत्य इमाः ऊं सु श्रुधि गिरः याभिः कण्वस्य सूनवः हवंते अवसे त्वा ॥ ५ ॥ ३१ ॥ त्वां चित्रश्रवःऽतम हवंते विक्षु जंतवः शोचिःऽकेशं पुरुऽप्रिय अग्ने हव्याय वोळ्हवे ॥ ६ ॥ नि त्वा होतारं ऋत्विजं दधिरे वसुवित्ऽतमं श्रुत्ऽकर्णं सप्रथःऽतमं विप्राः अग्ने दिविष्टिषु ॥ ७ ॥ आ त्वा विप्राः अचुच्यवुः सुतऽसोमाः अभि प्रयः बृहत् भाः बिभ्रतः हविः अग्ने मर्ताय दाशुषे ॥ ८ ॥ प्रातःऽयाव्नः सहःऽकृत सोमऽपेयाय संत्य इह अद्य दैव्यं जनं बर्हिः आ सादय वसो ॥ ९ ॥ अर्वाचं दैव्यं जनं अग्ने यक्ष्व सहूतिऽभिः अयं सोमः सुऽदानवः तं पात तिरःऽअह्न्यं ॥ १० ॥ ३२ ॥

---

॥ ४६ ॥ एषो उषाः अपूर्व्या वि उच्छति प्रिया दिवः स्तुषे वां अश्विना बृहत् ॥ १ ॥ या दस्रा सिंधुऽमातरा मनोतरा रयीणां धिया देवा वसुऽविदा ॥ २ ॥ वच्यंते वां ककुहासः

जूर्णायामधि विश्पति। यद्वां रथो विभिष्पतात् ॥३॥ हविषा जारो अपां पिपर्ति पपुरिर्नरा। पिता कुटस्य चर्षणिः ॥४॥ आदारो वां मतीनां नासत्या मतवचसा। पातं सोमस्य धृष्णुया ॥५॥३३॥ या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः। तामस्मे रासाथामिषं ॥६॥ आ नो नावा मतीनां यातं पाराय गंतवे। युंजाथामश्विना रथं ॥७॥ अरित्रं वां दिवस्पृथु तीर्थे सिंधूनां रथः। धिया युयुज्र इंदवः ॥८॥ दिवस्कण्वास इंदवो वसु सिंधूनां पदे। स्वं वव्रिं कुह धित्सथः ॥९॥ अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः। व्यख्यज्जिह्वयासितः ॥१०॥३४॥ अभूदु पारमेतवे पंथा ऋतस्य साधुया। अदर्शि वि स्रुतिर्दिवः ॥११॥ तत्तदिदश्विनोरवो जरिता प्रति भूषति। मदे सोमस्य पिप्रतोः ॥१२॥ वावसाना विवस्वति सोमस्य पीत्या गिरा। मनुष्वच्छंभू आ गतं ॥१३॥ युवोरुषा अनु श्रियं परिज्मनोरुपाचरत्। ऋता वनथो अक्तुभिः ॥१४॥ उभा पिबतमश्विनोभा नः शर्म यच्छतं। अविद्रियाभिरूतिभिः ॥१५॥३५॥३॥

---

॥ ४७ ॥ १—१० प्रस्कण्वः काण्वः ॥ अश्विनौ ॥ प्रागाथं बार्हतं ॥

॥४७॥ अयं वां मधुमत्तमः सुतः सोम ऋतावृधा। तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥१॥ त्रिवंधुरेण त्रिवृता सुपेशसा रथेना यातमश्विना। कण्वासो वां ब्रह्म कृण्वंत्यध्वरे तेषां सु शृणुतं हवं ॥२॥ अश्विना मधुमत्तमं पातं सोममृतावृधा। अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतं ॥३॥ त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतं। कण्वासो वां सुतसोमा अभिद्यवो

बूर्णायां अधि विष्टपि यत् वां रथः विऽभिः पतात् ॥३॥ हविषा जारः अपां पिपर्ति पपुरिः नरा पिता कुटस्य चर्षणिः ॥४॥ आऽदारः वां मतीनां नासत्या मतऽवचसा पातं सोमस्य धृष्णुऽया ॥५॥३३॥ या नः पीपरत् अश्विना ज्योतिष्मती तमः तिरः तां अस्मे रासाथां इषं ॥६॥ आ नः नावा मतीनां यातं पाराय गंतवे युंजाथां अश्विना रथं ॥७॥ अरित्रं वां दिवः पृथु तीर्थे सिंधूनां रथः धिया युयुज्रे इंदवः ॥८॥ दिवः कण्वासः इंदवः वसु सिंधूनां पदे स्वं वव्रिं कुह धित्सथः ॥९॥ अभूत् ऊं इति भाः ऊं इति अंशवे हिरण्यं प्रति सूर्यः वि अख्यत् जिह्वया असितः ॥१०॥३४॥ अभूत् ऊं इति पारं एतवे पंथाः ऋतस्य साधुऽया अदर्शि वि स्रुतिः दिवः ॥११॥ तत्ऽतत् इत् अश्विनोः अवः जरिता प्रति भूषति मदे सोमस्य पिप्रतोः ॥१२॥ ववसाना विवस्वति सोमस्य पीत्या गिरा मनुष्वत् शंऽभू इति शं॰ आ गतं ॥१३॥ युवोः उषाः अनु श्रियं परिऽज्मनोः उपऽआचरत् ऋता वनथः अक्तुऽभिः ॥१४॥ उभा पिबतं अश्विना उभा नः शर्म यच्छतं अविद्रियाभिः ऊतिऽभिः ॥१५॥३५॥३॥

---

॥४७॥ अयं वां मधुमत्ऽतमः सुतः सोमः ऋतऽवृधा तं अश्विना पिबतं तिरःऽअह्न्यं धत्तं रत्नानि दाशुषे ॥१॥ त्रिऽवंधुरेण त्रिऽवृता सुऽपेशसा रथेन आ यातं अश्विना कण्वासः वां ब्रह्म कृण्वंति अध्वरे तेषां सु शृणुतं हवं ॥२॥ अश्विना मधुमत्ऽतमं पातं सोमं ऋतऽवृधा अथ अद्य दस्रा वसु बिभ्रता रथे दाश्वांसं उप गच्छतं ॥३॥ त्रिऽसधस्थे बर्हिषि विश्वऽवेदसा मध्वा यज्ञं मिमिक्षतं कण्वासः वां सुतऽसोमाः अभिऽद्यवः

युवां हवंते अश्विना ॥४॥ याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना। ताभिः ष्व१स्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥५॥१॥ सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना। रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहं ॥६॥ यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे। अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥७॥ अर्वाचा वां सप्तयोऽध्वरश्रियो वहंतु सवनेदुप। इषं पृंचंता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥८॥ तेन नासत्या गतं रथेन सूर्यत्वचा। येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥९॥ उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे। शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥१०॥२॥

---

॥४८॥ १–१६ प्रस्कण्वः काण्वः ॥ उषाः ॥ प्रागाथं बार्हतं ॥

॥४८॥ सह वामेन न उषो व्युच्छा दुहितर्दिवः। सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥१॥ अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवंत वस्तवे। उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनां ॥२॥ उवासोषा उच्छाच्च नु देवी जीरा रथानां। ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥३॥ उषो ये ते प्र यामेषु युंजते मनो दानाय सूरयः। अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणां ॥४॥ आ घा योषेव सूनर्युषा याति प्रभुंजती। जरयंती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥५॥३॥ वि या सृजति समनं व्य१र्थिनः पदं न वेत्योदती। वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥६॥ एषायुक्त

युवां हवंते अश्विना ॥४॥ याभिः कण्वं अभिष्टिऽभिः प्र आवतं
युवं अश्विना ताभिः सु अस्मान् अवतं शुभः पती' पातं सोमं
ऋतऽवृधा ॥५॥१॥ सुऽदासे दस्रा वसु बिभ्रता रथे पृक्षः वहतं
अश्विना रयिं समुद्रात् उत वा दिवः परि अस्मे' धत्तं पुरुऽस्पृ-
हं ॥६॥ यत् नासत्या पराऽवति यत् वा स्थः अधि तुर्वशे अतः
रथेन सुऽवृता नः आ गतं साकं सूर्यस्य रश्मिऽभिः ॥७॥
अर्वाचा वां सप्तयः अध्वरऽश्रियः वहंतु सवना इत् उप इषं
पृंचंता सुऽकृते सुऽदानवे आ बर्हिः सीदतं नरा ॥८॥ तेन ना-
सत्या आ गतं रथेन सूर्यऽत्वचा येन शश्वत् ऊहथुः दाशुषे वसु
मध्वः सोमस्य पीतये ॥९॥ उक्थेभिः अर्वाक् अवसे पुरुऽवसू॰
अर्कैः च नि ह्वयामहे शश्वत् कण्वानां सदसि प्रिये हि कं सोमं
पपथुः अश्विना ॥१०॥२॥

---

॥४८॥ सह वामेन नः उषः वि उच्छ दुहितः दिवः सह
द्युम्नेन बृहता विभाऽवरि राया देवि दास्वती ॥१॥ अश्वऽवतीः
गोऽमतीः विश्वऽसुविदः भूरि च्यवंत वस्तवे उत् ईरय प्रति मा
सूनृताः उषः चोद राधः मघोनां ॥२॥ उवास उषाः उच्छात्
च नु देवी जीरा रथानां ये अस्याः आऽचरणेषु दध्रिरे समुद्रे न
श्रवस्यवः ॥३॥ उषः ये ते प्र यामेषु युंजते मनः दानाय सूरयः
अत्र अह तत् कण्वः एषां कण्वऽतमः नाम गृणाति नृणां ॥४॥
आ घ योषाऽइव सूनरी उषाः याति प्रऽभुंजती जरयंती वृजनं
पत्ऽवत् ईयते उत् पातयति पक्षिणः ॥५॥३॥ वि या सृजति
समनं वि अर्थिनः पदं न वेति ओदती वयः नकिः ते पप्तिऽवां-
सः आसते विऽउष्टौ वाजिनीऽवति ॥६॥ एषा अयुक्त

परावतः सूर्यस्योदयनादधि । शतं रथेभिः सुभगोषा इयं वि
यात्यभि मानुषान् ॥७॥ विश्वमस्या नानाम चक्षसे जगज्ज्यो-
तिष्कृणोति सूनरी । अप द्वेषो मघोनी दुहिता दिव उषा
उच्छदप स्रिधः ॥८॥ उष आ भाहि भानुना चंद्रेण दुहितर्दिवः ।
आवहंती भूर्यस्मभ्यं सौभगं व्युच्छंती दिविष्टिषु ॥९॥ विश्वस्य
हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि । सा नो रथेन बृहता
विभावरि श्रुधि चित्रामघे हवं ॥१०॥४॥ उषो वाजं हि वंस्व
यश्चित्रो मानुषे जने । तेना वह सुकृतो अध्वराँ उप ये त्वा
गृणंति वह्नयः ॥११॥ विश्वान्देवाँ आ वह सोमपीतयेऽंतरि-
क्षादुषस्त्वं । सास्मासु धा गोमदश्वावदुक्थ्य१मुषो वाजं सु-
वीर्यं ॥१२॥ यस्या रुशंतो अर्चयः प्रति भद्रा अदृक्षत । सा
नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यं ॥१३॥ ये चिद्धि
त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि । सा नः स्तोमाँ अभि
गृणीहि राधसोषः शुक्रेण शोचिषा ॥१४॥ उषो यदद्य भानुना
वि द्वारावृणवो दिवः । प्र नो यच्छतादवृकं पृथु छर्दिः प्र
देवि गोमतीरिषः ॥१५॥ सं नो राया बृहता विश्वपेशसा
मिमिक्ष्वा समिळाभिरा । सं द्युम्नेन विश्वतुरोषो महि सं
वाजैर्वाजिनीवति ॥१६॥५॥

---

॥ ४९ ॥ १–४ प्रस्कण्वः काण्वः ॥ उषाः ॥ अनुष्टुप् ॥

॥४९॥ उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि ।
वहंत्वरुणप्सव उप त्वा सोमिनो गृहं ॥१॥ सुपेशसं सुखं
रथं यमध्यस्था उषस्त्वं । तेना सुश्रवसं जनं प्रावाद्य
दुहितर्दिवः ॥ २ ॥ वयश्चित्ते पतत्रिणो द्विपच्चतुष्प-

पराऽवतः सूर्यस्य उत्ऽअयनात् अधि शतं रथेभिः सुऽभगा उषाः इयं वि याति अभि मानुषान् ॥७॥ विश्वं अस्याः ननाम चक्षसे जगत् ज्योतिः कृणोति सूनरी अप द्वेषः मघोनी दुहिता दिवः उषाः उच्छत् अप स्रिधः ॥८॥ उषः आ भाहि भानुना चंद्रेण दुहितः दिवः आऽवहंती भूरि अस्मभ्यं सौभगं विऽउच्छंती दिविष्टिषु ॥९॥ विश्वस्य हि प्राणनं जीवनं त्वे वि यत् उच्छसि सूनरि सा नः रथेन बृहता विभाऽवरि श्रुधि चित्रऽमघे हवं ॥१०॥४॥ उषः वाजं हि वंस्व यः चित्रः मानुषे जने तेन आ वह सुऽकृतः अध्वरान् उप ये त्वा गृणंति वह्नयः ॥११॥ विश्वान् देवान् आ वह सोमऽपीतये अंतरिक्षात् उषः त्वं सा अस्मासु धाः गोऽमत् अश्वऽवत् उक्थ्यं उषः वाजं सुऽवीर्यं ॥१२॥ यस्याः रुशंतः अर्चयः प्रति भद्राः अदृक्षत सा नः रयिं विश्वऽवारं सुऽपेशसं उषाः ददातु सुग्म्यं ॥१३॥ ये चित् हि त्वां ऋषयः पूर्वे ऊतये जुहूरे अवसे महि सा नः स्तोमान् अभि गृणीहि राधसा उषः शुक्रेण शोचिषा ॥१४॥ उषः यत् अद्य भानुना वि द्वारौ ऋणवः दिवः प्र नः यच्छतात् अवृकं पृथु छर्दिः प्र देवि गोऽमतीः इषः ॥१५॥ सं नः राया बृहता विश्वऽपेशसा मिमिक्ष्व सं इळाभिः आ सं द्युम्नेन विश्वऽतुरा उषः महि सं वाजैः वाजिनीऽवति ॥१६॥५॥

---

॥४९॥ उषः भद्रेभिः आ गहि दिवः चित् रोचनात् अधि वहंतु अरुणऽप्सवः उप त्वा सोमिनः गृहं ॥१॥ सुऽपेशसं सुऽखं रथं यं अधिऽअस्थाः उषः त्वं तेन सुऽश्रवसं जनं प्र अव अद्य दुहितः दिवः ॥२॥ वयः चित् ते पतत्रिणः द्विऽपत् चतुःऽपत्

दर्जुनि। उषः प्रारन्नृतूँरनु दिवो अंतेभ्यस्परि ॥३॥ व्युच्छंती हि रश्मिभिर्विश्वमाभासि रोचनं। तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥४॥६॥

---

॥ ५० ॥ १—१३ प्रस्कण्वः काण्वः ॥ सूर्यः ॥ १—९ गायत्री । १०—१३ अनुष्टुप् ॥

॥५०॥ उदु त्यं जातवेदसं देवं वहंति केतवः। दृशे विश्वाय सूर्यं ॥१॥ अप त्ये तायवो यथा नक्षत्रा यंत्यक्तुभिः। सूराय विश्वचक्षसे ॥२॥ अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु। भ्राजंतो अग्नयो यथा ॥३॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमा भासि रोचनं ॥४॥ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्। प्रत्यङ्विश्वं स्वर्दृशे ॥५॥७॥ येना पावक चक्षसा भुरण्यंतं जनाँ अनु। त्वं वरुण पश्यसि ॥६॥ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः। पश्यञ्जन्मानि सूर्य ॥७॥ सप्त त्वा हरितो रथे वहंति देव सूर्य। शोचिष्केशं विचक्षण ॥८॥ अयुक्त सप्त शुंध्युवः सूरो रथस्य नप्त्यः। ताभिर्याति स्वयुक्तिभिः ॥९॥ उद्वयं तमसस्परि ज्योतिष्पश्यंत उत्तरं। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं ॥१०॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं। हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥११॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि। अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२॥ उदगादयमादित्यो विश्वेन सहसा सह। द्विषंतं मह्यं रंधयन्मो अहं द्विषते रधं ॥१३॥८॥९॥

---

॥ ५१ ॥ १—१५ सव्य आंगिरसः ॥ इंद्रः ॥ १—१३ जगती । १४. १५ त्रिष्टुप् ॥

॥५१॥ अभि त्यं मेषं पुरुहूतमृग्मियमिंद्रं गीर्भिर्मदता वस्वो अर्णवं। यस्य द्यावो न विचरंति मानुषा भुजे मंहिष्ठम-

अर्जुनि उषः प्र आरन् ऋतून् अनु दिवः अंतेभ्यः परि ॥ ३ ॥ विऽउच्छंती हि रश्मिऽभिः विश्वं आऽभासि रोचनं तां त्वां उषः वसुऽयवः गीःऽभिः कण्वाः अहूषत ॥ ४ ॥ ६ ॥

---

॥ ५० ॥ उत् ऊं' त्यं जातऽवेदसं देवं वहंति केतवः दृशे विश्वाय सूर्यं ॥ १ ॥ अप त्ये तायवः यथा नक्षत्रा यंति अक्तुऽभिः सूराय विश्वऽचक्षसे ॥ २ ॥ अदृश्रं अस्य केतवः वि रश्मयः जनान् अनु भ्राजंतः अग्नयः यथा ॥ ३ ॥ तरणिः विश्वऽदर्शतः ज्योतिःऽकृत् असि सूर्य विश्वं आ भासि रोचनं ॥ ४ ॥ प्रत्यङ् देवानां विशः प्रत्यङ् उत् एषि मानुषान् प्रत्यङ् विश्वं स्वः दृशे ॥ ५ ॥ ७ ॥ येन पावक चक्षसा भुरण्यंतं जनान् अनु त्वं वरुण पश्यसि ॥ ६ ॥ वि द्यां एषि रजः पृथु अहा मिमानः अक्तुऽभिः पश्यन् जन्मानि सूर्य ॥ ७ ॥ सप्त त्वा हरितः रथे वहंति देव सूर्य शोचिःऽकेशं विऽचक्षण ॥ ८ ॥ अयुक्त सप्त शुंध्युवः सूरः रथस्य नप्त्यः ताभिः याति स्वयुक्तिऽभिः ॥ ९ ॥ उत् वयं तमसः परि ज्योतिः पश्यंतः उत्ऽतरं देवं देवऽत्रा सूर्यं अगन्म ज्योतिः उत्ऽतमं ॥ १० ॥ उत्ऽयन् अद्य मित्रऽमहः आऽरोहन् उत्ऽतरां दिवं हृत्ऽरोगं मम सूर्य हरिमाणं च नाशय ॥ ११ ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि अथो' हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥ १२ ॥ उत् अगात् अयं आदित्यः विश्वेन सहसा सह द्विषंतं मह्यं रंधयन् मो' अहं द्विषते रधं ॥ १३ ॥ ८ ॥ ९ ॥

---

॥ ५१ ॥ अभि त्यं मेषं पुरुऽहूतं ऋग्मियं इंद्रं गीःऽभिः मदत वस्वः अर्णवं यस्य द्यावः न विऽचरंति मानुषा भुजे मंहिष्ठं

भि विप्रमर्चत ॥१॥ अभीमवन्वन्त्स्वभिष्टिमूतयोऽन्तरि-
क्षप्रां तविषीभिरावृतं । इंद्रं दक्षास ऋभवो मदच्युतं
शतक्रतुं जवनी सूनृतारुहत् ॥२॥ त्वं गोत्रमंगिरो-
भ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित् । ससेन चिद्वि-
मदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥३॥
त्वमपामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु । वृत्रं
यदिंद्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ॥४॥
त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्ता-
वजुह्वत । त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजि-
श्वानं दस्युहत्येष्वाविथ ॥५॥९॥ त्वं कुत्सं शुष्णहत्येष्वा-
विथारंधयोऽतिथिग्वाय शंबरं । महांतं चिदर्बुदं नि
क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥६॥ त्वे विश्वा
तविषी सध्र्यग्घिता तव राधः सोमपीथाय हर्षते ।
तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि
वृष्ण्या ॥७॥ वि जानीह्यार्यान्ये च दस्यवो बर्हिष्मते
रंधया शासदव्रतान् । शाकी भव यजमानस्य चोदिता
विश्वेत्ता ते सधमादेषु चाकन ॥८॥ अनुव्रताय रंध-
यन्नपव्रतानाभूभिरिंद्रः श्नथयन्ननाभुवः । वृद्धस्य चिद्वर्ध-
तो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ॥९॥
तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते
शवः । आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्न-
भि श्रवः ॥१०॥१०॥ मंदिष्ट यदुशने काव्ये सचाँ इंद्रो वंकू
वंकुतराधि तिष्ठति । उग्रो ययिं निरपः स्रोतसासृजद्वि
शुष्णस्य दृंहिता ऐरयत्पुरः ॥११॥ आ स्मा रथं वृषपाणेषु

अभि विप्रं अर्चत ॥१॥ अभि ईं अवन्वन् सुऽअभिष्टिं ऊतयः अंतरिक्षऽप्रां तविषीभिः आऽवृतं इंद्रं दक्षासः ऋभवः मदऽच्युतं शतऽक्रतुं जवनी सूनृता आ अरुहत् ॥२॥ त्वं गोत्रं अंगिरःऽभ्यः अवृणोः अप उत अत्रये शतऽदुरेषु गातुऽवित् ससेन चित् विऽमदाय अवहः वसु आजौ अद्रिं ववसानस्य नर्तयन् ॥३॥ त्वं अपां अपिऽधाना अवृणोः अप अधारयः पर्वते दानुऽमत् वसु वृत्रं यत् इंद्र शवसा अवधीः अहिं आत् इत् सूर्यं दिवि आ अरोहयः दृशे ॥४॥ त्वं मायाभिः अप मायिनः अधमः स्वधाभिः ये अधि शुप्तौ अजुह्वत त्वं पिप्रोः नृऽमनः प्र अरुजः पुरः प्र ऋजिश्वानं दस्युऽहत्येषु आविथ ॥५॥९॥ त्वं कुत्सं शुष्णऽहत्येषु आविथ अरंधयः अतिथिऽग्वाय शंबरं महांतं चित् अर्बुदं नि क्रमीः पदा सनात् एव दस्युऽहत्याय जज्ञिषे ॥६॥ त्वे विश्वा तविषी सध्र्यक् हिता तव राधः सोमऽपीथाय हर्षते तव वज्रः चिकिते बाह्वोः हितः वृश्च शत्रोः अव विश्वानि वृष्ण्या ॥७॥ वि जानीहि आर्यान् ये च दस्यवः बर्हिष्मते रंधय शासत् अव्रतान् शाकी भव यजमानस्य चोदिता विश्वा इत् ता ते सधऽमादेषु चाकन ॥८॥ अनुऽव्रताय रंधयन् अपऽव्रतान् आऽभूभिः इंद्रः श्नथयन् अनाभुवः वृद्धस्य चित् वर्धतः द्यां इनक्षतः स्तवानः वम्रः वि जघान संऽदिहः ॥९॥ तक्षत् यत् ते उशना सहसा सहः वि रोदसी मज्मना बाधते शवः आ त्वा वातस्य नृऽमनः मनःऽयुजः आ पूर्यमाणं अवहन् अभि श्रवः ॥१०॥१०॥ मंदिष्ट यत् उशने काव्ये सचा इंद्रः वंकू वंकुऽतरा अधि तिष्ठति उग्रः ययिं निः अपः स्रोतसा असृजत् वि शुष्णस्य दृंहिताः ऐरयत् पुरः ॥११॥ आ स्म रथं वृषऽपानेषु

तिष्ठसि शार्यातस्य प्रभृता येषु मंदसे। इंद्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि॥१२॥ अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिंद्र सुन्वते। मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या॥१३॥ इंद्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः। अश्वयुर्गव्यू रथयुर्वसूयुरिंद्र इद्रायः क्षयति प्रयंता॥१४॥ इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि। अस्मिन्निंद्र वृजने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्स्याम॥१५॥११॥

---

॥५२॥ १—१५ सव्य आंगिरसः॥ इंद्रः॥ १—१२.१४ जगती। १३.१५ त्रिष्टुप्॥

॥५२॥ त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते। अत्यं न वाजं हवनस्यदं रथमेंद्रं ववृत्यामवसे सुवृक्तिभिः॥१॥ स पर्वतो न धरुणेष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे। इंद्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि जर्हृषाणो अंधसा॥२॥ स हि द्वरो द्वरिषु वव्र ऊधनि चंद्रबुध्नो मदवृद्धो मनीषिभिः। इंद्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरंधसः॥३॥ आ यं पृणंति दिवि सद्मबर्हिषः समुद्रं न सुभ्व१ः स्वा अभिष्टयः। तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इंद्रमवाता अह्रुतप्सवः॥४॥ अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः। इंद्रो यद्वज्री धृषमाणो अंधसा भिनद्वलस्य परिधींरिव त्रितः॥५॥१२॥ परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत्। वृत्रस्य यत्प्रवणे दुर्गृभिश्वनो निजघंथ हन्वोरिंद्र तन्यतुं॥६॥ ह्रदं न हि त्वा न्यृषंत्यूर्मे-

तिष्ठसि शार्यातस्य प्रऽभृताः येषु मंदसे इंद्र यथा सुतऽसोमेषु चाकनः अनर्वाणं श्लोकं आ रोहसे दिवि ॥१२॥ अददाः अर्भां महते वचस्यवे कक्षीवते वृचयां इंद्र सुन्वते मेना अभवः वृष-णश्वस्य सुऽक्रतो॰ विश्वा इत् ता ते सवनेषु प्रऽवाच्या ॥१३॥ इंद्रः अश्रायि सुऽध्यः निरेके पज्रेषु स्तोमः दुर्यः न यूपः अश्वऽयुः गव्युः रथऽयुः वसुऽयुः इंद्रः इत् रायः क्षयति प्रऽयंता ॥१४॥ इदं नमः वृषभाय स्वऽराजे सत्यऽशुष्माय तवसे अवाचि अस्मिन् इंद्र वृजने सर्वऽवीराः स्मत् सूरिऽभिः तव शर्मन् स्याम ॥१५॥११॥

---

॥५२॥ त्यं सु मेषं महय स्वःऽविदं शतं यस्य सुऽभ्वः साकं ईरते अत्यं न वाजं हवनऽस्यदं रथं आ इंद्रं ववृत्यां अवसे सुवृक्तिऽभिः ॥१॥ सः पर्वतः न धरुणेषु अच्युतः सहस्रऽऊतिः तविषीषु ववृधे इंद्रः यत् वृत्रं अवधीत् नदीऽवृतं उब्जन् अर्णांसि जर्हृषाणः अंधसा ॥२॥ सः हि द्वरः द्वरिषु वव्रः ऊधनि चंद्रऽबुध्नः मदऽवृद्धः मनीषिऽभिः इंद्रं तं अह्वे सुऽअपस्यया धिया मंहिष्ठऽरातिं सः हि पप्रिः अंधसः ॥३॥ आ यं पृणंति दिवि सद्मऽबर्हिषः समुद्रं न सुऽभ्वः स्वाः अभिष्टयः तं वृत्रऽहत्ये अनु तस्थुः ऊतयः शुष्माः इंद्रं अवाताः अहुतऽप्सवः ॥४॥ अभि स्वऽवृष्टिं मदे अस्य युध्यतः रघ्वीःऽइव प्रवणे सस्रुः ऊतयः इंद्रः यत् वज्री धृषमाणः अंधसा भिनत् वलस्य परिधीन्ऽइव त्रितः ॥५॥१२॥ परि ईं घृणा चरति तित्विषे शवः अपः वृत्वी रजसः बुध्नं आ अशयत् वृत्रस्य यत् प्रवणे दुःऽगृभिश्वनः निऽजघंथ हन्वोः इंद्र तन्यतुं ॥६॥ हृदं न हि त्वा निऽऋषंति

यो ब्रह्माणींद्र तव यानि वर्धना। त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसं ॥७॥ जघन्वाँ उ हरिभिः संभृतक्रतविंद्र वृत्रं मनुषे गातुयन्नपः। अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥८॥ बृहत्स्वश्चंद्रममवद्यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः। यन्मानुषप्रधना इंद्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥९॥ द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इंद्र ते। वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥१०॥१३॥ यदिन्न्विंद्र पृथिवी दशभुजिरहानि विश्वा ततनंत कृष्टयः। अत्राह ते मघवन्विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ॥११॥ त्वमस्य पारे रजसो व्योमनः स्वभूत्योजा अवसे धृषन्मनः। चकृषे भूमिं प्रतिमानमोजसोऽपः स्वः परिभूरेष्या दिवं ॥१२॥ त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः। विश्वमाप्रा अंतरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥१३॥ न यस्य द्यावापृथिवी अनु व्यचो न सिंधवो रजसो अंतमानशुः। नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥१४॥ आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा। वृत्रस्य यद्भृष्टिमता वधेन नि त्वमिंद्र प्रत्यानं जघंथ ॥१५॥१४॥

---

॥ ५३ ॥ १–११ सव्य आंगिरसः ॥ इंद्रः ॥ १–९ जगती । १०. ११ त्रिष्टुप् ॥

॥५३॥ न्यू३षु वाचं प्र महे भरामहे गिर इंद्राय सदने विवस्वतः। नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्र-

ऊर्मयः ब्रह्माणि इंद्र तव यानि वर्धना त्वष्टा चित् ते युज्यं ववृधे शवः ततक्ष वज्रं अभिभूतिऽओजसं ॥७॥ जघन्वान् ऊं' हरिऽभिः संभृतऽक्रतो° इंद्र वृत्रं मनुषे गातुऽयन् अपः अयच्छथाः बाह्वोः वज्रं आयसं अधारयः दिवि आ सूर्यं दृशे ॥८॥ बृहत् स्वऽचंद्रं अमऽवत् यत् उक्थ्यं अकृण्वत भियसा रोहणं दिवः यत् मानुषऽप्रधनाः इंद्रं ऊतयः स्वः नृऽसाचः मरुतः अमदन् अनु ॥९॥ द्यौः चित् अस्य अमऽवान् अहेः स्वनात् अयोयवीत् भियसा वज्रः इंद्र ते वृत्रस्य यत् बद्बधानस्य रोदसी' मदे सुतस्य शवसा अभिनत् शिरः ॥१०॥१३॥ यत् इत् नु इंद्र पृथिवी दशऽभुजिः अहानि विश्वा ततनंत कृष्टयः अत्र अह ते मघऽवन् विऽश्रुतं सहः द्यां अनु शवसा बर्हणा भुवत् ॥११॥ त्वं अस्य पारे रजसः विऽओमनः स्वभूतिऽओजाः अवसे धृषत्ऽमनः चकृषे भूमिं प्रतिऽमानं ओजसः अपः स्वः° परिऽभूः एषि आ दिवं ॥१२॥ त्वं भुवः प्रतिऽमानं पृथिव्याः ऋष्वऽवीरस्य बृहतः पतिः भूः विश्वं आ अप्राः अंतरिक्षं महिऽत्वा सत्यं अद्धा नकिः अन्यः त्वाऽवान् ॥१३॥ न यस्य द्यावापृथिवी' अनु व्यचः न सिंधवः रजसः अंतं आनशुः न उत स्वऽवृष्टिं मदे अस्य युध्यतः एकः अन्यत् चकृषे विश्वं आनुषक् ॥१४॥ आर्चन् अत्र मरुतः सस्मिन् आजौ विश्वे देवासः अमदन् अनु त्वा वृत्रस्य यत् भृष्टिऽमता वधेन नि त्वं इंद्र प्रति आनं जघंथ ॥१५॥१४॥

---

॥५३॥ नि ऊं' सु वाचं प्र महे भरामहे गिरः इंद्राय सदने विवस्वतः नु चित् हि रत्नं ससतांऽइव अविदत् न दुःऽस्तुतिः

विश्रोदेषु शस्यते ॥ १ ॥ दुरो अश्वस्य दुर इंद्र गोरसि दुरो यवस्य वसुन इनस्पतिः । शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि ॥ २ ॥ शचीव इंद्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चेकिते वसु । अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ॥ ३ ॥ एभिर्द्युभिः सुमना एभिरिंदुभिर्निरुंधानो अमतिं गोभिरश्विना । इंद्रेण दस्युं दरयंत इंदुभिर्युतद्वेषसः समिषा रभेमहि ॥ ४ ॥ समिंद्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चंद्रैरभिद्युभिः । सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥ ५ ॥ १५ ॥ ते त्वा मदा अमदन्तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते । यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥ ६ ॥ युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा । नम्या यदिंद्र सख्या परावति निबर्हयो नमुचिं नाम मायिनं ॥ ७ ॥ त्वं करंजमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी । त्वं शता वंगृदस्याभिनत्पुरोऽनानुदः परिषूता ऋजिश्वना ॥ ८ ॥ त्वमेतांजनराज्ञो द्विर्दशाबंधुना सुश्रवसोपजग्मुषः । षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥ त्वमाविथ सुश्रवसं तवोतिभिस्तव त्रामभिरिंद्र तूर्वयाणं । त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरंधनायः ॥ १० ॥ य उदृचींद्र देवगोपाः सखायस्ते शिवतमा असाम । त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ ११ ॥ १६ ॥

द्रविणःऽदेषु शस्यते ॥१॥ दुरः अश्वस्य दुरः इंद्र गोः असि दुरः यवस्य वसुनः इनः पतिः शिक्षाऽनरः प्रऽदिवः अकामऽकर्शनः सखा सखिऽभ्यः तं इदं गृणीमसि ॥२॥ शचीऽवः इंद्र पुरुऽकृत् द्युमत्ऽतम तव इत् इदं अभितः चेकिते वसु अतः संऽगृभ्य अभिऽभूते आ भर मा त्वाऽयतः जरितुः कामं ऊनयीः ॥३॥ एभिः द्युऽभिः सुऽमनाः एभिः इंदुऽभिः निऽरुंधानः अमतिं गोभिः अश्विना इंद्रेण दस्युं दरयंतः इंदुऽभिः युतऽद्वेषसः सं इषा रभेमहि ॥४॥ सं इंद्र राया सं इषा रभेमहि सं वाजेभिः पुरुऽचंद्रैः अभिद्युऽभिः सं देव्या प्रऽमत्या वीरऽशुष्मया गोऽअग्रया अश्वऽवत्या रभेमहि ॥५॥१५॥ ते त्वा मदाः अमदन् तानि वृष्ण्या ते सोमासः वृत्रऽहत्येषु सत्ऽपते यत् कारवे दश वृत्राणि अप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥६॥ युधा युधं उप घ इत् एषि धृष्णुऽया पुरा पुरं सं इदं हंसि ओजसा नम्या यत् इंद्र सख्या पराऽवति निऽबर्हयः नमुचिं नाम मायिनं ॥७॥ त्वं करंजं उत पर्णयं वधीः तेजिष्ठया अतिथिऽग्वस्य वर्तनी त्वं शता वंगृदस्य अभिनत् पुरः अननुऽदः परिऽसूताः ऋजिश्वना ॥८॥ त्वं एतान् जनऽराज्ञः द्विः दश अबंधुना सुऽश्रवसा उपऽजग्मुषः षष्टिं सहस्रा नवतिं नव श्रुतः नि चक्रेण रथ्या दुःऽपदा अवृणक् ॥९॥ त्वं आविथ सुऽश्रवसं तव ऊतिऽभिः तव त्रामऽभिः इंद्र तूर्वयाणं त्वं अस्मै कुत्सं अतिथिऽग्वं आयुं महे राज्ञे यूने अरंधनायः ॥१०॥ ये उत्ऽऋचि इंद्र देवऽगोपाः सखायः ते शिवऽतमाः असाम त्वां स्तोषाम त्वया सुऽवीराः द्राघीयः आयुः प्रऽतरं दधानाः ॥११॥१६॥

॥ ५४ ॥ १–११ सव्य आंगिरसः ॥ इंद्रः ॥ १–५. ७. १० जगती । ६. ८. ९. ११ त्रिष्टुप् ॥

॥ ५४ ॥ मा नो अस्मिन्मघवन्पृत्स्वंहसि नहि ते अंतः
शवसः परीणशे । अक्रंदयो नद्यो३ रोरुवद्वना कथा न क्षो-
णीर्भियसा समारत ॥ १ ॥ अर्चा शक्राय शाकिने शचीवते
शृण्वंतमिंद्रं महयन्नभि ष्टुहि । यो धृष्णुना शवसा रोदसी उभे
वृषा वृषत्वा वृषभो न्यृंजते ॥ २ ॥ अर्चा दिवे बृहते शूष्यं१ वचः
स्वक्षत्रं यस्य धृषतो धृषन्मनः । बृहच्छ्रवा असुरो बर्हणा कृतः
पुरो हरिभ्यां वृषभो रथो हि षः ॥ ३ ॥ त्वं दिवो बृहतः सानु को-
पयोऽव त्मना धृषता शंबरं भिनत् । यन्मायिनो व्रंदिनो मंदि-
ना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥ ४ ॥ नि यद्वृणक्षि
श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रंदिनो रोरुवद्वना । प्राचीनेन
मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥ ५ ॥ १७ ॥
त्वमाविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो । त्वं रथमे-
तशं कृत्व्ये धने त्वं पुरो नवतिं दंभयो नव ॥ ६ ॥ स घा राजा
सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति । उक्था
वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दि-
वः ॥ ७ ॥ असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा संतु
नेमे । ये त इंद्र ददुषो वर्धयंति महि क्षत्रं स्थविरं वृष्ण्यं च ॥ ८ ॥
तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इंद्रपानाः । व्यश्नुहि
तर्पया काममेषामथा मनो वसुदेयाय कृष्व ॥ ९ ॥ अपा-
मतिष्ठद्धरुणह्वरं तमोऽंतर्वृत्रस्य जठरेषु पर्वतः । अभी-
मिंद्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्न-
ते ॥ १० ॥ स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषा-

॥५४॥ मा नः अस्मिन् मघऽवन् पृत्ऽसु अंहसि नहि ते अंतः शवसः परिऽनशे अक्रंदयः नद्यः रोरुवत् वना कथा न क्षोणीः भियसा सं आरत ॥१॥ अर्च शक्राय शाकिने शचीऽवते शृण्वंतं इंद्रं महयन् अभि स्तुहि यः धृष्णुना शवसा रोदसी उभे वृषा वृषऽत्वा वृषभः निऽऋंजते ॥२॥ अर्च दिवे बृहते शूष्यं वचः स्वऽक्षत्रं यस्य धृषतः धृषत् मनः बृहत्ऽश्रवाः असुरः बर्हणा कृतः पुरः हरिऽभ्यां वृषभः रथः हि सः ॥३॥ त्वं दिवः बृहतः सानु कोपयः अव त्मना धृषता शंबरं भिनत् यत् मायिनः मंदिनः मंदिना धृषत् शितां गभस्तिं अशनिं पृतन्यसि ॥४॥ नि यत् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चित् व्रंदिनः रोरुवत् वना प्राचीनेन मनसा बर्हणाऽवता यत् अद्य चित् कृणवः कः त्वा परि ॥५॥१७॥ त्वं आविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतऽक्रतो॰ त्वं रथं एतशं कृत्व्ये धने त्वं पुरः नवतिं दंभयः नव ॥६॥ सः घ राजा सत्ऽपतिः शूशुवत् जनः रातऽहव्यः प्रति यः शासं इन्वति उक्था वा यः अभिऽगृणाति राधसा दानुः अस्मै उपरा पिन्वते दिवः ॥७॥ असमं क्षत्रं असमा मनीषा प्र सोमऽपाः अपसा संतु नेमे ये ते इंद्र ददुषः वर्धयंति महि क्षत्रं स्थविरं वृष्ण्यं च ॥८॥ तुभ्य इत् एते बहुलाः अद्रिऽदुग्धाः चमूऽसदः चमसाः इंद्रऽपानाः वि अश्नुहि तर्पय कामं एषां अथ मनः वसुऽदेयाय कृष्व ॥९॥ अपां अतिष्ठत् धरुणऽह्वरं तमः अंतः वृत्रस्य जठरेषु पर्वतः अभि ईं इंद्रः नद्यः वव्रिणा हिताः विश्वाः अनुऽस्थाः प्रवणेषु जिघ्नते ॥१०॥ सः शेऽवृधं अधि धाः द्युम्नं अस्मे महि क्षत्रं जनाषाट्

ळिंद्र तव्यौं। रक्षा च नो मघोनः पाहि सूरीन्राये च नः स्वपत्या इषे धाः ॥११॥१८॥

---

॥ ५५ ॥ १–८ सव्य आंगिरसः ॥ इंद्रः ॥ जगती ॥

॥५५॥ दिवश्चिदस्य वरिमा वि पप्रथ इंद्रं न मह्ना पृथिवी चन प्रति। भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः॥१॥ सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः। इंद्रः सोमस्य पीतये वृषायते सनात्स युध्म ओजसा पनस्यते ॥२॥ त्वं तमिंद्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि। प्र वीर्येण देवताति चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः॥३॥ स इद्वने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इंद्रियं। वृषा छंदुर्भवति हर्यतो वृषा क्षेमेण धेनां मघवा यदिन्वति॥४॥ स इन्महानि समिथानि मज्मना कृणोति युध्म ओजसा जनेभ्यः। अधा चन श्रद्दधति त्विषीमत इंद्राय वज्रं निघनिघ्नते वधं॥५॥१९॥ स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा विनाशयन्। ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत्॥६॥ दानाय मनः सोमपावन्नस्तु तेऽर्वाचा हरी वंदनश्रुदा कृधि। यमिष्ठासः सारथयो य इंद्र ते न त्वा केता आ दभ्नुवंति भूर्णयः॥७॥ अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे। आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इंद्र भूरयः॥८॥२०॥

---

॥ ५६ ॥ १–६ सव्य आंगिरसः ॥ इंद्रः ॥ जगती ॥

॥५६॥ एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः। दक्षं महे पाययते हिरण्ययं रथमावृत्या

इंद्र तथ्यं रक्ष च नः मघोनः पाहि सूरीन् राये च नः सुऽअपत्यै इषे धाः ॥ ११ ॥ १८ ॥

---

॥ ५५ ॥ दिवः चित् अस्य वरिमा वि पप्रथे इंद्रं न मह्ना पृथिवी चन प्रति भीमः तुविष्मान् चर्षणिऽभ्यः आऽतपः शिशीते वज्रं तेजसे न वंसगः ॥ १ ॥ सः अर्णवः न नद्यः समुद्रियः प्रति गृभ्णाति विऽश्रिताः वरीमऽभिः इंद्रः सोमस्य पीतये वृषऽयते सनात् सः युध्मः ओजसा पनस्यते ॥ २ ॥ त्वं तं इंद्र पर्वतं न भोजसे महः नृम्णस्य धर्मणां इरज्यसि प्र वीर्येण देवता अति चेकिते विश्वस्मै उग्रः कर्मणे पुरःऽहितः ॥ ३ ॥ सः इत् वने नमस्युऽभिः वचस्यते चारु जनेषु प्रऽब्रुवाणः इंद्रियं वृषा छंदुः भवति हर्यतः वृषा क्षेमेण धेनां मघऽवा यत् इन्वति ॥ ४ ॥ सः इत् महानि संऽइथानि मज्मना कृणोति युध्मः ओजसा जनेभ्यः अध चन श्रत् दधति त्विषिऽमते इंद्राय वज्रं निऽघनिघ्नते वधं ॥ ५ ॥ १९ ॥ सः हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधानः ओजसा विऽनाशयन् ज्योतींषि कृण्वन् अवृकाणि यज्यवे अव सुऽक्रतुः सर्तवै अपः सृजत् ॥ ६ ॥ दानाय मनः सोमऽपावन् अस्तु ते अर्वांचा हरी वंदनऽश्रुत् आ कृधि यमिष्ठासः सारथयः ये इंद्र ते न त्वा केताः आ दभ्नुवंति भूर्णयः ॥ ७ ॥ अप्रऽक्षितं वसु बिभर्षि हस्तयोः अषाळ्हं सहः तन्वि श्रुतः दधे आऽवृतासः अवतासः न कर्तृऽभिः तनूषु ते क्रतवः इंद्र भूरयः ॥ ८ ॥ २० ॥

---

॥ ५६ ॥ एषः प्र पूर्वीः अव तस्य चम्रिषः अत्यः न योषां उत् अयंस्त भुर्वणिः दक्षं महे पाययते हिरण्ययं रथं आऽवृत्य

हरियोगमृभ्वसं ॥१॥ तं गूर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः। पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ॥२॥ स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः। येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥३॥ देवी यदि तविषी त्वावृधोतय इंद्रं सिषक्त्युषसं न सूर्यः। यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥४॥ वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा। स्वर्मीळ्हे यन्मद इंद्र हर्ष्याहन्वृत्रं निरपामौब्जो अर्णवं ॥५॥ त्वं दिवो धरुणं धिष ओजसा पृथिव्या इंद्र सदनेषु माहिनः। त्वं सुतस्य मदे अरिणा अपो वि वृत्रस्य समया पाष्यारुजः ॥६॥२१॥

---

॥५७॥ १–६ सव्य आंगिरसः ॥ इंद्रः ॥ जगती ॥

॥५७॥ प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे। अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतं ॥१॥ अध ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः। यत्पर्वते न समशीत हर्यत इंद्रस्य वज्रः श्नथिता हिरण्ययः ॥२॥ अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे। यस्य धाम श्रवसे नामेंद्रियं ज्योतिरकारि हरितो नायसे ॥३॥ इमे त इंद्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो। नहि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः ॥४॥ भूरि त इंद्र वीर्यं तव स्मस्यस्य स्तोतुर्मघवन्काममा पृण। अनु ते द्यौर्बृहती वीर्यं मम इयं च ते पृथिवी

हरिऽयोगं ऋभ्वसं ॥१॥ तं गूर्तयः नेमन्ऽइषः परीणसः समुद्रं न संऽचरणे सनिष्यवः पतिं दक्षस्य विदथस्य नु सहः गिरिं न वेनाः अधि रोह तेजसा ॥२॥ सः तुर्वणिः महान् अरेणु पौंस्ये गिरेः भृष्टिः न भ्राजते तुजा शवः येन शुष्णं मायिनं आयसः मदे दुध्रः आभूषु रमयत् नि दामनि ॥३॥ देवी यदि तविषी त्वाऽवृधा ऊतये इंद्रं सिसक्ति उषसं न सूर्यः यः धृष्णुना शवसा बाधते तमः इयर्ति रेणुं बृहत् अर्हरिऽस्वनिः ॥४॥ वि यत् तिरः धरुणं अच्युतं रजः अतिस्थिपः दिवः आतासु बर्हणा स्वःऽमीळ्हे यत् मदे इंद्र हर्षा अहन् वृत्रं निः अपां औब्जः अर्णवं ॥५॥ त्वं दिवः धरुणं धिषे ओजसा पृथिव्याः इंद्र सदनेषु माहिनः त्वं सुतस्य मदे अरिणाः अपः वि वृत्रस्य समया पाष्या अरुजः ॥६॥२१॥

---

॥५७॥ प्र मंहिष्ठाय बृहते बृहत्ऽरये सत्यऽशुष्माय तवसे मतिं भरे अपांऽइव प्रवणे यस्य दुःऽधरं राधः विश्वऽआयु शवसे अपऽवृतं ॥१॥ अध ते विश्वं अनु ह असत् इष्टये आपः निम्नाऽइव सवना हविष्मतः यत् पर्वते न संऽअशीत हर्यतः इंद्रस्य वज्रः श्नथिता हिरण्ययः ॥२॥ अस्मै भीमाय नमसा सं अध्वरे उषः न शुभ्रे आ भर पनीयसे यस्य धाम श्रवसे नाम इंद्रियं ज्योतिः अकारि हरितः न अयसे ॥३॥ इमे ते इंद्र ते वयं पुरुऽस्तुत ये त्वा आऽरभ्य चरामसि प्रभुऽवसो॰ नहि त्वत् अन्यः गिर्वणः गिरः सघत् क्षोणीःऽइव प्रति नः हर्य तत् वचः ॥४॥ भूरि ते इंद्र वीर्यं तव स्मसि अस्य स्तोतुः मघऽवन् कामं आ पृण अनु ते द्यौः बृहती वीर्यं ममे इयं च ते पृथिवी

नेम ओजसे ॥५॥ त्वं तमिंद्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वशश्चकर्तिथ । अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः ॥६॥२२॥१०॥

---

॥५८॥ १–९ नोधा गोतमः ॥ अग्निः ॥ १–५ जगती । ६–९ त्रिष्टुप् ॥

॥५८॥ नू चित्सहोजा अमृतो नि तुंदते होता यद्दूतो अभवद्विवस्वतः । वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥१॥ आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति । अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥२॥ क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः । रथो न विक्ष्वृंजसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥३॥ वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः । तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥४॥ तपुर्जंभो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः । अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥५॥२३॥ दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः । होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥६॥ होतारं सप्त जुह्वो३ यजिष्ठं यं वाघतो वृणते अध्वरेषु । अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नं ॥७॥ अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ । अग्ने गृणंतमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ॥८॥ भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म । उरुष्याग्ने अंहसो गृणंतं प्रातर्मक्षू धियावसुर्जगम्यात् ॥९॥२४॥

नेमे ओजसे ॥५॥ त्वं तं इंद्र पर्वतं महां उरुं वज्रेण वज्रिन्
पर्वऽशः चकर्तिथ अव असृजः निऽवृताः सर्तवै अपः सत्रा
विश्वं दधिषे केवलं सहः ॥६॥२२॥१०॥

---

॥५८॥ नु चित् सहःऽजाः अमृतः नि तुंदते होता यत् दूतः
अभवत् विवस्वतः वि साधिष्ठेभिः पथिऽभिः रजः ममे आ
देवऽताता हविषा विवासति ॥१॥ आ स्वं अद्म युवमानः
अजरः तृषु अविष्यन् अतसेषु तिष्ठति अत्यः न पृष्ठं प्रुषितस्य
रोचते दिवः न सानु स्तनयन् अचिक्रदत् ॥२॥ क्राणा रुद्रेभिः
वसुऽभिः पुरःऽहितः होता निऽसत्तः रयिषाट् अमर्त्यः रथः
न विक्षु ऋंजसानः आयुषु वि आनुषक् वार्या देवः ऋण्व-
ति ॥३॥ वि वातऽजूतः अतसेषु तिष्ठते वृथा जुहूभिः सृण्या
तुविऽस्वनिः तृषु यत् अग्ने वनिनः वृषऽयसे कृष्णं ते एम
रुशत्ऽऊर्मे अजर ॥४॥ तपुःऽजंभः वने आ वातऽचोदितः
यूथे न सह्वान् अव वाति वंसगः अभिऽव्रजन् अक्षितं पाजसा
रजः स्थातुः चरथं भयते पतत्रिणः ॥५॥२३॥ दधुः त्वा भृगवः
मानुषेषु आ रयिं न चारुं सुऽहवं जनेभ्यः होतारं अग्ने अति-
थिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥६॥ होतारं सप्त जुह्वः
यजिष्ठं यं वाघतः वृणते अध्वरेषु अग्निं विश्वेषां अरतिं वसूनां
सपर्यामि प्रयसा यामि रत्नं ॥७॥ अच्छिद्रा सूनो सहसः नः
अद्य स्तोतृऽभ्यः मित्रऽमहः शर्म यच्छ अग्ने गृणंतं अंहसः
उरुष्य ऊर्जः नपात् पूःऽभिः आयसीभिः ॥८॥ भव वरूथं गृणते
विभाऽवः भव मघऽवन् मघवत्ऽभ्यः शर्म उरुष्य अग्ने अंहसः
गृणंतं प्रातः मक्षु धियाऽवसुः जगम्यात् ॥९॥२४॥

॥५९॥ १—७ नोधा गौतमः ॥ अग्निर्वैश्वानरः ॥ त्रिष्टुप् ॥

॥५९॥ वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयंते। वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययंथ॥१॥ मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः। तं त्वा देवासोऽजनयंत देवं वैश्वानर ज्योतिरिदार्याय॥२॥ आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि। या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा॥३॥ बृहती इव सूनवे रोदसी गिरो होता मनुष्यो न दक्षः। स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः॥४॥ दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वं। राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ॥५॥ प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचंते। वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शंबरं भेत्॥६॥ वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा। शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान्॥७॥२५॥

---

॥६०॥ १—५ नोधा गौतमः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥६०॥ वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थं। द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा॥१॥ अस्य शासुरुभयासः सचंते हविष्मंत उशिजो ये च मर्ताः। दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः॥२॥ तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः। यमृत्विजो वृजने मानुषासः प्रयस्वंत आयवो जीजनंत॥३॥ उशिक्पावको वसुर्मानुषेषु

॥५९॥ वयाः इत् अग्ने अग्नयः ते अन्ये त्वे विश्वे अमृताः मादयंते वैश्वानर नाभिः असि क्षितीनां स्थूणाऽइव जनान् उपऽमित् ययंथ ॥१॥ मूर्धा दिवः नाभिः अग्निः पृथिव्याः अथ अभवत् अरतिः रोदस्योः तं त्वा देवासः अजनयंत देवं वैश्वानर ज्योतिः इत् आर्याय ॥२॥ आ सूर्ये न रश्मयः ध्रुवासः वैश्वानरे दधिरे अग्ना वसूनि या पर्वतेषु ओषधीषु अप्ऽसु या मानुषेषु असि तस्य राजा ॥३॥ बृहतीऽइव॰ सूनवे रोदसी गिरः होता मनुष्यः न दक्षः स्वःऽवते सत्यऽशुष्माय पूर्वीः वैश्वानराय नृऽतमाय यह्वीः ॥४॥ दिवः चित् ते बृहतः जातऽवेदः वैश्वानर प्र रिरिचे महिऽत्वं राजा कृष्टीनां असि मानुषीणां युधा देवेभ्यः वरिवः चकर्थ ॥५॥ प्र नु महिऽत्वं वृषभस्य वोचं यं पूरवः वृत्रऽहनं सचंते वैश्वानरः दस्युं अग्निः जघन्वान् अधूनोत् काष्ठाः अव शंबरं भेत् ॥६॥ वैश्वानरः महिम्ना विश्वऽकृष्टिः भरत्ऽवाजेषु यजतः विभाऽवा सातऽवनेये शतिनीभिः अग्निः पुरुऽनीथे जरते सूनृताऽवान् ॥७॥२५॥

---

॥६०॥ वह्निं यशसं विदथस्य केतुं सुप्रऽअव्यं दूतं सद्यःऽअर्थं द्विऽजन्मानं रयिंऽइव प्रऽशस्तं रातिं भरत् भृगवे मातरिश्वा ॥१॥ अस्य शासुः उभयासः सचंते हविष्मंतः उशिजः ये च मर्ताः दिवः चित् पूर्वः नि असादि होता आऽपृच्छ्यः विश्पतिः विक्षु वेधाः ॥२॥ तं नव्यसी हृदः आ जायमानं अस्मत् सुऽकीर्तिः मधुऽजिह्वं अश्याः यं ऋत्विजः वृजने मानुषासः प्रयस्वंतः आयवः जीजनंत ॥३॥ उशिक् पावकः वसुः मानुषेषु

वरेण्यो होताधायि विक्षु । दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणां ॥४॥ तं त्वा वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमासः । आशुं न वाजंभरं मर्जयंतः प्रातर्मक्षू धियावसुर्जगम्यात् ॥५॥२६॥

---

॥६१॥ १—१६ नोधा गौतमः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥६१॥ अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय । ऋचीषमायाध्रिगव ओहमिंद्राय ब्रह्माणि राततमा ॥१॥ अस्मा इदु प्रय इव प्र यंसि भराम्यांगूषं बाधे सुवृक्ति । इंद्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयंत ॥२॥ अस्मा इदु त्यमुपमं स्वर्षां भराम्यांगूषमास्येन । मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥३॥ अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय । गिरश्च गिर्वाहसे सुवृक्तींद्राय विश्वमिन्वं मेधिराय ॥४॥ अस्मा इदु सप्तिमिव श्रवस्येंद्रायार्कं जुह्वा३समंजे । वीरं दानौकसं वंदध्यै पुरां गूर्तश्रवसं दर्माणं ॥५॥२७॥ अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१रणाय । वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥६॥ अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवांश्चार्वन्ना । मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ॥७॥ अस्मा इदु ग्नाश्चिद्देवपत्नीरिंद्रायार्कमहिहत्य ऊवुः । परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥८॥ अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यंतरिक्षात् । स्वराळिंद्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥९॥

वरेण्यः होता अधायि विक्षु दमूनाः गृहऽपतिः दमे आ अग्निः भुवत् रयिऽपतिः रयीणां ॥४॥ तं त्वा वयं पतिं अग्ने रयीणां प्र शंसामः मतिऽभिः गोतमासः आशुं न वाजंऽभरं मर्जयंतः प्रातः मक्षु धियाऽवसुः जगम्यात् ॥५॥२६॥

---

॥६१॥ अस्मै इत् ऊं इति प्र तवसे तुराय प्रयः न हर्मि स्तोमं माहिनाय ऋचीषमाय अध्रिऽगवे ओहं इंद्राय ब्रह्माणि राततमा ॥१॥ अस्मै इत् ऊं इति प्रयःऽइव प्र यंसि भरामि आंगूषं बाधे सुऽवृक्ति इंद्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियः मर्जयंत ॥२॥ अस्मै इत् ऊं इति त्यं उपऽमं स्वःऽसां भरामि आंगूषं आस्येन मंहिष्ठं अच्छोक्तिऽभिः मतीनां सुवृक्तिऽभिः सूरिं ववृधध्यै ॥३॥ अस्मै इत् ऊं इति स्तोमं सं हिनोमि रथं न तष्टाऽइव तत्ऽसिनाय गिरः च गिर्वाहसे सुऽवृक्ति इंद्राय विश्वंऽइन्वं मेधिराय ॥४॥ अस्मै इत् ऊं इति सप्तिंऽइव श्रवस्या इंद्राय अर्कं जुह्वा सं अंजे वीरं दानऽओकसं वंदध्यै पुरां गूर्तऽश्रवसं दर्माणं ॥५॥२७॥ अस्मै इत् ऊं इति त्वष्टा तक्षत् वज्रं स्वपःऽतमं स्वर्यं रणाय वृत्रस्य चित् विदत् येन मर्म तुजन् ईशानः तुजता कियेधाः ॥६॥ अस्य इत् ऊं इति मातुः सवनेषु सद्यः महः पितुं पपिऽवान् चारु अन्ना मुषायत् विष्णुः पचतं सहीयान् विध्यत् वराहं तिरः अद्रिं अस्ता ॥७॥ अस्मै इत् ऊं इति ग्नाः चित् देवऽपत्नीः इंद्राय अर्कं अहिऽहत्ये ऊवुः॰ परि द्यावापृथिवी इति जभ्रे उर्वी इति न अस्य ते इति महिमानं परि स्तः॰ ॥८॥ अस्य इत् एव प्र रिरिचे महिऽत्वं दिवः पृथिव्याः परि अंतरिक्षात् स्वऽराट् इंद्रः दमे आ विश्वऽगूर्तः सुऽअरिः अमत्रः ववक्षे रणाय ॥९॥

अस्येदेव शवसा शुषंतं वि वृश्चद्वज्रेण वृत्रमिंद्रः । गा न व्राणा अवनीरमुंचदभि श्रवो दावने सचेताः ॥ १० ॥ २८ ॥ अस्येदु त्वेषसा रंत सिंधवः परि यद्वज्रेण सीमयच्छत् । ईशानकृद्दाशुषे दशस्यन्तुर्वीतये गाधं तुर्वणिः कः ॥ ११ ॥ अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः । गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥ १२ ॥ अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः । युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ॥ १३ ॥ अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते । उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥ १४ ॥ अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः । प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिंद्रः ॥ १५ ॥ एवा ते हारियोजना सुवृक्तींद्र ब्रह्माणि गोतमासो अक्रन् । ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥ २९ ॥ ४ ॥

---

॥ ६२ ॥ १–१३ नोधा गौतमः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ६२ ॥ प्र मन्महे शवसानाय शूषमांगूषं गिर्वणसे अंगिरस्वत् । सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १ ॥ प्र वो महे महि नमो भरध्वमांगूष्यं शवसानाय साम । येना नः पूर्वे पितरः पदज्ञा अर्चंतो अंगिरसो गा अविंदन् ॥ २ ॥ इंद्रस्यांगिरसां चेष्टौ विदत्सरमा तनयाय धासिं । बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशंत नरः ॥ ३ ॥ स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः । सरण्युभिः फलिगमिंद्र शक्र वलं

अस्य इत् एव शवसा शुषंतं वि वृश्चत् वज्रेण वृत्रं इंद्रः गाः न व्राणाः अवनीः अमुंचत् अभि श्रवः दावने सऽचेताः ॥१०॥२८॥ अस्य इत् ऊं त्वेषसा रंत सिंधवः परि यत् वज्रेण सीं अयच्छत् ईशानऽकृत् दाशुषे दशस्यन् तुर्वीतये गाधं तुर्वणिः कः॰ ॥११॥ अस्मै इत् ऊं प्र भर तूतुजानः वृत्राय वज्रं ईशानः कियेधाः गोः न पर्व वि रद तिरश्चा इष्यन् अर्णांसि अपां चरध्यै ॥१२॥ अस्य इत् ऊं प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्यः उक्थैः युधे यत् इष्णानः आयुधानि ऋघायमाणः निऽरिणाति शत्रून् ॥१३॥ अस्य इत् ऊं भिया गिरयः च दृळ्हाः द्यावा च भूम जनुषः तुजेते उपो वेनस्य जोगुवानः ओणिं सद्यः भुवत् वीर्याय नोधाः ॥१४॥ अस्मै इत् ऊं त्यत् अनु दायि एषां एकः यत् वव्ने भूरेः ईशानः प्र एतशं सूर्ये पस्पृधानं सौवश्व्ये सुस्विं आवत् इंद्रः ॥१५॥ एव ते हारिऽयोजन सुऽवृक्ति इंद्र ब्रह्माणि गोतमासः अक्रन् आ एषु विश्वऽपेशसं धियं धाः प्रातः मक्षु धियाऽवसुः जगम्यात् ॥१६॥२९॥४॥

---

॥६२॥ प्र मन्महे शवसानाय शूषं आंगूषं गिर्वणसे अंगिरस्वत् सुवृक्तिऽभिः स्तुवते ऋग्मियाय अर्चाम अर्कं नरे विऽश्रुताय ॥१॥ प्र वः महे महि नमः भरध्वं आंगूष्यं शवसानाय साम येन नः पूर्वे पितरः पदऽज्ञाः अर्चंतः अंगिरसः गाः अविंदन् ॥२॥ इंद्रस्य अंगिरसां च इष्टौ विदत् सरमा तनयाय धासिं बृहस्पतिः भिनत् अद्रिं विदत् गाः सं उस्रियाभिः वावशंत नरः ॥३॥ सः सुऽस्तुभा सः स्तुभा सप्त विप्रैः स्वरेण अद्रिं स्वर्यः नवऽग्वैः सरण्युऽभिः फलिऽगं इंद्र शक्र वलं

रवेण दरयो दशग्वैः ॥४॥ गृणानो अंगिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरंधः । वि भूम्या अप्रथय इंद्र सानु दिवो रज उपरमस्तभायः ॥५॥१॥ तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः । उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१श्चतस्रः ॥६॥ द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः । भगो न मेने परमे व्योमन्नधारयद्रोदसी सुदंसाः ॥७॥ सनाद्दिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः । कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥८॥ सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः । आमासु चिद्दधिषे पक्वमंतः पयः कृष्णासु रुशद्रोहिणीषु ॥९॥ सनात्सनीळा अवनीरवाता व्रता रक्षंते अमृताः सहोभिः । पुरु सहस्रा जनयो न पत्नीर्दुवस्यंति स्वसारो अह्रयाणं ॥१०॥२॥ सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः । पतिं न पत्नीरुशतीरुशंतं स्पृशंति त्वा शवसावन्मनीषाः ॥११॥ सनादेव तव रायो गभस्तौ न क्षीयंते नोप दस्यंति दस्म । द्युमाँ असि क्रतुमाँ इंद्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥१२॥ सनायते गोतम इंद्र नव्यमतक्षद्ब्रह्म हरियोजनाय । सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥१३॥३॥

---

॥६३॥ १–९ नोधा गोतमः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥६३॥ त्वं महाँ इंद्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः । यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ॥१॥ आ यद्धरी इंद्र विव्रता वेरा ते

रवेण दुरयः दर्षऽग्वेः ॥४॥ गृणानः अंगिरःऽभिः दस्म वि वः उषसा सूर्येण गोभिः अंधः वि भूम्याः अप्रथयः इंद्र सानु दिवः रजः उपरं अस्तभायः ॥५॥१॥ तत् ऊं इति प्रयक्षऽतमं अस्य कर्म दस्मस्य चारुऽतमं अस्ति दंसः उपऽह्वरे यत् उपराः अपिन्वत् मधुऽअर्णसः नद्यः चतस्रः ॥६॥ द्विता वि वव्रे सनऽजा सऽनीळे इति अयास्यः स्तवमानेभिः अर्कैः भगः न मेने इति परमे विऽओमन् अधारयत् रोदसी इति सुऽदंसाः ॥७॥ सनात् दिवं परि भूम विरूपे इति विऽरूपे पुनःऽभुवा युवती इति स्वेभिः एवैः कृष्णेभिः अक्ता उषाः रुशत्ऽभिः वपुःऽभिः आ चरतः अन्याऽअन्या ॥८॥ सनेमि सख्यं सुऽअपस्यमानः सूनुः दाधार शवसा सुऽदंसाः आमासु चित् दधिषे पक्वं अंतरिति पयः कृष्णासु रुशत् रोहिणीषु ॥९॥ सनात् सऽनीळाः अवनीः अवाताः व्रता रक्षंते अमृताः सहःऽभिः पुरु सहस्रा जनयः न पत्नीः दुवस्यंति स्वसारः अह्रयाणं ॥१०॥२॥ सनाऽयुवः नमसा नव्यः अर्कैः वसुऽयवः मतयः दस्म दद्रुः पतिं न पत्नीः उशतीः उशंतं स्पृशंति त्वा शवसाऽवन् मनीषाः ॥११॥ सनात् एव तव रायः गभस्तौ न क्षीयंते न उप दस्यंति दस्म द्युऽमान् असि क्रतुऽमान् इंद्र धीरः शिक्ष शचीऽवः तव नः शचीभिः ॥१२॥ सनाऽयते गोतमः इंद्र नव्यं अतक्षत् ब्रह्म हरिऽयोजनाय सुऽनीथाय नः शवसान नोधाः प्रातः मक्षु धियाऽवसुः जगम्यात् ॥१३॥३॥

---

॥६३॥ त्वं महान् इंद्र यः ह शुष्मैः द्यावा जज्ञानः पृथिवी इति अमे धाः यत् ह ते विश्वा गिरयः चित् अभ्वा भिया दृळ्हासः किरणाः न ऐजन् ॥१॥ आ यत् हरी इति इंद्र विऽव्रता वेः आ ते

वज्रं जरिता बाह्वोर्धात् । येनाविहर्यतक्रतो अमित्रान्पुर इष्णासि पुरुहूत पूर्वीः ॥२॥ त्वं सत्य इंद्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट् । त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन् ॥३॥ त्वं ह त्यदिंद्र चोदीः सखा वृत्रं यद्वज्रिन्वृषकर्मन्नुभ्नाः । यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥४॥ त्वं ह त्यदिंद्रारिषण्यन्दृळ्हस्य चिन्मर्तानामजुष्टौ । व्य१स्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥५॥४॥ त्वां ह त्यदिंद्रार्णसातौ स्वर्मीळ्हे नर आजा हवंते । तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत् ॥६॥ त्वं ह त्यदिंद्र सप्त युध्यन्पुरो वज्रिन्पुरुकुत्साय दर्दः । बर्हिर्न यत्सुदासे वृथा वर्गंहो राजन्वरिवः पूरवे कः ॥७॥ त्वं त्यां न इंद्र देव चित्रामिषमापो न पीपयः परिज्मन् । यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै ॥८॥ अकारि त इंद्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्यां । सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥९॥५॥

---

॥६४॥ १–१५ नोधा गौतमः ॥ मरुतः ॥ १–१४ जगती । १५ त्रिष्टुप् ॥

॥६४॥ वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः । अपो न धीरो मनसा सुहस्त्यो गिरः समंजे विदथेष्वाभुवः ॥१॥ ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः । पावकासः शुचयः सूर्या इव सत्वानो न द्रप्सिनो घोरवर्पसः ॥२॥ युवानो रुद्रा अजरा अभोग्घनो ववक्षुरध्रिगावः पर्वता इव । दृळ्हा चिद्विश्वा भुवनानि

वज्रं जरिता बाह्वोः धात् येन अविहर्यतऽक्रतो० अमित्रान्
पुरः इष्णासि पुरुऽहूत पूर्वीः ॥२॥ त्वं सत्यः इंद्र धृष्णुः एतान् त्वं
ऋभुक्षाः नर्यः त्वं षाट् त्वं शुष्णं वृजने पृक्षे आणौ यूने कुत्साय
द्युऽमते सचा अहन् ॥३॥ त्वं ह त्यत् इंद्र चोदीः सखा वृत्रं यत्
वज्रिन् वृषऽकर्मन् उभ्नाः यत् ह शूर वृषऽमनः पराचैः वि
दस्यून् योनौ अकृतः वृथाषाट् ॥४॥ त्वं ह त्यत् इंद्र अरिषण्यन्
दृळ्हस्य चित् मर्तानां अजुष्टौ वि अस्मत् आ काष्ठाः अर्वते
वः घनाऽइव वज्रिन् श्नथिहि अमित्रान् ॥५॥४॥ त्वां ह त्यत्
इंद्र अर्णऽसातौ स्वःऽमीळ्हे नरः आजा हवंते तव स्वधाऽवः
इयं आ सऽमर्ये ऊतिः वाजेषु अतसाय्या भूत् ॥६॥ त्वं ह त्यत्
इंद्र सप्त युध्यन् पुरः वज्रिन् पुरुऽकुत्साय दर्दः० बर्हिः न यत्
सुऽदासे वृथा वर्क् अंहोः राजन् वरिवः पूरवे कः० ॥७॥ त्वं
त्यां नः इंद्र देव चित्रां इषं आपः न पीपयः परिऽज्मन् यया
शूर प्रति अस्मभ्यं यंसि त्मनं ऊर्जं न विश्वध क्षरध्यै ॥८॥
अकारि ते इंद्र गोतमेभिः ब्रह्माणि आऽउक्ता नमसा हरिऽभ्यां
सुऽपेशसं वाजं आ भर नः प्रातः मक्षु धियाऽवसुः जग-
म्यात् ॥९॥५॥

---

॥६४॥ वृष्णे शर्धाय सुऽमखाय वेधसे नोधः सुऽवृक्तिं प्र भर
मरुत्ऽभ्यः अपः न धीरः मनसा सुऽहस्त्यः गिरः सं अंजे विदथेषु
आऽभुवः ॥१॥ ते जज्ञिरे दिवः ऋष्वासः उक्षणः रुद्रस्य मर्याः
असुराः अरेपसः पावकासः शुचयः सूर्याःऽइव सत्वानः न
द्रप्सिनः घोरऽवर्पसः ॥२॥ युवानः रुद्राः अजराः अभोक्ऽहनः
ववक्षुः अध्रिऽगावः पर्वताःऽइव दृळ्हा चित् विश्वा भुवनानि

पार्थिवा प्र च्यावयंति दिव्यानि मज्मना ॥ ३ ॥ चित्रैरंजि-
भिर्वपुषे व्यंजते वक्षःसु रुक्माँ अधि येतिरे शुभे । अंसेष्वेषां
नि मिमृक्षुर्ऋष्टयः साकं जज्ञिरे स्वधया दिवो नरः ॥ ४ ॥
ईशानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिर-
क्रत । दुहंत्यूधर्दिव्यानि धूतयो भूमिं पिन्वंति पयसा
परिज्रयः ॥ ५ ॥ ६ ॥ पिन्वंत्यपो मरुतः सुदानवः पयो
घृतवद्विदथेष्वाभुवः । अत्यं न मिहे वि नयंति वाजिन-
मुत्सं दुहंति स्तनयंतमक्षितं ॥ ६ ॥ महिषासो मायिनश्चित्र-
भानवो गिरयो न स्वतवसो रघुष्यदः । मृगा इव
हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वं ॥ ७ ॥
सिंहा इव नानदति प्रचेतसः पिशा इव सुपिशो विश्ववे-
दसः । क्षपो जिन्वंतः पृषतीभिर्ऋष्टिभिः समित्सबाधः
शवसाहिमन्यवः ॥ ८ ॥ रोदसी आ वदता गणश्रियो
नृषाचः शूराः शवसाहिमन्यवः । आ वंधुरेष्वमतिर्न दर्श-
ता विद्युन्न तस्थौ मरुतो रथेषु वः ॥ ९ ॥ विश्ववेदसो
रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः ।
अस्तार इषुं दधिरे गभस्त्योरनंतशुष्मा वृषखादयो
नरः ॥ १० ॥ ७ ॥ हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नंत
आपथ्यो३न पर्वतान् । मखा अयासः स्वसृतो ध्रुवच्युतो
दुध्रकृतो मरुतो भ्राजदृष्टयः ॥ ११ ॥ घृषुं पावकं वनिनं
विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि । रजस्तुरं तवसं
मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ॥ १२ ॥ प्र नू स
मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत ।
अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति

पार्थिवा प्र च्यवयंति दिव्यानि मज्मना ॥३॥ चित्रैः अंजिऽभिः वपुषे वि अंजते वक्षःऽसु रुक्मान् अधि येतिरे शुभे अंसेषु एषां नि मिमृक्षुः ऋष्टयः साकं जज्ञिरे स्वधया दिवः नरः ॥४॥ ईशानऽकृतः धुनयः रिशादसः वातान् विऽद्युतः तविषीभिः अक्रत दुहंति ऊधः दिव्यानि धूतयः भूमिं पिन्वंति पयसा परिऽज्रयः ॥५॥६॥ पिन्वंति अपः मरुतः सुऽदानवः पयः घृतऽवत् विदथेषु आऽभुवः अत्यं न मिहे वि नयंति वाजिनं उत्सं दुहंति स्तनयंतं अक्षितं ॥६॥ महिषासः मायिनः चित्रऽभानवः गिरयः न स्वऽतवसः रघुऽस्यदः मृगाःऽइव हस्तिनः खादथ वना यत् आरुणीषु तविषीः अयुग्ध्वं ॥७॥ सिंहाःऽइव नानदति प्रऽचेतसः पिशाःऽइव सुऽपिशः विश्वऽवेदसः क्षपः जिन्वंतः पृषतीभिः ऋष्टिऽभिः सं इत् सऽबाधः शवसा अहिऽमन्यवः ॥८॥ रोदसी आ वदत गणऽश्रियः नृऽसाचः शूराः शवसा अहिऽमन्यवः आ वंधुरेषु अमतिः न दर्शता विऽद्युत् न तस्थौ मरुतः रथेषु वः ॥९॥ विश्वऽवेदसः रयिऽभिः संऽओकसः संऽमिश्लासः तविषीभिः विऽरप्शिनः अस्तारः इषुं दधिरे गभस्त्योः अनंतऽशुष्माः वृषऽखादयः नरः ॥१०॥७॥ हिरण्ययेभिः पविऽभिः पयःऽवृधः उत् जिघ्नंते आऽपथ्यः न पर्वतान् मखाः अयासः स्वऽसृतः ध्रुवऽच्युतः दुध्रऽकृतः मरुतः भ्राजत्ऽऋष्टयः ॥११॥ घृषुं पावकं वनिनं विऽचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि रजःऽतुरं तवसं मारुतं गणं ऋजीषिणं वृषणं सश्चत श्रिये ॥१२॥ प्र नु सः मर्तः शवसा जनान् अति तस्थौ वः ऊती मरुतः यं आवत अर्वत्ऽभिः वाजं भरते धना नृऽभिः आऽपृच्छ्यं क्रतुं आ क्षेति

पुष्यति ॥१३॥ चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमंतं शुष्मं मघवत्सु धत्तन । धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥१४॥ नू ष्ठिरं मरुतो वीरवंतमृतीषाहं रयिमस्मासु धत्त । सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ॥१५॥८॥११॥

---

॥ ६५ ॥ १–५ पराशरः शाक्त्यः ॥ अग्निः ॥ द्विपदा विराट् ॥

॥६५॥ पश्वा न तायुं गुहा चतंतं नमो युजानं नमो वहंतं । सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन्विश्वे यजत्राः ॥१॥ ऋतस्य देवा अनु व्रता गुर्भुवत्परिष्टिर्द्यौर्न भूम । वर्धंतीमापः पन्वा सुशिश्विमृतस्य योना गर्भे सुजातं ॥२॥ पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु । अत्यो नाज्मन्त्सर्गप्रतक्तः सिंधुर्न क्षोदः क ईं वराते ॥३॥ जामिः सिंधूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति । यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ॥४॥ श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत् । सोमो न वेधा ऋतप्रजातः पशुर्न शिश्वा विभुर्दूरेभाः ॥५॥९॥

---

॥ ६६ ॥ १–५ पराशरः शाक्त्यः ॥ अग्निः ॥ द्विपदा विराट् ॥

॥६६॥ रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः । तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ॥१॥ दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानां । ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ॥२॥ दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै । चित्रो यदभ्राट् श्वेतो न विक्षु रथो न रुक्मी त्वेषः

पसो न विष्टिभिः समानेन योजनेना परावतः । इषं वहंतीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥३॥ अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहं । ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः ॥४॥ प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वं । स्वरुं न पेशो विदथेष्वंजञ्चित्रं दिवो दुहिता भानुमश्रेत् ॥५॥२४॥ अतारिष्म तमसस्पारमस्योषा उच्छंती वयुना कृणोति । श्रिये छंदो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥६॥ भास्वती नेत्री सूनृतानां दिवः स्तवे दुहिता गोतमेभिः । प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥७॥ उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यं । सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहंतं ॥८॥ विश्वानि देवी भुवनाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति । विश्वं जीवं चरसे बोधयंती विश्वस्य वाचमविदन्मनायोः ॥९॥ पुनःपुनर्जायमाना पुराणी समानं वर्णमभि शुंभमाना । श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयंत्यायुः ॥१०॥२५॥ व्यूर्ण्वती दिवो अंताँ अबोध्यप स्वसारं सनुतर्युयोति । प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥११॥ पशून्न चित्रा सुभगा प्रथाना सिंधुर्न क्षोद उर्विया व्यश्वैत् । अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥१२॥ उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥१३॥ उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावति ॥१४॥

अपसः न विष्टिऽभिः समानेन योजनेन आ पराऽवतः इषं
वहंतीः सुऽकृते सुऽदानवे विश्वा इत् अह यजमानाय सुन्वते ॥३॥
अधि पेशांसि वपते नृतूःऽइव अप ऊर्णुते वक्षः उस्राऽइव
बर्जहं ज्योतिः विश्वस्मै भुवनाय कृण्वती गावः न व्रजं वि उषाः
आवरिति तमः ॥४॥ प्रति अर्चिः रुशत् अस्याः अदर्शि वि तिष्ठते
बाधते कृष्णं अभ्वं स्वरुं न पेशः विदथेषु अंजन् चित्रं दिवः दुहि-
ता भानुं अश्रेत् ॥५॥२४॥ अतारिष्म तमसः पारं अस्य उषाः
उच्छंती वयुना कृणोति श्रिये छंदः न स्मयते विऽभाती सुऽप्र-
तीका सौमनसाय अजीगरिति ॥६॥ भास्वती नेत्री सूनृतानां दिवः
स्तवे दुहिता गोतमेभिः प्रजाऽवतः नृऽवतः अश्वऽबुध्यान् उषः
गोऽअग्रान् उप मासि वाजान् ॥७॥ उषः तं अश्यां यशसं सु-
ऽवीरं दासऽप्रवर्गं रयिं अश्वऽबुध्यं सुऽदंससा श्रवसा या वि-
ऽभासि वाजऽप्रसूता सुऽभगे बृहंतं ॥८॥ विश्वानि देवी भुवना
अभिऽचक्ष्य प्रतीची चक्षुः उर्विया वि भाति विश्वं जीवं चरसे
बोधयंती विश्वस्य वाचं अविदत् मनायोः ॥९॥ पुनःऽपुनः
जायमाना पुराणी समानं वर्णं अभि शुंभमाना श्वघ्नीऽइव
कृत्नुः विजः आऽमिनाना मर्तस्य देवी जरयंती आयुः ॥१०॥२५॥
विऽऊर्ण्वती दिवः अंतान् अबोधि अप स्वसारं सनुतः युयोति
प्रऽमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥११॥
पशून् न चित्रा सुऽभगा प्रथाना सिंधुः न क्षोदः उर्विया वि अ-
श्वैत् अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिऽभिः दृशा-
ना ॥१२॥ उषः तत् चित्रं आ भर अस्मभ्यं वाजिनीऽवति येन
तोकं च तनयं च धामहे ॥१३॥ उषः अद्य इह गोऽमति अश्व-
ऽवति विभाऽवरि रेवत् अस्मे इति वि उच्छ सूनृताऽवति ॥१४॥

युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः। अथा नो विश्वा सौभगान्या वह ॥ १५ ॥ २६ ॥ अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत्। अर्वाग्रथं समनसा नि यच्छतं ॥ १६ ॥ यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः। आ न ऊर्जं वहतमश्विना युवं ॥ १७ ॥ एह देवा मयोभुवा दस्रा हिरण्यवर्तनी। उषर्बुधो वहंतु सोमपीतये ॥ १८ ॥ २७ ॥

---

॥ ९३ ॥ १–१२ गोतमो राहूगणः ॥ अग्नीषोमौ ॥ १–३ अनुष्टुप् । ४–७. १२ त्रिष्टुप् ।
८ जगती त्रिष्टुब्वा । ९–११ गायत्री ॥

॥ ९३ ॥ अग्नीषोमाविमं सु मे शृणुतं वृषणा हवं। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ १ ॥ अग्नीषोमा यो अद्य वामिदं वचः सपर्यति। तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यं ॥ २ ॥ अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिं। स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ ३ ॥ अग्नीषोमा चेति तद्वीर्यं वां यदमुष्णीतमवसं पणिं गाः। अवातिरतं बृसयस्य शेषोऽविंदतं ज्योतिरेकं बहुभ्यः ॥ ४ ॥ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं। युवं सिंधूँरभिशस्तेरवद्यादग्नीषोमावमुंचतं गृभीतान् ॥ ५ ॥ आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः। अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकं ॥ ६ ॥ २८ ॥ अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथां। सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥ ७ ॥ यो अग्नीषोमा हविषा सपर्याद्देवद्रीचा मनसा यो घृतेन। तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतं ॥ ८ ॥ अग्नीषोमा सवेदसा सहूती वनतं गिरः। सं देवत्रा बभूवथुः ॥ ९ ॥ अग्नीषोमावनेन वां यो वां घृतेन दाशति। तस्मै दीदयतं बृहत्

युक्ष्व हि वाजिनीऽवति अश्वान् अद्य अरुणान् उषः अथ नः विश्वा सौभगानि आ वह ॥ १५ ॥ २६ ॥ अश्विना वर्तिः अस्मत् आ गोऽमत् दस्रा हिरण्यऽवत् अर्वाक् रथं सऽमनसा नि यच्छतं ॥ १६ ॥ यौ इत्था श्लोकं आ दिवः ज्योतिः जनाय चक्रथुः आ नः ऊर्जं वहतं अश्विना युवं ॥ १७ ॥ आ इह देवा मयःऽभुवा दस्रा हिरण्यऽवर्तनी॰ उषःऽबुधः वहंतु सोमऽपीतये ॥ १८ ॥ २७ ॥

---

॥ ९३ ॥ अग्नीषोमौ इमं सु मे शृणुतं वृषणा हवं प्रति सुऽउक्तानि हर्यतं भवतं दाशुषे मयः ॥ १ ॥ अग्नीषोमा यः अद्य वां इदं वचः सपर्यति तस्मै धत्तं सुऽवीर्यं गवां पोषं सुऽअश्व्यं ॥ २ ॥ अग्नीषोमा यः आऽहुतिं यः वां दाशात् हविःऽकृतिं सः प्रऽजया सुऽवीर्यं विश्वं आयुः वि अश्नवत् ॥ ३ ॥ अग्नीषोमा चेति तत् वीर्यं वां यत् अमुष्णीतं अवसं पणिं गाः अव अतिरतं बृसयस्य शेषः अविंदतं ज्योतिः एकं बहुऽभ्यः ॥ ४ ॥ युवं एतानि दिवि रोचनानि अग्निः च सोम सऽक्रतू॰ अधत्तं युवं सिंधून् अभिऽशस्तेः अवद्यात् अग्नीषोमौ अमुंचतं गृभीतान् ॥ ५ ॥ आ अन्यं दिवः मातरिश्वा जभार अमथ्नात् अन्यं परि श्येनः अद्रेः अग्नीषोमा ब्रह्मणा ववृधाना उरुं यज्ञाय चक्रथुः ऊं लोकं ॥ ६ ॥ २८ ॥ अग्नीषोमा हविषः प्रऽस्थितस्य वीतं हर्यतं वृषणा जुषेथां सुऽशर्माणा सुऽअवसा हि भूतं अथ धत्तं यजमानाय शं योः ॥ ७ ॥ यः अग्नीषोमा हविषा सपर्यात् देवद्रीचा मनसा यः घृतेन तस्य व्रतं रक्षतं पातं अंहसः विशे जनाय महि शर्म यच्छतं ॥ ८ ॥ अग्नीषोमा सऽवेदसा सऽहूती॰ वनतं गिरः सं देवऽत्रा बभूवथुः ॥ ९ ॥ अग्नीषोमौ अनेन वां यः वां घृतेन दाशति तस्मै दीदयतं बृहत्

॥१०॥ अग्नीषोमाविमानि नो युवं हव्या जुजोषतं। आ यातमुप नः सचा ॥११॥ अग्नीषोमा पिपृतमर्वतो न आ प्यायंतामुस्रिया हव्यसूदः। अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमंतं ॥१२॥२९॥१४॥

---

॥९४॥ १–१६ कुत्स आंगिरसः ॥ १–७. ८[४]. ९–१६[१.२] अग्निः। ८[१.२.३] देवाः। १६[३.४] मित्रो वरुणोऽदितिः सिंधुः पृथिवी द्यौरग्निर्वा ॥ १–१४ जगती। १५. १६ त्रिष्टुप् ॥

॥९४॥ इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥१॥ यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यं। स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥२॥ शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदंत्याहुतं। त्वमादित्यॉं आ वह तान्ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥३॥ भरामेध्मं कृणवामा हवींषि ते चितयंतः पर्वणापर्वणा वयं। जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥४॥ विशां गोपा अस्य चरंति जंतवो द्विपच्च यदुत चतुष्पदक्तुभिः। चित्रः प्रकेत उषसो महॉं अस्यग्ने सख्ये मा रिषामा वयं तव ॥५॥३०॥ त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः। विश्वा विद्वॉं आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥६॥ यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे। राम्र्याश्चिदंधो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥७॥ पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः। तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥८॥ वधैर्दुःशंसॉं अप दूढ्यो जहि दूरे वा ये अंति वा के चिदत्रिणः। अथा

॥१०॥ अग्नीषोमौ इमानि नः युवं हव्या जुजोषतं आ यातं उप नः सचा ॥ ११ ॥ अग्नीषोमा पिपृतं अर्वतः नः आ प्यायंतां उस्रियाः हव्यऽसूदः अस्मे बलानि मघवत्ऽसु धत्तं कृणुतं नः अध्वरं श्रुष्टिऽमंतं ॥ १२ ॥ २९ ॥ १४ ॥

---

॥ ९४ ॥ इमं स्तोमं अर्हते जातऽवेदसे रथंऽइव सं महेम मनीषया भद्रा हि नः प्रऽमतिः अस्य संऽसदि अग्ने सख्ये मा रिषाम वयं तव ॥ १ ॥ यस्मै त्वं आऽयजसे सः साधति अनर्वा क्षेति दधते सुऽवीर्यं सः तूताव न एनं अश्नोति अंहतिः अग्ने सख्ये मा रिषाम वयं तव ॥ २ ॥ शकेम त्वा संऽइधं साधय धियः त्वे देवाः हविः अदंति आऽहुतं त्वं आदित्यान् आ वह तान् हि उश्मसि अग्ने सख्ये मा रिषाम वयं तव ॥ ३ ॥ भराम इध्मं कृणवाम हवींषि ते चितयंतः पर्वणाऽपर्वणा वयं जीवातवे प्रऽतरं साधय धियः अग्ने सख्ये मा रिषाम वयं तव ॥ ४ ॥ विशां गोपाः अस्य चरंति जंतवः द्विऽपत् च यत् उत चतुःऽपत् अक्तुऽभिः चित्रः प्रऽकेतः उषसः महान् असि अग्ने सख्ये मा रिषाम वयं तव ॥ ५ ॥ ३० ॥ त्वं अध्वर्युः उत होता असि पूर्व्यः प्रऽशास्ता पोता जनुषा पुरःऽहितः विश्वा विद्वान् आर्त्विज्या धीर पुष्यसि अग्ने सख्ये मा रिषाम वयं तव ॥ ६ ॥ यः विश्वतः सुऽप्रतीकः सऽदृङ् असि दूरे चित् सन् तळित्ऽइव अति रोचसे राम्याः चित् अंधः अति देव पश्यसि अग्ने सख्ये मा रिषाम वयं तव ॥ ७ ॥ पूर्वः देवाः भवतु सुन्वतः रथः अस्माकं शंसः अभि अस्तु दुःऽध्यः तत् आ जानीत उत पुष्यत वचः अग्ने सख्ये मा रिषाम वयं तव ॥ ८ ॥ वधैः दुःऽशंसान् अप दुःऽध्यः जहि दूरे वा ये अंति वा के चित् अत्रिणः अथ

यज्ञाय गृणते सुगं कृण्वग्ने सख्ये मा रिषामा वयं तव ॥ ९ ॥ यद्युक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः । आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥ १० ॥ ३१ ॥ अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् । सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ ११ ॥ अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः । मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥ १२ ॥ देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे । शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३ ॥ तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः । दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥ १४ ॥ यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता । यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥ १५ ॥ स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १६ ॥ ३२ ॥ ६ ॥

---

॥ ९५ ॥ १–११ कुत्स आंगिरसः ॥ अग्निरग्निरौषसो वा ॥ त्रिष्टुप् ॥

॥ ९५ ॥ द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते । हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥ दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रं । तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति ॥ २ ॥ त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु । पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशा-

यज्ञाय गृणते सुऽगं कृधि अग्ने सख्ये मा रिषाम वयं तव ॥ ९ ॥ यत् अयुक्थाः अरुषा रोहिता रथे वातऽजूता वृषभस्यऽइव ते रवः आत् इन्वसि वनिनः धूमऽकेतुना अग्ने सख्ये मा रिषाम वयं तव ॥ १० ॥ ३१ ॥ अध स्वनात् उत बिभ्युः पतत्रिणः द्रप्साः यत् ते यवसऽअदः वि अस्थिरन् सुऽगं तत् ते तावकेभ्यः रथेभ्यः अग्ने सख्ये मा रिषाम वयं तव ॥ ११ ॥ अयं मित्रस्य वरुणस्य धायसे अवऽयातां मरुतां हेळः अद्भुतः मृळ सु नः भूतु एषां मनः पुनः अग्ने सख्ये मा रिषाम वयं तव ॥ १२ ॥ देवः देवानां असि मित्रः अद्भुतः वसुः वसूनां असि चारुः अध्वरे शर्मन् स्याम तव सप्रथःऽतमे अग्ने सख्ये मा रिषाम वयं तव ॥ १३ ॥ तत् ते भद्रं यत् संऽइद्धः स्वे दमे सोमऽआहुतः जरसे मृळयत्ऽतमः दधासि रत्नं द्रविणं च दाशुषे अग्ने सख्ये मा रिषाम वयं तव ॥ १४ ॥ यस्मै त्वं सुऽद्रविणः ददाशः अनागाःऽत्वं अदिते सर्वऽताता यं भद्रेण शवसा चोदयासि प्रजाऽवता राधसा ते स्याम ॥ १५ ॥ सः त्वं अग्ने सौभगऽत्वस्य विद्वान् अस्माकं आयुः प्र तिर इह देव तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ १६ ॥ ३२ ॥ ६ ॥

---

॥ ९५ ॥ द्वे॑ विऽरू॑पे॰ चरतः सुऽअर्थे॰ अन्याऽअन्या वत्सं उप धापयेते॑ हरिः अन्यस्यां भवति स्वधाऽवान् शुक्रः अन्यस्यां ददृशे सुऽवर्चाः ॥ १ ॥ दश इमं त्वष्टुः जनयंत गर्भं अतंद्रासः युवतयः विऽभृत्रं तिग्मऽअनीकं स्वऽयशसं जनेषु विऽरोचमानं परि सीं नयंति ॥ २ ॥ त्रीणि जाना परि भूषंति अस्य समुद्रे एकं दिवि एकं अप्ऽसु पूर्वां अनु प्र दिशं पार्थिवानां ऋतून् प्रऽशा-

सद्वि दधावनुष्ठु ॥३॥ क इमं वो निण्यमा चिकेत वत्सो
मातॄर्जनयत स्वधाभिः । बह्वीनां गर्भो अपसामुपस्थान्म-
हान्कविर्निश्चरति स्वधावान् ॥४॥ आविष्ट्यो वर्धते चारुरासु
जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे त्वष्टुर्बिभ्यतुर्जायमा-
नात्प्रतीची सिंहं प्रति जोषयेते ॥५॥१॥ उभे भद्रे जोषयेते
न मेने गावो न वाश्रा उप तस्थुरेवैः । स दक्षाणां
दक्षपतिर्बभूवांजंति यं दक्षिणतो हविर्भिः ॥६॥ उद्यंयमीति
सवितेव बाहू उभे सिचौ यतते भीम ऋंजन् । उच्छुक्र-
मत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥७॥
त्वेषं रूपं कृणुत उत्तरं यत्संपृंचानः सदने गोभिरद्भिः । कविर्बुध्नं
परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥८॥ उरु ते ज्रयः
पर्येति बुध्नं विरोचमानं महिषस्य धाम । विश्वेभिरग्ने स्वयशो-
भिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥९॥ धन्वन्स्रोतः कृणुते
गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षां । विश्वा सनानि जठरेषु
धत्तेऽंतर्नवासु चरति प्रसूषु ॥१०॥ एवा नो अग्ने समिधा वृधानो
रेवत्पावक श्रवसे वि भाहि । तन्नो मित्रो वरुणो मामहंताम-
दितिः सिंधुः पृथिवी उत द्यौः ॥११॥२॥

---

॥ ९६ ॥ १–९ कुत्स आंगिरसः ॥ अग्निरग्निर्द्रविणोदा वा ॥ त्रिष्टुप् ॥

॥९६॥ स प्रत्नथा सहसा जायमानः सद्यः काव्यानि
बळधत्त विश्वा । आपश्च मित्रं धिषणा च साधन्देवा अग्निं
धारयन्द्रविणोदां ॥१॥ स पूर्वया निविदा कव्यतायोरिमाः
प्रजा अजनयन्मनूनां । विवस्वता चक्षसा द्यामपश्च देवा
अग्निं धारयन्द्रविणोदां ॥२॥ तमीळत प्रथमं यज्ञसाधं

संत् वि दधौ अनुष्टु ॥ ३ ॥ कः इमं वः निण्यं आ चिकेत वत्सः मातृः जनयत स्वधाभिः बह्वीनां गर्भः अपसां उपऽस्थात् महान् कविः निः चरति स्वधाऽवान् ॥ ४ ॥ आविःऽत्यः वर्धते चारुः आसु जिह्मानां ऊर्ध्वः स्वऽयशाः उपऽस्थे उभे त्वष्टुः बिभ्यतुः जायमानात् प्रतीची सिंहं प्रति जोषयेते ॥ ५ ॥ १ ॥ उभे भद्रे जोषयेते न मेने गावः न वाश्राः उप तस्थुः एवैः सः दक्षाणां दक्षऽपतिः बभूव अंजंति यं दक्षिणतः हविःऽभिः ॥ ६ ॥ उत् यंयमीति सविताऽइव बाहू उभे सिचौ यतते भीमः ऋंजन् उत् शुक्रं अत्कं अजते सिमस्मात् नवा मातृऽभ्यः वसना जहाति ॥ ७ ॥ त्वेषं रूपं कृणुते उत्ऽतरं यत् संऽपृंचानः सदने गोभिः अत्ऽभिः कविः बुध्नं परि मर्मृज्यते धीः सा देवऽताता संऽइतिः बभूव ॥ ८ ॥ उरु ते ज्रयः परि एति बुध्नं विऽरोचमानं महिषस्य धाम विश्वेभिः अग्ने स्वयशःऽभिः इद्धः अदब्धेभिः पायुऽभिः पाहि अस्मान् ॥ ९ ॥ धन्वन् स्रोतः कृणुते गातुं ऊर्मिं शुक्रैः ऊर्मिऽभिः अभि नक्षति क्षां विश्वा सनानि जठरेषु धत्ते अंतः नवासु चरति प्रऽसूषु ॥ १० ॥ एव नः अग्ने संऽइधा वृधानः रेवत् पावक श्रवसे वि भाहि तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥ २ ॥

---

॥ ९६ ॥ सः प्रत्नऽथा सहसा जायमानः सद्यः काव्यानि बट् अधत्त विश्वा आपः च मित्रं धिषणा च साधन् देवाः अग्निं धारयन् द्रविणःऽदां ॥ १ ॥ सः पूर्वया निऽविदा कव्यता आयोः इमाः प्रऽजाः अजनयत् मनूनां विवस्वता चक्षसा द्यां अपः च देवाः अग्निं धारयन् द्रविणःऽदां ॥ २ ॥ तं ईळत प्रथमं यज्ञऽसाधं

विश आरीराहुतमृंजसानं। ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदां ॥३॥ स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित्। विशां गोपा जनिता रोदस्योर्देवा अग्निं धारयन्द्रविणोदां ॥४॥ नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची। द्यावाक्षामा रुक्मो अंतर्वि भाति देवा अग्निं धारयन्द्रविणोदां ॥५॥३॥ रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः। अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदां ॥६॥ नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षां। सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन्द्रविणोदां ॥७॥ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत्। द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥८॥ एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥९॥४॥

---

॥ ९७ ॥ १-८ कुत्स आंगिरसः ॥ अग्निरग्निः शुचिर्वा ॥ गायत्री ॥

॥९७॥ अप नः शोशुचदघमग्ने शुशुग्ध्या रयिं। अप नः शोशुचदघं ॥१॥ सुक्षेत्रिया सुगातुया वसूया च यजामहे। अप नः शोशुचदघं ॥२॥ प्र यद्भंदिष्ठ एषां प्रास्माकासश्च सूरयः। अप नः शोशुचदघं ॥३॥ प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयं। अप नः शोशुचदघं ॥४॥ प्र यदग्नेः सहस्वतो विश्वतो यंति भानवः। अप नः शोशुचदघं ॥५॥ त्वं हि विश्वतोमुख विश्वतः परिभूरसि। अप नः शोशुचदघं ॥६॥ द्विषो नो विश्वतोमुखाति नावेव

विशः आरीः आऽहुतं ऋंजसानं ऊर्जः पुत्रं भरतं सृप्रऽदानुं देवाः अग्निं धारयन् द्रविणःऽदां ॥ ३ ॥ सः मातरिश्वा पुरुवारऽपुष्टिः विदत् गातुं तनयाय स्वःऽवित् विशां गोपाः जनिता रोदस्योः देवाः अग्निं धारयन् द्रविणःऽदां ॥ ४ ॥ नक्तोषसा वर्णं आऽमेम्याने॰ धापयेते॰ शिशुं एकं संऽईची॰ द्यावाक्षामा रुक्मः अंतः वि भाति देवाः अग्निं धारयन् द्रविणःऽदां ॥ ५ ॥ ३ ॥ रायः बुध्नः संऽगमनः वसूनां यज्ञस्य केतुः मन्मऽसाधनः वेः॰ अमृतऽत्वं रक्षमाणासः एनं देवाः अग्निं धारयन् द्रविणःऽदां ॥ ६ ॥ नु च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षां सतः च गोपां भवतः च भूरेः देवाः अग्निं धारयन् द्रविणःऽदां ॥ ७ ॥ द्रविणःऽदाः द्रविणसः तुरस्य द्रविणःऽदाः सनरस्य प्र यंसत् द्रविणःऽदाः वीरऽवतीं इषं नः द्रविणःऽदाः रासते दीर्घं आयुः ॥ ८ ॥ एव नः अग्ने संऽइधा वृधानः रेवत् पावक श्रवसे वि भाहि तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ९ ॥ ४ ॥

---

॥ ९७ ॥ अप नः शोशुचत् अघं अग्ने शुशुग्धि आ रयिं अप नः शोशुचत् अघं ॥ १ ॥ सुऽक्षेत्रिया सुगातुऽया वसुऽया च यजामहे अप नः शोशुचत् अघं ॥ २ ॥ प्र यत् भंदिष्ठः एषां प्र अस्माकासः च सूरयः अप नः शोशुचत् अघं ॥ ३ ॥ प्र यत् ते अग्ने सूरयः जायेमहि प्र ते वयं अप नः शोशुचत् अघं ॥ ४ ॥ प्र यत् अग्नेः सहस्वतः विश्वतः यंति भानवः अप नः शोशुचत् अघं ॥ ५ ॥ त्वं हि विश्वतःऽमुख विश्वतः परिऽभूः असि अप नः शोशुचत् अघं ॥ ६ ॥ द्विषः नः विश्वतःऽमुख अति नावाऽइव

पारय। अप नः शोशुचदघं ॥७॥ स नः सिंधुमिव नावयाति पर्षा स्वस्तये। अप नः शोशुचदघं ॥८॥५॥

॥ ९८ ॥ १–३ कुत्स आंगिरसः ॥ अग्निर्वैश्वानरो वा ॥ त्रिष्टुप् ॥

॥९८॥ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः। इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥१॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तं ॥२॥ वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचंतां। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥३॥६॥

॥ ९९ ॥ १ कश्यपो मारीचः ॥ अग्निरग्निर्जातवेदा वा ॥ त्रिष्टुप् ॥

॥९९॥ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ॥१॥७॥

॥ १०० ॥ १–१९ ऋज्राश्वांबरीषसहदेवभयमानसुराधसो वार्षागिराः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१००॥ स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट्। सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विंद्र ऊती ॥१॥ यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति। वृषंतमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विंद्र ऊती ॥२॥ दिवो न यस्य रेतसो दुघानाः पंथासो यंति शवसापरीताः। तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विंद्र ऊती ॥३॥ सो अंगिरोभिरंगिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन्। ऋग्मिभिरृग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विंद्र ऊती ॥४॥ स सूनुभिर्न रुद्रे-

पारय अप नः शोशुचत् अघं ॥ ७ ॥ सः नः सिंधुंऽइव नावया अति पर्ष स्वस्तये अप नः शोशुचत् अघं ॥ ८ ॥ ५ ॥

---

॥ ९८ ॥ वैश्वानरस्य सुऽमतौ स्याम राजा हि कं भुवनानां अभिऽश्रीः इतः जातः विश्वं इदं वि चष्टे वैश्वानरः यतते सूर्येण ॥ १ ॥ पृष्टः दिवि पृष्टः अग्निः पृथिव्यां पृष्टः विश्वाः ओषधीः आ विवेश वैश्वानरः सहसा पृष्टः अग्निः सः नः दिवा सः रिषः पातु नक्तं ॥ २ ॥ वैश्वानर तव तत् सत्यं अस्तु अस्मान् रायः मघऽवानः सचंतां तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ३ ॥ ६ ॥

---

॥ ९९ ॥ जातऽवेदसे सुनवाम सोमं अरातिऽयतः नि दहाति वेदः सः नः पर्षत् अति दुःऽगानि विश्वा नावाऽइव सिंधुं दुःऽइता अति अग्निः ॥ १ ॥ ७ ॥

---

॥ १०० ॥ सः यः वृषा वृष्ण्येभिः संऽओकाः महः दिवः पृथिव्याः च संऽराट् सतीनऽसत्वा हव्यः भरेषु मरुत्वान् नः भवतु इंद्रः ऊती ॥ १ ॥ यस्य अनाप्तः सूर्यस्यऽइव यामः भरेऽभरे वृत्रऽहा शुष्मः अस्ति वृषन्ऽतमः सखिऽभिः स्वेभिः एवैः मरुत्वान् नः भवतु इंद्रः ऊती ॥ २ ॥ दिवः न यस्य रेतसः दुघानाः पंथासः यंति शवसा अपरिऽइताः तरत्ऽद्वेषाः ससहिः पौंस्येभिः मरुत्वान् नः भवतु इंद्रः ऊती ॥ ३ ॥ सः अंगिरःऽभिः अंगिरःऽतमः भूत् वृषा वृषऽभिः सखिऽभिः सखा सन् ऋग्मिऽभिः ऋग्मी गातुऽभिः ज्येष्ठः मरुत्वान् नः भवतु इंद्रः ऊती ॥ ४ ॥ सः सूनुऽभिः न रुद्रे-

भिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान्। सनीळेभिः श्रवस्यानि
तूर्वन्मरुत्वान्नो भवत्विंद्र ऊती ॥५॥८॥ स मन्युमीः समद-
नस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत्। अस्मिन्नहन्सत्प-
तिः पुरुहूतो मरुत्वान्नो भवत्विंद्र ऊती ॥६॥ तमूतयो
रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम्। स विश्वस्य
करुणस्येश एको मरुत्वान्नो भवत्विंद्र ऊती ॥७॥ तमप्संत
शवस उत्सवेषु नरो नरमवसे तं धनाय। सो अंधे चित्तमसि
ज्योतिर्विदन्मरुत्वान्नो भवत्विंद्र ऊती ॥८॥ स सव्येन यमति
व्राधतश्चित्स दक्षिणे संगृभीता कृतानि। स कीरिणा
चित्सनिता धनानि मरुत्वान्नो भवत्विंद्र ऊती ॥९॥ स
ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विंद्र ऊती ॥१०॥९॥
स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत
एवैः। अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विंद्र
ऊती ॥११॥ स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः
शतनीथ ऋभ्वा। चम्रीषो न शवसा पांचजन्यो मरु-
त्वान्नो भवत्विंद्र ऊती ॥१२॥ तस्य वज्रः क्रंदति स्मत्स्वर्षा
दिवो न त्वेषो रवथः शिमीवान्। तं सचंते सनयस्तं
धनानि मरुत्वान्नो भवत्विंद्र ऊती ॥१३॥ यस्याजस्रं शवसा
मानमुक्थं परिभुजद्रोदसी विश्वतः सीं। स पारिषत्क्र-
तुभिर्मंदसानो मरुत्वान्नो भवत्विंद्र ऊती ॥१४॥ न यस्य
देवा देवता न मर्ता आपश्चन शवसो अंतमापुः। स
प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विंद्र ऊती
॥१५॥१०॥ रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्रा-

भिः ऋभ्वा नृऽसह्ये ससह्वान् अमित्रान् सऽनीळेभिः श्रवस्या-
नि तूर्वन् मरुत्वान् नः भवतु इंद्रः ऊती ॥५॥८॥ सः मन्युऽमीः स-
ऽमदनस्य कर्ता अस्माकेभिः नृऽभिः सूर्यं सनत् अस्मिन् अहन्
सत्ऽपतिः पुरुऽहूतः मरुत्वान् नः भवतु इंद्रः ऊती ॥६॥ तं ऊतयः
रणयन् शूरऽसातौ तं क्षेमस्य क्षितयः कृण्वत त्रां सः विश्वस्य
करुणस्य ईशे एकः मरुत्वान् नः भवतु इंद्रः ऊती ॥७॥ तं अप्संत
शवसः उत्ऽसवेषु नरः नरं अवसे तं धनाय सः अंधे चित् तमसि
ज्योतिः विदत् मरुत्वान् नः भवतु इंद्रः ऊती ॥८॥ सः सव्येन
यमति व्राधतः चित् सः दक्षिणे संऽगृभीता कृतानि सः कीरि-
णा चित् सनिता धनानि मरुत्वान् नः भवतु इंद्रः ऊती ॥९॥ सः
ग्रामेभिः सनिता सः रथेभिः विदे विश्वाभिः कृष्टिऽभिः नु अद्य
सः पौंस्येभिः अभिऽभूः अशस्तीः मरुत्वान् नः भवतु इंद्रः ऊती
॥१०॥९॥ सः जामिऽभिः यत् संऽअजाति मीळ्हे अजामिऽभिः
वा पुरुऽहूतः एवैः अपां तोकस्य तनयस्य जेषे मरुत्वान् नः
भवतु इंद्रः ऊती ॥११॥ सः वज्रऽभृत् दस्युऽहा भीमः उग्रः सह-
स्रऽचेताः शतऽनीथः ऋभ्वा चम्रीषः न शवसा पांचऽजन्यः
मरुत्वान् नः भवतु इंद्रः ऊती ॥१२॥ तस्य वज्रः क्रंदति स्मत्
स्वःऽसाः दिवः न त्वेषः रवथः शिमीऽवान् तं सचंते सनयः तं
धनानि मरुत्वान् नः भवतु इंद्रः ऊती ॥१३॥ यस्य अजस्रं शवसा
मानं उक्थं परिऽभुजत् रोदसी' विश्वतः सीं सः पारिषत् क्र-
तुऽभिः मंदसानः मरुत्वान् नः भवतु इंद्रः ऊती ॥१४॥ न यस्य
देवाः देवता न मर्ताः आपः चन शवसः अंतं आपुः सः प्रऽरिक्वा
त्वक्षसा क्ष्मः दिवः च मरुत्वान् नः भवतु इंद्रः ऊती ॥१५॥१०॥
रोहित् श्यावा सुमत्ऽअंशुः ललामीः द्युक्षा राये ऋज्रऽअ-

श्वस्य । वृषण्वंतं बिभ्रती धूर्षु रथं मंद्रा चिकेत नाहुषीषु विक्षु ॥१६॥ एतत्त्यत्त इंद्र वृष्ण उक्थं वार्षागिरा अभि गृणंति राधः । ऋज्राश्वः प्रष्टिभिरंबरीषः सहदेवो भयमानः सुराधाः ॥१७॥ दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् । सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्यं सनदपः सुवज्रः ॥१८॥ विश्वाहेंद्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजं । तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥१९॥११॥

---

॥१०१॥ १—११ कुत्स आंगिरसः ॥ इंद्रः ॥ १—७ जगती । ८—११ त्रिष्टुप् ॥

॥१०१॥ प्र मंदिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना । अवस्यवो वृषणं वज्रदक्षिणं मरुत्वंतं सख्याय हवामहे ॥१॥ यो व्यंसं जाहृषाणेन मन्युना यः शंबरं यो अहन्पिप्रुमव्रतं । इंद्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वंतं सख्याय हवामहे ॥२॥ यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः । यस्येंद्रस्य सिंधवः सश्चति व्रतं मरुत्वंतं सख्याय हवामहे ॥३॥ यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः । वीळोश्चिदिंद्रो यो असुन्वतो वधो मरुत्वंतं सख्याय हवामहे ॥४॥ यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविंदत् । इंद्रो यो दस्यूँरधराँ अवातिरन्मरुत्वंतं सख्याय हवामहे ॥५॥ यः शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जिग्युभिः । इंद्रं यं विश्वा भुवनाभि संदधुर्मरुत्वंतं सख्याय हवामहे ॥६॥१२॥ रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः । इंद्रं मनीषा अभ्यर्चति श्रुतं मरुत्वंतं सख्याय हवामहे ॥७॥

श्यावा वृषण्ऽवंतं बिभ्रती धूःऽसु रथं मंद्रा चिकेत नाहुषीषु विक्षु ॥ १६ ॥ एतत् त्यत् ते इंद्र वृष्णे उक्थं वार्षागिराः अभि गृणंति राधः ऋज्रऽअश्वः प्रष्टिऽभिः अंबरीषः सहऽदेवः भयमानः सुऽराधाः ॥ १७ ॥ दस्यून् शिम्यून् च पुरुऽहूतः एवैः हत्वा पृथिव्यां शर्वा नि बर्हीत् सनत् क्षेत्रं सखिऽभिः श्वित्न्येभिः सनत् सूर्यं सनत् अपः सुऽवज्रः ॥ १८ ॥ विश्वाहा इंद्रः अधिऽवक्ता नः अस्तु अपरिऽह्वृताः सनुयाम वाजं तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ १९ ॥ ११ ॥

---

॥ १०१ ॥ प्र मंदिने पितुऽमत् अर्चत वचः यः कृष्णऽगर्भाः निःऽअहन् ऋजिश्वना अवस्यवः वृषणं वज्रऽदक्षिणं मरुत्वंतं सख्याय हवामहे ॥ १ ॥ यः विऽअंसं जहृषाणेन मन्युना यः शंबरं यः अहन् पिप्रुं अव्रतं इंद्रः यः शुष्णं अशुषं नि अवृणक् मरुत्वंतं सख्याय हवामहे ॥ २ ॥ यस्य द्यावापृथिवी इति पौंस्यं महत् यस्य व्रते वरुणः यस्य सूर्यः यस्य इंद्रस्य सिंधवः सश्चति व्रतं मरुत्वंतं सख्याय हवामहे ॥ ३ ॥ यः अश्वानां यः गवां गोऽपतिः वशी यः आरितः कर्मणिऽकर्मणि स्थिरः वीळोः चित् इंद्रः यः असुन्वतः वधः मरुत्वंतं सख्याय हवामहे ॥ ४ ॥ यः विश्वस्य जगतः प्राणतः पतिः यः ब्रह्मणे प्रथमः गाः अविंदत् इंद्रः यः दस्यून् अधरान् अवऽअतिरत् मरुत्वंतं सख्याय हवामहे ॥ ५ ॥ यः शूरेभिः हव्यः यः च भीरुऽभिः यः धावत्ऽभिः हूयते यः च जिग्युऽभिः इंद्रं यं विश्वा भुवना अभि संऽदधुः मरुत्वंतं सख्याय हवामहे ॥ ६ ॥ १२ ॥ रुद्राणां एति प्रऽदिशा विऽचक्षणः रुद्रेभिः योषा तनुते पृथु ज्रयः इंद्रं मनीषा अभि अर्चति श्रुतं मरुत्वंतं सख्याय हवामहे ॥ ७ ॥

यद्वा मरुत्वः परमे सधस्थे यद्वावमे वृजने मादयासे। अत आ याह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः ॥८॥ त्वायेंद्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः। अधा नियुत्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व॥९॥ मादयस्व हरिभिर्ये त इंद्र वि ष्यस्व शिप्रे वि सृजस्व धेने। आ त्वा सुशिप्र हरयो वहंतूशन्हव्यानि प्रति नो जुषस्व॥१०॥ मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिंद्रेण सनुयाम वाजं। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥११॥१३॥

---

॥१०२॥ १–११ कुत्स आंगिरसः ॥ इंद्रः ॥ १–१० जगती । ११ त्रिष्टुप् ॥

॥१०२॥ इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे। तमुत्सवे च प्रसवे च सासहिमिंद्रं देवासः शवसामदन्ननु ॥१॥ अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः। अस्मे सूर्याचंद्रमसाभिचक्षे श्रद्धे कमिंद्र चरतो वितर्तुरं ॥२॥ तं स्मा रथं मघवन्प्राव सातये जैत्रं यं ते अनुमदाम संगमे। आजा न इंद्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ॥३॥ वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे। अस्मभ्यमिंद्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥४॥ नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः। अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हींद्र निभृतं मनस्तव ॥५॥१४॥ गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः। अकल्प इंद्रः प्रतिमानमोजसाथा जना वि ह्वयंते सिषासवः ॥६॥ उत्ते शतान्मघवन्नुच्च भूयस

यत् वा मरुत्वः परमे सधऽस्थे यत् वा अवमे वृजने मादयासे अतः आ याहि अध्वरं नः अच्छ त्वाऽया हविः चकृम सत्यऽराधः ॥८॥ त्वाऽया इंद्र सोमं सुसुम सुऽदक्ष त्वाऽया हविः चकृम ब्रह्मऽवाहः अध नियुत्वः सऽगणः मरुत्ऽभिः अस्मिन् यज्ञे बर्हिषि मादयस्व ॥९॥ मादयस्व हरिऽभिः ये ते इंद्र वि स्यस्व शिप्रे वि सृजस्व धेने आ त्वा सुऽशिप्र हरयः वहंतु उशन् हव्यानि प्रति नः जुषस्व ॥१०॥ मरुत्ऽस्तोत्रस्य वृजनस्य गोपाः वयं इंद्रेण सनुयाम वाजं तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥११॥१३॥

---

॥१०२॥ इमां ते धियं प्र भरे महः महीं अस्य स्तोत्रे धिषणा यत् ते आनजे तं उत्ऽसवे च प्रऽसवे च ससहिं इंद्रं देवासः शवसा अमदन् अनु ॥१॥ अस्य श्रवः नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः अस्मे सूर्याचंद्रमसा अभिऽचक्षे श्रद्धे कं इंद्र चरतः विऽतर्तुरं ॥२॥ तं स्म रथं मघऽवन् प्र अव सातये जैत्रं यं ते अनुऽमदाम संऽगमे आजा नः इंद्र मनसा पुरुऽस्तुत त्वायत्ऽभ्यः मघऽवन् शर्म यच्छ नः ॥३॥ वयं जयेम त्वया युजा वृतं अस्माकं अंशं उत् अव भरेऽभरे अस्मभ्यं इंद्र वरिवः सुऽगं कृधि प्र शत्रूणां मघऽवन् वृष्ण्या रुज ॥४॥ नाना हि त्वा हवमानाः जनाः इमे धनानां धर्तः अवसा विपन्यवः अस्माकं स्म रथं आ तिष्ठ सातये जैत्रं हि इंद्र निऽभृतं मनः तव ॥५॥१४॥ गोऽजिता बाहू अमितऽक्रतुः सिमः कर्मन्ऽकर्मन् शतंऽऊतिः खजंऽकरः अकल्पः इंद्रः प्रतिऽमानं ओजसा अथ जनाः वि ह्वयंते सिसासवः ॥६॥ उत् ते शतात् मघऽवन् उत् च भूयसः

उत्सहस्राद्रिरिचे कृष्टिषु श्रवः। अमात्रं त्वा धिषणा तित्विषे
मह्यधा वृत्राणि जिघ्नसे पुरंदर ॥७॥ त्रिविष्टिधातु प्रतिमान-
मोजसस्तिस्रो भूमीर्नृपते त्रीणि रोचना। अतीदं विश्वं भुवनं
ववक्षिथाशत्रुरिंद्र जनुषा सनादसि ॥८॥ त्वां देवेषु प्रथमं
हवामहे त्वं बभूथ पृतनासु सासहिः। सेमं नः कारुमुपमन्यु-
मुद्भिदमिंद्रः कृणोतु प्रसवे रथं पुरः ॥९॥ त्वं जिगेथ न धना
रुरोधिथार्भेष्वाजा मघवन्महत्सु च। त्वामुग्रमवसे सं शिशीम-
स्यथा न इंद्र हवनेषु चोदय ॥१०॥ विश्वाहेंद्रो अधिवक्ता नो
अस्त्वपरिह्वृताः सनुयाम वाजं। तन्नो मित्रो वरुणो मामहंता-
मदितिः सिंधुः पृथिवी उत द्यौः ॥११॥१५॥

---

॥१०३॥ १–८ कुत्स आंगिरसः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१०३॥ तत्त इंद्रियं परमं पराचैरधारयंत कवयः पुरेदं।
क्षमेदमन्यद्दिव्य१न्यदस्य समी पृच्यते समनेव केतुः ॥१॥
स धारयत्पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज।
अहन्नहिमभिनद्रौहिणं व्यहन्व्यंसं मघवा शचीभिः ॥२॥
स जातूभर्मा श्रद्दधान ओजः पुरो विभिंदन्नचरद्वि दा-
सीः। विद्वान्वज्रिन्दस्यवे हेतिमस्यार्यं सहो वर्धया
द्युम्नमिंद्र ॥३॥ तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा
नाम बिभ्रत्। उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः
श्रवसे नाम दधे ॥४॥ तदस्येदं पश्यता भूरि पुष्टं
श्रदिंद्रस्य धत्तन वीर्याय। स गा अविंदत्सो अविंद-
दश्वान्स ओषधीः सो अपः स वनानि ॥५॥१६॥ भूरिकर्मणे
वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमं। य आदृत्या परि-

उत् सहस्रात् रिरिचे कृष्टिषु श्रवः अमात्रं त्वा धिषणा ति-
त्विषे मही अध वृत्राणि जिघ्नसे पुरम्ऽदर ॥७॥ त्रिविष्टिऽधातु
प्रतिऽमानं ओजसः तिस्रः भूमीः नृऽपते त्रीणि रोचना अति
इदं विश्वं भुवनं ववक्षिथ अशत्रुः इंद्र जनुषा सनात् असि ॥८॥
त्वां देवेषु प्रथमं हवामहे त्वं बभूथ पृतनासु ससहिः सः इमं नः
कारुं उपऽमन्युं उत्ऽभिदं इंद्रः कृणोतु प्रऽसवे रथं पुरः ॥९॥ त्वं
जिगेथ न धना रुरोधिथ अर्भेषु आजा मघऽवन् महत्ऽसु च
त्वां उग्रं अवसे सं शिशीमसि अथ नः इंद्र हवनेषु चोदय ॥१०॥
विश्वाहा इंद्रः अधिऽवक्ता नः अस्तु अपरिऽह्वृताः सनुयाम
वाजं तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी
उत द्यौः ॥११॥१५॥

---

॥१०३॥ तत् ते इंद्रियं परमं पराचैः अधारयंत कवयः पुरा
इदं क्षमा इदं अन्यत् दिवि अन्यत् अस्य सं ईं पृच्यते समनाऽइव
केतुः ॥१॥ सः धारयत् पृथिवीं पप्रथत् च वज्रेण हत्वा निः अपः
ससर्ज अहन् अहिं अभिनत् रौहिणं वि अहन् विऽअंसं मघऽवा
शचीभिः ॥२॥ सः जातूऽभर्मा श्रत्ऽदधानः ओजः पुरः वि-
ऽभिंदन् अचरत् वि दासीः विद्वान् वज्रिन् दस्यवे हेतिं अस्य
आर्यं सहः वर्धय द्युम्नं इंद्र ॥३॥ तत् ऊचुषे मानुषा इमा युगा-
नि कीर्तेन्यं मघऽवा नाम बिभ्रत् उपऽप्रयन् दस्युऽहत्याय व-
ज्री यत् ह सूनुः श्रवसे नाम दधे ॥४॥ तत् अस्य इदं पश्यत भूरि
पुष्टं श्रत् इंद्रस्य धत्तन वीर्याय सः गाः अविंदत् सः अविंदत् अ-
श्वान् सः ओषधीः सः अपः सः वनानि ॥५॥१६॥ भूरिऽकर्मणे
वृषभाय वृष्णे सत्यऽशुष्माय सुनवाम सोमं यः आऽदृत्य परि-

पंथीव भूरीऽयज्वनो विभजन्नेति वेदः ॥६॥ तदिंद्र प्रेव वीर्यं चकर्थ यत्ससंतं वज्रेणाबोधयोऽहिं । अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥७॥ शुष्णं पिप्रुं कुयवं वृत्रमिंद्र यदावधीर्वि पुरः शंबरस्य । तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥८॥१७॥

---

॥१०४॥ १–९ कुत्स आंगिरसः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१०४॥ योनिष्ट इंद्र निषदे अकारि तमा नि षीद स्वानो नार्वा । विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥१॥ ओ त्ये नर इंद्रमूतये गुर्नू चित्तान्सद्यो अध्वनो जगम्यात् । देवासो मन्युं दासस्य श्चम्नन्ते न आ वक्षन्सुविताय वर्णं ॥२॥ अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन् । क्षीरेण स्नातः कुयवस्य योषे हते ते स्यातां प्रवणे शिफायाः ॥३॥ युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः । अंजसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरंते ॥४॥ प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् । अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥५॥१८॥ स त्वं न इंद्र सूर्ये सो अप्स्वनागास्त्व आ भज जीवशंसे । मांतरां भुजमा रीरिषो नः श्रद्धितं ते महत इंद्रियाय ॥६॥ अधा मन्ये श्रत्ते अस्मा अधायि वृषा चोदस्व महते धनाय । मा नो अकृते पुरुहूत योनाविंद्र क्षुध्यद्भ्यो वय आसुतिं दाः ॥७॥ मा नो वधीरिंद्र मा परा दा मा नः प्रिया भोजनानि प्र मोषीः । आंडा मा नो मघवञ्छक्र निर्भेन्मा नः पात्रा भेत्सहजानुषाणि ॥८॥ अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा

पंथीऽइव शूरः अयज्वनः विऽभजन् एति वेदः ॥ ६ ॥ तत् इंद्र प्रऽइव वीर्यं चकर्थ यत् ससंतं वज्रेण अबोधयः अहिं अनु त्वा पत्नीः हृषितं वयः च विश्वे देवासः अमदन् अनु त्वा ॥७॥ शुष्णं पिप्रुं कुयवं वृत्रं इंद्र यदा अवधीः वि पुरः शंबरस्य तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ८ ॥ १७ ॥

---

॥१०४॥ योनिः ते इंद्र निऽसदे अकारि तं आ नि सीद स्वानः न अर्वा विऽमुच्य वयः अवऽसाय अश्वान् दोषा वस्तोः वहीयसः प्रऽपित्वे ॥१॥ ओ' त्ये नरः इंद्रं ऊतये गुः नु चित् तान् सद्यः अध्वनः जगम्यात् देवासः मन्युं दासस्य श्चम्नन् ते नः आ वक्षन् सुविताय वर्णं ॥२॥ अव त्मना भरते केतऽवेदाः अव त्मना भरते फेनं उदन् क्षीरेण स्नातः कुयवस्य योषे' हते' ते' स्यातां प्रवणे शिफायाः ॥३॥ युयोप नाभिः उपरस्य आयोः प्र पूर्वाभिः तिरते राष्टि शूरः अंजसी कुलिशी वीरऽपत्नी पयः हिन्वानाः उदऽभिः भरंते ॥४॥ प्रति यत् स्या नीथा अदर्शि दस्योः ओकः न अच्छ सदनं जानती गात् अध स्म नः मघऽवन् चर्कृतात् इत् मा नः मघाऽइव निष्षपी परा दाः ॥५॥१८॥ सः त्वं नः इंद्र सूर्ये सः अप्ऽसु अनागाःऽत्वे आ भज जीवऽशंसे मा अंतरां भुजं आ रिरिषः नः श्रद्धितं ते महते इंद्रियाय ॥६॥ अध मन्ये श्रत् ते अस्मै अधायि वृषा चोदस्व महते धनाय मा नः अकृते पुरुऽहूत योनौ इंद्र क्षुध्यत्ऽभ्यः वयः आऽसुतिं दाः ॥७॥ मा नः वधीः इंद्र मा परा दाः मा नः प्रिया भोजनानि प्र मोषीः आंडा मा नः मघऽवन् शक्र निः भेत् मा नः पात्रा भेत् सहऽजानुषाणि ॥८॥ अर्वाङ् आ इहि सोमऽकामं त्वा आहुः अयं सुतः तस्य पिब

मदाय । उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥९॥१९॥

---

॥१०५॥ १—१९ आप्त्यस्त्रितः कुत्सो वा ॥ विश्वे देवाः ॥ १—७. ९—१८ पंक्तिः ।
८ महाबृहती यवमध्या । १९ त्रिष्टुप् ॥

॥१०५॥ चंद्रमा अप्स्व१ंतरा सुपर्णो धावते दिवि। न वो हिरण्यनेमयः पदं विंदंति विद्युतो वित्तं मे अस्य रोदसी॥१॥ अर्थमिद्वा उ अर्थिन आ जाया युवते पतिं। तुंजाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी॥२॥ मो षु देवा अदः स्व१रव पादि दिवस्परि। मा सोम्यस्य शंभुवः शूने भूम कदा चन वित्तं मे अस्य रोदसी॥३॥ यज्ञं पृच्छाम्यवमं स तद्दूतो वि वोचति। क्व ऋतं पूर्व्यं गतं कस्तद्बिभर्ति नूतनो वित्तं मे अस्य रोदसी॥४॥ अमी ये देवाः स्थन त्रिष्वा रोचने दिवः। कद्व ऋतं कदनृतं क्व प्रत्ना व आहुतिर्वित्तं मे अस्य रोदसी॥५॥२०॥ कद्व ऋतस्य धर्णसि कद्वरुणस्य चक्षणं। कदर्यम्णो महस्पथाति क्रामेम दूढ्यो वित्तं मे अस्य रोदसी॥६॥ अहं सो अस्मि यः पुरा सुते वदामि कानि चित्। तं मा व्यंत्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी॥७॥ सं मा तपंत्यभितः सपत्नीरिव पर्शवः। मूषो न शिश्ना व्यदंति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी॥८॥ अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता। त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी॥९॥ अमी ये पंचोक्षणो मध्ये तस्थुर्महो दिवः। देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी॥१०॥२१॥ सुपर्णा एत आसते मध्य आरोधने दिवः। ते सेधंति पथो वृकं तरंतं यह्व-

मदा॑य उ॒रु॒ऽव्यचाः॑ ज॒ठरे॑ आ वृ॒ष॒स्व॒ पि॒ताऽइ॑व नः॒ शृ॒णु॒हि॒ हू॒यमा॑नः ॥ ९॥ १९॥

---

॥ १०५॥ चं॒द्रमाः॑ अ॒प्ऽसु अ॒न्तः आ सु॒ऽप॒र्णः धा॒व॒ते॒ दि॒वि न वः॒ हि॒र॒ण्य॒ऽने॒मयः॒ प॒दं वि॒दं॒ति॒ वि॒ऽद्यु॒तः॒ वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ १॥ अर्थं॑ इत् वै ऊं॒ इति॑ अ॒र्थिनः॑ आ जा॒या यु॒व॒ते॒ पति॑ तुं॒जाते॒ इति॑ वृ॒ष्ण्यं॑ पयः॑ प॒रि॒ऽदाय॑ रसं॑ दु॒हे॒ वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ २॥ मो इति॑ सु दे॒वाः॒ अ॒दः स्वः॑ अव॑ पा॒दि॒ दि॒वः परि॑ मा सो॒म्यस्य॑ शं॒ऽभुवः॑ शू॒ने भू॒म कदा॑ च॒न वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ३॥ य॒ज्ञं पृ॒च्छा॒मि॒ अ॒व॒मं सः तत् दू॒तः वि वो॒च॒ति॒ क्व॑ ऋ॒तं पू॒र्व्यं ग॒तं कः॒ तत् बि॒भ॒र्ति॒ नूत॑नः वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ४॥ अ॒मी इति॑ ये दे॒वाः॒ स्थन॑ त्रि॒षु आ रो॒च॒ने दि॒वः कत् वः॒ ऋ॒तं कत् अनृ॑तं क्व॑ प्र॒त्ना वः॒ आऽहु॑तिः वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ५॥ २०॥ कत् वः॒ ऋ॒तस्य॑ ध॒र्ण॒सि कत् वरु॑णस्य च॒क्षणं॑ कत् अ॒र्य॒म्णः म॒हः प॒था अति॑ क्रा॒मे॒म दुः॒ऽध्यः॑ वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ६॥ अ॒हं सः अ॒स्मि॒ यः पु॒रा सु॒ते वदा॑मि कानि॑ चि॒त् तं मा॒ व्यं॑ति॒ आ॒ऽध्यः॑ वृकः॑ न तृ॒ष्ण॒ऽजं मृ॒गं वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ७॥ सं मा॒ त॒पं॒ति॒ अ॒भितः॑ स॒प॒त्नीः॑ऽइव पर्श॑वः मू॒षः न शि॒श्ना वि अ॒दं॒ति॒ मा॒ आ॒ऽध्यः॑ स्तो॒तारं॑ ते॒ श॒त॒ऽक्र॒तो॒ इति॑ वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ८॥ अ॒मी इति॑ ये स॒प्त र॒श्मयः॑ तत्र॑ मे॒ नाभिः॑ आऽत॑ता त्रि॒तः तत् वे॒द॒ आ॒प्त्यः सः जा॒मि॒ऽत्वाय॑ रे॒भ॒ति॒ वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ ९॥ अ॒मी इति॑ ये पंच॑ उ॒क्षणः॑ मध्ये॑ त॒स्थुः म॒हः दि॒वः दे॒व॒ऽत्रा नु प्र॒ऽवाच्यं॑ स॒ध्री॒ची॒नाः नि व॒वृ॒तुः॒ वि॒त्तं मे॒ अ॒स्य रो॒द॒सी॒ इति॑ ॥ १०॥ २१॥ सु॒ऽप॒र्णाः ए॒ते आ॒स॒ते॒ मध्ये॑ आ॒ऽरोध॑ने दि॒वः ते से॒धं॒ति॒ प॒थः वृकं॑ तरं॑तं य॒ह्व-

तीरपो वित्तं मे अस्य रोदसी ॥११॥ नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनं । ऋतमर्षंति सिंधवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी ॥१२॥ अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यं । स नः सत्तो मनुष्वदा देवान्यक्षि विदुष्टरो वित्तं मे अस्य रोदसी ॥१३॥ सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः । अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ॥१४॥ ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे । व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ॥१५॥२२॥ असौ यः पंथा आदित्यो दिवि प्रवाच्यं कृतः । न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥१६॥ त्रितः कूपेऽवहितो देवान्हवत ऊतये । तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥१७॥ अरुणो मा सकृद्वृकः पथा यंतं ददर्श हि । उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥१८॥ एनांगूषेण वयमिंद्रवंतोऽभि ष्याम वृजने सर्ववीराः । तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥१९॥२३॥१५॥

---

॥ १०६ ॥ १–७ कुत्स आंगिरसः ॥ विश्वे देवाः ॥ १–६ जगती । ७ त्रिष्टुप् ॥

॥१०६॥ इंद्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥१॥ त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शंभुवः । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥२॥ अवंतु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥३॥ नराशंसं वा-

तीः अपः वित्तं मे अस्य रोदसी ॥११॥ नव्यं तत् उक्थ्यं हितं देवासः सुऽप्रवाचनं ऋतं अर्षति सिंधवः सत्यं ततान सूर्यः वित्तं मे अस्य रोदसी ॥१२॥ अग्ने तव त्यत् उक्थ्यं देवेषु अस्ति आप्यं सः नः सत्तः मनुष्वत् आ देवान् यक्षि विदुःऽतरः वित्तं मे अस्य रोदसी ॥१३॥ सत्तः होता मनुष्वत् आ देवान् अच्छ विदुःऽतरः अग्निः हव्या सुसूदति देवः देवेषु मेधिरः वित्तं मे अस्य रोदसी ॥१४॥ ब्रह्म कृणोति वरुणः गातुऽविदं तं ईमहे वि ऊर्णोति हृदा मतिं नव्यः जायतां ऋतं वित्तं मे अस्य रोदसी ॥१५॥२२॥ असौ यः पंथाः आदित्यः दिवि प्रऽवाच्यं कृतः न सः देवाः अतिऽक्रमे तं मर्तासः न पश्यथ वित्तं मे अस्य रोदसी ॥१६॥ त्रितः कूपे अवऽहितः देवान् हवते ऊतये तत् शुश्राव बृहस्पतिः कृण्वन् अंहूरणात् उरु वित्तं मे अस्य रोदसी ॥१७॥ अरुणः मा सकृत् वृकः पथा यंतं ददर्श हि उत् जिहीते निऽचाय्य तष्टाऽइव पृष्टिऽआमयी वित्तं मे अस्य रोदसी ॥१८॥ एना आंगूषेण वयं इंद्रऽवंतः अभि स्याम वृजने सर्वऽवीराः तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥१९॥२३॥१५॥

---

॥१०६॥ इंद्रं मित्रं वरुणं अग्निं ऊतये मारुतं शर्धः अदितिं हुवामहे रथं न दुःऽगात् वसवः सुऽदानवः विश्वस्मात् नः अंहसः निः पिपर्तन ॥१॥ ते आदित्याः आ गत सर्वऽतातये भूत देवाः वृत्रऽतूर्येषु शंऽभुवः रथं न दुःऽगात् वसवः सुऽदानवः विश्वस्मात् नः अंहसः निः पिपर्तन ॥२॥ अवंतु नः पितरः सुऽप्रवाचनाः उत देवी देवऽपुत्रे ऋतऽवृधा रथं न दुःऽगात् वसवः सुऽदानवः विश्वस्मात् नः अंहसः निः पिपर्तन ॥३॥ नराशंसं वा-

जिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे। रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥४॥ बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे। रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥५॥ इंद्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये। रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥६॥ देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन्। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥७॥२४॥

---

॥ १०७ ॥ १—३ कुत्स आंगिरसः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥१०७॥ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयंतः। आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥१॥ उप नो देवा अवसा गमंत्वंगिरसां सामभिः स्तूयमानाः। इंद्र इंद्रियैर्मरुतो मरुद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥२॥ तन्न इंद्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविता चनो धात्। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥३॥२५॥

---

॥ १०८ ॥ १—१३ कुत्स आंगिरसः ॥ इंद्राग्नी ॥ त्रिष्टुप् ॥

॥१०८॥ य इंद्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे। तेना यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ॥१॥ यावदिदं भुवनं विश्वमस्त्युरुव्यचा वरिमता गभीरं। तावाँ अयं पातवे सोमो अस्त्वरमिंद्राग्नी मनसे युवभ्यां ॥२॥ चक्राथे हि सध्र्य१ङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः। ताविंद्राग्नी सध्र्यंचा निषद्या वृष्णः सोमस्य

जिन्वं वाजयन् इह क्षयत्ऽवीरं पूषणं सुम्नैः ईमहे रथं न दुःऽगात् वसवः सुऽदानवः विश्वस्मात् नः अंहसः निः पिपर्तन ॥ ४ ॥ बृहस्पते सदं इत् नः सुऽगं कृधि शं योः यत् ते मनुःऽहितं तत् ईमहे रथं न दुःऽगात् वसवः सुऽदानवः विश्वस्मात् नः अंहसः निः पिपर्तन ॥ ५ ॥ इंद्रं कुत्सः वृत्रऽहनं शचीऽपतिं काटे निऽबाळ्हः ऋषिः अह्वत् ऊतये रथं न दुःऽगात् वसवः सुऽदानवः विश्वस्मात् नः अंहसः निः पिपर्तन ॥ ६ ॥ देवैः नः देवी अदितिः नि पातु देवः त्राता त्रायतां अप्रऽयुच्छन् तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ७ ॥ २४ ॥

---

॥ १०७ ॥ यज्ञः देवानां प्रति एति सुम्नं आदित्यासः भवत मृळयंतः आ वः अर्वाची सुऽमतिः ववृत्यात् अंहोः चित् या वरिवोवित्ऽतरा असत् ॥ १ ॥ उप नः देवाः अवसा आ गमंतु अंगिरसां सामऽभिः स्तूयमानाः इंद्रः इंद्रियैः मरुतः मरुत्ऽभिः आदित्यैः नः अदितिः शर्म यंसत् ॥ २ ॥ तत् नः इंद्रः तत् वरुणः तत् अग्निः तत् अर्यमा तत् सविता चनः धात् तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ३ ॥ २५ ॥

---

॥ १०८ ॥ यः इंद्राग्नी चित्रऽतमः रथः वां अभि विश्वानि भुवनानि चष्टे तेन आ यातं सऽरथं तस्थिऽवांसा अथ सोमस्य पिबतं सुतस्य ॥ १ ॥ यावत् इदं भुवनं विश्वं अस्ति उरुऽव्यचा वरिमता गभीरं तावान् अयं पातवे सोमः अस्तु अरं इंद्राग्नी मनसे युवऽभ्यां ॥ २ ॥ चक्राथे हि सध्र्यक् नाम भद्रं सध्रीचीना वृत्रऽहना उत स्थः तौ इंद्राग्नी सध्र्यंचा निऽसद्य वृष्णः सोमस्य

वृषणा वृषेथां ॥३॥ समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा। तीव्रैः सोमैः परिषिक्तेभिरर्वागेंद्राग्नी सौमनसाय यातं॥४॥ यानींद्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि। या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य॥५॥२६॥ यदब्रवं प्रथमं वां वृणानो३यं सोमो असुरैर्नो विहव्यः। तां सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य॥६॥ यदिंद्राग्नी मदथः स्वे दुरोणे यद्ब्रह्मणि राजनि वा यजत्रा। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥७॥ यदिंद्राग्नी यदुषु तुर्वशेषु यद्द्रुह्युष्वनुषु पूरुषु स्थः। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥८॥ यदिंद्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥९॥ यदिंद्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥१०॥ यदिंद्राग्नी दिवि ष्ठो यत्पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥११॥ यदिंद्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥१२॥ एवेंद्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः॥१३॥२७॥

---

॥१०९॥ १–८ कुत्स आंगिरसः॥ इंद्राग्नी॥ त्रिष्टुप्॥

॥१०९॥ वि ह्यख्यं मनसा वस्य इच्छन्निंद्राग्नी ज्ञास उत वा सजातान्। नान्या युवत्प्रमतिरस्ति मह्यं स

वृषणा आ वृषेथां ॥३॥ संऽइद्धेषु अग्निषु आनजाना यतऽस्रुचा बर्हिः ऊं इति तिस्तिराणा तीव्रैः सोमैः परिऽसिक्तेभिः अर्वाक् आ इंद्राग्नी इति सौमनसाय यातं ॥४॥ यानि इंद्राग्नी इति चक्रथुः वीर्याणि यानि रूपाणि उत वृष्ण्यानि या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ॥५॥२६॥ यत् अब्रवं प्रथमं वां वृणानः अयं सोमः असुरैः नः विऽहव्यः तां सत्यां श्रद्धां अभि आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥६॥ यत् इंद्राग्नी इति मदथः स्वे दुरोणे यत् ब्रह्मणि राजनि वा यजत्रा अतः परि वृषणौ आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥७॥ यत् इंद्राग्नी इति यदुषु तुर्वशेषु यत् द्रुह्युषु अनुषु पूरुषु स्थः अतः परि वृषणौ आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥८॥ यत् इंद्राग्नी इति अवमस्यां पृथिव्यां मध्यमस्यां परमस्यां उत स्थः अतः परि वृषणौ आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥९॥ यत् इंद्राग्नी इति परमस्यां पृथिव्यां मध्यमस्यां अवमस्यां उत स्थः अतः परि वृषणौ आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥१०॥ यत् इंद्राग्नी इति दिवि स्थः यत् पृथिव्यां यत् पर्वतेषु ओषधीषु अप्ऽसु अतः परि वृषणौ आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥११॥ यत् इंद्राग्नी इति उत्ऽइता सूर्यस्य मध्ये दिवः स्वधया मादयेथे इति अतः परि वृषणौ आ हि यातं अथ सोमस्य पिबतं सुतस्य ॥१२॥ एव इंद्राग्नी इति पपिऽवांसा सुतस्य विश्वा अस्मभ्यं सं जयतं धनानि तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥१३॥२७॥

---

॥१०९॥ वि हि अख्यं मनसा वस्यः इच्छन् इंद्राग्नी इति ज्ञासः उत वा सऽजातान् न अन्या युवत् प्रऽमतिः अस्ति मह्यं सः

वां धियं वाजयंतीमतक्षं ॥१॥ अश्रवं हि भूरिदावत्तरा वां वि-
जामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्या-
मिंद्राग्नी स्तोमं जनयामि नव्यं॥२॥ मा छेद्म रश्मीँरिति नाध-
मानाः पितॄणां शक्तीरनुयच्छमानाः। इंद्राग्निभ्यां कं वृषणो
मदंति ता ह्यद्री धिषणाया उपस्थे॥३॥ युवाभ्यां देवी धिषणा
मदायेंद्राग्नी सोममुशती सुनोति।तावश्विना भद्रहस्ता सुपाणी
आ धावतं मधुना पृंक्तमप्सु॥४॥ युवामिंद्राग्नी वसुनो विभागे
तवस्तमा शुश्रव वृत्रहत्ये। तावासद्या बर्हिषि यज्ञे अस्मिन्प्र
चर्षणी मादयेथां सुतस्य॥५॥२८॥ प्र चर्षणिभ्यः पृतनाहवेषु प्र
पृथिव्या रिरिचाथे दिवश्च। प्र सिंधुभ्यः प्र गिरिभ्यो महित्वा
प्रेंद्राग्नी विश्वा भुवनात्यन्या ॥६॥ आ भरतं शिक्षतं वज्रबाहू
अस्माँ इंद्राग्नी अवतं शचीभिः। इमे नु ते रश्मयः सूर्यस्य येभिः
सपित्वं पितरो न आसन्॥७॥ पुरंदरा शिक्षतं वज्रहस्तास्माँ
इंद्राग्नी अवतं भरेषु। तन्नो मित्रो वरुणो मामहंतामदितिः
सिंधुः पृथिवी उत द्यौः॥८॥२९॥

---

॥ ११० ॥ १–९ कुत्स आंगिरसः ॥ ऋभवः ॥ १–४. ६–८ जगती । ५. ९ त्रिष्टुप् ॥

॥११०॥ ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीति-
रुचथाय शस्यते। अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु
तृप्णुत ऋभवः॥१॥ आभोगयं प्र यदिच्छंत ऐतनापाकाः
प्रांचो मम के चिदापयः। सौधन्वनासश्चरितस्य भूमना-
गच्छत सवितुर्दाशुषो गृहं॥२॥ तत्सविता वोऽमृतत्वमा-
सुवदगोह्यं यच्छ्रवयंत ऐतन। त्यं चिच्चमसमसुरस्य भक्षण-
मेकं संतमकृणुता चतुर्वयं॥३॥ विष्ट्वी शमी तरणित्वेन

वां धियं वाजऽयंतीं अतक्षं ॥ १ ॥ अश्रवं हि भूरिदावत्ऽतरा वां विऽजामातुः उत वा घ स्यालात् अथ सोमस्य प्रऽयती युवऽभ्यां इंद्राग्नी स्तोमं जनयामि नव्यं ॥ २ ॥ मा छेद्म रश्मीन् इति नाधमानाः पितॄणां शक्तीः अनुऽयच्छमानाः इंद्राग्निऽभ्यां कं वृषणः मदंति ता हि अद्री धिषणायाः उपऽस्थे ॥ ३ ॥ युवाभ्यां देवी धिषणा मदाय इंद्राग्नी सोमं उशती सुनोति तौ अश्विना भद्रऽहस्ता सुऽपाणी आ धावतं मधुना पृंक्तं अप्ऽसु ॥ ४ ॥ युवां इंद्राग्नी वसुनः विऽभागे तवःऽतमा शुश्रव वृत्रऽहत्ये तौ आऽसद्य बर्हिषि यज्ञे अस्मिन् प्र चर्षणी मादयेथां सुतस्य ॥ ५ ॥ २८ ॥ प्र चर्षणिऽभ्यः पृतनाऽहवेषु प्र पृथिव्याः रिरिचाथे दिवः च प्र सिंधुऽभ्यः प्र गिरिऽभ्यः महिऽत्वा प्र इंद्राग्नी विश्वा भुवना अति अन्या ॥ ६ ॥ आ भरतं शिक्षतं वज्रऽबाहू अस्मान् इंद्राग्नी अवतं शचीभिः इमे नु ते रश्मयः सूर्यस्य येभिः सऽपित्वं पितरः नः आसन् ॥ ७ ॥ पुरंऽदरा शिक्षतं वज्रऽहस्ता अस्मान् इंद्राग्नी अवतं भरेषु तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ८ ॥ २९ ॥

---

॥ ११० ॥ ततं मे अपः तत् ऊं इति तायते पुनः स्वादिष्ठा धीतिः उचथाय शस्यते अयं समुद्रः इह विश्वऽदेव्यः स्वाहाऽकृतस्य सं ऊं इति तृप्णुत ऋभवः ॥ १ ॥ आऽभोगयं प्र यत् इच्छंतः ऐतन अपाकाः प्रांचः मम के चित् आपयः सौधन्वनासः चरितस्य भूमना अगच्छत सवितुः दाशुषः गृहं ॥ २ ॥ तत् सविता वः अमृतऽत्वं आ असुवत् अगोह्यं यत् श्रवयंतः ऐतन त्यं चित् चमसं असुरस्य भक्षणं एकं संतं अकृणुत चतुःऽवयं ॥ ३ ॥ विष्ट्वी शमी तरणिऽत्वेन

वाघतो मर्तासः संतो अमृतत्वमानशुः। सौधन्वना ऋभवः सूर-
चक्षसः संवत्सरे समपृच्यंत धीतिभिः ॥४॥ क्षेत्रमिव वि ममु-
स्तेजनेनँ एकं पात्रमृभवो जेहमानं। उपस्तुता उपमं नाधमाना
अमर्त्येषु श्रव इच्छमानाः ॥५॥३०॥ आ मनीषामंतरिक्षस्य
नृभ्यः स्रुचेव घृतं जुहवाम विद्मना। तरणित्वा ये पितुरस्य सश्चिर
ऋभवो वाजमरुहन्दिवो रजः ॥६॥ ऋभुर्न इंद्रः शवसा नवी-
यानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः। युष्माकं देवा अवसाहनि प्रि-
ये३भि तिष्ठेम पृत्सुतीरसुन्वतां ॥७॥ निश्चर्मण ऋभवो गाम-
पिंशत सं वत्सेनासृजता मातरं पुनः। सौधन्वनासः स्वपस्यया
नरो जिव्री युवाना पितराकृणोतन ॥८॥ वाजेभिर्नो वाजसा-
तावविड्ढ्यृभुमाँ इंद्र चित्रमा दर्षि राधः। तन्नो मित्रो वरुणो
मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥९॥३१॥

---

॥ १११ ॥ १-५ कुत्स आंगिरसः ॥ ऋभवः ॥ १-४ जगती । ५ त्रिष्टुप् ॥

॥ १११ ॥ तक्षन्रथं सुवृतं विद्मनापसस्तक्षन्हरी इंद्र-
वाहा वृषण्वसू । तक्षन्पितृभ्यामृभवो युवद्वयस्तक्षन्वत्साय
मातरं सचाभुवं ॥१॥ आ नो यज्ञाय तक्षत ऋभुमद्वयः
क्रत्वे दक्षाय सुप्रजावतीमिषं । यथा क्षयाम सर्ववीरया
विशा तन्नः शर्धाय धासथा स्विंद्रियं ॥२॥ आ तक्षत साति-
मस्मभ्यमृभवः सातिं रथाय सातिमर्वते नरः। सातिं नो जैत्रीं
सं महेत विश्वहा जामिमजामिं पृतनासु सक्षणिं ॥३॥ ऋभुक्ष-
णमिंद्रमा हुव ऊतय ऋभून्वाजान्मरुतः सोमपीतये । उभा
मित्रावरुणा नूनमश्विना ते नो हिन्वंतु सातये धिये जि-
षे ॥४॥ ऋभुर्भराय सं शिशातु सातिं समर्यजिद्वाजो अस्माँ

वाघतः मर्तासः संतः अमृतऽत्वं आनशुः सौधन्वनाः ऋभवः सूरऽचक्षसः संवत्सरे सं अपृच्यंत धीतिऽभिः ॥४॥ क्षेत्रंऽइव वि ममुः तेजनेन एकं पात्रं ऋभवः जेहमानं उपऽस्तुताः उपऽमं नाधमानाः अमर्त्येषु श्रवः इच्छमानाः ॥५॥३०॥ आ मनीषां अंतरिक्षस्य नृऽभ्यः स्रुचाऽइव घृतं जुहवाम विद्मना तरणिऽत्वा ये पितुः अस्य सश्चिरे ऋभवः वाजं अरुहन् दिवः रजः ॥६॥ ऋभुः नः इंद्रः शवसा नवीयान् ऋभुः वाजेभिः वसुऽभिः वसुः ददिः युष्माकं देवाः अवसा अहनि प्रिये अभि तिष्ठेम पृत्सुतीः असुन्वतां ॥७॥ निः चर्मणः ऋभवः गां अपिंशत सं वत्सेन असृजत मातरं पुनः सौधन्वनासः सुऽअपस्यया नरः जिव्री युवाना पितरा अकृणोतन ॥८॥ वाजेभिः नः वाजऽसातौ अविड्ढि ऋभुऽमान् इंद्र चित्रं आ दर्षि राधः तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥९॥३१॥

---

॥१११॥ तक्षन् रथं सुऽवृतं विद्मनाऽअपसः तक्षन् हरी इंद्रऽवाहा वृषणऽवसू तक्षन् पितृऽभ्यां ऋभवः युवत् वयः तक्षन् वत्साय मातरं सचाऽभुवं ॥१॥ आ नः यज्ञाय तक्षत ऋभुऽमत् वयः क्रत्वे दक्षाय सुऽप्रजावतीं इषं यथा क्षयाम सर्वऽवीरया विशा तत् नः शर्धाय धासथ सु इंद्रियं ॥२॥ आ तक्षत सातिं अस्मभ्यं ऋभवः सातिं रथाय सातिं अर्वते नरः सातिं नः जैत्रीं सं महेत विश्वहा जामिं अजामिं पृतनासु सक्षणिं ॥३॥ ऋभुक्षणं इंद्रं आ हुवे ऊतये ऋभून् वाजान् मरुतः सोमऽपीतये उभा मित्रावरुणा नूनं अश्विना ते नः हिन्वंतु सातये धिये जिषे ॥४॥ ऋभुः भराय सं शिशातु सातिं समर्यऽजित् वाजः अस्मान्

अविड्ढु । तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥५॥३२॥

---

॥ ११२ ॥ १—२५ कुत्स आंगिरसः ॥ १[1] द्यावापृथिव्यौ । १[2] अग्निः । १[3-4]—२५ अश्विनौ ॥
१—२३ जगती । २४. २५ त्रिष्टुप् ॥

॥११२॥ ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं या-
मन्निष्टये । याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिर-
श्विना गतं ॥१॥ युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं
न मंतवे । याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिर-
श्विना गतं ॥२॥ युवं तासां दिव्यस्य प्रशासने विशां क्षयथो
अमृतस्य मज्मना । याभिर्धेनुमस्वं१ पिन्वथो नरा ताभिरू षु
ऊतिभिरश्विना गतं ॥३॥ याभिः परिज्मा तनयस्य मज्मना
द्विमाता तूर्षु तरणिर्विभूषति । याभिस्त्रिमंतुरभवद्विचक्षणस्ता-
भिरू षु ऊतिभिरश्विना गतं ॥४॥ याभी रेभं निवृतं सितमद्भ्य
उद्वंदनमैरयतं स्वर्दृशे । याभिः कण्वं प्र सिषासंतमावतं ताभिरू
षु ऊतिभिरश्विना गतं ॥५॥३३॥ याभिरंतकं जसमानमारणे
भुज्युं याभिरव्यथिभिर्जिजिन्वथुः । याभिः कर्कंधुं वय्यं च
जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतं ॥६॥ याभिः शुचंतिं
धनसां सुषंसदं तप्तं घर्ममोम्यावंतमत्रये । याभिः पृश्निगुं
पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतं ॥७॥ याभिः
शचीभिर्वृषणा परावृजं प्रांधं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसिताममुंचतं ताभिरू षु ऊतिभिरश्विना
गतं ॥८॥ याभिः सिंधुं मधुमंतमसश्चतं वसिष्ठं याभिरजरा-
वजिन्वतं । याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊति-

अविष्टु तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥५॥३२॥

---

॥११२॥ ईळे द्यावापृथिवी पूर्वऽचित्तये अग्निं घर्मं सुऽरुचं यामन् इष्टये याभिः भरे कारं अंशाय जिन्वथः ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥१॥ युवोः दानाय सुऽभराः असश्चतः रथं आ तस्थुः वचसं न मंतवे याभिः धियः अवथः कर्मन् इष्टये ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥२॥ युवं तासां दिव्यस्य प्रऽशासने विशां क्षयथः अमृतस्य मज्मना याभिः धेनुं अस्वं पिन्वथः नरा ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥३॥ याभिः परिऽज्मा तनयस्य मज्मना द्विऽमाता तूर्षु तरणिः विऽभूषति याभिः त्रिऽमंतुः अभवत् विऽचक्षणः ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥४॥ याभिः रेभं निऽवृतं सितं अत्ऽभ्यः उत् वंदनं ऐरयतं स्वः दृशे याभिः कण्वं प्र सिसासंतं आवतं ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥५॥३३॥ याभिः अंतकं जसमानं आऽअरणे भुज्युं याभिः अव्यथिऽभिः जिजिन्वथुः याभिः कर्कंधुं वय्यं च जिन्वथः ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥६॥ याभिः शुचंतिं धनऽसां सुऽसंसदं तप्तं घर्मं ओम्याऽवंतं अत्रये याभिः पृश्निऽगुं पुरुऽकुत्सं आवतं ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥७॥ याभिः शचीभिः वृषणा पराऽवृजं प्र अंधं श्रोणं चक्षसे एतवे कृथः याभिः वर्तिकां ग्रसितां अमुंचतं ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥८॥ याभिः सिंधुं मधुऽमंतं असश्चतं वसिष्ठं याभिः अजरौ अजिन्वतं याभिः कुत्सं श्रुतर्यं नर्यं आवतं ताभिः ऊं सु ऊति-

भिरश्विना गतं ॥ ९ ॥ याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतं । याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ १० ॥ ३४ ॥ याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् । कक्षीवंतं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ ११ ॥ याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे । याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतं ॥ १२ ॥ याभिः सूर्यं परियाथः परावति मंधातारं क्षैत्रपत्येष्वावतं । याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ १३ ॥ याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शंबरहत्य आवतं । याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ १४ ॥ याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः । याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ १५ ॥ ३५ ॥ याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः । याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतं ॥ १६ ॥ याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना । याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतं ॥ १७ ॥ याभिरंगिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः । याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ १८ ॥ याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतं । या-

ऽभिः अश्विना आ गतं ॥ ९ ॥ याभिः विश्पलां धनऽसां अथर्व्यं सहस्रऽमीळ्हे आजौ अजिन्वतं याभिः वशं अश्व्यं प्रेणिं आवतं ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १० ॥ ३४ ॥ याभिः सुऽदानू॰ औशिजाय वणिजे दीर्घऽश्रवसे मधु कोशः अक्षरत् कक्षीवंतं स्तोतारं याभिः आवतं ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ ११ ॥ याभिः रसां क्षोदसा उद्नः पिपिन्वथुः अनश्वं याभिः रथं आवतं जिषे याभिः त्रिऽशोकः उस्रियाः उत्ऽआजत ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १२ ॥ याभिः सूर्यं परिऽयाथः पराऽवति मंधातारं क्षैत्रऽपत्येषु आवतं याभिः विप्रं प्र भरत्ऽवाजं आवतं ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १३ ॥ याभिः महां अतिथिऽग्वं कशःऽजुवं दिवःऽदासं शंबरऽहत्ये आवतं याभिः पूःऽभिद्ये त्रसदस्युं आवतं ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १४ ॥ याभिः वम्रं विऽपिपानं उपऽस्तुतं कलिं याभिः वित्तऽजानिं दुवस्यथः याभिः विऽअश्वं उत पृथिं आवतं ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १५ ॥ ३५ ॥ याभिः नरा शयवे याभिः अत्रये याभिः पुरा मनवे गातुं ईषथुः याभिः शारीः आजतं स्यूमऽरश्मये ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १६ ॥ याभिः पठर्वा जठरस्य मज्मना अग्निः न अदीदेत् चितः इद्धः अज्मन् आ याभिः शर्यातं अवथः महाऽधने ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १७ ॥ याभिः अंगिरः मनसा निऽरण्यथः अग्रं गच्छथः विऽवरे गोऽअर्णसः याभिः मनुं शूरं इषा संऽआवतं ताभिः ऊं॰ सु ऊतिऽभिः अश्विना आ गतं ॥ १८ ॥ याभिः पत्नीः विऽमदाय निऽऊहथुः आ घ वा याभिः अरुणीः अशिक्षतं या-

भिः सुदासं ऊहथुः सुदेव्यं१ ताभिरू षु ऊतिभिरश्विना गतं ॥ १९ ॥ याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुं । ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतं ॥ २० ॥ ३६ ॥ याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वंतमावतं । मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतं ॥ २१ ॥ याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः । याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतं ॥ २२ ॥ याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतं । याभिर्ध्वसंतिं पुरुषंतिमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥ २३ ॥ अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषां । अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥ २४ ॥ द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ २५ ॥ ३७ ॥ ७ ॥

---

॥ ११३ ॥ १–२० कुत्स आंगिरसः ॥ १$^{१.२}$ २–२० उषाः । १$^{३.४}$ उषा रात्रिश्च ॥ त्रिष्टुप् ॥

॥ ११३ ॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा । यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥ रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः । समानबंधू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥ समानो अध्वा स्वस्रोरनंतस्तमन्यान्या चरतो देवशिष्टे । न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३ ॥ भा-

भिः सुऽदासे ऊहथुः सुऽदेव्यं ताभिः ऊं सु ऊतिऽभिः अश्विना
आ गतं ॥१९॥ याभिः शंऽताती॰ भवथः ददाशुषे भुज्युं याभिः
अवथः याभिः अध्रिऽगुं ओम्याऽवतीं सुऽभरां ऋतऽस्तुभं ता-
भिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥२०॥३६॥ याभिः कृ-
शानुं असने दुवस्यथः जवे याभिः यूनः अर्वंतं आवतं मधु प्रियं
भरथः यत् सरट्ऽभ्यः ताभिः ऊं सु ऊतिऽभिः अश्विना आ
गतं ॥२१॥ याभिः नरं गोषुऽयुधं नृऽसह्ये क्षेत्रस्य साता तनयस्य
जिन्वथः याभिः रथान् अवथः याभिः अर्वतः ताभिः ऊं सु ऊ-
तिऽभिः अश्विना आ गतं ॥२२॥ याभिः कुत्सं आर्जुनेयं शत-
ऽक्रतू॰ प्र तुर्वीतिं प्र च दभीतिं आवतं याभिः ध्वसंतिं पुरुऽसंतिं
आवतं ताभिः ऊं सु ऊतिऽभिः अश्विना आ गतं ॥२३॥ अप्न-
स्वतीं अश्विना वाचं अस्मे कृतं नः दस्रा वृषणा मनीषां अद्यूत्ये
अवसे नि ह्वये वां वृधे च नः भवतं वाजऽसातौ ॥२४॥ द्युऽभिः
अक्तुऽभिः परि पातं अस्मान् अरिष्टेभिः अश्विना सौभगेभिः
तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत
द्यौः ॥२५॥३७॥७॥

---

॥११३॥ इदं श्रेष्ठं ज्योतिषां ज्योतिः आ अगात् चित्रः प्रऽके-
तः अजनिष्ट विऽभ्वा यथा प्रऽसूता सवितुः सवाय एव रात्री
उषसे योनिं अरैक् ॥१॥ रुशत्ऽवत्सा रुशती श्वेत्या आ अगात्
अरैक् ऊं कृष्णा सदनानि अस्याः समानऽबंधू॰ अमृते अनू-
ची द्यावा वर्णं चरतः आऽमिनाने॰ ॥२॥ समानः अध्वा स्व-
स्रोः अनंतः तं अन्याऽअन्या चरतः देवऽशिष्टे॰ न मेथेते न
तस्थतुः सुऽमेके॰ नक्तोषसा सऽमनसा विऽरूपे॰ ॥३॥ भा-

स्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।
प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि
विश्वा ॥ ४ ॥ जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय
उ त्वं । दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुव-
नानि विश्वा ॥ ५ ॥ १ ॥ क्षत्राय त्वं श्रवसे त्वं महीया इष्टये
त्वमर्थमिव त्वमित्यै । विसदृशा जीविताभिप्रचक्ष उषा अजी-
गर्भुवनानि विश्वा ॥ ६ ॥ एषा दिवो दुहिता प्रत्यदर्शि
व्युच्छंती युवतिः शुक्रवासाः । विश्वस्येशाना पार्थिवस्य
वस्व उषो अद्येह सुभगे व्युच्छ ॥ ७ ॥ परायतीनामन्वेति
पाथ आयतीनां प्रथमा शश्वतीनां । व्युच्छंती जीव-
मुदीरयंत्युषा मृतं कं चन बोधयंती ॥ ८ ॥ उषो यदग्निं
समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य । यन्मानुषान्यक्ष्य-
माणाँ अजीगस्तद्देवेषु चकृषे भद्रमप्नः ॥ ९ ॥ कियात्या
यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् । अनु
पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरे-
ति ॥ १० ॥ २ ॥ ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छंतीमुषसं
मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याभूदो ते यंति ये
अपरीषु पश्यान् ॥ ११ ॥ यावयद्द्वेषा ऋतपा ऋतेजाः
सुम्नावरी सूनृता ईरयंती । सुमंगलीर्बिभ्रती देववीति-
मिहाद्योषः श्रेष्ठतमा व्युच्छ ॥ १२ ॥ शश्वत्पुरोषा व्यु-
वास देव्यथो अद्येदं व्यावो मघोनी । अथो व्युच्छा-
दुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ॥ १३ ॥
व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं
देव्यावः । प्रबोधयंत्यरुणेभिरश्वैरोषा याति सुयुजा

स्वंती नेत्री सूनृतानां अचेति चित्रा वि दुरः नः आवरिति प्र-ऽअर्पयं जगत् वि ऊं इति नः रायः अख्यत् उषाः अजीगः भुवनानि विश्वा ॥४॥ जिह्मऽश्ये चरितवे मघोनी आऽभोगये इष्टये राये ऊं इति त्वं दभ्रं पश्यत्ऽभ्यः उर्विया विऽचक्षे उषाः अजीगः भुवनानि विश्वा ॥५॥१॥ क्षत्राय त्वं श्रवसे त्वं महीयै इष्टये त्वं अर्थंऽइव त्वं इत्यै विऽसदृशा जीविता अभिऽप्रचक्षे उषाः अजीगः भुवनानि विश्वा ॥६॥ एषा दिवः दुहिता प्रति अदर्शि विऽउच्छंती युवतिः शुक्रऽवासाः विश्वस्य ईशाना पार्थिवस्य वस्वः उषः अद्य इह सुऽभगे वि उच्छ ॥७॥ पराऽयतीनां अनु एति पाथः आऽयतीनां प्रथमा शश्वतीनां विऽउच्छंती जीवं उत्ऽईरयंती उषाः मृतं कं चन बोधयंती ॥८॥ उषः यत् अग्निं संऽइधे चकर्थ वि यत् आवः चक्षसा सूर्यस्य यत् मानुषान् यक्ष्यमाणान् अजीगरिति तत् देवेषु चकृषे भद्रं अप्नः ॥९॥ कियति आ यत् समया भवाति याः विऽऊषुः याः च नूनं विऽउच्छान् अनु पूर्वाः कृपते वावशाना प्रऽदीध्याना जोषं अन्याभिः एति ॥१०॥२॥ ईयुः ते ये पूर्वऽतरां अपश्यन् विऽउच्छंतीं उषसं मर्त्यासः अस्माभिः ऊं इति नु प्रतिऽचक्ष्या अभूत् ओ इति ते यंति ये अपरीषु पश्यान् ॥११॥ यवयत्ऽद्वेषाः ऋतऽपाः ऋतेऽजाः सुम्नऽवरी सूनृताः ईरयंती सुऽमंगलीः बिभ्रती देवऽवीतिं इह अद्य उषः श्रेष्ठऽतमा वि उच्छ ॥१२॥ शश्वत् पुरा उषाः वि उवास देवी अथो इति अद्य इदं वि आवः मघोनी अथो इति वि उच्छात् उत्ऽतरान् अनु द्यून् अजरा अमृता चरति स्वधाभिः ॥१३॥ वि अंजिऽभिः दिवः आतासु अद्यौत् अप कृष्णां निःऽनिजं देवी आवरिति प्रऽबोधयंती अरुणेभिः अश्वैः आ उषाः याति सुऽयुजा

रयेम ॥१४॥ आवहंती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना । ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥१५॥३॥ उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति । आरैक्पंथां यातवे सूर्यायागन्म यत्र प्रतिरंत आयुः ॥१६॥ स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः । अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत् ॥१७॥ या गोमतीरुषसः सर्ववीरा व्युच्छंति दाशुषे मर्त्याय । वायोरिव सूनृतानामुदर्के ता अश्वदा अश्नवत्सोमसुत्वा ॥१८॥ माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि । प्रशस्तिकृद्ब्रह्मणे नो व्युच्छा नो जने जनय विश्ववारे ॥१९॥ यच्चित्रमप्न उषसो वहंतीजानाय शशमानाय भद्रं । तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥२०॥४॥

---

॥ ११४ ॥ १—११ कुत्स आंगिरसः ॥ रुद्रः ॥ १—९ जगती । १०. ११ त्रिष्टुप् ॥

॥११४॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः । यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरं ॥१॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥२॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥३॥ त्वेषं वयं रुद्रं यज्ञसाधं वंकुं कविमवसे नि ह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणी-

रथेन ॥ १४ ॥ आऽवहंती पोष्या वार्याणि चित्रं केतुं कृणुते चे-
किताना ईयुषीणां उपऽमा शश्वतीनां विऽभातीनां प्रथमा
उषाः वि अश्वैत् ॥ १५ ॥ ३ ॥ उत् ईर्ध्वं जीवः असुः नः आ अ-
गात् अप प्र अगात् तमः आ ज्योतिः एति अरैक् पंथां यातवे
सूर्याय अगन्म यत्र प्रऽतिरंते आयुः ॥ १६ ॥ स्यूमना वाचः उत्
इयर्ति वह्निः स्तवानः रेभः उषसः विऽभातीः अद्य तत् उच्छ
गृणते मघोनि अस्मे आयुः नि दिदीहि प्रजाऽवत् ॥ १७ ॥
याः गोऽमतीः उषसः सर्वऽवीराः विऽउच्छंति दाशुषे मर्त्याय
वायोःऽइव सूनृतानां उत्ऽअर्के ताः अश्वऽदाः अश्नवत् सो-
मऽसुत्वा ॥ १८ ॥ माता देवानां अदितेः अनीकं यज्ञस्य केतुः
बृहती वि भाहि प्रशस्तिऽकृत् ब्रह्मणे नः वि उच्छ आ नः जने
जनय विश्वऽवारे ॥ १९ ॥ यत् चित्रं अप्नः उषसः वहंति ईजा-
नाय शशमानाय भद्रं तत् नः मित्रः वरुणः ममहंतां अदितिः
सिंधुः पृथिवी उत द्यौः ॥ २० ॥ ४ ॥

---

॥ ११४ ॥ इमाः रुद्राय तवसे कपर्दिने क्षयत्ऽवीराय प्र भरा-
महे मतीः यथा शं असत् द्विऽपदे चतुःऽपदे विश्वं पुष्टं ग्रामे
अस्मिन् अनातुरं ॥ १ ॥ मृळ नः रुद्र उत नः मयः कृधि क्षयत्-
ऽवीराय नमसा विधेम ते यत् शं च योः च मनुः आऽयेजे
पिता तत् अश्याम तव रुद्र प्रऽनीतिषु ॥ २ ॥ अश्याम ते सुऽम-
तिं देवऽयज्यया क्षयत्ऽवीरस्य तव रुद्र मीढ्वः सुम्नऽयन् इत्
विशः अस्माकं आ चर अरिष्टऽवीराः जुहवाम ते हविः ॥ ३ ॥
त्वेषं वयं रुद्रं यज्ञऽसाधं वंकुं कविं अवसे नि ह्वयामहे आरे
अस्मत् दैव्यं हेळः अस्यतु सुऽमतिं इत् वयं अस्य आ वृणी-

महे ॥४॥ दि॒वो व॑रा॒हम॑रु॒षं क॑प॒र्दिनं॑ त्वे॒षं रू॒पं नम॑सा॒ नि ह्व॑यामहे । हस्ते॒ बिभ्र॑द्भेष॒जा वार्या॑णि॒ शर्म॒ वर्म॑ छ॒र्दिर॒स्मभ्यं॑ यंसत् ॥५॥५॥ इ॒दं पि॒त्रे म॒रुता॑मुच्यते॒ वचः॑ स्वा॒दोः स्वादी॑यो रु॒द्राय॒ वर्ध॑नं । रास्वा॑ च नो अमृत मर्त॒भोज॑नं॒ त्मने॑ तो॒काय॒ तन॑याय मृळ ॥६॥ मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तं । मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः ॥७॥ मा न॑स्तो॒के तन॑ये॒ मा न॑ आ॒यौ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः । वी॒रान्मा नो॑ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तः॒ सद॒मित्त्वा॑ हवामहे ॥८॥ उप॑ ते॒ स्तोमा॑न्पशु॒पा इ॒वाक॑रं॒ रास्वा॑ पितर्मरुतां सु॒म्नम॒स्मे । भ॒द्रा हि ते॑ सुम॒तिर्मृ॑ळ॒यत्त॒माथा॑ व॒यमव॒ इत्ते॑ वृणीमहे ॥९॥ आ॒रे ते॑ गो॒घ्नमु॒त पू॑रुष॒घ्नं क्षय॑द्वीर सु॒म्नम॒स्मे ते॑ अस्तु । मृ॒ळा च॑ नो॒ अधि॑ च ब्रूहि दे॒वाधा॑ च नः॒ शर्म॑ यच्छ द्वि॒बर्हाः॑ ॥१०॥ अवो॑चाम॒ नमो॑ अस्मा अव॒स्यवः॑ शृ॒णोतु॑ नो॒ हवं॑ रु॒द्रो म॒रुत्वा॑न् । तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥११॥६॥

---

॥ ११५ ॥ १–६ कुत्स आंगिरसः ॥ सूर्यः ॥ त्रिष्टुप् ॥

॥११५॥ चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः । आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षं॒ सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च ॥१॥ सूर्यो॑ दे॒वीमु॒षसं॒ रोच॑माना॒ं मर्यो॒ न योषा॑म॒भ्ये॑ति प॒श्चात् । यत्रा॒ नरो॑ देव॒यन्तो॑ यु॒गानि॑ वितन्व॒ते प्रति॑ भ॒द्राय॑ भ॒द्रं ॥२॥ भ॒द्रा अश्वा॑ ह॒रितः॒ सूर्य॑स्य चि॒त्रा एत॑ग्वा अनु॒माद्या॑सः । न॒म॒स्यन्तो॑ दि॒व आ पृ॒ष्ठम॑स्थुः॒ परि॒ द्यावा॑पृथि॒वी य॑न्ति स॒द्यः ॥३॥ तत्सूर्य॑स्य देव॒त्वं तन्म॑हि॒त्वं

महे ॥ ४ ॥ दिवः वराहं अरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्व-
यामहे हस्ते बिभ्रत् भेषजा वार्याणि शर्म वर्म छर्दिः अस्मभ्यं
यंसत् ॥ ५ ॥ ५ ॥ इदं पित्रे मरुतां उच्यते वचः स्वादोः स्वादीयः
रुद्राय वर्धनं रास्व च नः अमृत मर्तऽभोजनं त्मने तोकाय तन-
याय मृळ ॥ ६ ॥ मा नः महांतं उत मा नः अर्भकं मा नः उक्षंतं
उत मा नः उक्षितं मा नः वधीः पितरं मा उत मातरं मा नः
प्रियाः तन्वः रुद्र रिरिषः ॥ ७ ॥ मा नः तोके तनये मा नः आयौ
मा नः गोषु मा नः अश्वेषु रिरिषः वीरान् मा नः रुद्र भामितः
वधीः हविष्मंतः सदं इत् त्वा हवामहे ॥ ८ ॥ उप ते स्तोमान् पशु-
पाःऽइव आ अकरं रास्व पितः मरुतां सुम्नं अस्मे भद्रा हि ते
सुऽमतिः मृळयत्ऽतमा अथ वयं अवः इत् ते वृणीमहे ॥ ९ ॥
आरे ते गोऽघ्नं उत पुरुषऽघ्नं क्षयत्ऽवीर सुम्नं अस्मे ते अस्तु
मृळ च नः अधि च ब्रूहि देव अध च नः शर्म यच्छ द्विऽब-
र्हाः ॥ १० ॥ अवोचाम नमः अस्मै अवस्यवः शृणोतु नः हवं रुद्रः
मरुत्वान् तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी
उत द्यौः ॥ ११ ॥ ६ ॥

---

॥ ११५ ॥ चित्रं देवानां उत् अगात् अनीकं चक्षुः मित्रस्य व-
रुणस्य अग्नेः आ अप्राः द्यावापृथिवी अंतरिक्षं सूर्यः आत्मा
जगतः तस्थुषः च ॥ १ ॥ सूर्यः देवीं उषसं रोचमानां मर्यः न यो-
षां अभि एति पश्चात् यत्र नरः देवऽयंतः युगानि विऽतन्वते
प्रति भद्राय भद्रं ॥ २ ॥ भद्राः अश्वाः हरितः सूर्यस्य चित्राः एत-
ऽग्वाः अनुऽमाद्यासः नमस्यंतः दिवः आ पृष्ठं अस्थुः परि द्या-
वापृथिवी यंति सद्यः ॥ ३ ॥ तत् सूर्यस्य देवऽत्वं तत् महिऽत्वं

मध्या कर्तोर्विततं सं जभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥४॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे। अनंतमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरंति ॥५॥ अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥६॥७॥११५॥

---

॥११६॥ १-२५ कक्षीवान्दैर्घतमस औशिजः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥११६॥ नासत्याभ्यां बर्हिरिव प्र वृंजे स्तोमाँ इयर्म्यभ्रियेव वातः। यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥१॥ वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना। तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥२॥ तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः। तमूहथुर्नौभिरात्मन्वतीभिरंतरिक्षप्रुद्भिरपोदकाभिः ॥३॥ तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतंगैः। समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥४॥ अनारंभणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे। यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसं ॥५॥८॥ यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति। तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥६॥ युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिं। कारोतराच्छफादश्वस्य वृष्णः शतं कुंभाँ असिंचतं सुरायाः ॥७॥ हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तं। ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं

मध्या कर्तोः विऽततं सं जभार यदा इत् अयुक्त हरितः सध-
ऽस्थात् आत् रात्री वासः तनुते सिमस्मै ॥४॥ तत् मित्रस्य वरु-
णस्य अभिऽचक्षे सूर्यः रूपं कृणुते द्योः उपऽस्थे अनंतं अन्यत्
रुशत् अस्य पाजः कृष्णं अन्यत् हरितः सं भरंति ॥५॥ अद्य देवाः
उत्ऽइता सूर्यस्य निः अंहसः पिपृत निः अवद्यात् तत् नः मित्रः
वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥६॥७॥१६॥

---

॥११६॥ नासत्याभ्यां बर्हिःऽइव प्र वृंजे स्तोमान् इयर्मि
अभ्रियाऽइव वातः यौ अर्भगाय विऽमदाय जायां सेनाऽजुवा
निऽऊहतुः रथेन ॥१॥ वीळुपत्मऽभिः आशुहेमऽभिः वा देवा-
नां वा जूतिऽभिः शाशदाना तत् रासभः नासत्या सहस्रं आजा
यमस्य प्रऽधने जिगाय ॥२॥ तुग्रः ह भुज्युं अश्विना उदऽमेघे रयिं
न कः चित् ममृऽवान् अव अहाः तं ऊहथुः नौभिः आत्मन्ऽव-
तीभिः अंतरिक्षप्रुत्ऽभिः अपऽउदकाभिः ॥३॥ तिस्रः क्षपः त्रिः
अहा अतिव्रजत्ऽभिः नासत्या भुज्युं ऊहथुः पतंगैः समुद्रस्य
धन्वन् आर्द्रस्य पारे त्रिऽभिः रथैः शतपत्ऽभिः षट्ऽअश्वैः ॥४॥
अनारंभणे तत् अवीरयेथां अनास्थाने अग्रभणे समुद्रे यत् अ-
श्विनौ ऊहथुः भुज्युं अस्तं शतऽअरित्रां नावं आतस्थिऽवांसं
॥५॥८॥ यं अश्विना ददथुः श्वेतं अश्वं अघऽअश्वाय शश्वत् इत्
स्वस्ति तत् वां दात्रं महि कीर्तेन्यं भूत् पैद्वः वाजी सदं इत् हव्यः
अर्यः ॥६॥ युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंऽधिं
कारोतरात् शफात् अश्वस्य वृष्णः शतं कुंभान् असिंचतं सुरा-
याः ॥७॥ हिमेन अग्निं घ्रंसं अवारयेथां पितुऽमतीं ऊर्जं अस्मै
अधत्तं ऋबीसे अत्रिं अश्विना अवऽनीतं उत् निन्यथुः सर्वऽगणं

स्वस्ति ॥८॥ परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारं । क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥९॥ जुजुरुषो नासत्योत वव्रिं प्रामुंचतं द्रापिमिव च्यवानात् । प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनां ॥१०॥९॥ तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथं । यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वंदनाय ॥११॥ तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥१२॥ अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः । श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तं ॥१३॥ आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तं । उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥१४॥ चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायां । सद्यो जंघामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तं ॥१५॥१०॥ शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितांधं चकार । तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥१६॥ आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयंती । विश्वे देवा अन्वमन्यंत हृद्भिः समु श्रिया नासत्या सचेथे ॥१७॥ यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयंता । रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥१८॥ रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहंता । आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातं ॥१९॥ परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।

स्वस्ति ॥ ८ ॥ परा अवतं नासत्या अनुदेयां उच्चाऽबुध्नं चक्रथुः जिह्मऽबारं क्षरन् आपः न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ ९ ॥ जुजुरुषः नासत्या उत वव्रिं प्र अमुंचतं द्रापिंऽइव च्यवानात् प्र अतिरतं जहितस्य आयुः दस्रा आत् इत् पतिं अकृणुतं कनीनां ॥ १० ॥ ९ ॥ तत् वां नरा शंस्यं राध्यं च अभिष्टिऽमत् नासत्या वरूथं यत् विद्वांसा निधिंऽइव अपऽगूळ्हं उत् दर्शतात् ऊपथुः वंदनाय ॥ ११ ॥ तत् वां नरा सनये दंसः उग्रं आविः कृणोमि तन्यतुः न वृष्टिं दध्यङ् ह यत् मधु आथर्वणः वां अश्वस्य शीर्ष्णा प्र यत् ईं उवाच ॥ १२ ॥ अजोहवीत् नासत्या करा वां महे यामन् पुरुऽभुजा पुरंऽधिः श्रुतं तत् शासुःऽइव वध्रिऽमत्याः हिरण्यऽहस्तं अश्विनौ अदत्तं ॥ १३ ॥ आस्नः वृकस्य वर्तिकां अभीके युवं नरा नासत्या अमुमुक्तं उतो कविं पुरुऽभुजा युवं ह कृपमाणं अकृणुतं विऽचक्षे ॥ १४ ॥ चरित्रं हि वेःऽइव अच्छेदि पर्णं आजा खेलस्य परिऽतक्म्यायां सद्यः जंघां आयसीं विश्पलायै धने हिते सर्तवे प्रति अधत्तं ॥ १५ ॥ १० ॥ शतं मेषान् वृक्ये चक्षदानं ऋज्रऽअश्वं तं पिता अंधं चकार तस्मै अक्षी नासत्या विऽचक्षे आ अधत्तं दस्रा भिषजौ अनर्वन् ॥ १६ ॥ आ वां रथं दुहिता सूर्यस्य काष्मऽइव अतिष्ठत् अर्वता जयंती विश्वे देवाः अनु अमन्यंत हृत्ऽभिः सं ऊं इति श्रिया नासत्या सचेथे इति ॥ १७ ॥ यत् अयातं दिवःऽदासाय वर्तिः भरत्ऽवाजाय अश्विना हयंता रेवत् उवाह सचनः रथः वां वृषभः च शिंशुमारः च युक्ता ॥ १८ ॥ रयिं सुऽक्षत्रं सुऽअपत्यं आयुः सुऽवीर्यं नासत्या वहंता आ जह्नावीं सऽमनसा उप वाजैः त्रिः अह्नः भागं दधतीं अयातं ॥ १९ ॥ परिऽविष्टं जाहुषं विश्वतः सीं सुऽगेभिः नक्तं ऊहथुः रजःऽभिः

विभिंदुना नासत्या रथेन वि पर्वताँ अजरयू अयातं ॥२०॥११॥
एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा । निरहतं
दुच्छुना इंद्रवंता पृथुश्रवसो वृषणावरातीः ॥२१॥ शरस्य
चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः । शयवे
चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गां ॥२२॥ अवस्यते
स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः । पशुं न
नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥२३॥ दश
रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वं१तः । विप्रुतं
रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥२४॥ प्र वां
दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः । उत
पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्यां ॥२५॥१२॥

---

॥११७॥ १-२५ कक्षीवान्दैर्घतमस औशिजः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥११७॥ मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वां । बर्हिष्मती रातिर्विश्रिता गीरिषा यातं
नासत्योप वाजैः ॥१॥ यो वामश्विना मनसो जवीयान्रथः
स्वश्वो विश आजिगाति । येन गच्छथः सुकृतो दुरोणं तेन
नरा वर्तिरस्मभ्यं यातं ॥२॥ ऋषिं नरावंहसः पांचजन्यमृबीसादत्रिं मुंचथो गणेन । मिनंता दस्योरशिवस्य माया
अनुपूर्वं वृषणा चोदयंता ॥३॥ अश्वं न गूळ्हमश्विना
दुरेवैरृषिं नरा वृषणा रेभमप्सु । सं तं रिणीथो विप्रुतं
दंसोभिर्न वां जूर्यंति पूर्व्या कृतानि ॥४॥ सुषुप्वांसं न
निरृतेरुपस्थे सूर्यं न दस्रा तमसि क्षियंतं । शुभे रुक्मं न
दर्शतं निखातमुदूपथुरश्विना वंदनाय ॥५॥१३॥ तद्वां नरा

विऽभिंदुना नासत्या रथेन वि पर्वतान् अजरयू' अयातं ॥२०॥११॥ एकस्याः वस्तोः आवतं रणाय वशं अश्विना सनये सहस्रा निः अहतं दुच्छुनाः इंद्रऽवंता पृथुऽश्रवसः वृषणौ अरातीः ॥२१॥ शरस्य चित् आर्चत्ऽकस्य अवतात् आ नीचात् उच्चा चक्रथुः पातवे वाः॰ शयवे चित् नासत्या शचीभिः जसुरये स्तर्यं पिप्यथुः गां ॥२२॥ अवस्यते स्तुवते कृष्णियाय ऋजुऽयते नासत्या शचीभिः पशुं न नष्टंऽइव दर्शनाय विष्णाप्वं ददथुः विश्वकाय ॥२३॥ दश रात्रीः अशिवेन नव द्यून् अवऽनद्धं श्नथितं अप्ऽसु अंतः' विऽप्रुतं रेभं उदनि प्रऽवृक्तं उत् निन्यथुः सोमंऽइव स्रुवेण ॥२४॥ प्र वां दंसांसि अश्विनौ अवोचं अस्य पतिः स्यां सुऽगवः सुऽवीरः उत पश्यन् अश्नुवन् दीर्घं आयुः अस्तंऽइव इत् जरिमाणं जगम्यां ॥२५॥१२॥

---

॥११७॥ मध्वः सोमस्य अश्विना मदाय प्रत्नः होता आ विवासते वां बर्हिष्मती रातिः विऽश्रिता गीः इषा यातं नासत्या उप वाजैः ॥१॥ यः वां अश्विना मनसः जवीयान् रथः सुऽअश्वः विशः आऽजिगाति येन गच्छथः सुऽकृतः दुरोणं तेन नरा वर्तिः अस्मभ्यं यातं ॥२॥ ऋषिं नरौ अंहसः पांचऽजन्यं ऋबीसात् अत्रिं मुंचथः गणेन मिनंता दस्योः अशिवस्य मायाः अनुऽपूर्वं वृषणा चोदयंता ॥३॥ अश्वं न गूळ्हं अश्विना दुःऽएवैः ऋषिं नरा वृषणा रेभं अप्ऽसु सं तं रिणीथः विऽप्रुतं दंसःऽभिः न वां जूर्यंति पूर्व्या कृतानि ॥४॥ सुसुप्वांसं न निःऽऋतेः उपऽस्थे सूर्यं न दस्रा तमसि क्षियंतं शुभे रुक्मं न दर्शतं निऽखातं उत् ऊपथुः अश्विना वंदनाय ॥५॥१३॥ तत् वां नरा

शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन्। शफादश्वस्य वाजिनो जनाय शतं कुंभाँ असिंचतं मधूनां ॥६॥ युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय। घोषायै चित्पितृषदे दुरोणे पतिं जूर्यंत्या अश्विनावदत्तं ॥७॥ युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय। प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तं ॥८॥ पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वं। सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रं ॥९॥ एतानि वां श्रवस्या सुदानू ब्रह्मांगूषं सदनं रोदस्योः। यद्वां पज्रासो अश्विना हवंते यातमिषा च विदुषे च वाजं ॥१०॥१४॥ सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदंता। अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतं ॥११॥ कुह यांता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा। हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥१२॥ युवं च्यवानमश्विना जरंतं पुनर्युवानं चक्रथुः शचीभिः। युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥१३॥ युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना। युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥१४॥ अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान्। निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥१५॥१५॥ अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुंचतं वृकस्य। वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥१६॥ शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा। आक्षी ऋज्राश्वे अश्विनाव-

शंस्यं पज्रियेण कक्षीवता नासत्या परिऽज्मन् शफात् अश्वस्य वाजिनः जनाय शतं कुंभान् असिंचतं मधूनां ॥ ६ ॥ युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुः विश्वकाय घोषायै चित् पितृऽसदे दुरोणे पतिं जूर्यंत्यै अश्विना अदत्तं ॥ ७ ॥ युवं श्यावाय रुशतीं अदत्तं महः क्षोणस्य अश्विना कण्वाय प्रऽवाच्यं तत् वृषणा कृतं वां यत् नार्सदाय श्रवः अधिऽअधत्तं ॥ ८ ॥ पुरु वर्पांसि अश्विना दधाना नि पेदवे ऊहथुः आशुं अश्वं सहस्रऽसां वाजिनं अप्रतिऽइतं अहिऽहनं श्रवस्यं तरुत्रं ॥ ९ ॥ एतानि वां श्रवस्या सुदानू॰ ब्रह्म आंगूषं सदनं रोदस्योः यत् वां पज्रासः अश्विना हवंते यातं इषा च विदुषे च वाजं ॥ १० ॥ १४ ॥ सूनोः मानेन अश्विना गृणाना वाजं विप्राय भुरणा रदंता अगस्त्ये ब्रह्मणा ववृधाना सं विश्पलां नासत्या अरिणीतं ॥ ११ ॥ कुह यांता सुऽस्तुतिं काव्यस्य दिवः नपाता वृषणा शयुऽत्रा हिरण्यस्यऽइव कलशं निऽखातं उत् ऊपथुः दशमे अश्विना अहन् ॥ १२ ॥ युवं च्यवानं अश्विना जरंतं पुनः युवानं चक्रथुः शचीभिः युवोः रथं दुहिता सूर्यस्य सह श्रिया नासत्या अवृणीत ॥ १३ ॥ युवं तुग्राय पूर्व्येभिः एवैः पुनःऽमन्यौ अभवतं युवाना युवं भुज्युं अर्णसः निः समुद्रात् विऽभिः ऊहथुः ऋज्रेभिः अश्वैः ॥ १४ ॥ अजोहवीत् अश्विना तौग्र्यः वां प्रऽऊळ्हः समुद्रं अव्यथिः जगन्वान् निः तं ऊहथुः सुऽयुजा रथेन मनःऽजवसा वृषणा स्वस्ति ॥ १५ ॥ १५ ॥ अजोहवीत् अश्विना वर्तिका वां आस्नः यत् सीं अमुंचतं वृकस्य वि जयुषा ययथुः सानु अद्रेः जातं विष्वाचः अहतं विषेण ॥ १६ ॥ शतं मेषान् वृक्ये ममहानं तमः प्रऽनीतं अशिवेन पित्रा आ अक्षी' ऋज्रऽअश्वे अश्विनौ अ-

धत्तं ज्योतिरंधाय चक्रथुर्विचक्षे ॥१७॥ शुनमंधाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति । जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥१८॥ मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः । अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥१९॥ अधेनुं दस्रा स्तर्यं१ विषक्तामपिन्वतं शयवे अश्विना गां । युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषां ॥२०॥१६॥ यवं वृकेणाश्विना वपंतेषं दुहंता मनुषाय दस्रा । अभि दस्युं बकुरेणा धमंतोरु ज्योतिश्चक्रथुरार्याय ॥२१॥ आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतं । स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वां ॥२२॥ सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे । अस्मे रयिं नासत्या बृहंतमपत्यसाचं श्रुत्यं रराथां ॥२३॥ हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तं । त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥२४॥ एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् । ब्रह्म कृण्वंतो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥२५॥१७॥

---

॥ ११८ ॥ १—११ कक्षीवान्दैर्घतमस औशिजः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥११८॥ आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ् । यो मर्त्यस्य मनसो जवीयान्त्रिवंधुरो वृषणा वातरंहाः ॥१॥ त्रिवंधुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् । पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥२॥ प्रवद्यामना सुवृता रथेन

धत्तं ज्योतिः अंधाय चक्रथुः विऽचक्षे ॥१७॥ शुनं अंधाय भरं अह्वयत् सा वृकीः अश्विना वृषणा नरा इति जारः कनीनःऽइव चक्षदानः ऋज्रऽअश्वः शतं एकं च मेषान् ॥१८॥ मही वां ऊतिः अश्विना मयःऽभूः उत स्रामं धिष्ण्या सं रिणीथः अथ युवां इत् अह्वयत् पुरंऽधिः आ अगच्छतं सीं वृषणौ अवःऽभिः ॥१९॥ अधेनुं दस्रा स्तर्यं विऽसक्तां अपिन्वतं शयवे अश्विना गां युवं शचीभिः विऽमदाय जायां नि ऊहथुः पुरुऽमित्रस्य योषां ॥२०॥१६॥ यवं वृकेण अश्विना वपंता इषं दुहंता मनुषाय दस्रा अभि दस्युं बकुरेण धमंता उरु ज्योतिः चक्रथुः आर्याय ॥२१॥ आथर्वणाय अश्विना दधीचे अश्व्यं शिरः प्रति ऐरयतं सः वां मधु प्र वोचत् ऋतऽयन् त्वाष्ट्रं यत् दस्रौ अपिऽकक्ष्यं वां ॥२२॥ सदा कवी' सुऽमतिं आ चके वां विश्वाः धियः अश्विना प्र अवतं मे अस्मे' रयिं नासत्या बृहंतं अपत्यऽसाचं श्रुत्यं रराथां ॥२३॥ हिरण्यऽहस्तं अश्विना रराणा पुत्रं नरा वध्रिऽमत्याः अदत्तं त्रिधा ह श्यावं अश्विना विऽकस्तं उत् जीवसे ऐरयतं सुऽदानू॰ ॥२४॥ एतानि वां अश्विना वीर्याणि प्र पूर्व्याणि आयवः अवोचन् ब्रह्म कृण्वंतः वृषणा युवऽभ्यां सुऽवीरासः विदथं आ वदेम ॥२५॥१७॥

---

॥११८॥ आ वां रथः अश्विना श्येनऽपत्वा सुऽमृळीकः स्वऽवान् यातु अर्वाङ् यः मर्त्यस्य मनसः जवीयान् त्रिऽवंधुरः वृषणा वातऽरंहाः ॥१॥ त्रिऽवंधुरेण त्रिऽवृता रथेन त्रिऽचक्रेण सुऽवृता आ यातं अर्वाक् पिन्वतं गाः जिन्वतं अर्वतः नः वर्धयतं अश्विना वीरं अस्मे' ॥२॥ प्रवत्ऽयामना सुऽवृता रथेन

दस्राविमं शृणुतं श्लोकमद्रेः। किमंग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥३॥ आ वां श्येनासो अश्विना वहंतु रथे युक्तास आशवः पतंगाः। ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहंति ॥४॥ आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य। परि वामश्वा वपुषः पतंगा वयो वहंत्वरुषा अभीके ॥५॥१८॥ उद्वंदनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः। निष्टौग्र्यं पारयथः समुद्रात्पुनश्च्यवानं चक्रथुर्युवानं ॥६॥ युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तं। युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥७॥ युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय। अमुंचतं वर्तिकामंहसो निः प्रति जंघां विश्पलाया अधत्तं ॥८॥ युवं श्वेतं पेदव इंद्रजूतमहिहनमश्विनादत्तमश्वं। जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वंगं ॥९॥ ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः। आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातं ॥१०॥ आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः। हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥११॥१९॥

---

॥ ११९ ॥ १—१० कक्षीवान्दैर्घतमस औशिजः ॥ अश्विनौ ॥ जगती ॥

॥११९॥ आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे। सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥१॥ ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयंत आ दिशः। स्वदामि घर्मं प्रति यंत्यूतय आ वामूर्जानी रथमश्विनारुहत् ॥२॥ सं यन्मिथः

दस्रौ इमं शृणुतं श्लोकं अद्रेः किं अंग वां प्रति अवर्तिं गमिष्ठा
आहुः विप्रासः अश्विना पुराऽजाः ॥३॥ आ वां श्येनासः अ-
श्विना वहंतु रथे युक्तासः आशवः पतंगाः ये अप्ऽतुरः दिव्या-
सः न गृध्राः अभि प्रयः नासत्या वहंति ॥४॥ आ वां रथं युवतिः
तिष्ठत् अत्र जुष्ट्वी नरा दुहिता सूर्यस्य परि वां अश्वाः वपुषः
पतंगाः वयः वहंतु अरुषाः अभीके ॥५॥१८॥ उत् वंदनं ऐरतं
दंसनाभिः उत् रेभं दस्रा वृषणा शचीभिः निः तौग्र्यं पारयथः
समुद्रात् पुनः' च्यवानं चक्रथुः युवानं ॥६॥ युवं अत्रये अवऽनी-
ताय तप्तं ऊर्जं ओमानं अश्विनौ अधत्तं युवं कण्वाय अपिऽरि-
प्ताय चक्षुः प्रति अधत्तं सुऽस्तुतिं जुजुषाणा ॥७॥ युवं धेनुं शयवे
नाधिताय अपिन्वतं अश्विना पूर्व्याय अमुंचतं वर्तिकां अंहसः
निः प्रति जंघां विश्पलायाः अधत्तं ॥८॥ युवं श्वेतं पेदवे इंद्र-
ऽजूतं अहिऽहनं अश्विना अदत्तं अश्वं जोहूत्रं अर्यः अभिऽभूतिं
उग्रं सहस्रऽसां वृषणं वीळुऽअंगं ॥९॥ ता वां नरा सु अवसे
सुऽजाता हवामहे अश्विना नाधमानाः आ नः उप वसुऽमता
रथेन गिरः जुषाणा सुविताय यातं ॥१०॥ आ श्येनस्य जवसा
नूतनेन अस्मे' यातं नासत्या सऽजोषाः हवे हि वां अश्विना रा-
तऽहव्यः शश्वत्ऽतमायाः उषसः विऽउष्टौ ॥११॥१९॥

---

॥११९॥ आ वां रथं पुरुऽमायं मनःऽजुवं जीरऽअश्वं यज्ञियं
जीवसे हुवे सहस्रऽकेतुं वनिनं शतत्ऽवसुं श्रुष्टीऽवानं वरि-
वःऽधां अभि प्रयः ॥१॥ ऊर्ध्वा धीतिः प्रति अस्य प्रऽयामनि
अधायि शस्मन् सं अयंते आ दिशः स्वदामि घर्मं प्रति यंति
ऊतयः आ वां ऊर्जानी रथं अश्विना अरुहत् ॥२॥ सं यत् मिथः

पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे। युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरं ॥३॥ युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहंता पितृभ्य आ। यासिष्टं वर्तिर्वृषणा विजेन्यं१ दिवोदासाय महि चेति वामवः ॥४॥ युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यं। आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥५॥२०॥ युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये। युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वंदनस्तार्यायुषा ॥६॥ युवं वंदनं निरृतं जरण्यया रथं न दस्रा करणा समिन्वथः। क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥७॥ अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितं। स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥८॥ उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति। युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥९॥ युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः। शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिंद्रमिव चर्षणीसहं ॥१०॥२१॥

---

॥१२०॥ १–१२ कक्षीवान्दैर्घतमस औशिजः ॥ १–११ अश्विनौ । १२ दुःस्वप्ननाशनं ॥ १ गायत्री । २ ककुप् । ३ काविराट् । ४ नष्टरूपी । ५ तनुशिरा । ६ ([illegible]) उष्णिक् । ७ विष्टारबृहती । ८ कृतिः । ९ विराट् । १०–१२ गायत्री ॥

॥१२०॥ का राधद्धोत्राश्विना वां को वां जोष उभयोः। कथा विधात्यप्रचेताः ॥१॥ विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः। नू चिन्नु मर्ते अक्रौ ॥२॥ ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य। प्रार्चद्दयमानो युवाकुः ॥३॥ वि पृच्छामि पाक्या३ न देवान्-

पस्पृधानासः अग्मत शुभे मखाः अमिताः जायवः रणे युवोः
अह प्रवणे चेकिते रथः यत् अश्विना वहथः सूरिं आ वरं ॥३॥
युवं भुज्युं भुरमाणं विऽभिः गतं स्वयुक्तिऽभिः निऽवहंता पि-
तृऽभ्यः आ यासिष्टं वर्तिः वृषणा विऽजेन्यं दिवःऽदासाय महि
चेति वां अवः ॥४॥ युवोः अश्विना वपुषे युवाऽयुजं रथं वाणी
येमतुः अस्य शर्ध्यं आ वां पतिऽत्वं सख्याय जग्मुषी योषा अवृ-
णीत जेन्या युवां पती इति ॥५॥२०॥ युवं रेभं परिऽसूतेः उरुष्यथः
हिमेन घर्मं परिऽतप्तं अत्रये युवं शयोः अवसं पिप्यथुः गवि प्र
दीर्घेण वंदनः तारि आयुषा ॥६॥ युवं वंदनं निःऽऋतं जरण्य-
या रथं न दस्रा करणा सं इन्वथः क्षेत्रात् आ विप्रं जनथः वि-
पन्यया प्र वां अत्र विधते दंसना भुवत् ॥७॥ अगच्छतं कृपमाणं
पराऽवति पितुः स्वस्य त्यजसा निऽबाधितं स्वःऽवतीः इतः
ऊतीः युवोः अह चित्राः अभीके अभवन् अभिष्टयः ॥८॥ उत
स्या वां मधुऽमत् मक्षिका अरपत् मदे सोमस्य औशिजः हु-
वन्यति युवं दधीचः मनः आ विवासथः अथ शिरः प्रति वां
अश्व्यं वदत् ॥९॥ युवं पेदवे पुरुऽवारं अश्विना स्पृधां श्वेतं तरु-
तारं दुवस्यथः शर्यैः अभिऽद्युं पृतनासु दुस्तरं चर्कृत्यं इंद्रंऽइव
चर्षणिऽसहं ॥१०॥२१॥

---

॥१२०॥ का राधत् होत्रा अश्विना वां कः वां जोषे उभयोः
कथा विधाति अप्रऽचेताः ॥१॥ विद्वांसौ इत् दुरः पृच्छेत् अ-
विद्वान् इत्था अपरः अचेताः नु चित् नु मर्ते अक्रौ ॥२॥ ता
विद्वांसा हवामहे वां ता नः विद्वांसा मन्म वोचेतं अद्य प्र
आर्चत् दयमानः युवाकुः ॥३॥ वि पृच्छामि पाक्या न देवान् व-

षट्कृतस्याहुतस्य दस्रा। पातं च सह्यसो युवं च रभ्यसो नः॥४॥ प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वां। प्रेषयुर्न विद्वान्॥५॥२२॥ श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वां। आक्षी शुभस्पती दन्॥६॥ युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतं। ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः॥७॥ मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः। स्तनाभुजो अशिश्वीः॥८॥ दुहीयन्मित्र-धितये युवाकु राये च नो मिमीतं वाजवत्यै। इषे च नो मिमीतं धेनुमत्यै॥९॥ अश्विनोरसनं रथमनश्वं वाजिनीवतोः। तेनाहं भूरि चाकन॥१०॥ अयं समह मा तनूह्याते जनाँ अनु। सोमपेयं सुखो रथः॥११॥ अध स्वप्नस्य निर्विदेऽभुंजतश्च रेवतः। उभा ता बस्रि नश्यतः॥१२॥२३॥१७॥

॥१२१॥ १–१५ कक्षीवान्दैर्घतमस औशिजः॥ विश्वे देवा इंद्रो वा॥ त्रिष्टुप्॥

॥१२१॥ कदित्था नॄँः पात्रं देवयतां श्रवद्गिरो अंगिरसां तुरण्यन्। प्र यदानड्विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः॥१॥ स्तंभीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः। अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः॥२॥ नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामंगिरसामनु द्यून्। तक्षद्वज्रं नियुतं तस्तंभद्द्यां चतुष्पदे नर्याय द्विपादे॥३॥ अस्य मदे स्वर्यं दा ऋतायापीवृत-मुस्रियाणामनीकं। यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः॥४॥ तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू। शुचि यत्ते रेक्ण आयजंत सबर्दु-

षट्ऽकृतस्य अद्भुतस्य दस्रा पातं च सह्यसः युवं च रभ्यसः नः ॥४॥ प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियः वां प्र इषऽयुः न विद्वान् ॥५॥२२॥ श्रुतं गायत्रं तकवानस्य अहं चित् हि रिरेभ अश्विना वां आ अक्षी' शुभः पती' दन् ॥६॥ युवं हि आस्तं महः रन् युवं वा यत् निःऽअततंसतं ता नः वसू' सुऽगोपा स्यातं पातं नः वृकात् अघऽयोः ॥७॥ मा कस्मै धातं अभि अमित्रिणे नः मा अकुत्र नः गृहेभ्यः धेनवः गुः स्तनऽभुजः अशिश्वीः ॥८॥ दुहीयन् मित्रऽधितये युवाकु राये च नः मिमीतं वाजऽवत्यै इषे च नः मिमीतं धेनुऽमत्यै ॥९॥ अश्विनोः असनं रथं अनश्वं वाजिनीऽवतोः तेन अहं भूरि चाकन ॥१०॥ अयं समह मा तनु ऊह्याते जनान् अनु सोमऽपेयं सुऽखः रथः ॥११॥ अध स्वप्नस्य निः विदे अभुंजतः च रेवतः उभा ता बस्रि नश्यतः ॥१२॥२३॥१७॥

---

॥१२१॥ कत् इत्था नृन् पात्रं देवऽयतां श्रवत् गिरः अंगिरसां तुरण्यन् प्र यत् आनट् विशः आ हर्म्यस्य उरु क्रंसते अध्वरे यजत्रः ॥१॥ स्तंभीत् ह द्यां सः धरुणं प्रुषायत् ऋभुः वाजाय द्रविणं नरः गोः अनु स्वऽजां महिषः चक्षत व्रां मेनां अश्वस्य परि मातरं गोः ॥२॥ नक्षत् हवं अरुणीः पूर्व्यं राट् तुरः विशां अंगिरसां अनु द्यून् तक्षत् वज्रं निऽयुतं तस्तंभत् द्यां चतुःऽपदे नर्याय द्विऽपादे ॥३॥ अस्य मदे स्वर्यं दाः ऋताय अपिऽवृतं उस्रियाणां अनीकं यत् ह प्रऽसर्गे त्रिऽककुप् निऽवर्तत् अप द्रुहः मानुषस्य दुरः वः॰ ॥४॥ तुभ्यं पयः यत् पितरौ अनीतां राधः सुऽरेतः तुरणे भुरण्यू' शुचि यत् ते रेक्णः आ अयजंत सबःऽदु-

घाया: पयं उस्रियायाः ॥५॥२४॥ अध प्र जज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः । इंदुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण सिंचञ्जरणाभि धाम ॥६॥ स्विध्मा यद्वनधितिरपस्यात्सूरो अध्वरे परि रोधना गोः । यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ॥७॥ अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सं । हरिं यत्ते मंदिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यं ॥८॥ त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा । कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनंतैः परियासि वधैः ॥९॥ पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य । शुष्णस्य चित्परिहितं यदोजो दिवस्परि सुग्रथितं तदादः ॥१०॥२५॥ अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिंद्र कर्मन् । त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुं ॥११॥ त्वमिंद्र नर्यो याँ अवो नॄन्तिष्ठा वातस्य सुयुजो वहिष्ठान् । यं ते काव्य उशना मंदिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रं ॥१२॥ त्वं सूरो हरितो रामयो नॄन्भरच्चक्रमेतशो नायमिंद्र । प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ॥१३॥ त्वं नो अस्या इंद्र दुर्हणायाः पाहि वज्रिवो दुरिताद्भीके । प्र नो वाजान्रथ्यो३ अश्वबुध्यानिषे यंधि श्रवसे सूनृतायै ॥१४॥ मा सा ते अस्मत्सुमतिर्वि दसद्वाजप्रमहः समिषो वरंत । आ नो भज मघवन्गोष्वर्यो मंहिष्ठास्ते सधमादः स्याम ॥१५॥२६॥८॥१॥

---

॥ १२२ ॥ १–१५ कक्षीवान्दैर्घतमस औशिजः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥१२२॥ प्र वः पांतं रघुमन्यवोऽधो यज्ञं रुद्राय मीळ्हुषे

धायाः पयः उस्रियायाः ॥५॥२४॥ अध प्र जज्ञे तरणिः ममत्तु
प्र रोचि अस्याः उषसः न सूरः इंदुः येभिः आष्ट स्वऽइदुहव्यैः स्रु-
वेण सिंचन् जरणा अभि धाम ॥६॥ सुऽइध्मा यत् वनऽधितिः
अपस्यात् सूरः अध्वरे परि रोधना गोः यत् ह प्रऽभासि कृत्व्यान्
अनु द्यून् अनर्विशे पशुऽइषे तुराय ॥७॥ अष्टा महः दिवः आदः
हरी इह द्युम्नऽसहं अभि योधानः उत्सं हरिं यत् ते मंदिनं धुक्षन्
वृधे गोऽरभसं अद्रिऽभिः वाताप्यं ॥८॥ त्वं आयसं प्रति वर्तयः
गोः दिवः अश्मानं उपऽनीतं ऋभ्वा कुत्साय यत्र पुरुऽहूत व-
न्वन् शुष्णं अनंतैः परिऽयासि वधैः ॥९॥ पुरा यत् सूरः तमसः
अपिऽइतेः तं अद्रिऽवः फलिऽगं हेतिं अस्य शुष्णस्य चित् परि-
ऽहितं यत् ओजः दिवः परि सुऽग्रथितं तत् आ अदः० ॥१०॥२५॥
अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतां इंद्र कर्मन्
त्वं वृत्रं आऽशयानं सिरासु महः वज्रेण सिस्वपः वराहुं ॥११॥
त्वं इंद्र नर्यः यान् अवः नॄन् तिष्ठ वातस्य सुऽयुजः वहिष्ठान् यं
ते काव्यः उशना मंदिनं दात् वृत्रऽहनं पार्यं ततक्ष वज्रं ॥१२॥
त्वं सूरः हरितः रमयः नॄन् भरत् चक्रं एतशः न अयं इंद्र प्रऽअस्य
पारं नवतिं नाव्यानां अपि कर्तं अवर्तयः अयज्यून् ॥१३॥ त्वं नः
अस्याः इंद्र दुःऽहनायाः पाहि वज्रिऽवः दुःऽइतात् अभीके प्र
नः वाजान् रथ्यः अश्वऽबुध्यान् इषे यंधि श्रवसे सूनृतायै ॥१४॥
मा सा ते अस्मत् सुऽमतिः वि दसत् वाजऽप्रमहः सं इषः वरंत
आ नः भज मघऽवन् गोषु अर्यः मंहिष्ठाः ते सधऽमादः स्याम
॥१५॥२६॥८॥१॥

---

॥१२२॥ प्र वः पांतं रघुऽमन्यवः अंधः यज्ञं रुद्राय मीळ्हुषे

भरध्वं । दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥१॥ पत्नीव पूर्वहूतिं वावृधध्या उषासानक्ता पुरुधा विदाने । स्तरीर्नात्कं व्युतं वसाना सूर्यस्य श्रिया सुदृशी हिरण्यैः ॥२॥ ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् । शिशीतमिंद्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यंतु देवाः ॥३॥ उत त्या मे यशसा श्वेतनायै व्यंता पांतौशिजो हुवध्यै । प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः ॥४॥ आ वो रुवण्युमौशिजो हुवध्यै घोषेव शंसमर्जुनस्य नंशे । प्र वः पूष्णे दावन आँ अच्छा वोचेय वसुतातिमग्नेः ॥५॥१॥ श्रुतं मे मित्रावरुणा हवेमोत श्रुतं सदने विश्वतः सीं । श्रोतु नः श्रोतुरातिः सुश्रोतुः सुक्षेत्रा सिंधुरद्भिः ॥६॥ स्तुषे सा वां वरुण मित्र रातिर्गवां शता पृक्षयामेषु पज्रे । श्रुतरथे प्रियरथे दधानाः सद्यः पुष्टिं निरुंधानासो अग्मन् ॥७॥ अस्य स्तुषे महिमघस्य राधः सचा सनेम नहुषः सुवीराः । जनो यः पज्रेभ्यो वाजिनीवानश्वावतो रथिनो मह्यं सूरिः ॥८॥ जनो यो मित्रावरुणावभिध्रुगपो न वां सुनोत्यक्ष्णयाध्रुक् । स्वयं स यक्ष्मं हृदये नि धत्त आप यदीं होत्राभिर्ऋतावा ॥९॥ स व्राधतो नहुषो दंसुजूतः शर्धस्तरो नरां गूर्तश्रवाः । विसृष्टरातिर्याति बाळ्हसृत्वा विश्वासु पृत्सु सदमिच्छूरः ॥१०॥२॥ अध ग्मंता नहुषो हवं सूरेः श्रोता राजानो अमृतस्य मंद्राः । नभोजुवो यन्निरवस्य राधः प्रशस्तये महिना रथवते ॥११॥ एतं शर्धं धाम यस्य सूरेरित्यवोचन्दशतयस्य नंशे । द्युम्नानि येषु वसुताती रारन्विश्वे सन्वंतु प्रभृथेषु वाजं ॥१२॥ मंदामहे दश-

भरध्वं दिवः अस्तोषि असुरस्य वीरैः इषुध्याऽइव मरुतः रोद-
स्योः ॥१॥ पत्नीऽइव पूर्वऽहूतिं ववृधध्यै उषसानक्ता पुरुधा वि-
दाने स्तरीः न अत्कं विऽउतं वसाना सूर्यस्य श्रिया सुऽदृशी
हिरण्यैः ॥२॥ ममत्तु नः परिऽज्मा वसर्हा ममत्तु वातः अपां
वृषण्ऽवान् शिशीतं इंद्रापर्वता युवं नः तत् नः विश्वे वरिव-
स्यंतु देवाः ॥३॥ उत त्या मे यशसा श्वेतनायै व्यंता पांता औ-
शिजः हुवध्यै प्र वः नपातं अपां कृणुध्वं प्र मातरा रास्पिनस्य
आयोः ॥४॥ आ वः रुवण्युं औशिजः हुवध्यै घोषाऽइव शंसं
अर्जुनस्य नंशे प्र वः पूष्णे दावने आ अच्छ वोचेय वसुऽतातिं
अग्नेः ॥५॥१॥ श्रुतं मे मित्रावरुणा हवा इमा उत श्रुतं सदने
विश्वतः सीं श्रोतु नः श्रोतुऽरातिः सुऽश्रोतुः सुऽक्षेत्रा सिंधुः
अत्ऽभिः ॥६॥ स्तुषे सा वां वरुण मित्र रातिः गवां शता पृक्ष-
ऽयामेषु पज्रे श्रुतऽरथे प्रियऽरथे दधानाः सद्यः पुष्टिं निऽरुं-
धानासः अग्मन् ॥७॥ अस्य स्तुषे महिऽमघस्य राधः सचा स-
नेम नहुषः सुऽवीराः जनः यः पज्रेभ्यः वाजिनीऽवान् अश्व-
ऽवतः रथिनः मह्यं सूरिः ॥८॥ जनः यः मित्रावरुणौ अभिऽध्रुक्
अपः न वां सुनोति अक्ष्णयाऽध्रुक् स्वयं सः यक्ष्मं हृदये नि धत्ते
आप यत् ईं होत्राभिः ऋतऽवा ॥९॥ सः व्राधतः नहुषः दंऽसु-
जूतः शर्धःऽतरः नरां गूर्तऽश्रवाः विसृष्टऽरातिः याति बाळ्ह-
ऽसृत्वा विश्वासु पृत्ऽसु सदं इत् शूरः ॥१०॥२॥ अध ग्मंत नहु-
षः हवं सूरेः श्रोत राजानः अमृतस्य मंद्राः नभःऽजुवः यत् नि-
रवस्य राधः प्रऽशस्तये महिना रथऽवते ॥११॥ एतं शर्धं धाम
यस्य सूरेः इति अवोचन् दशऽतयस्य नंशे द्युम्नानि येषु वसु-
ऽतातिः ररन् विश्वे सन्वंतु प्रऽभृथेषु वाजं ॥१२॥ मंदामहे दश-

तयस्य धासेर्वियेत्यंच बिभ्रतो यंत्यन्ना। किमिष्टाश्व इष्टरश्मिरेत ईशानासस्तरुष ऋंजते नॄन् ॥१३॥ हिरण्यकर्णं मणिग्रीवमर्णस्तन्नो विश्वे वरिवस्यंतु देवाः। अर्यो गिरः सद्य आ जग्मुषीरोस्राश्चाकंतूभयेष्वस्मे ॥१४॥ चत्वारो मा मशर्शारस्य शिश्वस्त्रयो राज्ञ आयवसस्य जिष्णोः। रथो वां मित्रावरुणा दीर्घाप्साः स्यूमगभस्तिः सूरो नाद्यौत् ॥१५॥३॥

---

॥ १२३ ॥ १—१३ कक्षीवान्दैर्घतमस औशिजः ॥ उषाः ॥ त्रिष्टुप् ॥

॥१२३॥ पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः। कृष्णादुदस्थादर्या३ विहाया श्चिकित्संती मानुषाय क्षयाय ॥१॥ पूर्वा विश्वस्माद्भुवनादबोधि जयंती वाजं बृहती सनुत्री। उच्चा व्यख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ ॥२॥ यदद्य भागं विभजासि नृभ्य उषो देवि मर्त्यत्रा सुजाते। देवो नो अत्र सविता दमूना अनागसो वोचति सूर्याय ॥३॥ गृहंगृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना। सिषासंती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनां ॥४॥ भगस्य स्वसा वरुणस्य जामिरुषः सूनृते प्रथमा जरस्व। पश्चा स दघ्या यो अघस्य धाता जयेम तं दक्षिणया रथेन ॥५॥४॥ उदीरतां सूनृता उत्पुरंधीरुदग्नयः शुशुचानासो अस्थुः। स्पार्हा वसूनि तमसापगूळ्हाविष्कृण्वंत्युषसो विभातीः ॥६॥ अपान्यदेत्यभ्य१न्यदेति विषुरूपे अहनी सं चरेते। परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन ॥७॥ सदृशीरद्य सदृशीरिदु श्वो दीर्घं सचंते वरु-

ऽतयस्य धासेः त्रिः यत् पंचं विभ्रतः यंति अच्छा किं इष्टऽअश्वः इष्टऽरश्मिः एते ईशानासः तरुषः ऋंजते नॄन् ॥ १३॥ हिरण्यऽकर्णं मणिऽग्रीवं अर्णः तत् नः विश्वे वरिवस्यंतु देवाः अर्यः गिरः सद्यः आ जग्मुषीः आ उस्राः चाकंतु उभयेषु अस्मे ॥१४॥ चत्वारः मा मशर्शारस्य शिश्वः त्रयः राज्ञः आयवसस्य जिष्णोः रथः वां मित्रावरुणा दीर्घऽअप्साः स्यूमऽगभस्तिः सूरः न अद्यौत् ॥ १५॥३॥

---

॥१२३॥ पृथुः रथः दक्षिणायाः अयोजि आ एनं देवासः अमृतासः अस्थुः कृष्णात् उत् अस्थात् अर्या विऽहायाः चिकित्संती मानुषाय क्षयाय॥१॥ पूर्वा विश्वस्मात् भुवनात् अबोधि जयंती वाजं बृहती सनुत्री उच्चा वि अख्यत् युवतिः पुनःऽभूः आ उषाः अगन् प्रथमा पूर्वऽहूतौ॥२॥ यत् अद्य भागं विऽभजासि नृऽभ्यः उषः देवि मर्त्यऽत्रा सुऽजाते देवः नः अत्र सविता दमूनाः अनागसः वोचति सूर्याय॥३॥ गृहंऽगृहं अहना याति अच्छ दिवेऽदिवे अधि नाम दधाना सिसासंती द्योतना शश्वत् आ अगात् अग्रंऽअग्रं इत् भजते वसूनां ॥४॥ भगस्य स्वसा वरुणस्य जामिः उषः सूनृते प्रथमा जरस्व पश्चा सः दघ्याः यः अघस्य धाता जयेम तं दक्षिणया रथेन॥५॥४॥ उत् ईरतां सूनृताः उत् पुरंऽधीः उत् अग्नयः शुशुचानासः अस्थुः स्पार्हा वसूनि तमसा अपऽगूळ्हा आविः कृण्वंति उषसः विऽभातीः॥६॥ अप अन्यत् एति अभि अन्यत् एति विषुरूपे॰ अहनी सं चरेते परिऽक्षितोः तमः अन्या गुहा अकः अद्यौत् उषाः शोशुचता रथेन ॥७॥ सऽदृशीः अद्य सऽदृशीः इत् ऊं श्वः दीर्घं सचंते वरु-

णस्य धाम । अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परि यंति सद्यः ॥ ८ ॥ जानत्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट श्वितीची । ऋतस्य योषा न मिनाति धामाहरहर्निष्कृतमाचरंती ॥ ९ ॥ कन्येव तन्वा३ शाशदानाँ एषि देवि देवमियक्षमाणं । संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥ १० ॥ ५ ॥ सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कं । भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशंत ॥ ११ ॥ अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य । परा च यंति पुनरा च यंति भद्रा नाम वहमाना उषासः ॥ १२ ॥ ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि । उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥ १३ ॥ ६ ॥

---

॥ १२४ ॥ १—१३ कक्षीवान्दैर्घतमस औशिजः ॥ उषाः ॥ त्रिष्टुप् ॥

॥ १२४ ॥ उषा उच्छंती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् । देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ॥ १ ॥ अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि । ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥ २ ॥ एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् । ऋतस्य पंथामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ३ ॥ उपो अदर्शि शुंध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि । अद्मसन्न ससतो बोधयंती शश्वत्तमागात्पुनरेयुषीणां ॥ ४ ॥ पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुं । व्यु प्रथते वितरं वरीय ओभा पृणंती पित्रोरुपस्था ॥ ५ ॥ ७ ॥

यस्य धाम अनवद्याः त्रिंशतं योजनानि एकाऽएका क्रतुं परि
यंति सद्यः ॥८॥ जानती अह्नः प्रथमस्य नाम शुक्रा कृष्णात् अ-
जनिष्ट श्वितीची ऋतस्य योषा न मिनाति धाम अहःऽअहः
निःऽकृतं आऽचरंती ॥९॥ कन्याऽइव तन्वा शाशदाना एषि देवि
देवं इयक्षमाणं संऽस्मयमाना युवतिः पुरस्तात् आविः वक्षांसि
कृणुषे विऽभाती ॥१०॥५॥ सुऽसंकाशा मातृमृष्टाऽइव योषा
आविः तन्वं कृणुषे दृशे कं भद्रा त्वं उषः विऽतरं वि उच्छ न तत्
ते अन्याः उषसः नशंत ॥११॥ अश्वऽवतीः गोऽमतीः विश्व-
ऽवाराः यतमानाः रश्मिऽभिः सूर्यस्य परा च यंति पुनः आ च
यंति भद्रा नाम वहमानाः उषसः ॥१२॥ ऋतस्य रश्मिं अ-
नुऽयच्छमाना भद्रंऽभद्रं क्रतुं अस्मासु धेहि उषः नः अद्य सुऽहवा
वि उच्छ अस्मासु रायः मघवत्ऽसु च स्युः ॥१३॥६॥

---

॥१२४॥ उषाः उच्छंती संऽइधाने अग्नौ उत्ऽयन् सूर्यः उर्वि-
या ज्योतिः अश्रेत् देवः नः अत्र सविता नु अर्थं प्र असावीत्
द्विऽपत् प्र चतुःऽपत् इत्यै ॥१॥ अमिनती दैव्यानि व्रतानि
प्रऽमिनती मनुष्या युगानि ईयुषीणां उपमा शश्वतीनां आ-
ऽयतीनां प्रथमा उषाः वि अद्यौत् ॥२॥ एषा दिवः दुहिता प्रति
अदर्शि ज्योतिः वसाना समना पुरस्तात् ऋतस्य पंथां अनु एति
साधु प्रजानतीऽइव न दिशः मिनाति ॥३॥ उपो अदर्शि शुंध्यु-
वः न वक्षः नोधाःऽइव आविः अकृत प्रियाणि अद्मऽसत् न
ससतः बोधयंती शश्वत्ऽतमा आ अगात् पुनः आऽईयुषीणां
॥४॥ पूर्वे अर्धे रजसः अप्त्यस्य गवां जनित्री अकृत प्र केतुं वि ऊं
प्रथते विऽतरं वरीयः आ उभा पृणंती पित्रोः उपऽस्था ॥५॥७॥

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिं। अरे-
पसा तन्वा३ शाशदाना नार्भादीषते न महो विभाती ॥६॥
अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानां। जायेव
पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥७॥ स्वसा
स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव। व्युच्छंती
रश्मिभिः सूर्यस्यांज्यंक्ते समनगा इव व्राः ॥८॥ आसां पूर्वा-
सामहसु स्वसॄणामपरा पूर्वामभ्येति पश्चात्। ताः प्रत्नवन्नव्य-
सीर्नूनमस्मे रेवदुच्छंतु सुदिना उषासः ॥९॥ प्र बोधयोषः
पृणतो मघोन्यबुध्यमानाः पणयः ससंतु। रेवदुच्छ मघवद्भ्यो
मघोनि रेवत्स्तोत्रे सूनृते जारयंती ॥१०॥८॥ अवेयमश्वै-
द्युवतिः पुरस्ताद्युंक्ते गवामरुणानामनीकं। वि नूनमुच्छा-
दसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥११॥ उत्ते वय-
श्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ। अमा सते वहसि
भूरि वाममुषो देवि दाशुषे मर्त्याय ॥१२॥ अस्तोढ्वं स्तोम्या
ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः। युष्माकं देवीरवसा
सनेम सहस्रिणं च शतिनं च वाजं ॥१३॥९॥

---

॥१२५॥ १–७ कक्षीवान्दैर्घतमस औशिजः ॥ स्वनयस्य दानस्तुतिः ॥
त्रिष्टुप्। ४–५ जगती ॥

॥१२५॥ प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रति-
गृह्या नि धत्ते। तेन प्रजां वर्धयमान आयू रायस्पोषेण
सचते सुवीरः ॥१॥ सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै
वय इंद्रो दधाति। यस्त्वायंतं वसुना प्रातरित्वो मुक्षीज-
येव पदिमुत्सिनाति ॥२॥ आयमद्य सुकृतं प्रातरिच्छन्निष्टेः
पुत्रं वसुमता रथेन। अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं

एव इत् एषा पुरुऽतमा दृशे कं न अजामिं न परि वृणक्ति जामिं
अरेपसा तन्वा शाशदाना न अर्भात् ईषते न महः विऽभाती
॥६॥ अभ्राताऽइव पुंसः एति प्रतीची गर्तऽआरुगिव सनये
धनानां जायाऽइव पत्ये उशती सुऽवासाः उषाः हस्राऽइव नि
रिणीते अप्सः ॥७॥ स्वसा स्वस्रे ज्यायस्यै योनिं अरैक् अप एति
अस्याः प्रतिचक्ष्याऽइव विऽउच्छंती रश्मिऽभिः सूर्यस्य अंजि
अंक्ते समनगाःऽइव व्राः ॥८॥ आसां पूर्वासां अहऽसु स्वसॄणां
अपरा पूर्वां अभि एति पश्चात् ताः प्रत्नऽवत् नव्यसीः नूनं
अस्मे रेवत् उच्छंतु सुऽदिनाः उषसः ॥९॥ प्र बोधय उषः पृणतः
मघोनि अबुध्यमानाः पणयः ससंतु रेवत् उच्छ मघवत्ऽभ्यः
मघोनि रेवत् स्तोत्रे सूनृते जरयंती ॥१०॥८॥ अव इयं अश्वैत्
युवतिः पुरस्तात् युंक्ते गवां अरुणानां अनीकं वि नूनं उच्छात्
असति प्र केतुः गृहंऽगृहं उप तिष्ठाते अग्निः ॥११॥ उत् ते वयः
चित् वसतेः अपप्तन् नरः च ये पितुऽभाजः विऽउष्टौ अमा सते
वहसि भूरि वामं उषः देवि दाशुषे मर्त्याय ॥१२॥ अस्तोढ्वं स्तो-
म्याः ब्रह्मणा मे अवीवृधध्वं उशतीः उषसः युष्माकं देवीः अ-
वसा सनेम सहस्रिणं च शतिनं च वाजं ॥१३॥९॥

---

॥१२५॥ प्रातः रत्नं प्रातःऽइत्वा दधाति तं चिकित्वान् प्रति-
ऽगृह्य नि धत्ते तेन प्रऽजां वर्धयमानः आयुः रायः पोषेण सचते
सुऽवीरः ॥१॥ सुऽगुः असत् सुऽहिरण्यः सुऽअश्वः बृहत् अस्मै
वयः इंद्रः दधाति यः त्वा आऽयंतं वसुना प्रातःऽइत्वः मुक्षीज-
याऽइव पदिं उत्ऽसिनाति ॥२॥ आयं अद्य सुऽकृतं प्रातः इच्छन्
इष्टेः पुत्रं वसुऽमता रथेन अंशोः सुतं पायय मत्सरस्य क्षयत्ऽवीरं

वर्धय सूनृताभिः ॥३॥ उप क्षरंति सिंधवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः। पृणंतं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यंति विश्वतः ॥४॥ नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति। तस्मा आपो घृतमर्षंति सिंधवस्तस्मा इयं दक्षिणा पिन्वते सदा ॥५॥ दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः। दक्षिणावंतो अमृतं भजंते दक्षिणावंतः प्र तिरंत आयुः ॥६॥ मा पृणंतो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः। अन्यस्तेषां परिधिरस्तु कश्चिदपृणंतमभि सं यंतु शोकाः ॥७॥१०॥

---

॥ १२६ ॥ १—५ कक्षीवान्दैर्घतमस औशिजः। ६ भावयव्यः। ७ रोमशा ॥ १—५. ७ भावयव्यः। ६ रोमशा ॥ १—५ त्रिष्टुप्। ६. ७ अनुष्टुप् ॥

॥१२६॥ अमंदान्स्तोमान्प्र भरे मनीषा सिंधावधि क्षियतो भाव्यस्य। यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥१॥ शतं राज्ञो नाधमानस्य निष्काञ्छतमश्वान्प्रयतान्सद्य आदं। शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥२॥ उप मा श्यावाः स्वनयेन दत्ता वधूमंतो दश रथासो अस्थुः। षष्टिः सहस्रमनु गव्यमागात्सनत्कक्षीवाँ अभिपित्वे अह्नां ॥३॥ चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयंति। मदच्युतः कृशनावतो अत्यान्कक्षीवंत उदमृक्षंत पज्राः ॥४॥ पूर्वामनु प्रयतिमाददे वस्त्रीन्युक्ताँ अष्टावरिधायसो गाः। सुबंधवो ये विश्या इव व्रा अनस्वंतः श्रव ऐषंत पज्राः ॥५॥ आगधिता परिगधिता या कशीकेव जंगहे। ददाति मह्यं यादुरी याशूनां भोज्या शता ॥६॥ उपोप मे परा मृश मा मे दभ्राणि मन्यथाः। सर्वाहमस्मि रोमशा गंधारीणामिवाविका ॥७॥११॥१८॥

वर्धय सूनृताभिः ॥३॥ उप क्षरंति सिंधवः मयःऽभुवः ईजानं च यक्ष्यमाणं च धेनवः पृणंतं च पपुरिं च अवस्यवः घृतस्य धाराः उप यंति विश्वतः ॥४॥ नाकस्य पृष्ठे अधि तिष्ठति श्रितः यः पृणाति सः ह देवेषु गच्छति तस्मै आपः घृतं अर्षंति सिंधवः तस्मै इयं दक्षिणा पिन्वते सदा ॥५॥ दक्षिणाऽवतां इत् इमानि चित्रा दक्षिणाऽवतां दिवि सूर्यासः दक्षिणाऽवंतः अमृतं भजंते दक्षिणाऽवंतः प्र तिरंते आयुः ॥६॥ मा पृणंतः दुःऽइतं एनः आ अरन् मा जारिषुः सूरयः सुऽव्रतासः अन्यः तेषां परिऽधिः अस्तु कः चित् अपृणंतं अभि सं यंतु शोकाः ॥७॥१०॥

---

॥१२६॥ अमंदान् स्तोमान् प्र भरे मनीषा सिंधौ अधि क्षियतः भाव्यस्य यः मे सहस्रं अमिमीत सवान् अतूर्तः राजा श्रवः इच्छमानः ॥१॥ शतं राज्ञः नाधमानस्य निष्कान् शतं अश्वान् प्रऽयतान् सद्यः आदं शतं कक्षीवान् असुरस्य गोनां दिवि श्रवः अजरं आ ततान ॥२॥ उप मा श्यावाः स्वनयेन दत्ताः वधूऽमंतः दश रथासः अस्थुः षष्टिः सहस्रं अनु गव्यं आ अगात् सनत् कक्षीवान् अभिऽपित्वे अह्नां ॥३॥ चत्वारिंशत् दशऽरथस्य शोणाः सहस्रस्य अग्रे श्रेणिं नयंति मदऽच्युतः कृशनऽवतः अत्यान् कक्षीवंतः उत् अमृक्षंत पज्राः ॥४॥ पूर्वां अनु प्रऽयतिं आ ददे वः त्रीन् युक्तान् अष्टौ अरिऽधायसः गाः सुऽबंधवः ये विश्याःऽइव व्राः अनस्वंतः श्रवः ऐषंत पज्राः ॥५॥ आऽगधिता परिऽगधिता या कशीकाऽइव जंगहे ददाति मह्यं यादुरी याशूनां भोज्या शता ॥६॥ उपऽउप मे परा मृश मा मे दभ्राणि मन्यथाः सर्वा अहं अस्मि रोमशा गंधारीणांऽइव अविका ॥७॥११॥१८॥

॥ १२७ ॥ १-११ परुच्छेपो दैवोदासिः ॥ अग्निः ॥ १-५. ७-११ अत्यष्टिः । ६ अतिधृतिः ॥

॥१२७॥ अग्निं होतारं मन्ये दास्वंतं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसं। य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः॥१॥ यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमंगिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः। परिज्मानमिव द्यां होतारं चर्षणीनां। शोचिष्केशं वृषणं यमिमा विशः प्रावंतु जूतये विशः॥२॥ स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहंतरः परशुर्न द्रुहंतरः। वीळु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरं। निःषहमाणो यमते नायते धन्वासहा नायते॥३॥ दृळ्हा चिदस्मा अनु दुर्यथा विदे तेजिष्ठाभिररणिभिर्दाष्ट्यवसेऽग्नये दाष्ट्यवसे। प्र यः पुरूणि गाहते तक्षद्वनेव शोचिषा। स्थिरा चिदन्ना नि रिणात्योजसा नि स्थिराणि चिदोजसा॥४॥ तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात्। आदस्यायुर्ग्रभणवद्वीळु शर्म न सूनवे। भक्तमभक्तमवो व्यंतो अजरा अग्नयो व्यंतो अजराः॥५॥१२॥ स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः। आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा। अध स्मास्य हर्षतो हृषीवतो विश्वे जुषंत पंथां नरः शुभे न पंथां॥६॥ द्विता यदीं कीस्तासो अभिद्यवो नमस्यंत उपवोचंत भृगवो मथ्नंतो दाशा भृगवः। अग्निरीशे वसूनां शुचिर्यो धर्णिरेषां। प्रियाँ अपिधीँर्वनिषीष्ट मेधिर आ वनिषीष्ट मेधिरः॥७॥ विश्वासां त्वा विशां पतिं हवामहे सर्वासां समानं दंपतिं भुजे सत्यगिर्वाहसं भुजे। अतिथिं मानुषाणां पितुर्न

॥१२७॥ अग्निं होतारं मन्ये दास्वंतं वसुं सूनुं सहसः जात-
ऽवेदसं विप्रं न जातऽवेदसं यः ऊर्ध्वया सुऽअध्वरः देवः देवाच्या
कृपा घृतस्य विऽभ्राष्टिं अनु वष्टि शोचिषा आऽजुह्वानस्य
सर्पिषः ॥१॥ यजिष्ठं त्वा यजमानाः हुवेम ज्येष्ठं अंगिरसां विप्र
मन्मऽभिः विप्रेभिः शुक्र मन्मऽभिः परिज्मानंऽइव द्यां होतारं
चर्षणीनां शोचिःऽकेशं वृषणं यं इमाः विशः प्र अवंतु जूतये
विशः ॥२॥ सः हि पुरु चित् ओजसा विरुक्मता दीद्यानः भवति
द्रुहंऽतरः परशुः न द्रुहंऽतरः वीळु चित् यस्य संऽऋतौ श्रुवत्
वनाऽइव यत् स्थिरं निःऽसहमानः यमते न अयते धन्वऽसहा न
अयते ॥३॥ दृळ्हा चित् अस्मै अनु दुः यथा विदे तेजिष्ठाभिः अ-
रणिऽभिः दाष्टि अवसे अग्नये दाष्टि अवसे प्र यः पुरूणि गाहते
तक्षत् वनाऽइव शोचिषा स्थिरा चित् अन्ना नि रिणाति ओ-
जसा नि स्थिराणि चित् ओजसा ॥४॥ तं अस्य पृक्षं उपरासु
धीमहि नक्तं यः सुदर्शऽतरः दिवाऽतरात् अप्रऽआयुषे दिवा-
ऽतरात् आत् अस्य आयुः ग्रभणऽवत् वीळु शर्म न सूनवे भक्तं
अभक्तं अवः व्यंतः अजराः अग्नयः व्यंतः अजराः ॥५॥१२॥ सः
हि शर्धः न मारुतं तुविऽस्वनिः अप्नस्वतीषु उर्वरासु इष्टनिः
आर्तनासु इष्टनिः आदत् हव्यानि आऽददिः यज्ञस्य केतुः अर्ह-
णा अध स्म अस्य हर्षतः हृषीवतः विश्वे जुषंत पंथां नरः शुभे न
पंथां ॥६॥ द्विता यत् ईं कीस्तासः अभिऽद्यवः नमस्यंतः उपऽवो-
चंत भृगवः मथ्नंतः दाशा भृगवः अग्निः ईशे वसूनां शुचिः यः
धर्णिः एषां प्रियान् अपिऽधीन् वनिषीष्ट मेधिरः आ वनिषीष्ट
मेधिरः ॥७॥ विश्वासां त्वा विशां पतिं हवामहे सर्वासां समानं
दंऽपतिं भुजे सत्यऽगिर्वाहसं भुजे अतिथिं मानुषाणां पितुः न

यस्यासया। अमी च विश्वे अमृतास आ वयो हव्या देवेष्वा वयः ॥८॥ त्वमग्ने सहसा सहंतमः शुष्मिंतमो जायसे देवतातये रयिर्न देवतातये। शुष्मिंतमो हि ते मदो द्युम्निंतम उत क्रतुः। अध स्मा ते परि चरंत्यजर श्रुष्टीवानो नाजर ॥९॥ प्र वो महे सहसा सहस्वत उषर्बुधे पशुषे नाग्नये स्तोमो बभूत्वग्नये। प्रति यदीं हविष्मान्विश्वासु क्षासु जोगुवे। अग्रे रेभो न जरत ऋषूणां जूर्णिर्होत ऋषूणां ॥१०॥ स नो नेदिष्ठं ददृशान आ भराग्ने देवेभिः सचनाः सुचेतुना महो रायः सुचेतुना। महि शविष्ठ नस्कृधि संचक्षे भुजे अस्यै। महि स्तोतृभ्यो मघवन्सुवीर्यं मथीरुग्रो न शवसा ॥११॥१३॥

---

॥ १२८ ॥ १–८ परुच्छेपो दैवोदासिः ॥ अग्निः ॥ अत्यष्टिः ॥

॥१२८॥ अयं जायत मनुषो धरीमणि होता यजिष्ठ उशिजामनु व्रतमग्निः स्वमनु व्रतं। विश्वश्रुष्टिः सखीयते रयिरिव श्रवस्यते। अदब्धो होता नि षददिळस्पदे परिवीत इळस्पदे॥१॥ तं यज्ञसाधमपि वातयामस्यृतस्य पथा नमसा हविष्मता देवताता हविष्मता। स न ऊर्जामुपाभृत्यया कृपा न जूर्यति। यं मातरिश्वा मनवे परावतो देवं भाः परावतः॥२॥ एवेन सद्यः पर्येति पार्थिवं मुहुर्गी रेतो वृषभः कनिक्रदद्दधद्रेतः कनिक्रदत्। शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः। सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु॥३॥ स सुक्रतुः पुरोहितो दमेदमेऽग्निर्यज्ञस्याध्वरस्य चेतति क्रत्वा यज्ञस्य चेतति। क्रत्वा वेधा इषूयते विश्वा जातानि पस्पशे। यतो घृतश्रीरतिथिरजायत वह्निर्वेधा अजायत ॥४॥ क्रत्वा यदस्य तविषीषु पृंचतेऽग्नेरवेण म-

यस्य॑ आ॒सया॑ अ॒मी च॒ विश्वे॑ अ॒मृता॑सः आ वयः॑ ह॒व्या दे॒वेषु॑ आ वयः॑ ॥८॥ त्वं अ॒ग्ने॒ सह॑सा सह॑न्ऽतमः शु॒ष्मिन्ऽत॑मः जाय॒से दे॒वऽता॑तये र॒यिः न दे॒वऽता॑तये शु॒ष्मिन्ऽत॑मः हि ते॒ मदः॑ द्यु॒म्निन्ऽत॑मः उ॒त क्रतुः॑ अध॑ स्म॒ ते॒ परि॑ च॒र॑न्ति अ॒जर॒ श्रु॒ष्टी॒ऽवानः॑ न अ॒जर॒ ॥९॥ प्र वः॒ म॒हे सह॑सा सह॑स्वते उ॒षः॒ऽबु॒धे प॒शु॒ऽसे न अ॒ग्नये॑ स्तोमः॑ ब॒भूतु अ॒ग्नये॑ प्रति॑ यत् ई॒म् ह॒विष्मा॑न् विश्वा॑सु क्षासु॑ जोगु॑वे अग्रे॑ रे॒भः न ज॒र॒ते॒ ऋ॒षू॒णां जूर्णिः॑ होता॑ ऋ॒षू॒णाम् ॥१०॥ सः नः॒ नेदि॑ष्ठं ददृ॑शानः आ भ॒र॒ अग्ने॑ दे॒वेभिः॑ सऽच॑नाः सु॒ऽचे॒तुना॑ म॒हः रा॒यः सु॒ऽचे॒तुना॑ महि॑ शविष्ठ॒ नः॒ कृ॒धि॒ सं॒ऽचक्षे॑ भु॒जे अ॒स्यै महि॑ स्तो॒तृऽभ्यः॑ म॒घ॒ऽव॒न् सु॒ऽवीर्यं॑ मथीः॑ उ॒ग्रः न शव॑सा ॥११॥१३॥

---

॥१२८॥ अ॒यं जा॒य॒त॒ मनु॑षः धरी॑मणि होता॑ यजि॑ष्ठः उ॒शिजा॑म् अनु॑ व्र॒तं अ॒ग्निः स्वं अनु॑ व्र॒तं वि॒श्वऽश्रु॑ष्टिः स॒खि॒ऽय॒ते र॒यिःऽइ॑व श्र॒व॒स्य॒ते अद॑ब्धः होता॑ नि स॒द॒त् इ॒ळः प॒दे परि॑ऽवीतः इ॒ळः प॒दे ॥१॥ तं य॒ज्ञ॒ऽसाधं॑ अपि॑ वा॒त॒या॒म॒सि॒ ऋ॒तस्य॑ प॒था नम॑सा ह॒विष्म॑ता दे॒वऽता॑ता ह॒विष्म॑ता सः नः॒ ऊ॒र्जाम् उ॒प॒ऽआभृ॑ति अ॒या कृ॒पा न जू॒र्य॒ति॒ यं मा॒त॒रिश्वा॑ मन॑वे प॒रा॒ऽवतः॑ दे॒वं भाः॰ प॒रा॒ऽवतः॑ ॥२॥ ए॒वेन॑ स॒द्यः परि॑ ए॒ति॒ पार्थि॑वं मु॒हुः॒ऽगीः रेतः॑ वृ॒ष॒भः कनि॑क्रदत् दध॑त् रेतः॑ कनि॑क्रदत् श॒तं चक्षा॑णः अ॒क्षऽभिः॑ दे॒वः वने॑षु तु॒र्वणिः॑ सदः॑ दधा॑नः उप॑रेषु सानु॑षु अ॒ग्निः परे॑षु सानु॑षु ॥३॥ सः सु॒ऽक्रतुः॑ पु॒रः॒ऽहि॑तः दमे॑ऽदमे अ॒ग्निः य॒ज्ञस्य॑ अ॒ध्व॒रस्य॑ चे॒त॒ति॒ क्रत्वा॑ य॒ज्ञस्य॑ चे॒त॒ति॒ क्रत्वा॑ वे॒धाः इ॒षु॒ऽय॒ते विश्वा॑ जा॒तानि॑ प॒स्प॒शे॒ यतः॑ घृ॒त॒ऽश्रीः अति॑थिः अजा॑यत वह्निः॑ वे॒धाः अजा॑यत ॥४॥ क्रत्वा॑ यत् अ॒स्य॒ तवि॑षीषु पृ॒ञ्चते॑ अ॒ग्नेः अवे॑न म॒-

रतां न भोज्यैषिराय न भोज्या। स हि ष्मा दानमिन्वति वसूनां च मज्मना। स नस्त्रासते दुरितादभिहुतः शंसादघादभिहुतः ॥५॥१४॥ विश्वो विहाया अरतिर्वसुर्दधे हस्ते दक्षिणे तरणिर्न शिश्रथच्छ्रवस्यया न शिश्रथत्। विश्वस्मा इदिषुध्यते देवत्रा हव्यमोहिषे। विश्वस्मा इत्सुकृते वारमृण्वत्यग्निर्द्वारा व्यृण्वति ॥६॥ स मानुषे वृजने शंतमो हितो३ऽग्निर्यज्ञेषु जेन्यो न विश्पतिः प्रियो यज्ञेषु विश्पतिः। स हव्या मानुषाणामिळा कृतानि पत्यते। स नस्त्रासते वरुणस्य धूर्तेर्महो देवस्य धूर्तेः ॥७॥ अग्निं होतारमीळते वसुधितिं प्रियं चेतिष्ठमरतिं न्येरिरे हव्यवाहं न्येरिरे। विश्वायुं विश्ववेदसं होतारं यजतं कविं। देवासो रण्वमवसे वसूयवो गीर्भी रण्वं वसूयवः ॥८॥१५॥

---

॥ १२९ ॥ १–११ परुच्छेपो दैवोदासिः ॥ १–५. ७–११ इंद्रः। ६ इंदुः ॥
१–७. १० अत्यष्टिः। ८. ९ अतिशक्वरी। ११ अष्टिः ॥

॥१२९॥ यं त्वं रथमिंद्र मेधसातयेऽपाका संतमिषिर प्रणयसि प्रानवद्य नयसि। सद्यश्चित्तमभिष्टये करो वशश्च वाजिनं। सास्माकमनवद्य तूतुजान वेधसामिमां वाचं न वेधसां ॥१॥ स श्रुधि यः स्मा पृतनासु कासु चिद्दक्षाय्य इंद्र भरहूतये नृभिरसि प्रतूर्तये नृभिः। यः शूरैः स्व१ः सनिता यो विप्रैर्वाजं तरुता। तमीशानास इरधंत वाजिनं पृक्षमत्यं न वाजिनं ॥२॥ दस्मो हि ष्मा वृषणं पिन्वसि त्वचं कं चिद्यावीररुं शूर मर्त्यं परिवृणक्षि मर्त्यं। इंद्रोत तुभ्यं तद्दिवे तद्रुद्राय स्वयशसे। मित्राय वोचं वरुणाय सप्रथः सुमृळीकाय सप्रथः ॥३॥ अस्माकं व इंद्रमुश्मसीष्टये सखायं विश्वायुं प्रासहं युजं वाजेषु प्रासहं युजं। अस्माकं ब्रह्मोतयेऽवा पृत्सुषु

स्तां न भोज्या इषिराय न भोज्या सः हि स्म दानं इन्वति वसूनां
च मज्मना सः नः त्रासते दुःऽइतात् अभिऽहुतः शंसात् अघात्
अभिऽहुतः ॥५॥१४॥ विश्वः विऽहायाः अरतिः वसुः दधे हस्ते
दक्षिणे तरणिः न शिश्रथत् श्रवस्यया न शिश्रथत् विश्वस्मै इत्
इषुध्यते देवऽत्रा हव्यं आ ऊहिषे विश्वस्मै इत् सुऽकृते वारं ऋ-
ण्वति अग्निः द्वारा वि ऋण्वति ॥६॥ सः मानुषे वृजने शंऽतमः
हितः अग्निः यज्ञेषु जेन्यः न विश्पतिः प्रियः यज्ञेषु विश्पतिः सः
हव्या मानुषाणां इळा कृतानि पत्यते सः नः त्रासते वरुणस्य
धूर्तेः महः देवस्य धूर्तेः ॥७॥ अग्निं होतारं ईळते वसुऽधितिं प्रियं
चेतिष्ठं अरतिं नि एरिरे हव्यऽवाहं नि एरिरे विश्वऽआयुं वि-
श्वऽवेदसं होतारं यजतं कविं देवासः रण्वं अवसे वसुऽयवः गीः-
ऽभिः रण्वं वसुऽयवः ॥८॥१५॥

---

॥१२९॥ यं त्वं रथं इंद्र मेधऽसातये अपाका संतं इषिर प्रऽन-
यसि प्र अनवद्य नयसि सद्यः चित् तं अभिष्टये करः वशः च वा-
जिनं सः अस्माकं अनवद्य तूतुजान वेधसां इमां वाचं न वेध-
सां ॥१॥ सः श्रुधि यः स्म पृतनासु कासु चित् दक्षाय्यः इंद्र भर-
ऽहूतये नृऽभिः असि प्रऽतूर्तये नृऽभिः यः शूरैः स्वः॰ सनिता
यः विप्रैः वाजं तरुता तं ईशानासः इरधंत वाजिनं पृक्षं अत्यं न
वाजिनं ॥२॥ दस्मः हि स्म वृषणं पिन्वसि त्वचं कं चित् यावीः
अररुं शूर मर्त्यं परिऽवृणक्षि मर्त्यं इंद्र उत तुभ्यं तत् दिवे तत् रु-
द्राय स्वऽयशसे मित्राय वोचं वरुणाय सऽप्रथः सुऽमृळीकाय
सऽप्रथः ॥३॥ अस्माकं वः इंद्रं उश्मसि इष्टये सखायं विश्वऽआयुं
प्रऽसहं युजं वाजेषु प्रऽसहं युजं अस्माकं ब्रह्म ऊतये अव पृत्सुषु

कासु चित्। नहि त्वा शत्रुः स्तरते स्तृणोषि यं विश्वं शत्रुं स्तृणोषि यं ॥४॥ नि षू नमातिमतिं कयस्य चित्तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः। नेषि णो यथा पुरानेनाः शूर मन्यसे। विश्वानि पूरोरप पर्षि वह्निरासा वह्निर्नो अच्छ ॥५॥१६॥ प्र तद्वोचेयं भव्यायेंदवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति। स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिं। अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥६॥ वनेम तद्धोत्रया चितंत्या वनेम रयिं रयिवः सुवीर्यं रण्वं संतं सुवीर्यं। दुर्मन्मानं सुमंतुभिरेमिषा पृचीमहि। आ सत्याभिरिंद्रं द्युम्नहूतिभिर्यजत्रं द्युम्नहूतिभिः ॥७॥ प्रप्रा वो अस्मे स्वयशोभिरूती परिवर्ग इंद्रो दुर्मतीनां दरीमन्दुर्मतीनां। स्वयं सा रिषयध्यै या न उपेषे अत्रैः। हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥८॥ त्वं न इंद्र राया परीणसा याहि पथाँ अनेहसा पुरो याह्यरक्षसा। सचस्व नः पराक आ सचस्वास्तमीक आ। पाहि नो दूरादारादभिष्टिभिः सदा पाह्यभिष्टिभिः ॥९॥ त्वं न इंद्र राया तरूषसोग्रं चित्त्वा महिमा सक्षदवसे महे मित्रं नावसे। ओजिष्ठ त्रातरविता रथं कं चिदमर्त्य। अन्यमस्मद्रिरिषेः कं चिदद्रिवो रिरिक्षंतं चिदद्रिवः ॥१०॥ पाहि न इंद्र सुष्टुत स्रिधोऽवयाता सदमिद्दुर्मतीनां देवः सन्दुर्मतीनां। हंता पापस्य रक्षसस्त्राता विप्रस्य मावतः। अधा हि त्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो ॥११॥१७॥

---

॥१३०॥ १–१० परुच्छेपो दैवोदासिः ॥ इंद्रः ॥ १–९ अत्यष्टिः । १० त्रिष्टुप् ॥

॥१३०॥ एंद्र याह्युप नः परावतो नायमच्छा विद-

कासु चित् नहि त्वा शष्णुः स्तरते स्तृणोषि यं विश्वं शष्णुं स्तृणोषि यं ॥४॥ नि सु नम अतिऽमतिं कयस्य चित् तेजिष्ठाभिः अरणिऽभिः न ऊतिऽभिः उग्राभिः उग्र ऊतिऽभिः नेषि नः यथा पुरा अनेनाः शूर मन्यसे विश्वानि पूरोः अप पर्षि वह्निः आसा वह्निः नः अच्छ ॥५॥१६॥ प्र तत् वोचेयं भव्याय इंदवे हव्यः न यः इषऽवान् मन्म रेजति रक्षःऽहा मन्म रेजति स्वयं सः अस्मत् आ निदः वधैः अजेत दुःऽमतिं अव स्रवेत् अघऽशंसः अवऽतरं अव क्षुद्रंऽइव स्रवेत् ॥६॥ वनेम तत् होत्रया चितंत्या वनेम रयिं रयिऽवः सुऽवीर्यं रण्वं संतं सुऽवीर्यं दुःऽमन्मानं सुमंतुऽभिः आ ईं इषा पृचीमहि आ सत्याभिः इंद्रं द्युम्नहूतिऽभिः यजत्रं द्युम्नहूतिऽभिः ॥७॥ प्रऽप्र वः अस्मे स्वयशःऽभिः ऊती परिऽवर्गे इंद्रः दुःऽमतीनां दरीमन् दुःऽमतीनां स्वयं सा रिषयध्यै या नः उपऽईषे अत्रैः हता ईं असत् न वक्षति क्षिप्ता जूर्णिः न वक्षति ॥८॥ त्वं नः इंद्र राया परीणसा याहि पथा अनेहसा पुरः याहि अरक्षसा सचस्व नः पराके आ सचस्व अस्तंऽईके आ पाहि नः दूरात् आरात् अभिष्टिऽभिः सदा पाहि अभिष्टिऽभिः ॥९॥ त्वं नः इंद्र राया तरूषसा उग्रं चित् त्वा महिमा सक्षत् अवसे महे मित्रं न अवसे ओजिष्ठ त्रातः अवितः रथं कं चित् अमर्त्य अन्यं अस्मत् रिरिषेः कं चित् अद्रिऽवः रिरिक्षंतं चित् अद्रिऽवः ॥१०॥ पाहि नः इंद्र सुऽस्तुत स्रिधः अवऽयाता सदं इत् दुःऽमतीनां देवः सन् दुःऽमतीनां हंता पापस्य रक्षसः त्राता विप्रस्य माऽवतः अध हि त्वा जनिता जीजनत् वसो रक्षःऽहनं त्वा जीजनत् वसो ॥११॥१७॥

---

॥१३०॥ आ इंद्र याहि उप नः पराऽवतः न अयं अच्छ विद-

थानीव सत्पतिरस्तं राजेव सत्पतिः । हवामहे त्वा वयं प्रयस्वंतः सुते सचा । पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥ १ ॥ पिबा सोममिंद्र सुवानमद्रिभिः कोशेन सिक्तमवतं न वंसगस्तातृषाणो न वंसगः । मदाय हर्यताय ते तुविष्टमाय धायसे । आ त्वा यच्छंतु हरितो न सूर्यमहा विश्वेव सूर्यं ॥ २ ॥ अविंदद्दिवो निहितं गुहा निधिं वेर्न गर्भं परिवीतमश्मन्यनंते अंतरश्मनि । व्रजं वज्री गवामिव सिषासन्नंगिरस्तमः । अपावृणोदिष इंद्रः परीवृता द्वार इषः परीवृताः ॥ ३ ॥ दादृहाणो वज्रमिंद्रो गभस्त्योः क्षद्मेव तिग्ममसनाय सं श्यदहिहत्याय सं श्यत् । संविव्यान ओजसा शवोभिरिंद्र मज्मना । तष्टेव वृक्षं वनिनो नि वृश्चसि परश्वेव नि वृश्चसि ॥ ४ ॥ त्वं वृथा नद्य इंद्र सर्तवेऽच्छा समुद्रमसृजो रथाँ इव वाजयतो रथाँ इव । इत ऊतीरयुंजत समानमर्थमक्षितं । धेनूरिव मनवे विश्वदोहसो जनाय विश्वदोहसः ॥ ५ ॥ १८ ॥ इमां ते वाचं वसूयंत आयवो रथं न धीरः स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः । शुंभंतो जेन्यं यथा वाजेषु विप्र वाजिनं । अत्यमिव शवसे सातये धना विश्वा धनानि सातये ॥ ६ ॥ भिनत्पुरो नवतिमिंद्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो । अतिथिग्वाय शंबरं गिरेरुग्रो अवाभरत् । महो धनानि दयमान ओजसा विश्वा धनान्योजसा ॥ ७ ॥ इंद्रः समत्सु यजमानमार्यं प्रावद्विश्वेषु शतमूतिराजिषु स्वर्मीळ्हेष्वाजिषु । मनवे शासदव्रतान्त्वचं कृष्णामरंधयत् । दक्षन्न विश्वं ततृषाणमोषति न्यर्शसानमोषति ॥ ८ ॥ सूरश्चक्रं प्र

यानिऽइव सत्ऽपतिः अस्तं राजाऽइव सत्ऽपतिः हवामहे त्वा
वयं प्रयस्वंतः सुते सचा पुत्रासः न पितरं वाजऽसातये मंहिष्ठं
वाजऽसातये ॥१॥ पिब सोमं इंद्र सुवानं अद्रिऽभिः कोशेन
सिक्तं अवतं न वंसगः ततृषाणः न वंसगः मदाय हर्यताय ते
तुविःऽतमाय धायसे आ त्वा यच्छंतु हरितः न सूर्यं अहा विश्वा-
ऽइव सूर्यं ॥२॥ अविंदत् दिवः निऽहितं गुहा निऽधिं वेः न गर्भं
परिऽवीतं अश्मनि अनंते अंतः अश्मनि व्रजं वज्री गवांऽइव
सिसासन् अंगिरःऽतमः अप अवृणोत् इषः इंद्रः परिऽवृताः
द्वारः इषः परिऽवृताः ॥३॥ दृहहाणः वज्रं इंद्रः गभस्त्योः क्षद्मऽइव
तिग्मं असनाय सं श्यत् अहिऽहत्याय सं श्यत् संऽविव्यानः
ओजसा शवःऽभिः इंद्र मज्मना तष्टाऽइव वृक्षं वनिनः नि वृ-
श्चसि परश्वाऽइव नि वृश्चसि ॥४॥ त्वं वृथा नद्यः इंद्र सर्तवे अच्छ
समुद्रं असृजः रथान्ऽइव वाजऽयतः रथान्ऽइव इतः ऊतीः
अयुंजत समानं अर्थं अक्षितं धेनूःऽइव मनवे विश्वऽदोहसः
जनाय विश्वऽदोहसः ॥५॥१८॥ इमां ते वाचं वसुऽयंतः आयवः
रथं न धीरः सुऽअपाः अतक्षिषुः सुम्नाय त्वां अतक्षिषुः शुंभंतः
जेन्यं यथा वाजेषु विप्र वाजिनं अत्यंऽइव शवसे सातये धना
विश्वा धनानि सातये ॥६॥ भिनत् पुरः नवतिं इंद्र पूरवे दिवः-
ऽदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो अतिथि-
ऽग्वाय शंबरं गिरेः उग्रः अव अभरत् महः धनानि दयमानः
ओजसा विश्वा धनानि ओजसा ॥७॥ इंद्रः समत्ऽसु यजमानं
आर्यं प्र आवत् विश्वेषु शतऽऊतिः आजिषु स्वःऽमीळ्हेषु
आजिषु मनवे शासत् अव्रतान् त्वचं कृष्णां अरंधयत् धक्षत् न
विश्वं ततृषाणं ओषति नि अर्शसानं ओषति ॥८॥ सूरः चक्रं प्र

वृहज्जात ओजसा प्रपित्वे वाचमरुणो मुषायतीशान आ
मुषायति। उशना यत्परावतोऽजगन्नूतये कवे। सुम्नानि
विश्वा मनुषेव तुर्वणिरहा विश्वेव तुर्वणिः ॥ ९ ॥ स नो
नव्येभिर्वृषकर्मन्नुक्थैः पुरां दर्तः पायुभिः पाहि शग्मैः। दिवो-
दासेभिरिंद्र स्तवानो वावृधीथा अहोभिरिव द्यौः ॥ १० ॥ १९ ॥

---

॥ १३१ ॥ १–७ परुच्छेपो दैवोदासिः ॥ इंद्रः ॥ अत्यष्टिः ॥

॥ १३१ ॥ इंद्राय हि द्यौरसुरो अनम्नतेंद्राय मही पृथिवी
वरीमभिर्द्युम्नसाता वरीमभिः। इंद्रं विश्वे सजोषसो देवासो
दधिरे पुरः। इंद्राय विश्वा सवनानि मानुषा रातानि संतु
मानुषा ॥ १ ॥ विश्वेषु हि त्वा सवनेषु तुंजते समानमेकं
वृषमण्यवः पृथक् स्वः सनिष्यवः पृथक्। तं त्वा नावं न
पर्षणिं शूषस्य धुरि धीमहि। इंद्रं न यज्ञैश्चितयंत आयवः
स्तोमेभिरिंद्रमायवः ॥ २ ॥ वि त्वा ततस्रे मिथुना अवस्यवो
व्रजस्य साता गव्यस्य निःसृजः सक्षंत इंद्र निःसृजः। यद्गव्यंता
द्वा जना स्व१र्यंता समूहसि। आविष्करिक्रद्वृषणं सचाभुवं
वज्रमिंद्र सचाभुवं ॥ ३ ॥ विदुष्टे अस्य वीर्यस्य पूरवः पुरो
यदिंद्र शारदीरवातिरः सासहानो अवातिरः। शासस्तमिंद्र
मर्त्यमयज्युं शवसस्पते। महीममुष्णाः पृथिवीमिमा अपो
मंदसान इमा अपः ॥ ४ ॥ आदित्ते अस्य वीर्यस्य चर्किरन्मदेषु
वृषन्नुशिजो यदाविथ सखीयतो यदाविथ। चकर्थ कारमेभ्यः
पृतनासु प्रवंतवे। ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यंतः
सनिष्णत ॥ ५ ॥ उतो नो अस्या उषसो जुषेत ह्य१र्कस्य
बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः। यदिंद्र

बृहत् जातः ओजसा प्रऽपित्वे वाचं अरुणः मुषायति ईशानः आ मुषायति उशना यत् पराऽवतः अजगन् ऊतये कवे सुम्नानि विश्वा मनुषाऽइव तुर्वणिः अहा विश्वाऽइव तुर्वणिः ॥ ९ ॥ सः नः नव्येभिः वृषऽकर्मन् उक्थैः पुरां दर्तः॰ पायुऽभिः पाहि शग्मैः दिवःऽदासेभिः इंद्र स्तवानः ववृधीथाः अहोभिःऽइव द्यौः ॥ १० ॥ १९ ॥

---

॥ १३१ ॥ इंद्राय हि द्यौः असुरः अनम्नत इंद्राय मही पृथिवी वरीमऽभिः द्युम्नऽसाता वरीमऽभिः इंद्रं विश्वे सऽजोषसः देवासः दधिरे पुरः इंद्राय विश्वा सवनानि मानुषा रातानि संतु मानुषा ॥ १ ॥ विश्वेषु हि त्वा सवनेषु तुंजते समानं एकं वृषऽमन्यवः पृथक् स्वः॰ सनिष्यवः पृथक् तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि इंद्रं न यज्ञैः चितयंतः आयवः स्तोमेभिः इंद्रं आयवः ॥ २ ॥ वि त्वा ततस्रे मिथुनाः अवस्यवः व्रजस्य साता गव्यस्य निःऽसृजः सक्षंतः इंद्र निःऽसृजः यत् गव्यंता द्वा जना स्वः यंता संऽऊहसि आविः करिक्रत् वृषणं सचाऽभुवं वज्रं इंद्र सचाऽभुवं ॥ ३ ॥ विदुः ते अस्य वीर्यस्य पूरवः पुरः यत् इंद्र शारदीः अवऽअतिरः ससहानः अवऽअतिरः शासः तं इंद्र मर्त्यं अयज्युं शवसः पते महीं अमुष्णाः पृथिवीं इमाः अपः मंदसानः इमाः अपः ॥ ४ ॥ आत् इत् ते अस्य वीर्यस्य चर्किरन् मदेषु वृषन् उशिजः यत् आविथ सखिऽयतः यत् आविथ चकर्थ कारं एभ्यः पृतनासु प्रऽवंतवे ते अन्यांऽअन्यां नद्यं सनिष्णत श्रवस्यंतः सनिष्णत ॥ ५ ॥ उतो नः अस्याः उषसः जुषेत हि अर्कस्य बोधि हविषः हवीमऽभिः स्वःऽसाता हवीमऽभिः यत् इंद्र

हंतवे मृधो वृषा वज्रिञ्चिकेतसि । आ मे अस्य वेधसो नवी-
यसो मन्म श्रुधि नवीयसः ॥६॥ त्वं तमिंद्र वावृधानो अस्मयु-
रमित्रयंतं तुविजात मर्त्यं वज्रेण शूर मर्त्यं । जहि यो नो
अघायति शृणुष्व सुश्रवस्तमः । रिष्टं न यामन्नप भूतु दुर्म-
तिर्विश्वाप भूतु दुर्मतिः ॥ ७ ॥ २० ॥

---

॥१३२॥१-६ परुच्छेपो दैवोदासिः॥१-५. ६² इंद्रः। ६¹ इंद्रापर्वतौ॥ अत्यष्टिः॥

॥ १३२ ॥ त्वया वयं मघवन्पूर्व्ये धन इंद्रत्वोताः सासह्याम
पृतन्यतो वनुयाम वनुष्यतः । नेदिष्ठे अस्मिन्नहन्यधि वोचा
नु सुन्वते । अस्मिन्यज्ञे वि चयेमा भरे कृतं वाजयंतो भरे कृतं
॥१॥ स्वर्जेषे भर आप्रस्य वक्मन्युषर्बुधः स्वस्मिन्नंजसि क्राणस्य
स्वस्मिन्नंजसि । अहन्निंद्रो यथा विदे शीर्ष्णाशीर्ष्णोपवाच्यः ।
अस्मत्रा ते सध्र्यक्संतु रातयो भद्रा भद्रस्य रातयः ॥ २ ॥
तत्तु प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन्यज्ञे वारमकृण्वत क्षय-
मृतस्य वारसि क्षयं । वि तद्वोचेरध द्वितांतः पश्यंति
रश्मिभिः । स घा विदे अन्विंद्रो गवेषणो बंधुक्षिद्भ्यो गवे-
षणः ॥ ३ ॥ नू इत्था ते पूर्वथा च प्रवाच्यं यदंगिरोभ्यो-
ऽवृणोरप व्रजमिंद्र शिक्षन्नप व्रजं । ऐभ्यः समान्या दिशा-
स्मभ्यं जेषि योत्सि च । सुन्वद्भ्यो रंधया कं चिदव्रतं हृणायंतं
चिदव्रतं ॥४॥ सं यज्जनान्क्रतुभिः शूर ईक्षयद्धने हिते तरु-
षंत श्रवस्यवः प्र यक्षंत श्रवस्यवः । तस्मा आयुः प्रजावदिद्बाधे
अर्चंत्योजसा । इंद्र ओक्यं दिधिषंत धीतयो देवाँ अच्छा न
धीतयः ॥५॥ युवं तमिंद्रापर्वता पुरोयुधा यो नः पृतन्यादप
तंतमिद्धतं वज्रेण तंतमिद्धतं । दूरे चत्ताय छंत्सद्गहनं यदि-

हंतवे मृधः वृषा वज्रिन् चिकेतसि आ मे अस्य वेधसः नवीयसः मन्म श्रुधि नवीयसः ॥ ६ ॥ त्वं तं इंद्र ववृधानः अस्मऽयुः अमित्रऽयंतं तुविऽजात मर्त्यं वज्रेण शूर मर्त्यं जहि यः नः अघऽयति शृणुष्व सुश्रवःऽतमः रिष्टं न यामन् अप भूतु दुःऽमतिः विश्वा अप भूतु दुःऽमतिः ॥ ७ ॥ २० ॥

---

॥ १३२ ॥ त्वया वयं मघऽवन् पूर्व्ये धने इंद्रत्वाऽऊताः सस्ह्याम पृतन्यतः वनुयाम वनुष्यतः नेदिष्ठे अस्मिन् अहनि अधि वोच नु सुन्वते अस्मिन् यज्ञे वि चयेम भरे कृतं वाजऽयंतः भरे कृतं ॥१॥ स्वःऽजेषे भरे आप्रस्य वक्मनि उषःऽबुधः स्वस्मिन् अंजसि क्राणस्य स्वस्मिन् अंजसि अहन् इंद्रः यथा विदे शीर्ष्णाऽशीर्ष्णा उपऽवाच्यः अस्मऽत्रा ते सध्र्यक् संतु रातयः भद्राः भद्रस्य रातयः ॥२॥ तत् तु प्रयः प्रत्नऽथा ते शुशुक्वनं यस्मिन् यज्ञे वारं अकृण्वत क्षयं ऋतस्य वाः असि क्षयं वि तत् वोचेः अध द्विता अंतः पश्यंति रश्मिऽभिः सः घ विदे अनु इंद्रः गोऽएषणः बंधुक्षित्ऽभ्यः गोऽएषणः ॥३॥ नु इत्था ते पूर्वऽथा च प्रऽवाच्यं यत् अंगिरःऽभ्यः अवृणोः अप व्रजं इंद्र शिक्षन् अप व्रजं आ एभ्यः समान्या दिशा अस्मभ्यं जेषि योत्सि च सुन्वत्ऽभ्यः रंधय कं चित् अव्रतं हृणायंतं चित् अव्रतं ॥४॥ सं यत् जनान् क्रतुऽभिः शूरः ईक्षयत् धने हिते तरुषंत श्रवस्यवः प्र यक्षंत श्रवस्यवः तस्मै आयुः प्रजाऽवत् इत् बाधे अर्चंति ओजसा इंद्रे ओक्यं दिधिषंत धीतयः देवान् अच्छ न धीतयः ॥५॥ युवं तं इंद्रापर्वता पुरःऽयुधा यः नः पृतन्यात् अप तंऽतं इत् हतं वज्रेण तंऽतं इत् हतं दूरे चत्ताय छंत्सत् गहनं यत्

नंक्षत्। अस्माकं शत्रून्परिं शूर विश्वतों दुर्मा दर्षीष्ट विश्वतः ॥ ६ ॥ २१ ॥

---

॥ १३३ ॥ १-७ परुच्छेपो दैवोदासिः ॥ इंद्रः ॥ १ त्रिष्टुप्। २-४ अनुष्टुप्। ५ गायत्री। ६ धृतिः। ७ अत्यष्टिः ॥

॥१३३॥ उभे पुंनामि रोदसी ऋतेन् द्रुहों दहामि सं महीरंनिंद्राः। अभिव्लग्य् यत्रं हता अमित्रां वैलस्थानं परिं तृळ्हा अशेरन्॥१॥ अभिव्लग्या चिदद्रिवः शीर्षा यातुमतीनां। छिंधि वटूरिणा पदा महावटूरिणा पदा॥२॥ अवासां मघवञ्जहि शर्धों यातुमतीनां। वैलस्थानके अर्मके महावैलस्थे अर्मके ॥३॥ यासां तिस्रः पंचाशतोऽभिव्लंगैरपावंपः। तत्सु ते मनायति तकत्सु ते मनायति ॥४॥ पिशंगभृष्टिमंभृणं पिशाचिमिंद्र सं मृण। सर्वं रक्षो नि बर्हय॥५॥ अवर्मह इंद्र दादृहि श्रुधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो घृणान्न भीषाँ अद्रिवः। शुष्मिंतमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे। अपूरुषघ्नो अप्रतीत शूर सत्वंभिस्त्रिसप्तैः शूर सत्वंभिः ॥ ६ ॥ वनोति हि सुन्वन्क्षयं परीणसः सुन्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः। सुन्वान इत्सिषासति सहस्रा वाज्यवृतः। सुन्वानायेंद्रों ददात्याभुवं रयिं ददात्याभुवं ॥ ७ ॥ २२ ॥ १९ ॥

---

॥ १३४ ॥ १-६ परुच्छेपो दैवोदासिः ॥ वायुः ॥ १-५ अत्यष्टिः। ६ अष्टिः ॥

॥१३४॥ आ त्वा जुवों रारहाणा अभि प्रयो वायो वहंत्विह पूर्वपीतये सोमस्य पूर्वपीतये। ऊर्ध्वा ते अनु सूनृता मनस्तिष्ठतु जानती। नियुत्वंता रथेना याहि दावने वायो मखस्य दावने ॥ १ ॥ मंदंतु त्वा मंदिनो वायविंदवोऽस्मत्क्राणासः सुकृता अभिद्यवो गोभिः क्राणा अभिद्यवः। यद्ध क्राणा

इनक्षत् अस्माकं शत्रून् परि शूर विश्वतः दर्मा दर्षीष्ट विश्वतः ॥६॥२१॥

---

॥१३३॥ उभे पुनामि रोदसी ऋतेन द्रुहः दहामि सं महीः अनिंद्राः अभिऽवल्ग्य यत्र हताः अमित्राः वैलऽस्थानं परि तृळ्हाः अशेरन् ॥१॥ अभिऽवल्ग्य चित् अद्रिऽवः शीर्षा यातुऽमतीनां छिंधि वटूरिणा पदा महाऽवटूरिणा पदा ॥२॥ अव आसां मघऽवन् जहि शर्धः यातुऽमतीनां वैलऽस्थानके अर्मके महाऽवैलस्थे अर्मके ॥३॥ यासां तिस्रः पंचाशतः अभिऽव्लंगैः अपऽअवपः तत् सु ते मनायति तकत् सु ते मनायति ॥४॥ पिशंगऽभृष्टिं अंभृणं पिशाचिं इंद्र सं मृण सर्वं रक्षः नि बर्हय ॥५॥ अवः महः इंद्र दृहहि शुधि नः शुशोच हि द्यौः क्षाः न भीषा अद्रिऽवः घृणात् न भीषा अद्रिऽवः शुष्मिन्ऽतमः हि शुष्मिऽभिः वधैः उग्रेभिः ईयसे अपुरुषऽघ्नः अप्रतिऽइत शूर सत्वऽभिः त्रिऽसप्तैः शूर सत्वऽभिः ॥६॥ वनोति हि सुन्वन् क्षयं परीणसः सुन्वानः हि स्म यजति अव द्विषः देवानां अव द्विषः सुन्वानः इत् सिसासति सहस्रा वाजी अवृतः सुन्वानाय इंद्रः ददाति आऽभुवं रयिं ददाति आऽभुवं ॥७॥२२॥१९॥

---

॥१३४॥ आ त्वा जुवः ररहाणाः अभि प्रयः वायो वहंतु इह पूर्वऽपीतये सोमस्य पूर्वऽपीतये ऊर्ध्वा ते अनु सूनृता मनः तिष्ठतु जानती नियुत्वता रथेन आ याहि दावने वायो मखस्य दावने ॥१॥ मंदंतु त्वा मंदिनः वायो इंदवः अस्मत् क्राणासः सुऽकृताः अभिऽद्यवः गोभिः क्राणाः अभिऽद्यवः यत् ह क्राणाः

इरध्यै दक्षं सचंत ऊतयः। सध्रीचीना नियुतो दावने धिय उप ब्रुवत ईं धियः ॥२॥ वायुर्युंक्ते रोहिता वायुररुणा वायू रथे अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे। प्र बोधया पुरंधिं जार आ ससतीमिव। प्र चक्षय रोदसी वासयोषसः श्रवसे वासयोषसः ॥३॥ तुभ्यमुषासः शुचयः परावति भद्रा वस्त्रा तन्वते दंसु रश्मिषु चित्रा नव्येषु रश्मिषु। तुभ्यं धेनुः सबर्दुघा विश्वा वसूनि दोहते। अजनयो मरुतो वक्षणाभ्यो दिव आ वक्षणाभ्यः॥४॥ तुभ्यं शुक्रासः शुचयस्तुरण्यवो मदेषूग्रा इषणंत भुर्वण्यपामिषंत भुर्वणि। त्वां त्सारी दसमानो भगमीट्टे तक्ववीये। त्वं विश्वस्माद्भुवनात्पासि धर्मणासुर्यात्पासि धर्मणा ॥५॥ त्वं नो वायवेषामपूर्व्यः सोमानां प्रथमः पीतिमर्हसि सुतानां पीतिमर्हसि। उतो विहुत्मतीनां विशां ववर्जुषीणां। विश्वा इत्ते धेनवो दुह्र आशिरं घृतं दुह्रत आशिरं ॥६॥२३॥

---

॥१३५॥ १-९ परुच्छेपो दैवोदासिः ॥ १-३. ९ वायुः । ४-८ इंद्रः ॥
१-६. ९ अत्यष्टिः । ७. ८ अष्टिः ॥

॥१३५॥ स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते शतिनीभिर्नियुत्वते। तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे। प्र ते सुतासो मधुमंतो अस्थिरन्मदाय क्रत्वे अस्थिरन् ॥१॥ तुभ्यायं सोमः परिपूतो अद्रिभिः स्पार्हा वसानः परि कोशमर्षति शुक्रा वसानो अर्षति। तवायं भाग आयुषु सोमो देवेषु हूयते। वह वायो नियुतो याह्यस्मयुर्जुषाणो याह्यस्मयुः ॥२॥ आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि वीतये वायो हव्यानि वीतये। तवायं भाग ऋत्वियः सरश्मिः सूर्ये सचा। अध्वर्युभिर्भरमाणा-

इन्द्रवायू इति पदं सचन्ते ऊतयः सध्रीचीनाः निऽयुतः दावने धियः उप ब्रुवते ईं धियः ॥२॥ वायुः युङ्क्ते रोहिता वायुः अरुणा वायुः रथे अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे प्र बोधय पुरम्ऽधिं जारः आ ससतींऽइव प्र चक्षय रोदसी इति वासय उषसः श्रवसे वासय उषसः ॥३॥ तुभ्यं उषसः शुचयः पराऽवति भद्रा वस्त्रा तन्वते दंऽसु रश्मिषु चित्रा नव्येषु रश्मिषु तुभ्यं धेनुः सबःऽदुघा विश्वा वसूनि दोहते अजनयः मरुतः वक्षणाभ्यः दिवः आ वक्षणाभ्यः ॥४॥ तुभ्यं शुक्रासः शुचयः तुरण्यवः मदेषु उग्राः इषणन्त भुर्वणि अपां इषन्त भुर्वणि त्वां त्सारी दसमानः भगं ईट्टे तक्वऽवीये त्वं विश्वस्मात् भुवनात् पासि धर्मणा असुर्यात् पासि धर्मणा ॥५॥ त्वं नः वायो इति एषां अपूर्व्यः सोमानां प्रथमः पीतिं अर्हसि सुतानां पीतिं अर्हसि उतो इति विहुत्मतीनां विशां ववर्जुषीणां विश्वाः इत् ते धेनवः दुह्रे आऽशिरं घृतं दुह्रते आऽशिरं ॥६॥२३॥

---

॥१३५॥ स्तीर्णं बर्हिः उप नः याहि वीतये सहस्रेण निऽयुता नियुत्वते शतिनीभिः नियुत्वते तुभ्यं हि पूर्वऽपीतये देवाः देवाय येमिरे प्र ते सुतासः मधुऽमन्तः अस्थिरन् मदाय क्रत्वे अस्थिरन् ॥१॥ तुभ्यं अयं सोमः परिऽपूतः अद्रिऽभिः स्पार्हा वसानः परि कोशं अर्षति शुक्रा वसानः अर्षति तव अयं भागः आयुषु सोमः देवेषु हूयते वह वायो इति निऽयुतः याहि अस्मऽयुः जुषाणः याहि अस्मऽयुः ॥२॥ आ नः नियुत्ऽभिः शतिनीभिः अध्वरं सहस्रिणीभिः उप याहि वीतये वायो इति हव्यानि वीतये तव अयं भागः ऋत्वियः सऽरश्मिः सूर्ये सचा अध्वर्युऽभिः भरमा-

णा अयंसत वायो शुक्रा अयंसत॥३॥ आ वां रथो नियुत्वा-न्वक्षदवसेऽभि प्रयांसि सुधितानि वीतये वायो हव्यानि वीतये। पिबतं मध्वो अंधसः पूर्वपेयं हि वां हितं। वायवा चंद्रेण राधसा गतमिंद्रश्च राधसा गतं॥४॥ आ वां धियो ववृत्युरध्वराँ उपेममिंदुं मर्मृजंत वाजिनमाशुमत्यं न वाजिनं। तेषां पिबतमस्मयू आ नो गंतमिहोत्या। इंद्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवं॥५॥२४॥ इमे वां सोमा अप्स्वा सुता इहाध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत। एते वामभ्यसृक्षत तिरः पवित्रमाशवः। युवायवोऽति रोमाण्यव्यया सोमासो अत्यव्यया॥६॥ अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र गच्छतं गृहमिंद्रश्च गच्छतं। वि सूनृता ददृशे रीयते घृतमा पूर्णया नियुता याथो अध्वरमिंद्रश्च याथो अध्वरं॥७॥ अत्राह तद्वहेथे मध्व आहुतिं यमश्वत्थमुपतिष्ठंत जायवोऽस्मे ते संतु जायवः। साकं गावः सुवते पच्यते यवो न ते वाय उप दस्यंति धेनवो नाप दस्यंति धेनवः॥८॥ इमे ये ते सु वायो बाह्वोजसोऽतर्नदी ते पतयंत्युक्षणो महि व्राधंत उक्षणः। धन्वञ्चिद्ये अनाशवो जीराश्चिदगिरौकसः। सूर्यस्येव रश्मयो दुर्नियंतवो हस्तयोर्दुर्नियंतवः॥९॥२५॥

॥१३६॥ १–७ परुच्छेपो दैवोदासिः॥ १–५ मित्रावरुणौ। ६, ७ लिंगोक्तदेवताः॥ १–६ अत्यष्टिः। ७ त्रिष्टुप्॥

॥१३६॥ प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां स्वादिष्ठं मृळयद्भ्यां। ता सम्राजा घृतासुती यज्ञेयज्ञ उपस्तुता। अथैनोः क्षत्रं न कुतश्चनाधृषे देवत्वं नू चिदाधृषे॥१॥ अदर्शि गातुरुरवे वरीयसी पंथा

णाः अयंसत वायो शुक्राः अयंसत॥३॥ आ वां रथः नियुत्वान् वक्षत् अवसे अभि प्रयांसि सुऽधितानि वीतये वायो हव्यानि वीतये पिबतं मध्वः अंधसः पूर्वऽपेयं हि वां हितं वायो आ चंद्रेण राधसा आ गतं इंद्रः च राधसा आ गतं ॥ ४ ॥ आ वां धियः ववृत्युः अध्वरान् उप इमं इंदुं मर्मृजंत वाजिनं आशुं अत्यं न वाजिनं तेषां पिबतं अस्मऽयू आ नः गंतं इह ऊत्या इंद्रवायू सुतानां अद्रिऽभिः युवं मदाय वाजऽदा युवं॥५॥२४॥ इमे वां सोमाः अप्ऽसु आ सुताः इह अध्वर्युऽभिः भरमाणाः अयंसत वायो शुक्राः अयंसत एते वां अभि असृक्षत तिरः पवित्रं आशवः युवाऽयवः अति रोमाणि अव्यया सोमासः अति अव्यया॥६॥ अति वायो ससतः याहि शश्वतः यत्र ग्रावा वदति तत्र गच्छतं गृहं इंद्रः च गच्छतं वि सूनृता ददृशे रीयते घृतं आ पूर्णया निऽयुता याथः अध्वरं इंद्रः च याथः अध्वरं॥७॥ अत्र अह तत् वहेथे मध्वः आऽहुतिं यं अश्वत्थं उपऽतिष्ठंत जायवः अस्मे ते संतु जायवः साकं गावः सुवते पच्यते यवः न ते वायो उप दस्यंति धेनवः न अप दस्यंति धेनवः॥८॥ इमे ये ते सु वायो बाहुऽओजसः अंतः नदी ते पतयंति उक्षणः महि व्राधंतः उक्षणः धन्वन् चित् ये अनाशवः जीराः चित् अगिराऽओकसः सूर्यस्यऽइव रश्मयः दुःऽनियंतवः हस्तयोः दुःऽनियंतवः॥९॥२५॥

---

॥१३६॥ प्र सु ज्येष्ठं निऽचिराभ्यां बृहत् नमः हव्यं मतिं भरत मृळयत्ऽभ्यां स्वादिष्ठं मृळयत्ऽभ्यां ता संऽराजा घृतऽआसुती यज्ञेऽयज्ञे उपऽस्तुता अथ एनोः क्षत्रं न कुतः चन आऽधृषे देवऽत्वं नु चित् आऽधृषे॥१॥ अदर्शि गातुः उरवे वरीयसी पंथाः

ऋतस्य समयंस्त रश्मिभिश्चक्षुर्भगस्य रश्मिभिः। द्युक्षं मित्रस्य सादनमर्यम्णो वरुणस्य च। अथा दधाते बृहदुक्थ्यं वय उपस्तुत्यं बृहद्वयः ॥ २ ॥ ज्योतिष्मतीमदितिं धारयत्क्षितिं स्वर्वतीमा सचेते दिवेदिवे जागृवांसा दिवेदिवे। ज्योतिष्मत्क्षत्रमाशाते आदित्या दानुनस्पती। मित्रस्तयोर्वरुणो यातयज्जनोऽर्यमा यातयज्जनः ॥ ३ ॥ अयं मित्राय वरुणाय शंतमः सोमो भूत्ववपानेष्वाभगो देवो देवेष्वाभगः। तं देवासो जुषेरत विश्वे अद्य सजोषसः। तथा राजाना करथो यदीमह ऋतावाना यदीमहे ॥ ४ ॥ यो मित्राय वरुणायाविधज्जनोऽनर्वाणं तं परि पातो अंहसो दाश्वांसं मर्तमंहसः। तमर्यमाभि रक्षत्यृजूयंतमनु व्रतं। उक्थैर्य एनोः परिभूषति व्रतं स्तोमैराभूषति व्रतं ॥ ५ ॥ नमो दिवे बृहते रोदसीभ्यां मित्राय वोचं वरुणाय मीळ्हुषे सुमृळीकाय मीळ्हुषे। इंद्रमग्निमुप स्तुहि द्युक्षमर्यमणं भगं। ज्योग्जीवंतः प्रजया सचेमहि सोमस्योती सचेमहि ॥ ६ ॥ ऊती देवानां वयमिंद्रवंतो मंसीमहि स्वयशसो मरुद्भिः। अग्निर्मित्रो वरुणः शर्म संसन् तदश्याम मघवानो वयं च ॥ ७ ॥ २६ ॥ १ ॥

॥१३७॥ १–३ परुच्छेपो दैवोदासिः ॥ मित्रावरुणौ ॥ अतिशक्वरी ॥

॥ १३७ ॥ सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे। आ राजाना दिविस्पृशास्मत्रा गंतमुप नः। इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः ॥ १ ॥ इम आ यातमिंदवः सोमासो दध्याशिरः सुतासो दध्याशिरः। उत वामुषसो बुधि साकं सूर्यस्य रश्मि-

ऋतस्यं सं अयंस्त रश्मिऽभिः चक्षुः भगस्य रश्मिऽभिः द्युक्षं
मित्रस्यं सदनं अर्यम्णः वरुणस्य च अथ दधाते बृहत् उक्थ्यं
वयः उपऽस्तुत्यं बृहत् वयः॥२॥ ज्योतिष्मतीं अदितिं धारयत्-
ऽक्षितिं स्वःऽवतीं आ सचेते दिवेऽदिवे जागृऽवांसा दिवे-
ऽदिवे ज्योतिष्मत् क्षत्रं आशाते आदित्या दानुनः पती मित्रः
तयोः वरुणः यातयत्ऽजनः अर्यमा यातयत्ऽजनः॥३॥ अयं
मित्राय वरुणाय शंऽतमः सोमः भूतु अवऽपानेषु आऽभगः
देवः देवेषु आऽभगः तं देवासः जुषेरत विश्वे अद्य सऽजोषसः
तथा राजाना करथः यत् ईमहे ऋतऽवाना यत् ईमहे॥४॥ यः
मित्राय वरुणाय अविधत् जनः अनर्वाणं तं परि पातः अंहसः
दाश्वांसं मर्तं अंहसः तं अर्यमा अभि रक्षति ऋजुऽयंतं अनु व्रतं
उक्थैः यः एनोः परिऽभूषति व्रतं स्तोमैः आऽभूषति व्रतं॥५॥
नमः दिवे बृहते रोदसीभ्यां मित्राय वोचं वरुणाय मीळ्हुषे सु-
ऽमृळीकाय मीळ्हुषे इंद्रं अग्निं उप स्तुहि द्युक्षं अर्यमणं भगं
ज्योक् जीवंतः प्रऽजया सचेमहि सोमस्य ऊती सचेमहि॥६॥
ऊती देवानां वयं इंद्रऽवंतः मंसीमहि स्वऽयशसः मरुत्ऽभिः
अग्निः मित्रः वरुणः शर्म यंसन् तत् अश्याम मघऽवानः वयं
च॥७॥२६॥१॥

---

॥१३७॥ सुसुम आ यातं अद्रिऽभिः गोऽश्रीताः मत्सराः इमे
सोमासः मत्सराः इमे आ राजाना दिविऽस्पृशा अस्मऽत्रा गंतं
उप नः इमे वां मित्रावरुणा गोऽआशिरः सोमाः शुक्राः गो-
ऽआशिरः॥१॥ इमे आ यातं इंदवः सोमासः दधिऽआशिरः सु-
तासः दधिऽआशिरः उत वां उषसः बुधि साकं सूर्यस्य रश्मि-

भिः । सुतो मित्राय वरुणाय पीतये चारुर्ऋताय पीतये ॥२॥
तां वां धेनुं न वासरीमंशुं दुहंत्यद्रिभिः सोमं दुहंत्यद्रिभिः ।
अस्मत्रा गंतमुप नोऽर्वाचा सोमपीतये । अयं वां मित्रा-
वरुणा नृभिः सुतः सोम आ पीतये सुतः ॥ ३ ॥ १ ॥

॥ १३८ ॥ १-४ परुच्छेपो दैवोदासिः ॥ पूषा ॥ अत्यष्टिः ॥

॥१३८॥ प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो
न तंदते स्तोत्रमस्य न तंदते । अर्चामि सुम्नयन्नहमंत्यूतिं
मयोभुवं । विश्वस्य यो मन आयुयुवे मखो देव आयुयुवे मखः
॥१॥ प्र हि त्वा पूषन्नजिरं न यामनि स्तोमेभिः कृण्व ऋणवो
यथा मृध उष्ट्रो न पीपरो मृधः । हुवे यत्त्वा मयोभुवं देवं
सख्याय मर्त्यः । अस्माकमांगूषान्द्युम्निनस्कृधि वाजेषु द्युम्नि-
नस्कृधि ॥२॥ यस्य ते पूषन्त्सख्ये विपन्यवः क्रत्वा चित्संतोऽवसा
बुभुज्रिर इति क्रत्वा बुभुज्रिरे । तामनु त्वा नवीयसीं नियुतं राय
ईमहे । अहेळमान उरुशंस सरी भव वाजेवाजे सरी भव ॥३॥
अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व
श्रवस्यतामजाश्व । ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधु-
भिः । नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥४॥२॥

॥ १३९ ॥ १-११ परुच्छेपो दैवोदासिः ॥ १ विश्वे देवाः । २ मित्रावरुणौ । ३-५ अश्विनौ । ६ इंद्रः । ७ अग्निः । ८ मरुतः । ९ इंद्राग्नी । १० बृहस्पतिः । ११ विश्वे देवाः ॥ १-४. ६-१० अत्यष्टिः । ५ बृहती । ११ त्रिष्टुप् ॥

॥१३९॥ अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो
दिव्यं वृणीमह इंद्रवायू वृणीमहे । यद्ध क्राणा विवस्वति
नाभा संदायि नव्यसी । अध प्र सू न उप यंतु धीतयो देवाँ
अच्छा न धीतयः ॥ १ ॥ यद्ध त्यन्मित्रावरुणावृतादध्या-

ऽभिः सुतः मित्राय वरुणाय पीतये चारुः ऋताय पीतये ॥ २ ॥ तां वां धेनुं न वासरीं अंशुं दुहंति अद्रिऽभिः सोमं दुहंति अद्रिऽभिः अस्मऽत्रा गंतं उप नः अर्वाचा सोमऽपीतये अयं वां मित्रावरुणा नृऽभिः सुतः सोमः आ पीतये सुतः ॥ ३ ॥ १ ॥

---

॥ १३८ ॥ प्रऽप्रं पूष्णः तुविऽजातस्य शस्यते महिऽत्वं अस्य तवसः न तंदते स्तोत्रं अस्य न तंदते अर्चामि सुम्नऽयन् अहं ऊतिऽऊतिं मयःऽभुवं विश्वस्य यः मनः आऽयुयुवे मखः देवः आऽयुयुवे मखः ॥ १ ॥ प्र हि त्वा पूषन् अजिरं न यामनि स्तोमेभिः कृण्वे ऋणवः यथा मृधः उष्ट्रः न पीपरः मृधः हुवे यत् त्वा मयःऽभुवं देवं सख्याय मर्त्यः अस्माकं आंगूषान् द्युम्निनः कृधि वाजेषु द्युम्निनः कृधि ॥ २ ॥ यस्य ते पूषन् सख्ये विपन्यवः क्रत्वा चित् संतः अवसा बुभुज्रिरे इति क्रत्वा बुभुज्रिरे तां अनु त्वा नवीयसीं निऽयुतं रायः ईमहे अहेळमानः उरुऽशंस सरी भव वाजेऽवाजे सरी भव ॥ ३ ॥ अस्याः ऊं सु नः उप सातये भुवः अहेळमानः ररिऽवान् अजऽअश्व श्रवस्यतां अजऽअश्व ओ सु त्वा ववृतीमहि स्तोमेभिः दस्म साधुऽभिः नहि त्वा पूषन् अतिऽमन्ये आघृणे न ते सख्यं अपऽह्नुवे ॥ ४ ॥ २ ॥

---

॥ १३९ ॥ अस्तु श्रौषट् पुरः अग्निं धिया दधे आ नु तत् शर्धः दिव्यं वृणीमहे इंद्रवायू वृणीमहे यत् ह क्राणा विवस्वति नाभा संऽदायि नव्यसी अध प्र सु नः उप यंतु धीतयः देवान् अच्छ न धीतयः ॥ १ ॥ यत् ह त्यत् मित्रावरुणौ ऋतात् अधि

ददाथे अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना । युवो-रित्थाधि सद्मस्वपश्याम हिरण्ययं । धीभिश्चन मनसा स्वेभिरक्षभिः सोमस्य स्वेभिरक्षभिः ॥ २ ॥ युवां स्तो-मेभिर्देवयंतो अश्विनाश्रावयंत इव श्लोकमायवो युवां हव्याभ्या३यवः । युवोर्विश्वा अधि श्रियः पृक्षश्च विश्व-वेदसा । प्रुषायंते वां पवयो हिरण्यये रथे दस्रा हिरण्यये ॥३॥ अचेति दस्रा व्यु१नाकमृण्वथो युंजते वां रथयुजो दि-विष्टिष्वध्वस्मानो दिविष्टिषु । अधि वां स्थाम वंधुरे रथे दस्रा हिरण्यये । पथेव यंतावनुशासता रजोऽंजसा शासता रजः ॥४॥ शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतं । मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥ ५ ॥ ३ ॥ वृषन्निंद्र वृषपाणास इंदव इमे सुता अद्रिषुतास उद्भि-दस्तुभ्यं सुतास उद्भिदः । ते त्वा मंदंतु दावने महे चित्राय राधसे । गीर्भिर्गिर्वाहः स्तवमान आ गहि सुमृळीको न आ गहि ॥६॥ ओ षू णो अग्ने शृणुहि त्वमीळितो देवेभ्यो ब्रवसि यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः । यद्ध त्यामंगिरोभ्यो धेनुं देवा अदत्तन । वि तां दुह्रे अर्यमा कर्तरी सचाँ एष तां वेद मे सचा ॥ ७ ॥ मो षु वो अस्मदभि तानि पौंस्या सना भूवन्द्युम्नानि मोत जारिषुरस्मत्पुरोत जारिषुः । यद्वश्चित्रं युगेयुगे नव्यं घोषादमर्त्यं । अस्मासु तन्मरुतो यच्च दुष्टरं दिधृता यच्च दुष्टरं ॥ ८ ॥ दध्यङ् ह मे जनुषं पूर्वो अंगिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे पूर्वे मनुर्विदुः । तेषां देवेष्वा-यतिरस्माकं तेषु नाभयः । तेषां पदेन मह्या नमे गिरें-द्राग्नी आ नमे गिरा ॥ ९ ॥ होता यक्षद्वनिनो वंत वार्यं बृ-

आऽददाथे॰ अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना युवोः
इत्था अधि सद्मऽसु अपश्याम हिरण्ययं धीभिः चन मनसा
स्वेभिः अक्षऽभिः सोमस्य स्वेभिः अक्षऽभिः ॥२॥ युवां स्तो-
मेभिः देवऽयंतः अश्विना आश्रवयंतःऽइव श्लोकं आयवः युवां
हव्या अभि आयवः युवोः विश्वाः अधि श्रियः पृक्षः च विश्व-
ऽवेदसा प्रुषायंते वां पवयः हिरण्यये रथे दस्रा हिरण्यये ॥३॥
अचेति दस्रा वि ऊं नाकं ऋण्वथः युंजते वां रथऽयुजः दिवि-
ष्टिषु अध्वस्मानः दिविष्टिषु अधि वां स्थाम वंधुरे रथे दस्रा
हिरण्यये पथाऽइव यंतौ अनुऽशासता रजः अंजसा शासता
रजः ॥४॥ शचीभिः नः शचीऽवसू॰ दिवा नक्तं दशस्यतं मा वां
रातिः उप दसत् कदा चन अस्मत् रातिः कदा चन ॥५॥३॥
वृषन् इंद्र वृषऽपानासः इंदवः इमे सुताः अद्रिऽसुतासः उत्-
ऽभिदः तुभ्यं सुतासः उत्ऽभिदः ते त्वा मंदंतु दावने महे चित्राय
राधसे गीःऽभिः गिर्वाहः स्तवमानः आ गहि सुऽमृळीकः नः
आ गहि ॥६॥ ओ सु नः अग्ने शृणुहि त्वं ईळितः देवेभ्यः ब्रवसि
यज्ञियेभ्यः राजऽभ्यः यज्ञियेभ्यः यत् ह त्यां अंगिरःऽभ्यः धेनुं देवाः
अदत्तन वि तां दुह्रे अर्यमा कर्तरि सचा एषः तां वेद मे सचा ॥७॥
मो सु वः अस्मत् अभि तानि पौंस्या सना भूवन् द्युम्नानि मा
उत जारिषुः अस्मत् पुरा उत जारिषुः यत् वः चित्रं युगेऽयुगे
नव्यं घोषात् अमर्त्यं अस्मासु तत् मरुतः यत् च दुस्तरं दिधृत
यत् च दुस्तरं ॥८॥ दध्यङ् ह मे जनुषं पूर्वः अंगिराः प्रियऽमेधः
कण्वः अत्रिः मनुः विदुः ते मे पूर्वे मनुः विदुः तेषां देवेषु आ-
ऽयतिः अस्माकं तेषु नाभयः तेषां पदेन महि आ नमे गिरा
इंद्राग्नी आ नमे गिरा ॥९॥ होता यक्षत् वनिनः वंत वार्यं बृ-

हस्पतिर्यजति वेन उक्षभिः पुरुवारेभिरुक्षभिः । जगृभ्मा दूरआदिशं श्लोकमद्रेरध त्मना । अधारयदररिंदानि सुक्रतुः पुरू सद्मानि सुक्रतुः ॥१०॥ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वं ॥११॥४॥२०॥

---

॥१४०॥ १–१३ दीर्घतमा औचथ्यः ॥ अग्निः ॥ १–९, ११ जगती । १० त्रिष्टुब् जगती वा । १२, १३ त्रिष्टुप् ॥

॥१४०॥ वेदिषदे प्रियधामाय सुद्युते धासिमिव प्र भरा योनिमग्नये । वस्त्रेणेव वासया मन्मना शुचिं ज्योतीरथं शुक्रवर्णं तमोहनं ॥१॥ अभि द्विजन्मा त्रिवृदन्नमृज्यते संवत्सरे वावृधे जग्धमी पुनः । अन्यस्यासा जिह्वया जेन्यो वृषा न्य१न्येन वनिनो मृष्ट वारणः ॥२॥ कृष्णप्रुतौ वेविजे अस्य सक्षिता उभा तरेते अभि मातरा शिशुं । प्राचाजिह्वं ध्वसयंतं तृषुच्युतमा साच्यं कुपयं वर्धनं पितुः ॥३॥ मुमुक्ष्वो३ मनवे मानवस्यते रघुद्रुवः कृष्णसीतास ऊ जुवः । असमना अजिरासो रघुष्यदो वातजूता उप युज्यंत आशवः ॥४॥ आदस्य ते ध्वसयंतो वृथेरते कृष्णमभ्वं महि वर्पः करिक्रतः । यत्सीं महीमवनिं प्राभि मर्मृशदभिश्वसन्स्तनयन्नेति नानदत् ॥५॥५॥ भूषन्न योऽधि बभ्रूषु नम्नते वृषेव पत्नीरभ्येति रोरुवत् । ओजायमानस्तन्वश्च शुंभते भीमो न शृंगा दविधाव दुर्गृभिः ॥६॥ स संस्तिरो विष्टिरः सं गृभायति जानन्नेव जानतीर्नित्य आ शये । पुनर्वर्धंते अपि यंति देव्यमन्यद्वर्पः पित्रोः कृण्वते सचा ॥७॥ तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्ममुषीः प्रायवे पुनः । तासां जरां प्रमुंचन्नेति नानदद्सुं परं जनयञ्जीवमस्तृतं ॥८॥ अधी-

हस्पतिः यजति वेनः उक्षऽभिः पुरुऽवारेभिः उक्षऽभिः जगृभ्म
दूरेऽआदिशं श्लोकं अद्रेः अध त्मना अधारयत् अररिंदानि सु-
ऽक्रतुः पुरु सद्मानि सुऽक्रतुः ॥१०॥ ये देवासः दिवि एकादश
स्थ पृथिव्यां अधि एकादश स्थ अप्सुऽक्षितः महिना एकादश
स्थ ते देवासः यज्ञं इमं जुषध्वं ॥ ११ ॥ ४ ॥ २० ॥

---

॥ १४० ॥ वेदिऽसदे प्रियऽधामाय सुऽद्युते धासिंऽइव प्र भर
योनिं अग्नये वस्त्रेणऽइव वासय मन्मना शुचिं ज्योतिःऽरथं शु-
क्रऽवर्णं तमःऽहनं ॥१॥ अभि द्विऽजन्मा त्रिऽवृत् अन्नं ऋज्यते
संवत्सरे ववृधे जग्धं ईं पुनः अन्यस्य आसा जिह्वया जेन्यः वृषा
नि अन्येन वनिनः मृष्ट वारणः ॥२॥ कृष्णऽप्रुतौ वेविजे अस्य
सऽक्षितौ उभा तरेते अभि मातरा शिशुं प्राचाऽजिह्वं ध्वसयंतं
तृषुऽच्युतं आ साच्यं कुपयं वर्धनं पितुः ॥३॥ मुमुक्ष्वः मनवे मा-
नवस्यते रघुऽद्रुवः कृष्णऽसीतासः ऊं जुवः असमनाः अजिरासः
रघुऽस्यदः वातऽजूताः उप युज्यंते आशवः ॥४॥ आत् अस्य ते
ध्वसयंतः वृथा ईरते कृष्णं अभ्वं महि वर्पः करिक्रतः यत् सीं महीं
अवनिं प्र अभि मर्मृशत् अभिऽश्वसन् स्तनयन् एति नानदत्
॥५॥५॥ भूषन् न यः अधि बभ्रूषु नम्नते वृषाऽइव पत्नीः अभि
एति रोरुवत् ओजायमानः तन्वः च शुंभते भीमः न शृंगा दवि-
धाव दुःऽगृभिः ॥६॥ सः संऽस्तिरः विऽस्तिरः सं गृभायति जा-
नन् एव जानतीः नित्यः आ शये पुनः वर्धते अपि यंति देव्यं
अन्यत् वर्पः पित्रोः कृण्वते सचा ॥७॥ तं अग्रुवः केशिनीः सं
हि रेभिरे ऊर्ध्वाः तस्थुः मम्रुषीः प्र आयवे पुनः तासां जरां प्रऽमुं-
चन् एति नानदत् असुं परं जनयन् जीवं अस्तृतं ॥८॥ अधी-

वासः परि मातू रिहन्नह तुविग्रेभिः सत्वभिर्याति वि ज्रयः।
वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनीरह ॥ ९ ॥
अस्माकमग्ने मघवत्सु दीदिह्यध श्वसीवान्वृषभो दमूनाः।
अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः ॥१०॥६॥
इदमग्ने सुधितं दुर्धितादधि प्रियादु चिन्मन्मनः प्रेयो अस्तु
ते। यत्ते शुक्रं तन्वो रोचते शुचि तेनास्मभ्यं वनसे रत्नमा त्वं
॥११॥ रथाय नावमुत नो गृहाय नित्यारित्रां पद्वतीं रास्यग्ने।
अस्माकं वीराँ उत नो मघोनो जनाँश्च या पारयाच्छर्म या च
॥१२॥ अभी नो अग्न उक्थमिज्जुगुर्या द्यावाक्षामा सिंधवश्च
स्वगूर्ताः। गव्यं यव्यं यंतो दीर्घाहेषं वरमरुण्यो वरंत ॥१३॥७॥

---

॥१४१॥ १–१३ दीर्घतमा औचथ्यः ॥ अग्निः ॥ १–११ जगती । १२.१३ त्रिष्टुप् ॥

॥१४१॥ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो
यतो जनि। यदीमुप ह्वरते साधते मतिरृतस्य धेना अनयंत
सस्रुतः ॥ १ ॥ पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा
सप्तशिवासु मातृषु। तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं
जनयंत योषणः ॥ २ ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशा-
नासः शवसा क्रंत सूरयः। यदीमनु प्रदिवो मध्व आधवे
गुहा संतं मातरिश्वा मथायति ॥ ३ ॥ प्र यत्पितुः परमा-
न्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति। उभा यदस्य
जनुषं यदिन्वत आदिद्यविष्ठो अभवद्घृणा शुचिः ॥ ४ ॥
आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि
वावृधे। अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु
धावते ॥ ५ ॥ ८ ॥ आदिद्धोतारं वृणते दिविष्टिषु भगमिव-

वासं परि मातुः रिहन् अह तुविऽग्रेभिः सत्वंऽभिः याति वि ज्रयः
वयः दधत् पत्ऽवते रेरिहत् सदा अनु श्येनी सचते वर्तनिः अह
॥९॥ अस्माकं अग्ने मघवत्ऽसु दीदिहि अध श्वसीवान् वृषभः
दमूनाः अवऽअस्य शिशुऽमतीः अदीदेः वर्मऽइव युत्ऽसु परि-
ऽजर्भुराणः ॥१०॥६॥ इदं अग्ने सुऽधितं दुःऽधितात् अधि प्रियात्
ऊं चित् मन्मनः प्रेयः अस्तु ते यत् ते शुक्रं तन्वः रोचते शुचि
तेन अस्मभ्यं वनसे रत्नं आ त्वं ॥११॥ रथाय नावं उत नः गृहाय
नित्यऽअरित्रां पत्ऽवतीं रासि अग्ने अस्माकं वीरान् उत नः म-
घोनः जनान् च या पारयात् शर्म या च ॥१२॥ अभि नः अग्ने
उक्थं इत् जुगुर्याः द्यावाक्षामा सिंधवः च स्वऽगूर्ताः गव्यं यव्यं
यंतः दीर्घा अहा इषं वरं अरुण्यः वरंत ॥१३॥७॥

---

॥१४१॥ बट् इत्था तत् वपुषे धायि दर्शतं देवस्य भर्गः सहसः
यतः जनि यत् ईं उप ह्वरते साधते मतिः ऋतस्य धेनाः अनयंत
सऽस्रुतः ॥१॥ पृक्षः वपुः पितुऽमान् नित्यः आ शये द्वितीयं आ
सप्तऽशिवासु मातृषु तृतीयं अस्य वृषभस्य दोहसे दशऽप्रमतिं
जनयंत योषणः ॥२॥ निः यत् ईं बुध्नात् महिषस्य वर्पसः ईशा-
नासः शवसा क्रंत सूरयः यत् ईं अनु प्रऽदिवः मध्वः आऽधवे
गुहा संतं मातरिश्वा मथायति ॥३॥ प्र यत् पितुः परमात् नीयते
परि आ पृक्षुधः वीरुधः दंऽसु रोहति उभा यत् अस्य जनुषं यत्
इन्वतः आत् इत् यविष्ठः अभवत् घृणा शुचिः ॥४॥ आत् इत्
मातॄः आ अविशत् यासु आ शुचिः अहिंस्यमानः उर्विया वि
ववृधे अनु यत् पूर्वाः अरुहत् सनाऽजुवः नि नव्यसीषु अवरासु
धावते ॥५॥८॥ आत् इत् होतारं वृणते दिविष्टिषु भगंऽइव

पपृचानासं ऋंजते। देवान्यत्क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे ॥ ६ ॥ वि यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः। तस्य पत्मन्दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ ७ ॥ रथो न यातः शिक्वभिः कृतो द्यामंगेभिररुषेभिरीयते। आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेषथादीषते वयः ॥ ८ ॥ त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः। यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥ त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि। तं त्वा नु नव्यं सहसो युवन्वयं भगं न कारे महिरत्न धीमहि ॥ १० ॥ अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिं। रश्मींरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च सुक्रतुः ॥ ११ ॥ उत नः सुद्योत्मा जीराश्वो होता मंद्रः शृणवच्चंद्ररथः। स नो नेषन्नेषतमैरमूरोऽग्निर्वामं सुवितं वस्यो अच्छ ॥ १२ ॥ अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः। अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥ १३ ॥ ९ ॥

---

॥१४२॥ १–१३ दीर्घतमा औचथ्यः ॥ आप्रीसूक्तं। १ समित्। २ तनूनपात्। ३ नराशंसः। ४ इळः। ५ बर्हिः। ६ देवीर्द्वारः। ७ उषासानक्ता। ८ दैव्यौ होतारौ प्रचेतसौ। ९ तिस्रो देव्यः सरस्वतीळाभारत्यः। १० त्वष्टा। ११ वनस्पतिः। १२ स्वाहाकृतयः। १३ इंद्रः ॥ अनुष्टुप् ॥

॥१४२॥ समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे। तंतुं तनुष्व पूर्व्यं सुतसोमाय दाशुषे ॥ १ ॥ घृतवंतमुप मासि मधुमंतं तनूनपात्। यज्ञं विप्रस्य मावतः शशमानस्य दाशुषः ॥ २ ॥ शुचिः पावको अद्भुतो मध्वा यज्ञं मिमिक्षति। नराशंसस्त्रिरा दिवो देवो देवेषु यज्ञियः ॥ ३ ॥ ईळितो अग्न आ वहेंद्रं

मपृचानासः अंजते देवान् यत् क्रत्वा मज्मना पुरुऽस्तुतः मर्तं शंसं विश्वधा वेति धायसे ॥ ६ ॥ वि यत् अस्थात् यजतः वातऽचोदितः ह्वारः न वक्वा जरणाः अनाकृतः तस्य पत्मन् धक्षुषः कृष्णऽजंहसः शुचिऽजन्मनः रजः आ विऽअध्वनः ॥ ७ ॥ रथः न यातः शिक्वऽभिः कृतः द्याम् अंगेभिः अरुषेभिः ईयते आत् अस्य ते कृष्णासः धक्षि सूरयः शूरस्यऽइव त्वेषथात् ईषते वयः ॥ ८ ॥ त्वया हि अग्ने वरुणः धृतऽव्रतः मित्रः शाशद्रे अर्यमा सुऽदानवः यत् सीम् अनु क्रतुना विश्वऽथा विऽभुः अरान् न नेमिः परिऽभूः अजायथाः ॥ ९ ॥ त्वं अग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवऽतातिम् इन्वसि तं त्वा नु नव्यं सहसः युवन् वयं भगं न कारे महिऽरत्न धीमहि ॥ १० ॥ अस्मे इति रयिं न सुऽअर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिं रश्मीन्ऽइव यः यमति जन्मनी इति उभे इति देवानां शंसम् ऋते आ च सुऽक्रतुः ॥ ११ ॥ उत नः सुऽद्योत्मा जीरऽअश्वः होता मंद्रः शृणवत् चंद्रऽरथः सः नः नेषत् नेषऽतमैः अमूरः अग्निः वामं सुवितं वस्यः अच्छ ॥ १२ ॥ अस्तावि अग्निः शिमीवत्ऽभिः अर्कैः साम्ऽराज्याय प्रऽतरं दधानः अमी इति च ये मघऽवानः वयं च मिहं न सूरः अति निः ततन्युः ॥ १३ ॥ ९ ॥

---

॥ १४२ ॥ सम्ऽइद्धः अग्ने आ वह देवान् अद्य यतऽस्रुचे तंतुं तनुष्व पूर्व्यं सुतऽसोमाय दाशुषे ॥ १ ॥ घृतऽवंतं उप मासि मधुऽमंतं तनूऽनपात् यज्ञं विप्रस्य माऽवतः शशमानस्य दाशुषः ॥ २ ॥ शुचिः पावकः अद्भुतः मध्वा यज्ञं मिमिक्षति नराशंसः त्रिः आ दिवः देवः देवेषु यज्ञियः ॥ ३ ॥ ईळितः अग्ने आ वह इंद्रं

त्रिचमिह प्रियं। इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यते ॥४॥
स्तृणानासो यतस्रुचो बर्हिर्यज्ञे स्वध्वरे। वृंजे देवव्यचस्तममिं-
द्राय शर्म सप्रथः ॥५॥ वि श्रयंतामृतावृधः प्रयै देवेभ्यो महीः।
पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥६॥१०॥ आ भंदमाने
उपाके नक्तोषासा सुपेशसा। यह्वी ऋतस्य मातरा सीदतां
बर्हिरा सुमत् ॥७॥ मंद्रजिह्वा जुगुर्वणी होतारा दैव्या कवी।
यज्ञं नो यक्षतामिमं सिध्रमद्य दिविस्पृशं ॥८॥ शुचिर्देवेष्वर्पि-
ता होत्रा मरुत्सु भारती। इळा सरस्वती मही बर्हिः सीदंतु
यज्ञियाः ॥९॥ तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना। त्वष्टा पो-
षाय वि ष्यतु राये नाभा नो अस्मयुः ॥१०॥ अवसृजन्नुप त्मना
देवान्यक्षि वनस्पते। अग्निर्हव्या सुषूदति देवो देवेषु मेधिरः
॥११॥ पूषण्वते मरुत्वते विश्वदेवाय वायवे। स्वाहा गायत्रवे-
पसे हव्यमिंद्राय कर्तन ॥१२॥ स्वाहाकृतान्या गह्युप हव्यानि
वीतये। इंद्रा गहि श्रुधी हवं त्वां हवंते अध्वरे ॥१३॥११॥

---

॥१४३॥ १-८ दीर्घतमा औचथ्यः ॥ अग्निः ॥ १-७ जगती । ८ त्रिष्टुप् ॥

॥१४३॥ प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः
सूनवे भरे। अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां
न्यसीदहत्वियः ॥१॥ स जायमानः परमे व्योमन्यावि-
रग्निरभवन्मातरिश्वने। अस्य क्रत्वा समिधानस्य मज्मना
प्र द्यावा शोचिः पृथिवी अरोचयत् ॥२॥ अस्य त्वेषा
अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः। भा-
त्वक्षसो अत्यक्तुर्न सिंधवोऽग्ने रेजंते अससंतो अजराः
॥३॥ यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य

चित्रं इह प्रियं इयं हि त्वा मतिः मम अच्छ सुऽजिह्व वच्यते ॥४॥ स्तृणानासः यतऽस्रुचः बर्हिः यज्ञे सुऽअध्वरे वृंजे देवव्यचःऽतमं इंद्राय शर्म सऽप्रथः ॥५॥ वि श्रयंतां ऋतऽवृधः प्रऽयै देवेभ्यः महीः पावकासः पुरुऽस्पृहः द्वारः देवीः असश्चतः ॥६॥१०॥ आ भंदमाने॰ उपाके॰ नक्तोषसा सुऽपेशसा यह्वी॰ ऋतस्य मातरा सीदतां बर्हिः आ सुऽमत् ॥७॥ मंद्रऽजिह्वा जुगुर्वणी॰ होतारा दैव्या कवी॰ यज्ञं नः यक्षतां इमं सिध्रं अद्य दिविऽस्पृशं ॥८॥ शुचिः देवेषु अर्पिता होत्रा मरुत्ऽसु भारती इळा सरस्वती मही बर्हिः सीदंतु यज्ञियाः ॥९॥ तत् नः तुरीपं अद्भुतं पुरु वारं पुरु त्मना त्वष्टा पोषाय वि स्यतु राये नाभा नः अस्मऽयुः ॥१०॥ अवऽसृजन् उप त्मना देवान् यक्षि वनस्पते अग्निः हव्या सुसूदति देवः देवेषु मेधिरः ॥११॥ पूषण्ऽवते मरुत्वते विश्वऽदेवाय वायवे स्वाहा गायत्रऽवेपसे हव्यं इंद्राय कर्तन ॥१२॥ स्वाहाऽकृतानि आ गहि उप हव्यानि वीतये इंद्र आ गहि श्रुधि हवं त्वां हवंते अध्वरे ॥१३॥११॥

---

॥१४३॥ प्र तव्यसीं नव्यसीं धीतिं अग्नये वाचः मतिं सहसः सूनवे भरे अपां नपात् यः वसुऽभिः सह प्रियः होता पृथिव्यां नि असीदत् ऋत्वियः ॥१॥ सः जायमानः परमे विऽओमनि आविः अग्निः अभवत् मातरिश्वने अस्य क्रत्वा संऽइधानस्य मज्मना प्र द्यावा शोचिः पृथिवी॰ अरोचयत् ॥२॥ अस्य त्वेषाः अजराः अस्य भानवः सुऽसंदृशः सुऽप्रतीकस्य सुऽद्युतः भाऽत्वक्षसः अति अक्तुः न सिंधवः अग्नेः रेजंते अससंतः अजराः ॥३॥ यं आऽईरिरे भृगवः विश्वऽवेदसं नाभा पृथिव्याः भुवनस्य

मज्मना। अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरु-
णो न राजति ॥४॥ न यो वराय मरुतामिव स्वनः सेनेव सृष्टा
दिव्या यथाशनिः। अग्निर्जंभैस्तिगितैरत्ति भर्वति योधो न शत्रू-
न्स वना न्यृंजते ॥५॥ कुविन्नो अग्निरुचथस्य वीरसद्वसुष्कुवि-
द्वसुभिः काममावरत्। चोदः कुवित्तुतुज्यात्सातये धियः शु-
चिप्रतीकं तमया धिया गृणे ॥६॥ घृतप्रतीकं व ऋतस्य
धूर्षदमग्निं मित्रं न समिधान ऋंजते। इंधानो अक्रो विदथेषु
दीद्यच्छुक्रवर्णामुदु नो यंसते धियं ॥७॥ अप्रयुच्छन्नप्रयुच्छद्भि-
रग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः। अदब्धेभिरदृपितेभिरि-
ष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥८॥१२॥

---

॥१४४॥ १-७ दीर्घतमा औचथ्यः ॥ अग्निः ॥ जगती ॥

॥१४४॥ एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शु-
चिपेशसं धियं। अभि स्रुचः क्रमते दक्षिणावृतो या अस्य
धाम प्रथमं ह निंसते ॥१॥ अभीमृतस्य दोहना अनूषत
योनौ देवस्य सदने परीवृताः। अपामुपस्थे विभृतो यदा-
वसदध स्वधा अधयद्याभिरीयते ॥२॥ युयूषतः सवयसा
तदिद्वपुः समानमर्थं वितरित्रता मिथः। आदीं भगो न
हव्यः समस्मदा वोळ्हुर्न रश्मीन्समयंस्त सारथिः ॥३॥
यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समो-
कसा। दिवा न नक्तं पलितो युवाजनि पुरू चरन्नजरो
मानुषा युगा ॥४॥ तमीं हिन्वंति धीतयो दश व्रिशो
देवं मर्तास ऊतये हवामहे। धनोरधि प्रवत आ स ऋ-
ण्वत्यभिव्रजद्भिर्वयुना नवाधित ॥५॥ त्वं ह्यग्ने दिव्यस्य राजसि

मज्मना अग्निं तं गीःऽभिः हिनुहि स्वे आ दमे यः एकः वस्वः
वरुणः न राजति ॥४॥ न यः वराय मरुताऽइव स्वनः सेनाऽइव
सृष्टा दिव्या यथा अशनिः अग्निः जंभैः तिगितैः अत्ति भर्वति
योधः न शत्रून् सः वना नि ऋंजते ॥५॥ कुवित् नः अग्निः उच-
थस्य वीः असत् वसुः कुवित् वसुऽभिः कामं आऽवरत् चोदः
कुवित् तुतुज्यात् सातये धियः शुचिऽप्रतीकं तं अया धिया
गृणे ॥६॥ घृतऽप्रतीकं वः ऋतस्य धूःऽसदं अग्निं मित्रं न सं-
ऽइधानः ऋंजते इंधानः अक्रः विदथेषु दीद्यत् शुक्रऽवर्णां उत्
ऊं नः यंसते धियं ॥ ७ ॥ अप्रऽयुच्छन् अप्रयुच्छत्ऽभिः अग्ने
शिवेभिः नः पायुऽभिः पाहि शग्मैः अदब्धेभिः अदृपितेभिः
इष्टे अनिमिषत्ऽभिः परि पाहि नः जाः ॥ ८ ॥ १२ ॥

---

॥१४४॥ एति प्र होता व्रतं अस्य मायया ऊर्ध्वां दधानः शु-
चिऽपेशसं धियं अभि स्रुचः क्रमते दक्षिणाऽआवृतः याः अस्य
धाम प्रथमं ह निंसते ॥१॥ अभि ईं ऋतस्य दोहनाः अनूषत
योनौ देवस्य सदने परिऽवृताः अपां उपऽस्थे विऽभृतः यत् आ
अवसत् अध स्वधाः अधयत् याभिः ईयते ॥ २ ॥ युयूषतः स-
ऽवयसा तत् इत् वपुः समानं अर्थं विऽतरित्रता मिथः आत्
ईं भगः न हव्यः सं अस्मत् आ वोळ्हुः न रश्मीन् सं अयंस्त सा-
रथिः ॥३॥ यं ईं द्वा सऽवयसा सपर्यतः समाने योना मिथुना
संऽओकसा दिवा न नक्तं पलितः युवा अजनि पुरु चरन् अजरः
मानुषा युगा ॥४॥ तं ईं हिन्वंति धीतयः दश व्रिशः देवं मर्तासः
ऊतये हवामहे धनोः अधि प्रऽवतः आ सः ऋण्वति अभिव्र-
जत्ऽभिः वयुना नवा अधित ॥५॥ त्वं हि अग्ने दिव्यस्य राजसि

त्वं पार्थिवस्य पशुपा इव त्मना। एनी त एते बृहती अभि-
श्रिया हिरण्ययी वक्वरी बर्हिराशाते ॥ ६ ॥ अग्ने जुषस्व प्रति
हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो । यो विश्वतः
प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँ इव क्षयः ॥ ७ ॥ १३ ॥

---

॥ १४५ ॥ १–५ दीर्घतमा औचथ्यः ॥ अग्निः ॥ १–४ जगती । ५ त्रिष्टुप् ॥

॥१४५॥ तं पृच्छता स जगामा स वेद स चिकित्वाँ ईयते सा
न्वीयते। तस्मिन्संति प्रशिषस्तस्मिन्निष्टयः स वाजस्य शवसः शु-
ष्मिणस्पतिः॥१॥ तमित्पृच्छंति न सिमो वि पृच्छति स्वेनेव धीरो
मनसा यदग्रभीत्। न मृष्यते प्रथमं नापरं वचोऽस्य क्रत्वा सचते
अप्रदृपितः ॥२॥ तमिद्गच्छंति जुह्व१स्तमर्वतीर्विश्वान्येकः शृ-
णवद्वचांसि मे। पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशुरा-
दत्त सं रभः॥३॥ उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार
युज्येभिः। अभि श्वांतं मृशते नांद्ये मुदे यदीं गच्छंत्युशतीरपिष्ठितं
॥४॥ स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि। व्य-
ब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥५॥१४॥

---

॥ १४६ ॥ १–५ दीर्घतमा औचथ्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ १४६ ॥ त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रो-
रुपस्थे । निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचना-
पप्रिवांसं ॥ १ ॥ उक्षा महाँ अभि ववक्ष एने अजरस्तस्था-
वितऊतिर्ऋष्वः । उर्व्याः पदो नि दधाति सानौ रिहंत्यूधो
अरुषासो अस्य ॥ २ ॥ समानं वत्समभि संचरंती विष्वग्धेनू
वि चरतः सुमेके । अनपवृज्याँ अध्वनो मिमाने विश्वा-
न्केताँ अधि महो दधाने ॥ ३ ॥ धीरासः पदं कवयो नयंति ना-

त्वं पार्थिवस्य पशुपाःऽइव त्मना एनी' ते एते' बृहती' अभि-
ऽश्रिया हिरण्ययी' वक्वरी' बर्हिः आशाते' ॥६॥ अग्ने जुषस्व प्रति
हर्य तत् वचः मंद्र स्वधाऽवः ऋतऽजात सुऽक्रतो॰ यः विश्वतः
प्रत्यङ् असि दर्शतः रण्वः संऽदृष्टौ पितुमान्ऽइव क्षयः ॥७॥१३॥

---

॥१४५॥ तं पृच्छत सः जगाम सः वेद सः चिकित्वान् ईयते
सः नु ईयते तस्मिन् संति प्रऽशिषः तस्मिन् इष्टयः सः वाजस्य
शवसः शुष्मिणः पतिः ॥१॥ तं इत् पृच्छंति न सिमः वि पृच्छति
स्वेनऽइव धीरः मनसा यत् अग्रभीत् न मृष्यते प्रथमं न अपरं
वचः अस्य क्रत्वा सचते अप्रऽदृपितः ॥२॥ तं इत् गच्छंति जुह्वः
तं अर्वतीः विश्वानि एकः शृणवत् वचांसि मे पुरुऽप्रैषः ततुरिः
यज्ञऽसाधनः अच्छिद्रऽऊतिः शिशुः आ अदत्त सं रभः ॥३॥ उप-
ऽस्थायं चरति यत् संऽआरत सद्यः जातः तत्सार युज्येभिः अभि
श्वांतं मृशते नांद्ये मुदे यत् ईं गच्छंति उशतीः अपिऽस्थितं ॥४॥
सः ईं मृगः अप्यः वनर्गुः उप त्वचि उपऽमस्यां नि धायि वि अब्र-
वीत् वयुना मर्त्येभ्यः अग्निः विद्वान् ऋतऽचित् हि सत्यः ॥५॥१४॥

---

॥१४६॥ त्रिऽमूर्धानं सप्तऽरश्मिं गृणीषे अनूनं अग्निं पित्रोः
उपऽस्थे निऽसत्तं अस्य चरतः ध्रुवस्य विश्वा दिवः रोचना आ-
पप्रिऽवांसं ॥१॥ उक्षा महान् अभि ववक्षे एने' अजरः तस्थौ
इतःऽऊतिः ऋष्वः उर्व्याः पदः नि दधाति सानौ रिहंति ऊधः
अरुषासः अस्य ॥२॥ समानं वत्सं अभि संऽचरंती॰ विष्वक् धेनू'
वि चरतः सुऽमेके॰ अनपऽवृज्यान् अध्वनः मिमाने' विश्वान्
केतान् अधि महः दधाने' ॥३॥ धीरासः पदं कवयः नयंति ना-

ना हृदा रक्षमाणा अजुर्यं। सिषासंतः पर्यपश्यंत सिंधुमाविरेभ्यो अभवत्सूर्यो नॄन् ॥ ४ ॥ दिदृक्षेण्यः परि काष्ठासु जेन्य ईळेन्यो महो अर्भाय जीवसे। पुरुत्रा यदभवत्सूरहैभ्यो गर्भेभ्यो मघवा विश्वदर्शतः ॥ ५ ॥ १५ ॥

॥ १४७ ॥ १-५ दीर्घतमा औचथ्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ १४७ ॥ कथा ते अग्ने शुचयंत आयोर्ददाशुर्वाजेभिराशुषाणाः। उभे यत्तोके तनये दधाना ऋतस्य सामन्रणयंत देवाः ॥ १ ॥ बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वंदारुस्ते तन्वं वंदे अग्ने ॥ २ ॥ ये पायवो मामतेयं ते अग्ने पश्यंतो अंधं दुरितादरक्षन्। ररक्ष तान्सुकृतो विश्ववेदा दिप्संत इद्रिपवो नाह देभुः ॥ ३ ॥ यो नो अग्ने अररिवाँ अघायुररातीवा मर्चयति द्वयेन। मंत्रो गुरुः पुनरस्तु सो अस्मा अनु मृक्षीष्ट तन्वं दुरुक्तैः ॥ ४ ॥ उत वा यः सहस्य प्रविद्वान्मर्तो मर्तं मर्चयति द्वयेन। अतः पाहि स्तवमान स्तुवंतमग्ने माकिर्नो दुरिताय धायीः ॥ ५ ॥ १६ ॥

॥ १४८ ॥ १-५ दीर्घतमा औचथ्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ १४८ ॥ मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यं। नि यं दधुर्मनुष्यासु विक्षु स्वर्णं चित्रं वपुषे विभावं ॥ १ ॥ ददानमिन्न ददभंत मन्माग्निर्वरूथं मम तस्य चाकन्। जुषंत विश्वान्यस्य कर्मोपस्तुतिं भरमाणस्य कारोः ॥ २ ॥ नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः। प्र सू नयंत गृभयंत इष्टावश्वासो न रथ्यो रारहाणाः ॥ ३ ॥ पुरूणि दस्मो नि रिणाति जंभैराद्रोचते वन आ विभावा। आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु

ना हृदा रक्षमाणाः अजुर्यं सिसासंतः परि अपश्यंत सिंधुं आविः एभ्यः अभवत् सूर्यः नॄन् ॥४॥ दिदृक्षेण्यः परि काष्ठासु जेन्यः ईळेन्यः महः अर्भाय जीवसे पुरुऽत्रा यत् अभवत् सूः अहं एभ्यः गर्भेभ्यः मघऽवा विश्वऽदर्शतः ॥ ५ ॥ १५ ॥

---

॥१४७॥ कथा ते अग्ने शुचयंतः आयोः ददाशुः वाजेभिः आशुषाणाः उभे यत् तोके तनये दधानाः ऋतस्य सामन् रणयंत देवाः ॥ १ ॥ बोध मे अस्य वचसः यविष्ठ मंहिष्ठस्य प्रऽभृतस्य स्वधाऽवः पीयति त्वः अनु त्वः गृणाति वंदारुः ते तन्वं वंदे अग्ने ॥२॥ ये पायवः मामतेयं ते अग्ने पश्यंतः अंधं दुःऽइतात् अरक्षन् ररक्ष तान् सुऽकृतः विश्वऽवेदाः दिप्संतः इत् रिपवः न अह देभुः ॥३॥ यः नः अग्ने अररिऽवान् अघऽयुः अरातिऽवा मर्चयति द्वयेन मंत्रः गुरुः पुनः अस्तु सः अस्मै अनु मृक्षीष्ट तन्वं दुःऽउक्तैः ॥४॥ उत वा यः सहस्य प्रऽविद्वान् मर्तः मर्तं मर्चयति द्वयेन अतः पाहि स्तवमान स्तुवंतं अग्ने माकिः नः दुःऽइताय धायीः ॥५॥१६॥

---

॥१४८॥ मथीत् यत् ईं विष्टः मातरिश्वा होतारं विश्वऽअप्सुं विश्वऽदेव्यं नि यं दधुः मनुष्यासु विक्षु स्वः न चित्रं वपुषे विभाऽवं ॥१॥ ददानं इत् न ददभंत मन्म अग्निः वरूथं मम तस्य चाकन् जुषंत विश्वानि अस्य कर्म उपऽस्तुतिं भरमाणस्य कारोः ॥२॥ नित्ये चित् नु यं सदने जगृभ्रे प्रशस्तिऽभिः दधिरे यज्ञियासः प्र सु नयंत गृभयंतः इष्टौ अश्वासः न रथ्यः ररहाणाः ॥३॥ पुरूणि दस्मः नि रिणाति जंभैः आत् रोचते वने आ विभाऽवा आत् अस्य वातः अनु वाति शोचिः अस्तुः न शर्यां असनां अनु

ह्रून् ॥४॥ न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति । अंधा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥ ५ ॥ १७ ॥

---

॥ १४९ ॥ १–५ दीर्घतमा औचथ्यः ॥ अग्निः ॥ विराट् ॥

॥१४९॥ महः स राय एषते पतिर्दन्निन इनस्य वसुनः पद आ । उप ध्रजंतमद्रयो विधन्नित् ॥१॥ स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जीवपीतसर्गः । प्र यः सस्राणः शिश्रीत योनौ ॥२॥ आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा । सूरो न रुरुक्वाञ्छतात्मा ॥ ३ ॥ अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् । होता यजिष्ठो अपां सधस्थे ॥ ४ ॥ अयं स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या । मर्तो यो अस्मै सुतुको ददाश ॥५॥१८॥

---

॥ १५० ॥ १–३ दीर्घतमा औचथ्यः ॥ अग्निः ॥ उष्णिक् ॥

॥१५०॥ पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ॥ १ ॥ व्यनिनस्य धनिनः प्रहोषे चिदररुषः । कदा चन प्रजिगंतो अदेवयोः ॥२॥ स चंद्रो विप्र मर्त्यो महो व्राधंतमो दिवि । प्रप्रेत्ते अग्ने वनुषः स्याम ॥ ३ ॥ १९ ॥

---

॥ १५१ ॥ १–९ दीर्घतमा औचथ्यः ॥ १ मित्रः । २–९ मित्रावरुणौ ॥ जगती ॥

॥ १५१ ॥ मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजनन् । अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥ १ ॥ यद्ध त्यद्वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः । अध क्रतुं विदतं गातुमर्चत उत श्रुतं वृषणा पस्त्यावतः ॥ २ ॥ आ वां भूषन्क्षितयो जन्म

धून् ॥ ४ ॥ न यं रिपवः न रिषण्यवः गर्भे संतं रेषणाः रेषयंति अंधाः अपश्याः न दभन् अभिऽख्या नित्यासः ईं प्रेतारः अरक्षन् ॥ ५ ॥ १७ ॥

---

॥ १४९ ॥ महः सः रायः आ ईषते पतिः दन् इनः इनस्य वसुनः पदे आ उप ध्रजंतं अद्रयः विधन् इत् ॥ १ ॥ सः यः वृषा नरां न रोदस्योः श्रवःऽभिः अस्ति जीवपीतऽसर्गः प्र यः सस्राणः शिश्रीत योनौ ॥ २ ॥ आ यः पुरं नार्मिणीं अदीदेत् अत्यः कविः नभन्यः न अर्वा सूरः न रुरुक्वान् शतऽआत्मा ॥ ३ ॥ अभि द्विऽजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानः अस्थात् होता यजिष्ठः अपां सधऽस्थे ॥ ४ ॥ अयं सः होता यः द्विऽजन्मा विश्वा दधे वार्याणि श्रवस्या मर्तः यः अस्मै सुऽतुकः ददाश ॥ ५ ॥ १८ ॥

---

॥ १५० ॥ पुरु त्वा दाश्वान् वोचे अरिः अग्ने तव स्वित् आ तोदस्यऽइव शरणे आ महस्य ॥ १ ॥ वि अनिनस्य धनिनः प्रऽहोषे चित् अररुषः कदा चन प्रऽजिगतः अदेवऽयोः ॥ २ ॥ सः चंद्रः विप्र मर्त्यः महः व्राधन्ऽतमः दिवि प्रऽप्र इत् ते अग्ने वनुषः स्याम ॥ ३ ॥ १९ ॥

---

॥ १५१ ॥ मित्रं न यं शिम्या गोषु गव्यवः सुऽआध्यः विदथे अप्ऽसु जीजनन् अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषां अवः ॥ १ ॥ यत् ह त्यत् वां पुरुऽमीळ्हस्य सोमिनः प्र मित्रासः न दधिरे सुऽआभुवः अध क्रतुं विदतं गातुं अर्चते उत श्रुतं वृषणा पस्त्यऽवतः ॥ २ ॥ आ वां भूषन् क्षितयः जन्म

रोद॑स्योः प्रवाच्यं॑ वृषणा॒ दक्ष॑से म॒हे । यदी॑मृ॒ताय॒ भर॑थो॒ यद॑र्व॑ते॒ प्र होत्र॑या॒ शिम्या॑ वीथो अध्व॒रं ॥ ३ ॥ प्र सा क्षि॒तिर॑सुर॒ या महि॑ प्रि॒य ऋता॑वानावृ॒तमा घो॑षथो बृ॒हत् । यु॒वं दि॒वो बृ॑ह॒तो दक्ष॑मा॒भुवं॒ गां न धु॒र्युप॑ युंजाथे अ॒पः ॥ ४ ॥ म॒ही अत्र॑ महि॒ना वार॑मृण्वथोऽरे॒णव॒स्तुज॒ आ सद्म॑न्धे॒नवः॑ । स्वर॑न्ति॒ ता उ॑प॒रता॑ति॒ सूर्य॒मा नि॒म्रुच॑ उ॒षस॑स्तक्व॒वीरि॑व ॥ ५ ॥ २० ॥ आ वा॑मृ॒ताय॑ के॒शिनी॑रनूषत॒ मित्र॒ यत्र॒ वरु॑ण गा॒तुमर्च॑थः । अव॒ त्मना॑ सृ॒जतं॒ पिन्व॑तं॒ धियो॑ यु॒वं विप्र॑स्य॒ मन्म॑नामिरज्यथः ॥ ६ ॥ यो वां॑ य॒ज्ञैः श॑शमा॒नो ह॒ दाश॑ति क॒विर्होता॒ यज॑ति मन्म॒साध॑नः । उपाह॒ तं गच्छ॑थो वी॒थो अ॑ध्व॒रमच्छा॒ गिरः॑ सुम॒तिं ग॑न्तमस्म॒यू ॥ ७ ॥ यु॒वां य॒ज्ञैः प्र॑थ॒मा गोभि॑रंजत॒ ऋता॑वाना॒ मन॑सो॒ न प्रयु॑क्तिषु । भर॑न्ति वां॒ मन्म॑ना सं॒यता॒ गिरोऽदृ॑प्यता॒ मन॑सा रे॒वदा॑शाथे ॥ ८ ॥ रे॒वद्वयो॑ दधाथे रे॒वदा॑शाथे॒ नरा॑ मा॒याभि॑रि॒तऊ॑ति॒ माहि॑नं । न वां॒ द्यावोऽह॑भि॒र्नोत सिंध॑वो॒ न दे॑व॒त्वं प॒णयो॒ नान॑शुर्म॒घं ॥ ९ ॥ २१ ॥

---

॥१५२॥ १–७ दीर्घतमा औचथ्यः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥१५२॥ यु॒वं वस्त्रा॑णि पीव॒सा व॑साथे यु॒वोरच्छि॑द्रा॒ मन्त॑वो ह॒ सर्गाः॑ । अवा॑तिरत॒मनृ॑तानि॒ विश्व॑ ऋ॒तेन॑ मित्रावरुणा सचेथे ॥ १ ॥ ए॒तच्च॒न त्वो॒ वि चि॑केतदेषां स॒त्यो मन्त्रः॑ कविश॒स्त ऋघा॑वान् । त्रि॒रश्रिं॑ हन्ति॒ चतु॑रश्रिरु॒ग्रो दे॑व॒निदो॑ ह प्रथ॒मा अ॑जूर्यन् ॥ २ ॥ अ॒पादे॑ति प्रथ॒मा प॒द्वती॑नां॒ कस्तद्वां॑ मित्रावरुणा चि॑केत । गर्भो॑ भा॒रं भ॑र॒त्या चि॑दस्य ऋ॒तं पिप॒र्त्यनृ॑तं॒ नि ता॑रीत् ॥ ३ ॥ प्र॒यन्त॒मित्परि॑ जा॒रं

रोदस्योः प्रऽवाच्यं वृषणा दक्षसे महे यत् ईं ऋताय भरथः यत्
अर्वते प्र होत्रया शिम्या वीथः अध्वरं ॥३॥ प्र सा क्षितिः असुरा
या महि प्रिया ऋतऽवानौ ऋतं आ घोषथः बृहत् युवं दिवः
बृहतः दक्षं आऽभुवं गां न धुरि उप युंजाथे अपः ॥४॥ मही
अत्र महिना वारं ऋण्वथः अरेणवः तुजः आ सद्मन् धेनवः
स्वरंति ताः उपरऽताति सूर्यं आ निऽम्रुचः उषसः तक्ववीःऽइव
॥५॥२०॥ आ वां ऋताय केशिनीः अनूषत मित्र यत्र वरुण
गातुं अर्चथः अव त्मना सृजतं पिन्वतं धियः युवं विप्रस्य मन्म-
नां इरज्यथः ॥६॥ यः वां यज्ञैः शशमानः ह दाशति कविः होता
यजति मन्मऽसाधनः उप अह तं गच्छथः वीथः अध्वरं अच्छ
गिरः सुऽमतिं गंतं अस्मऽयू॰ ॥७॥ युवां यज्ञैः प्रथमा गोभिः
अंजते ऋतऽवाना मनसः न प्रऽयुक्तिषु भरंति वां मन्मना सं-
ऽयता गिरः अदृप्यता मनसा रेवत् आशाथे ॥८॥ रेवत् वयः
दधाथे रेवत् आशाथे नरा मायाभिः इतःऽऊति माहिनं न वां
द्यावः अहऽभिः न उत सिंधवः न देवऽत्वं पणयः न आनशुः
मघं ॥९॥२१॥

---

॥१५२॥ युवं वस्त्राणि पीवसा वसाथे युवोः अच्छिद्राः मंतवः
ह सर्गाः अव अतिरतं अनृतानि विश्वा ऋतेन मित्रावरुणा
सचेथे ॥१॥ एतत् चन त्वः वि चिकेतत् एषां सत्यः मंत्रः कवि-
ऽशस्तः ऋघावान् त्रिःऽअश्रिं हंति चतुःऽअश्रिः उग्रः देवऽनिदः
ह प्रथमाः अजूर्यन् ॥२॥ अपात् एति प्रथमा पत्ऽवतीनां कः
तत् वां मित्रावरुणा आ चिकेत गर्भः भारं भरति आ चित्
अस्य ऋतं पिपर्ति अनृतं नि तारीत् ॥३॥ प्रऽयंतं इत् परि जारं

कनीनां पश्यामसि नोपनिपद्यमानम् । अनवपृग्णा वितता
वसानं प्रियं मित्रस्य वरुणस्य धाम ॥ ४ ॥ अनश्वो जातो
अनभीशुरर्वा कनिक्रदत्पतयदूर्ध्वसानुः । अचित्तं ब्रह्म जुजुषुर्यु-
वानः प्र मित्रे धाम वरुणे गृणन्तः ॥ ५ ॥ आ धेनवो मामतेय-
मवन्तीर्ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन् । पित्वो भिक्षेत वयुनानि
विद्वानासाविवासन्नदितिमुरुष्येत् ॥ ६ ॥ आ वां मित्रावरुणा
हव्यजुष्टिं नमसा देवाववसा ववृत्याम् । अस्माकं ब्रह्म पृतनासु
सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥ ७ ॥ २२ ॥

॥ १५३ ॥ १-४ दीर्घतमा औचथ्यः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥ १५३ ॥ यजामहे वां महः सजोषा हव्येभिर्मित्रावरुणा
नमोभिः । घृतैर्घृतस्नू अध यद्वामस्मे अध्वर्यवो न धीतिभिर्भरन्ति
॥ १ ॥ प्रस्तुतिर्वां धाम न प्रयुक्तिरयामि मित्रावरुणा सुवृक्तिः ।
अनक्ति यद्वां विदथेषु होता सुम्नं वां सूरिर्वृषणावियक्षन् ॥ २ ॥
पीपाय धेनुरदितिर्ऋताय जनाय मित्रावरुणा हविर्दे । हिनोति
यद्वां विदथे सपर्यन्त्स रातहव्यो मानुषो न होता ॥ ३ ॥ उत वां
विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः । उतो नो अस्य
पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः ॥ ४ ॥ २३ ॥

॥ १५४ ॥ १-६ दीर्घतमा औचथ्यः ॥ विष्णुः ॥ त्रिष्टुप् ॥

॥ १५४ ॥ विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि
विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रे-
धोरुगायः ॥ १ ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः
कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति
भुवनानि विश्वा ॥ २ ॥ प्र विष्णवे शूषमेतु मन्म गिरि-
क्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको

कनीनां पश्यामसि न उपऽनिपद्यमानं अनवऽपृग्णा विऽतता वसानं प्रियं मित्रस्य वरुणस्य धाम ॥४॥ अनश्वः जातः अनभीशुः अर्वा कनिक्रदत् पतयत् ऊर्ध्वऽसानुः अचित्तं ब्रह्म जुजुषुः युवानः प्र मित्रे धाम वरुणे गृणन्तः ॥५॥ आ धेनवः मामतेयं अवन्तीः ब्रह्मऽप्रियं पीपयन् सस्मिन् ऊधन् पित्वः भिक्षेत वयुनानि विद्वान् आसा आऽविवासन् अदितिं उरुष्येत् ॥६॥ आ वां मित्रावरुणा हव्यऽजुष्टिं नमसा देवौ अवसा ववृत्यां अस्माकं ब्रह्म पृतनासु सह्याः अस्माकं वृष्टिः दिव्या सुऽपारा ॥७॥२२॥

---

॥१५३॥ यजामहे वां महः सऽजोषाः हव्येभिः मित्रावरुणा नमःऽभिः घृतैः घृतस्नू॰ अध यत् वां अस्मे॰ अध्वर्यवः न धीतिऽभिः भरन्ति ॥१॥ प्रऽस्तुतिः वां धाम न प्रऽयुक्तिः अयामि मित्रावरुणा सुऽवृक्तिः अनक्ति यत् वां विदथेषु होता सुम्नं वां सूरिः वृषणौ इयक्षन् ॥२॥ पीपाय धेनुः अदितिः ऋताय जनाय मित्रावरुणा हविःऽदे हिनोति यत् वां विदथे सपर्यन् सः रातऽहव्यः मानुषः न होता ॥३॥ उत वां विक्षु मद्यासु अन्धः गावः आपः च पीपयन्त देवीः उतो॰ नः अस्य पूर्व्यः पतिः दन् वीतं पातं पयसः उस्रियायाः ॥४॥२३॥

---

॥१५४॥ विष्णोः नु कं वीर्याणि प्र वोचं यः पार्थिवानि विऽममे रजांसि यः अस्कभायत् उत्ऽतरं सधऽस्थं विऽचक्रमाणः त्रेधा उरुऽगायः ॥१॥ प्र तत् विष्णुः स्तवते वीर्येण मृगः न भीमः कुचरः गिरिऽस्थाः यस्य उरुषु त्रिषु विऽक्रमणेषु अधिऽक्षियन्ति भुवनानि विश्वा ॥२॥ प्र विष्णवे शूषं एतु मन्म गिरिऽक्षिते उरुऽगायाय वृष्णे यः इदं दीर्घं प्रऽयतं सधऽस्थं एकः

विममे त्रिभिरित्पदेभिः ॥ ३ ॥ यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदंति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥४॥ तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदंति । उरुक्रमस्य स हि बंधुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥ ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृंगा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥ ६ ॥ २४ ॥

॥ १५५ ॥ १–६ दीर्घतमा औचथ्यः ॥ १–३ विष्णुरिंद्रश्च । ४–६ विष्णुः ॥ जगती ॥

॥१५५॥ प्र वः पांतमंधसो धियायते महे शूराय विष्णवे चार्चत । या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥१॥ त्वेषमित्था समरणं शिमीवतोरिंद्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥२॥ ता ईं वर्धंति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे । दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥३॥ तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः । यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥४॥ द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति । तृतीयमस्य नकिरा दधर्षति वयश्चन पतयंतः पतत्रिणः ॥ ५ ॥ चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् । बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवं ॥ ६ ॥ २५ ॥

॥ १५६ ॥ १–५ दीर्घतमा औचथ्यः ॥ विष्णुः ॥ जगती ॥

॥१५६॥ भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः । अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो

विऽममे त्रिऽभिः इत् पदेभिः ॥३॥ यस्य त्री पूर्णा मधुना पदानि अक्षीयमाणा स्वधया मदंति यः ऊं त्रिऽधातु पृथिवीं उत द्यां एकः दाधार भुवनानि विश्वा ॥४॥ तत् अस्य प्रियं अभि पाथः अश्यां नरः यत्र देवऽयवः मदंति उरुऽक्रमस्य सः हि बंधुः इत्था विष्णोः पदे परमे मध्वः उत्सः ॥५॥ ता वां वास्तूनि उश्मसि गमध्यै यत्र गावः भूरिऽशृंगाः अयासः अत्र अह तत् उरुऽगायस्य वृष्णः परमं पदं अव भाति भूरि ॥६॥२४॥

---

॥१५५॥ प्र वः पांतं अंधसः धियाऽयते महे शूराय विष्णवे च अर्चत या सानुनि पर्वतानां अदाभ्या महः तस्थतुः अर्वताऽइव साधुना ॥१॥ त्वेषं इत्था संऽअरणं शिमीऽवतोः इंद्राविष्णू सुतऽपाः वां उरुष्यति या मर्त्याय प्रतिऽधीयमानं इत् कृशानोः अस्तुः असनां उरुष्यथः ॥२॥ ताः ईं वर्धंति महि अस्य पौंस्यं नि मातरा नयति रेतसे भुजे दधाति पुत्रः अवरं परं पितुः नाम तृतीयं अधि रोचने दिवः ॥३॥ तत्ऽतत् इत् अस्य पौंस्यं गृणीमसि इनस्य त्रातुः अवृकस्य मीळ्हुषः यः पार्थिवानि त्रिऽभिः इत् विगामऽभिः उरु क्रमिष्ट उरुऽगायाय जीवसे ॥४॥ द्वे इत् अस्य क्रमणे स्वःऽदृशः अभिऽख्याय मर्त्यः भुरण्यति तृतीयं अस्य नकिः आ दधर्षति वयः चन पतयंतः पतत्रिणः ॥५॥ चतुःऽभिः साकं नवतिं च नामऽभिः चक्रं न वृत्तं व्यतीन् अवीविपत् बृहत्ऽशरीरः विऽमिमानः ऋक्वऽभिः युवा अकुमारः प्रति एति आऽहवं ॥६॥२५॥

---

॥१५६॥ भव मित्रः न शेव्यः घृतऽआसुतिः विभूतऽद्युम्नः एवऽयाः ऊं सऽप्रथाः अध ते विष्णो विदुषा चित् अर्ध्यः स्तोमः

यज्ञस्य राध्यो हविष्मता ॥१॥ यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥२॥ तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानंतो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥३॥ तमस्य राजा वरुणस्तमश्विना क्रतुं सचंत मारुतस्य वेधसः । दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥४॥ आ यो विवाय सचथाय दैव्य इंद्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥५॥२६॥२१॥

॥१५७॥ १-६ दीर्घतमा औचथ्यः ॥ अश्विनौ ॥ १-४ जगती । ५-६ त्रिष्टुप् ॥

॥१५७॥ अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चंद्रा मह्यावो अर्चिषा । आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥१॥ यद्युंजाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतं । अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥२॥ अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः । त्रिवंधुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥३॥ आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतं । प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥४॥ युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वंतः । युवमग्निं च वृषणावपश्च वनस्पतींरश्विनावैरयेथां ॥५॥ युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या राथ्येभिः । अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान्मनसा ददाश ॥६॥२७॥२॥

यज्ञः च राध्यः हविष्मता ॥१॥ यः पूर्व्याय वेधसे नवीयसे सुमत्ऽजानये विष्णवे ददाशति यः जातं अस्य महतः महि ब्रवत् सः इत् ऊं श्रवःऽभिः युज्यं चित् अभि असत् ॥२॥ तं ऊं स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन आ अस्य जानंतः नाम चित् विवक्तन महः ते विष्णो सुऽमतिं भजामहे ॥३॥ तं अस्य राजा वरुणः तं अश्विना क्रतुं सचंत मारुतस्य वेधसः दाधार दक्षं उत्ऽतमं अहःऽविदं व्रजं च विष्णुः सखिऽवान् अपऽऊर्णुते ॥४॥ आ यः विवाय सचथाय दैव्यः इंद्राय विष्णुः सुऽकृते सुकृत्ऽतरः वेधाः अजिन्वत् त्रिऽसधस्थः आर्यं ऋतस्य भागे यजमानं आ अभजत् ॥५॥२६॥२१॥

---

॥१५७॥ अबोधि अग्निः ज्मः उत् एति सूर्यः वि उषाः चंद्रा मही आवः अर्चिषा अयुक्षातां अश्विना यातवे रथं प्र असावीत् देवः सविता जगत् पृथक् ॥१॥ यत् युंजाथे वृषणं अश्विना रथं घृतेन नः मधुना क्षत्रं उक्षतं अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरऽसाता भजेमहि ॥२॥ अर्वाङ् त्रिऽचक्रः मधुऽवाहनः रथः जीरऽअश्वः अश्विनोः यातु सुऽस्तुतः त्रिऽवंधुरः मघऽवा विश्वऽसौभगः शं नः आ वक्षत् द्विऽपदे चतुःऽपदे ॥३॥ आ नः ऊर्जं वहतं अश्विना युवं मधुऽमत्या नः कशया मिमिक्षतं प्र आयुः तारिष्टं निः रपांसि मृक्षतं सेधतं द्वेषः भवतं सचाऽभुवा ॥४॥ युवं ह गर्भं जगतीषु धत्थः युवं विश्वेषु भुवनेषु अंतः युवं अग्निं च वृषणौ अपः च वनस्पतीन् अश्विनौ ऐरयेथां ॥५॥ युवं ह स्थः भिषजा भेषजेभिः अथो ह स्थः रथ्या रथ्येभिः॰अथो ह क्षत्रं अधि धत्थः उग्रा यः वां हविष्मान् मनसा ददाश ॥६॥२७॥२॥

॥१५८॥ १–६ दीर्घतमा औचथ्यः ॥ अश्विनौ ॥ १–५ त्रिष्टुप् । ६ अनुष्टुप् ॥

॥१५८॥ वसू रुद्रा पुरुमंतू वृधंता दशस्यतं नो वृषणाव-
भिष्टौ । दस्रा ह यद्रेक्ण औचथ्यो वां प्र यत्सस्राथे अकवा-
भिरूती ॥१॥ को वां दाशत्सुमतये चिदस्यै वसू यद्धेथे नमसा
पदे गोः । जिगृतमस्मे रेवतीः पुरंधीः कामप्रेणेव मनसा चरंता
॥२॥ युक्तो ह यद्वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि
पज्रः । उप वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः
॥३॥ उपस्तुतिरौचथ्यमुरुष्येन्मा मामिमे पतत्रिणी वि दुग्धां ।
मा मामेधो दशतयश्चितो धाक् प्र यद्वां बद्धस्त्मनि खादति
क्षां ॥४॥ न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्धम-
वाधुः । शिरो यदस्य त्रैतनो वितक्षत्स्वयं दास उरो अंसा-
वपि ग्ध ॥५॥ दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे । अपा-
मर्थं यतीनां ब्रह्मा भवति सारथिः ॥६॥१॥

---

॥१५९॥ १–५ दीर्घतमा औचथ्यः ॥ द्यावापृथिवी ॥ जगती ॥

॥१५९॥ प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मही स्तुषे
विदथेषु प्रचेतसा । देवेभिर्ये देवपुत्रे सुदंससेत्था धिया
वार्याणि प्रभूषतः ॥१॥ उत मन्ये पितुरद्रुहो मनो मातु-
र्महि स्वतवस्तद्धवीमभिः । सुरेतसा पितरा भूम चक्र-
तुरुरु प्रजाया अमृतं वरीमभिः ॥२॥ ते सूनवः स्वपसः सु-
दंससो मही जज्ञुर्मातरा पूर्वचित्तये । स्थातुश्च सत्यं जगतश्च
धर्मणि पुत्रस्य पाथः पदमद्वयाविनः ॥३॥ ते मायिनो
ममिरे सुप्रचेतसो जामी सयोनी मिथुना समोकसा । नव्यं-
नव्यं तंतुमा तन्वते दिवि समुद्रे अंतः कवयः सुदीतयः
॥४॥ तद्राधो अद्य सवितुर्वरेण्यं वयं देवस्य प्रसवे मना-

॥१५८॥ वसू रुद्रा पुरुऽमंतू॰ वृधंता दशस्यतं नः वृषणौ
अभिष्टौ दस्रा ह यत् रेक्णः औचथ्यः वां प्र यत् सस्राथे अक-
वाभिः ऊती ॥१॥ कः वां दाशत् सुऽमतये चित् अस्यै वसू यत्
धेथे नमसा पदे गोः जिगृतं अस्मे रेवतीः पुरंऽधीः कामप्रेण-
ऽइव मनसा चरंता ॥२॥ युक्तः ह यत् वां तौग्र्याय पेरुः वि
मध्ये अर्णसः धायि पज्रः उप वां अवः शरणं गमेयं शूरः न अज्म
पतयत्ऽभिः एवैः ॥३॥ उपऽस्तुतिः औचथ्यं उरुष्येत् मा मां
इमे पतत्रिणी वि दुग्धां मा मां एधः दशऽतयः चितः धाक्
प्र यत् वां बद्धः त्मनि खादति क्षां ॥४॥ न मा गरन् नद्यः मा-
तृऽतमाः दासाः यत् ईं सुऽसमुब्धं अवऽअधुः शिरः यत् अस्य
त्रैतनः विऽतक्षत् स्वयं दासः उरः अंसौ अपि ग्ध॰ ॥५॥ दीर्घ-
ऽतमाः मामतेयः जुजुर्वान् दशमे युगे अपां अर्थं यतीनां ब्रह्मा
भवति सारथिः ॥६॥१॥

---

॥१५९॥ प्र द्यावा यज्ञैः पृथिवी ऋतऽवृधा मही स्तुषे वि-
दथेषु प्रऽचेतसा देवेभिः ये देवऽपुत्रे॰ सुऽदंससा इत्था धिया
वार्याणि प्रऽभूषतः ॥१॥ उत मन्ये पितुः अद्रुहः मनः मातुः महि
स्वऽतवः तत् हवीमऽभिः सुऽरेतसा पितरा भूम चक्रतुः उरु
प्रऽजायाः अमृतं वरीमऽभिः ॥२॥ ते सूनवः सुऽअपसः सु-
ऽदंससः मही जज्ञुः मातरा पूर्वऽचित्तये स्थातुः च सत्यं जगतः
च धर्मणि पुत्रस्य पाथः पदं अद्वयाविनः ॥३॥ ते मायिनः
ममिरे सुऽप्रचेतसः जामी सऽयोनी॰ मिथुना संऽओकसा न-
व्यंऽनव्यं तंतुं आ तन्वते दिवि समुद्रे अंतः॰ कवयः सुऽदीतयः
॥४॥ तत् राधः अद्य सवितुः वरेण्यं वयं देवस्य प्रऽसवे मना-

महे । अस्मभ्यं द्यावापृथिवी सुचेतुना रयिं धत्तं वसुमंतं शतग्विनं ॥५॥२॥

---

॥१६०॥ १–५ दीर्घतमा औचथ्यः ॥ द्यावापृथिवी ॥ जगती ॥

॥१६०॥ ते हि द्यावापृथिवी विश्वशंभुव ऋतावरी रजसो धारयत्कवी । सुजन्मनी धिषणे अंतरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥१॥ उरुव्यचसा महिनी असश्चता पिता माता च भुवनानि रक्षतः । सुधृष्टमे वपुष्ये३न रोदसी पिता यत्सीमभि रूपैरवासयत् ॥२॥ स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया । धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य दुक्षत ॥३॥ अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशंभुवा । वि यो ममे रजसी सुक्रतूययाजरेभिः स्कंभनेभिः समानृचे ॥४॥ ते नो गृणाने महिनी महि श्रवः क्षत्रं द्यावापृथिवी धासथो बृहत् । येनाभि कृष्टीस्ततनाम विश्वहा पनाय्यमोजो अस्मे समिन्वतं ॥५॥३॥

---

॥१६१॥ १–१४ दीर्घतमा औचथ्यः ॥ ऋभवः ॥ १–१३ जगती । १४ त्रिष्टुप् ॥

॥१६१॥ किमु श्रेष्ठः किं यविष्ठो न आजगन्किमीयते दूत्यं१ कद्यदूचिम । न निंदिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ॥१॥ एकं चमसं चतुरः कृणोतन तद्वो देवा अब्रुवन्तद्व आगमं । सौधन्वना यद्येवा करिष्यथ साकं देवैर्यज्ञियासो भविष्यथ ॥२॥ अग्निं दूतं प्रति यदब्रवीतनाश्वः कर्त्वो रथ उतेह कर्त्वः । धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातरनु वः कृत्व्येमसि ॥३॥ चकृवांस ऋभवस्तदपृच्छत क्वेदभूद्यः स्य दूतो न आजगन् । यदावाख्यच्चमसाञ्चतुरः कृतानादित्त्वष्टा ग्नास्वंत-

महे अस्मभ्यं द्यावापृथिवी इति सुऽचेतुना रयिं धत्तं वसुऽमंतं शतऽग्विनं ॥ ५ ॥ २ ॥

---

॥१६०॥ ते इति हि द्यावापृथिवी इति विश्वऽशंभुवा ऋतवरी इत्यृतऽवरी रजसः धारयत्कवी इति धारयत्ऽकवी सुजन्मनी इति सुऽजन्मनी धिषणे इति अंतरिति ईयते देवः देवी इति धर्मणा सूर्यः शुचिः ॥१॥ उरुऽव्यचसा महिनी इति असश्चता पिता माता च भुवनानि रक्षतः सुधृष्टमे इति सुऽधृष्टमे वपुष्ये इति न रोदसी इति पिता यत् सीं अभि रूपैः अवासयत् ॥२॥ सः वह्निः पुत्रः पित्रोः पवित्रऽवान् पुनाति धीरः भुवनानि मायया धेनुं च पृश्निं वृषभं सुऽरेतसं विश्वाहा शुक्रं पयः अस्य धुक्षत ॥ ३ ॥ अयं देवानां अपसां अपःऽतमः यः जजान रोदसी इति विश्वशंभुवा इति विश्वऽशंभुवा वि यः ममे रजसी इति सुक्रतुऽयया अजरेभिः स्कंभनेभिः सं आनृचे ॥४॥ ते इति नः गृणाने इति महिनी इति महि श्रवः क्षत्रं द्यावापृथिवी इति धासथः बृहत् येन अभि कृष्टीः ततनाम विश्वहा पनाय्यं ओजः अस्मे इति सं इन्वतं ॥ ५ ॥ ३ ॥

---

॥१६१॥ किं ऊं इति श्रेष्ठः किं यविष्ठः नः आ अजगन् किं ईयते दूत्यं कत् यत् ऊचिम न निंदिम चमसं यः महाऽकुलः अग्ने भ्रातः द्रुणः इत् भूतिं ऊदिम ॥१॥ एकं चमसं चतुरः कृणोतन तत् वः देवाः अब्रुवन् तत् वः आ अगमं सौधन्वनाः यदि एव करिष्यथ साकं देवैः यज्ञियासः भविष्यथ ॥२॥ अग्निं दूतं प्रति यत् अब्रवीतन अश्वः कर्त्वः रथः उत इह कर्त्वः धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातः अनु वः कृत्वी आ इमसि ॥३॥ चकृऽवांसः ऋभवः तत् अपृच्छत क्व इत् अभूत् यः स्यः दूतः नः आ अजगन् यदा अवऽअख्यत् चमसान् चतुरः कृतान् आत् इत् त्वष्टा ग्नासु अंतः

न्यानजे ॥ ४ ॥ हनामैनाँ इति त्वष्टा यदब्रवीच्चमसं ये देवपानमनिंदिषुः। अन्या नामानि कृण्वते सुते सचाँ अन्यैरेनान्कन्या३नामभिः स्परत् ॥ ५ ॥ ४ ॥ इंद्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत। ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ॥ ६ ॥ निश्चर्मणो गामरिणीत धीतिभिर्या जरंता युवशा ताकृणोतन। सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥ ७ ॥ इदमुदकं पिबतेत्यब्रवीतनेदं वा घा पिबता मुंजनेजनं। सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्वै ॥ ८ ॥ आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत्। वधर्यंतीं बहुभ्यः प्रैको अब्रवीदृता वदंतश्चमसाँ अपिंशत ॥ ९ ॥ श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतं। आ निम्रुचः शकृदेको अपाभरत्किं स्वित्पुत्रेभ्यः पितरा उपावतुः ॥ १० ॥ ५ ॥ उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः। अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥ ११ ॥ संमील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः। अशपत यः करस्नं व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥ १२ ॥ सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत्। श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत ॥ १३ ॥ दिवा यांति मरुतो भूम्याग्निरयं वातो अंतरिक्षेण याति। अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छंतः शवसो नपातः ॥ १४ ॥ ६ ॥

नि आनजे ॥४॥ हनाम एनान् इति त्वष्टा यत् अब्रवीत् चमसं
ये देवऽपानं अनिंदिषुः अन्या नामानि कृण्वते सुते सचा अन्यैः
एनान् कन्या नामऽभिः स्परत् ॥५॥४॥ इंद्रः हरी इति युयुजे अश्विना
रथं बृहस्पतिः विश्वऽरूपां उप आजत ऋभुः विऽभ्वा वाजः दे-
वान् अगच्छत सुऽअपसः यज्ञियं भागं ऐतन ॥६॥ निः चर्मणः
गां अरिणीत धीतिऽभिः या जरंता युवशा ता अकृणोतन सौ-
धन्वनाः अश्वात् अश्वं अतक्षत युक्त्वा रथं उप देवान् अयातन
॥७॥ इदं उदकं पिबत इति अब्रवीतन इदं वा घ पिबत मुंज-
ऽनेजनं सौधन्वनाः यदि तत् नऽइव हर्यथ तृतीये घ सवने मा-
दयाध्वै ॥८॥ आपः भूयिष्ठाः इति एकः अब्रवीत् अग्निः भूयिष्ठः
इति अन्यः अब्रवीत् वधःऽयंतीं बहुऽभ्यः प्र एकः अब्रवीत् ऋता
वदंतः चमसान् अपिंशत ॥९॥ श्रोणां एकः उदकं गां अव अज-
ति मांसं एकः पिंशति सूनया आऽभृतं आ निऽम्रुचः शकृत् एकः
अप अभरत् किं स्वित् पुत्रेभ्यः पितरौ उप आवतुः ॥१०॥५॥
उद्वत्ऽसु अस्मै अकृणोतन तृणं निवत्ऽसु अपः सुऽअपस्य-
या नरः अगोह्यस्य यत् असस्तन गृहे तत् अद्य इदं ऋभवः
न अनु गच्छथ ॥११॥ संऽमील्य यत् भुवना परिऽअसर्पत
क्व स्वित् तात्या पितरा वः आसतुः अशपत यः करस्नं वः आ-
ऽददे यः प्र अब्रवीत् प्रो इति तस्मै अब्रवीतन ॥१२॥ सुसुप्वांसः
ऋभवः तत् अपृच्छत अगोह्य कः इदं नः अबूबुधत् श्वानं
बस्तः बोधयितारं अब्रवीत् संवत्सरे इदं अद्य वि अख्यत
॥१३॥ दिवा यांति मरुतः भूम्या अग्निः अयं वातः अंतरि-
क्षेण याति अत्ऽभिः याति वरुणः समुद्रैः युष्मान् इच्छंतः
शवसः नपातः ॥१४॥६॥

॥ १६२ ॥ १–२२ दीर्घतमा औचथ्यः ॥ अश्वस्तुतिः ॥ १.२.४.५.७–२२ त्रिष्टुप् ।
३. ६ जगती ॥

॥१६२॥ मा नो मित्रो वरुणो अर्यमायुरिंद्र ऋभुक्षा मरुतः
परि ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वी-
र्याणि ॥१॥ यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो
नयंति । सुप्राङजो मेम्यद्विश्वरूप इंद्रापूष्णोः प्रियमप्येति पाथः
॥२॥ एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते वि-
श्वदेव्यः । अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जि-
न्वति ॥३॥ यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयंति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥४॥
होताध्वर्युरावया अग्निमिंधो ग्रावग्राभ उत शंस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वं ॥५॥७॥ यू-
पव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति । ये चा-
र्वते पचनं संभरंत्युतो तेषामभिगूर्तिर्न इन्वतु ॥६॥ उप प्रा-
गात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं
विप्रा ऋषयो मदंति देवानां पुष्टे चकृमा सुबंधुं ॥७॥ यद्वा-
जिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा
घास्य प्रभृतमास्ये३तृणं सर्वा ता ते अपि देवेष्वस्तु ॥८॥ यद-
श्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु
॥९॥ यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गंधो
अस्ति । सुकृता तच्छमितारः कृण्वंतूत मेधं शृतपाकं पचंतु
॥१०॥८॥ यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्याव-
धावति । मा तद्भूम्यामा श्रिषन्मा तृणेषु देवेभ्यस्तदुश-

॥१६२॥ मा नः मित्रः वरुणः अर्यमा आयुः इंद्रः ऋभुक्षाः
मरुतः परि ख्यन् यत् वाजिनः देवऽजातस्य सप्तेः प्रऽवक्ष्यामः
विदथे वीर्याणि ॥१॥ यत् निःऽनिजा रेक्णसा प्रावृतस्य रातिं
गृभीतां मुखतः नयंति सुऽप्राङ् अजः मेम्यत् विश्वऽरूपः इंद्रा-
पूष्णोः प्रियं अपि एति पाथः ॥२॥ एषः छागः पुरः अश्वेन वा-
जिना पूष्णः भागः नीयते विश्वऽदेव्यः अभिऽप्रियं यत् पुरो-
ळाशं अर्वता त्वष्टा इत् एनं सौश्रवसाय जिन्वति ॥३॥ यत्
हविष्यं ऋतुऽशः देवऽयानं त्रिः मानुषाः परि अश्वं नयंति अत्र
पूष्णः प्रथमः भागः एति यज्ञं देवेभ्यः प्रतिऽवेदयन् अजः ॥४॥
होता अध्वर्युः आऽवयाः अग्निऽइंधः ग्रावऽग्राभः उत शंस्ता
सुऽविप्रः तेन यज्ञेन सुऽअरंकृतेन सुऽइष्टेन वक्षणाः आ पृणध्वं
॥५॥७॥ यूपऽव्रस्काः उत ये यूपऽवाहाः चषालं ये अश्वऽयूपाय
तक्षति ये च अर्वते पचनं संऽभरंति उतो तेषां अभिऽगूर्तिः
नः इन्वतु ॥६॥ उप प्र अगात् सुऽमत् मे अधायि मन्म देवानां
आशाः उप वीतऽपृष्ठः अनु एनं विप्राः ऋषयः मदंति देवानां
पुष्टे चकृम सुऽबंधुं ॥७॥ यत् वाजिनः दाम संऽदानं अर्वतः या
शीर्षण्या रशना रज्जुः अस्य यत् वा घ अस्य प्रऽभृतं आस्ये तृणं
सर्वा ता ते अपि देवेषु अस्तु ॥८॥ यत् अश्वस्य क्रविषः मक्षि-
का आश यत् वा स्वरौ स्वऽधितौ रिप्तं अस्ति यत् हस्तयोः शमि-
तुः यत् नखेषु सर्वा ता ते अपि देवेषु अस्तु ॥९॥ यत् ऊवध्यं
उदरस्य अपऽवाति यः आमस्य क्रविषः गंधः अस्ति सुऽकृता
तत् शमितारः कृण्वंतु उत मेधं शृतऽपाकं पचंतु ॥१०॥८॥ यत्
ते गात्रात् अग्निना पच्यमानात् अभि शूलं निऽहतस्य अव-
ऽधावति मा तत् भूम्यां आ श्रिषत् मा तृणेषु देवेभ्यः तत् उश-

द्भ्यो रातमस्तु ॥ ११ ॥ ये वाजिनं परिपश्यंति पक्वं य ईमाहुः सुरभिर्निर्हरेति । ये चार्वतो मांसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥ १२ ॥ यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । ऊष्मण्यापिधाना चरूणामंकाः सूनाः परि भूषंत्यश्वं ॥ १३ ॥ निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः । यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ १४ ॥ मा त्वाग्निर्ध्वनयीद्धूमगंधिर्मोखा भ्राजंत्यभि विक्त जघ्रिः । इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णंत्यश्वं ॥ १५ ॥ ९ ॥ यदश्वाय वास उपस्तृणंत्यधीवासं या हिरण्यान्यस्मै । संदानमर्वंतं पड्बीशं प्रिया देवेष्वा यामयंति ॥ १६ ॥ यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद । स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥ १७ ॥ चतुस्त्रिंशद्वाजिनो देवबंधोर्वंक्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त ॥ १८ ॥ एकस्त्वष्टुरश्वस्या विशस्ता द्वा यंतारा भवतस्तथ ऋतुः । या ते गात्राणामृतुथा कृणोमि ताता पिंडानां प्र जुहोम्यग्नौ ॥ १९ ॥ मा त्वा तपत्प्रिय आत्मापियंतं मा स्वधितिस्तन्व१ आ तिष्ठिपत्ते । मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ॥ २० ॥ न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः । हरी ते युंजा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य ॥ २१ ॥ सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वापुषं रयिं । अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान् ॥ २२ ॥ १० ॥

त्ऽभ्यः रातं अस्तु ॥११॥ ये वाजिनं परिऽपश्यंति पक्वं ये ईं आहुः
सुरभिः निः हर इति ये च अर्वतः मांसऽभिक्षां उपऽआसंते उतो
तेषां अभिऽगूर्तिः नः इन्वतु ॥१२॥ यत् निऽईक्षणं मांस्पचन्याः
उखायाः या पात्राणि यूष्णः आऽसेचनानि ऊष्मण्या अपि-
ऽधाना चरूणां अंकाः सूनाः परि भूषंति अश्वं ॥१३॥ निऽक्रमणं
निऽसदनं विऽवर्तनं यत् च पड्बीशं अर्वतः यत् च पपौ यत् च
घासिं जघास सर्वा ता ते अपि देवेषु अस्तु ॥१४॥ मा त्वा अग्निः
ध्वनयीत् धूमऽगंधिः मा उखा भ्राजंती अभि विक्त जघ्रिः इष्टं वी-
तं अभिऽगूर्तं वषट्ऽकृतं तं देवासः प्रति गृभ्णंति अश्वं ॥१५॥९॥
यत् अश्वाय वासः उपऽस्तृणंति अधीवासं या हिरण्यानि अस्मै
संऽदानं अर्वंतं पड्बीशं प्रिया देवेषु आ यमयंति ॥१६॥ यत् ते सादे
महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद स्रुचाऽइव ता
हविषः अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥१७॥ चतुः-
ऽत्रिंशत् वाजिनः देवऽबंधोः वंक्रीः अश्वस्य स्वऽधितिः सं एति
अच्छिद्रा गात्रा वयुना कृणोत परुःऽपरुः अनुऽघुष्य वि शस्त
॥१८॥ एकः त्वष्टुः अश्वस्य विऽशस्ता द्वा यंतारा भवतः तथा ऋतुः
या ते गात्राणां ऋतुऽथा कृणोमि ताऽता पिंडानां प्र जुहोमि
अग्नौ ॥१९॥ मा त्वा तपत् प्रियः आत्मा अपिऽयंतं मा स्वऽधि-
तिः तन्वः आ तिस्थिपत् ते मा ते गृध्नुः अविऽशस्ता अतिऽहाय
छिद्रा गात्राणि असिना मिथु कः॰ ॥२०॥ न वै ऊं एतत् म्रियसे
न रिष्यसि देवान् इत् एषि पथिऽभिः सुऽगेभिः हरी॰ ते युंजा पृष-
ती॰ अभूतां उप अस्थात् वाजी धुरि रासभस्य ॥२१॥ सुऽगव्यं नः
वाजी सुऽअश्व्यं पुंसः पुत्रान् उत विश्वऽपुषं रयिं अनागाःऽत्वं
नः अदितिः कृणोतु क्षत्रं नः अश्वः वनतां हविष्मान् ॥२२॥१०॥

॥१६३॥ १-१३ दीर्घतमा औचथ्यः॥ अश्वस्तुतिः॥ त्रिष्टुप्॥

॥१६३॥ यदक्रंदः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्॥१॥ यमेन दत्तं त्रित एनमायुनगिंद्र एणं प्रथमो अध्यतिष्ठत्। गंधर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट॥२॥ असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बंधनानि॥३॥ त्रीणि त आहुर्दिवि बंधनानि त्रीण्यप्सु त्रीण्यंतः समुद्रे। उतेव मे वरुणश्छंत्स्यर्वन्यत्रा त आहुः परमं जनित्रं॥४॥ इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना। अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षंति गोपाः॥५॥११॥ आत्मानं ते मनसारादजानामवो दिवा पतयंतं पतंगं। शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि॥६॥ अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः। यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः॥७॥ अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनां। अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते॥८॥ हिरण्यशृंगोऽयो अस्य पादा मनोजवा अवर इंद्र आसीत्। देवा इदस्य हविरद्यमायन्यो अर्वंतं प्रथमो अध्यतिष्ठत्॥९॥ ईर्मांतासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः। हंसा इव श्रेणिशो यतंते यदाक्षिषुर्दिव्यमज्ममश्वाः॥१०॥१२॥ तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वात इव ध्रजीमान्। तव शृंगाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरंति॥११॥ उप प्रागाच्छसनं वाज्य-

॥१६३॥ यत् अक्रंदः प्रथमं जायमानः उत्ऽयन् समुद्रात् उत वा पुरीषात् श्येनस्य पक्षा हरिणस्य बाहू उपऽस्तुत्यं महि जातं ते अर्वन् ॥१॥ यमेन दत्तं त्रितः एनं अयुनक् इंद्रः एनं प्रथमः अधि अतिष्ठत् गंधर्वः अस्य रशनां अगृभ्णात् सूरात् अश्वं वसवः निः अतष्ट ॥२॥ असि यमः असि आदित्यः अर्वन् असि त्रितः गुह्येन व्रतेन असि सोमेन समया विऽपृक्तः आहुः ते त्रीणि दिवि बंधनानि ॥३॥ त्रीणि ते आहुः दिवि बंधनानि त्रीणि अप्ऽसु त्रीणि अंतः समुद्रे उतऽइव मे वरुणः छंत्सि अर्वन् यत्र ते आहुः परमं जनित्रं ॥४॥ इमा ते वाजिन् अवऽमार्जनानि इमा शफानां सनितुः निऽधाना अत्र ते भद्राः रशनाः अपश्यं ऋतस्य याः अभिऽरक्षंति गोपाः ॥५॥११॥ आत्मानं ते मनसा आरात् अजानां अवः दिवा पतयंतं पतंगं शिरः अपश्यं पथिऽभिः सुऽगेभिः अरेणुऽभिः जेहमानं पतत्रि ॥६॥ अत्र ते रूपं उत्ऽतमं अपश्यं जिगीषमाणं इषः आ पदे गोः यदा ते मर्तः अनु भोगं आनट् आत् इत् ग्रसिष्ठः ओषधीः अजीगरिति ॥७॥ अनु त्वा रथः अनु मर्यः अर्वन् अनु गावः अनु भगः कनीनां अनु व्रातासः तव सख्यं ईयुः अनु देवाः ममिरे वीर्यं ते ॥८॥ हिरण्यऽशृंगः अयः अस्य पादाः मनःऽजवाः अवरः इंद्रः आसीत् देवाः इत् अस्य हविःऽअद्यं आयन् यः अर्वंतं प्रथमः अधिऽअतिष्ठत् ॥९॥ ईर्मऽअंतासः सिलिकऽमध्यमासः सं शूरणासः दिव्यासः अत्याः हंसाःऽइव श्रेणिऽशः यतंते यत् आक्षिषुः दिव्यं अज्मं अश्वाः ॥१०॥१२॥ तव शरीरं पतयिष्णु अर्वन् तव चित्तं वातःऽइव ध्रजीमान् तव शृंगाणि विऽस्थिता पुरुऽत्रा अरण्येषु जर्भुराणा चरंति ॥११॥ उप प्र अगात् शसनं वाजी

वी देवद्रीचा मनसा दीध्यानः। अजः पुरो नीयते नाभिरस्यानु पश्चात्कवयो यंति रेभाः॥१२॥ उप प्रागात्परमं यत्सधस्थमर्वाँ अच्छा पितरं मातरं च। अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि॥१३॥१३॥

---

॥१६४॥ १–५२ दीर्घतमा औचथ्यः॥ १–४१ विश्वे देवाः। ४२[1] वाक्। ४२[2] आपः। ४३[1] शकधूमः। ४३[2] सोमः। ४४ अग्निः सूर्यो वायुश्च। ४५ वाक्। ४६. ४७ सूर्यः। ४८ संवत्सरसंस्थं कालचक्रवर्णनं। ४९ सरस्वती। ५० साध्याः। ५१ सूर्यः पर्जन्याग्नी वा। ५२ सरस्वान् सूर्यो वा॥ १–११. १३. १४. १६–२२. २४–२८. ३०–३५. ३७–४०. ४३–५०. ५२ त्रिष्टुप्। १२. १५. २३. २९. ३६. ४१ जगती। ४२ प्रस्तारपंक्तिः। ५१ अनुष्टुप्॥

॥१६४॥ अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रं॥१॥ सप्त युंजंति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः॥२॥ इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहंत्यश्वाः। सप्त स्वसारो अभि सं नवंते यत्र गवां निहिता सप्त नाम॥३॥ को ददर्श प्रथमं जायमानमस्थन्वंतं यदनस्था बिभर्ति। भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुप गात्प्रष्टुमेतत्॥४॥ पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि। वत्से बष्कयेऽधि सप्त तंतून्वि तत्निरे कवय ओतवा उ॥५॥१४॥ अचिकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मने न विद्वान्। वि यस्तस्तंभ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकं॥६॥ इह ब्रवीतु य ईमंग वेदास्य वामस्य निहितं पदं वेः। शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः॥७॥ माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे। सा बीभत्सुर्गर्भरसा निविद्धा नमस्वंत इदुपवाकमीयुः॥८॥ युक्ता मातासीद्धुरि दक्षि-

अर्वाङ् देवद्रीचा मनसा दीध्यानः अजः पुरः नीयते नाभिः अस्य अनु पश्चात् कवयः यंति रेभाः ॥१२॥ उप प्र अगात् परमं यत् सधऽस्थं अर्वान् अच्छ पितरं मातरं च अद्य देवान् जुष्टऽतमः हि गम्याः अथ आ शास्ते दाशुषे वार्याणि ॥१३॥१३॥

---

॥१६४॥ अस्य वामस्य पलितस्य होतुः तस्य भ्राता मध्यमः अस्ति अश्नः तृतीयः भ्राता घृतऽपृष्ठः अस्य अत्र अपश्यं विश्पतिं सप्तऽपुत्रं ॥१॥ सप्त युंजंति रथं एकऽचक्रं एकः अश्वः वहति सप्तऽनामा त्रिऽनाभि चक्रं अजरं अनर्वं यत्र इमा विश्वा भुवना अधि तस्थुः ॥२॥ इमं रथं अधि ये सप्त तस्थुः सप्तऽचक्रं सप्त वहंति अश्वाः सप्त स्वसारः अभि सं नवंते यत्र गवां निऽहिता सप्त नाम ॥३॥ कः ददर्श प्रथमं जायमानं अस्थन्ऽवंतं यत् अनस्था बिभर्ति भूम्याः असुः असृक् आत्मा क्व स्वित् कः विद्वांसं उप गात् प्रष्टुं एतत् ॥४॥ पाकः पृच्छामि मनसा अविऽजानन् देवानां एना निऽहिता पदानि वत्से बष्कये अधि सप्त तंतून् वि तत्निरे कवयः ओतवै ऊं ॥५॥१४॥ अचिकित्वान् चिकितुषः चित् अत्र कवीन् पृच्छामि विद्मने न विद्वान् वि यः तस्तंभ षट् इमा रजांसि अजस्य रूपे किं अपि स्वित् एकं ॥६॥ इह ब्रवीतु यः ईं अंग वेद अस्य वामस्य निऽहितं पदं वेः॰ शीर्ष्णः क्षीरं दुह्रते गावः अस्य वव्रिं वसानाः उदकं पदा अपुः ॥७॥ माता पितरं ऋते आ बभाज धीती अग्रे मनसा सं हि जग्मे सा बीभत्सुः गर्भऽरसा निऽविद्धा नमस्वंतः इत् उपऽवाकं ईयुः ॥८॥ युक्ता माता आसीत् धुरि दक्षि-

णाया अतिष्ठद्गर्भो वृजनीष्वंतः । अमीमेद्वत्सो अनु गा-
मपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥९॥ तिस्रो मातृस्त्रीन्पितॄ-
न्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयंति । मंत्रयंते दिवो
अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वां ॥१०॥१५॥ द्वाद-
शारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य । आ पुत्रा
अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥११॥
पंचपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरी-
षिणं । अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहु-
रर्पितं ॥१२॥ पंचारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुव-
नानि विश्वा । तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते
सनाभिः ॥१३॥ सनेमि चक्रमजरं वि वावृत उत्तानायां
दश युक्ता वहंति । सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्ना-
र्पिता भुवनानि विश्वा ॥१४॥ साकंजानां सप्तथमाहुरेकजं
षळिद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि
धामशः स्थात्रे रेजंते विकृतानि रूपशः ॥१५॥१६॥
स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेत-
दंधः । कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स
पितुष्पितासत् ॥१६॥ अवः परेण पर एनावरेण पदा
वत्सं बिभ्रती गौरुदस्थात् । सा कद्रीची कं स्विदर्धं परा-
गात्क स्वित्सूते नहि यूथे अंतः ॥१७॥ अवः परेण पि-
तरं यो अस्यानुवेद पर एनावरेण । कवीयमानः क इह
प्र वोचद्देवं मनः कुतो अधि प्रजातं ॥१८॥ ये अर्वा-
चस्ताँ उ पराच आहुर्ये परांचस्ताँ उ अर्वाच आहुः ।
इंद्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो

णायाः अतिष्ठत् गर्भः वृजनीषु अंतः अमीमेत् वत्सः अनु गां
अपश्यत् विश्वऽरूप्यं त्रिषु योजनेषु ॥ ९ ॥ तिस्रः मातॄः त्रीन्
पितॄन् बिभ्रत् एकः ऊर्ध्वः तस्थौ न ईं अव ग्लपयंति मंत्रयंते
दिवः अमुष्य पृष्ठे विश्वऽविदं वाचं अविश्वऽमिन्वां ॥ १० ॥ १५ ॥
द्वादशऽअरं नहि तत् जराय वर्वर्ति चक्रं परि द्यां ऋतस्य आ
पुत्राः अग्ने मिथुनासः अत्र सप्त शतानि विंशतिः च तस्थुः ॥ ११ ॥
पंचऽपादं पितरं द्वादशऽआकृतिं दिवः आहुः परे अर्धे पुरी-
षिणं अथ इमे अन्ये उपरे विऽचक्षणं सप्तऽचक्रे षट्ऽअरे
आहुः अर्पितं ॥ १२ ॥ पंचऽअरे चक्रे परिऽवर्तमाने तस्मिन् आ
तस्थुः भुवनानि विश्वा तस्य न अक्षः तप्यते भूरिऽभारः सनात्
एव न शीर्यते सऽनाभिः ॥ १३ ॥ सऽनेमि चक्रं अजरं वि ववृते
उत्तानायां दश युक्ताः वहंति सूर्यस्य चक्षुः रजसा एति आ-
ऽवृतं तस्मिन् आर्पिता भुवनानि विश्वा ॥ १४ ॥ साकंऽजानां
सप्तथं आहुः एकऽजं षट् इत् यमाः ऋषयः देवऽजाः इति तेषां
इष्टानि विऽहितानि धामऽशः स्थात्रे रेजंते विऽकृतानि रूप-
ऽशः ॥ १५ ॥ १६ ॥ स्त्रियः सतीः तान् ऊं मे पुंसः आहुः पश्यत्
अक्षण्ऽवान् न वि चेतत् अंधः कविः यः पुत्रः सः ईं आ चि-
केत यः ता विऽजानात् सः पितुः पिता असत् ॥ १६ ॥ अवः
परेण परः एना अवरेण पदा वत्सं बिभ्रती गौः उत् अस्थात्
सा कद्रीची कं स्वित् अर्धं परा अगात् क्व स्वित् सूते नहि यूथे
अंतः ॥ १७ ॥ अवः परेण पितरं यः अस्य अनुऽवेद परः एना अव-
रेण कविऽयमानः कः इह प्र वोचत् देवं मनः कुतः अधि प्रऽजातं
॥ १८ ॥ ये अर्वाचः तान् ऊं पराचः आहुः ये परांचः तान् ऊं अर्वा-
चः आहुः इंद्रः च या चक्रथुः सोम तानि धुरा न युक्ताः रजसः

वहंति ॥१९॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥२०॥१७॥ यत्रा सुपर्णा अमृतस्य भागम- निमेषं विदथाभिस्वरंति । इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥२१॥ यस्मिन्वृक्षे मध्वदः सुपर्णा निविशंते सुवते चाधि विश्वे । तस्येदाहुः पि- प्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥२२॥ यद्गा- यत्रे अधि गायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत । यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः ॥२३॥ गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकं । वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥२४॥ जगता सिंधुं दिव्यस्तभायद्रथंतरे सूर्यं पर्य- पश्यत् । गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्र रिरिचे महित्वा ॥२५॥१८॥ उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनां । श्रेष्ठं सवं सविता साविष- न्नोऽभीद्धो घर्मस्तदु षु प्र वोचं ॥२६॥ हिंकृण्वती वसुपत्नी वसूनां वत्समिच्छंती मनसाभ्यागात् । दुहाम- श्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥२७॥ गौरमीमेदनु वत्सं मिषंतं मूर्धानं हिङ्ङकृणो- न्मातवा उ । सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥२८॥ अयं स शिंक्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवंती प्रति वव्रिमौहत ॥२९॥ अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानां । जीवो मृ-

वहंति ॥१९॥ द्वा सुऽपर्णा सऽयुजा सखाया समानं वृक्षं परि सस्वजाते तयोः अन्यः पिप्पलं स्वादु अत्ति अनंश्नन् अन्यः अभि चाकशीति ॥ २० ॥ १७ ॥ यत्र सुऽपर्णाः अमृतस्य भागं अनिऽमेषं विदथा अभिऽस्वरंति इनः विश्वस्य भुवनस्य गोपाः सः मा धीरः पाकं अत्र आ विवेश ॥२१॥ यस्मिन् वृक्षे मधुऽअदः सुऽपर्णाः निऽविशंते सुवते च अधि विश्वे तस्य इत् आहुः पिप्पलं स्वादु अग्रे तत् न उत् नशत् यः पितरं न वेद ॥२२॥ यत् गायत्रे अधि गायत्रं आऽहितं त्रैस्तुभात् वा त्रैस्तुभं निःऽअतक्षत यत् वा जगत् जगति आऽहितं पदं ये इत् तत् विदुः ते अमृतऽत्वं आनशुः ॥२३॥ गायत्रेण प्रति मिमीते अर्कं अर्केण साम त्रैस्तुभेन वाकं वाकेन वाकं द्विऽपदा चतुःऽपदा अक्षरेण मिमते सप्त वाणीः ॥२४॥ जगता सिंधुं दिवि अस्तभायत् रथंऽतरे सूर्यं परि अपश्यत् गायत्रस्य संऽइधः तिस्रः आहुः ततः मह्ना प्र रिरिचे महिऽत्वा ॥ २५ ॥ १८ ॥ उप ह्वये सुऽदुघां धेनुं एतां सुऽहस्तः गोऽधुक् उत दोहत् एनां श्रेष्ठं सवं सविता साविषत् नः अभिऽइद्धः घर्मः तत् ऊं सु प्र वोचं ॥२६॥ हिङ्ऽकृण्वती वसुऽपत्नी वसूनां वत्सं इच्छंती मनसा अभि आ अगात् दुहां अश्विऽभ्यां पयः अघ्न्या इयं सा वर्धतां महते सौभगाय ॥ २७ ॥ गौः अमीमेत् अनु वत्सं मिषंतं मूर्धानं हिङ् अकृणोत् मातवै ऊं सृक्वाणं घर्मं अभि वावशाना मिमाति मायुं पयते पयःऽभिः ॥ २८ ॥ अयं सः शिंक्ते येन गौः अभिऽवृता मिमाति मायुं ध्वसनौ अधि श्रिता सा चित्तिऽभिः नि हि चकार मर्त्यं विऽद्युत् भवंती प्रति वव्रिं औहत ॥२९॥ अनत् शये तुरऽगातु जीवं एजत् ध्रुवं मध्ये आ पस्त्यानां जीवः मृ-

तस्थं चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ३० ॥ १९ ॥
अपंश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरंतं ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वंतः
॥३१॥ य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु
तस्मात् । स मातुर्योना परिवीतो अंतर्बहुप्रजा निर्ऋ-
तिमा विवेश ॥ ३२ ॥ द्यौर्मे पिता जनिता नाभिरत्र बंधुर्मे
माता पृथिवी महीयं । उत्तानयोश्चम्वो३र्योनिरंतरत्रा पिता
दुहितुर्गर्भमाधात् ॥ ३३ ॥ पृच्छामि त्वा परमंतं पृथिव्याः
पृच्छामि यत्र भुवनस्य नाभिः । पृच्छामि त्वा वृष्णो अश्वस्य
रेतः पृच्छामि वाचः परमं व्योम ॥ ३४ ॥ इयं वेदिः परो
अंतः पृथिव्या अयं यज्ञो भुवनस्य नाभिः । अयं सोमो
वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥ २० ॥
सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठंति प्रदिशा विध-
र्मणि । ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवंति
विश्वतः ॥ ३६ ॥ न वि जानामि यदिवेदमस्मि निण्यः संन-
द्धो मनसा चरामि । यदा मागन्प्रथमजा ऋतस्यादिद्वाचो
अश्नुवे भागमस्याः ॥ ३७ ॥ अपाङ् प्राङेति स्वधया गृभी-
तोऽमर्त्यो मर्त्येना सयोनिः । ता शश्वंता विषूचीना वियंता
न्य१न्यं चिक्युर्न नि चिक्युरन्यं ॥ ३८ ॥ ऋचो अक्षरे परमे
व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा
करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३९ ॥ सूयवसाद्भ-
गवती हि भूया अथो वयं भगवंतः स्याम । अद्धि तृणमघ्न्ये
विश्वदानीं पिब शुद्धमुदकमाचरंती ॥ ४० ॥ २१ ॥ गौरी-
र्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।

तस्थं चरति स्वधाभिः अमर्त्यः मर्त्येन सऽयोनिः ॥ ३० ॥ १९ ॥
अपश्यं गोपां अनिऽपद्यमानं आ च परा च पथिऽभिः चरंतं सः सध्रीचीः सः विषूचीः वसानः आ वरीवर्ति भुवनेषु अंतः ॥३१॥ यः ईं चकार न सः अस्य वेद यः ईं ददर्श हिरुक् इत् नु तस्मात् सः मातुः योना परिऽवीतः अंतः बहुऽप्रजाः निःऽऋतिं आ विवेश ॥३२॥ द्यौः मे पिता जनिता नाभिः अत्र बंधुः मे माता पृथिवी मही इयं उत्तानयोः चम्वोः योनिः अंतः अत्र पिता दुहितुः गर्भं आ अधात् ॥३३॥ पृच्छामि त्वा परं अंतं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः पृच्छामि त्वा वृष्णः अश्वस्य रेतः पृच्छामि वाचः परमं विऽओम ॥ ३४ ॥ इयं वेदिः परः अंतः पृथिव्याः अयं यज्ञः भुवनस्य नाभिः अयं सोमः वृष्णः अश्वस्य रेतः ब्रह्मा अयं वाचः परमं विऽओम ॥३५॥२०॥ सप्त अर्धऽगर्भाः भुवनस्य रेतः विष्णोः तिष्ठंति प्रऽदिशा विऽधर्मणि ते धीतिऽभिः मनसा ते विपःऽचितः परिऽभुवः परि भवंति विश्वतः ॥ ३६ ॥ न वि जानामि यतऽइव इदं अस्मि निण्यः संऽनद्धः मनसा चरामि यदा मा आ अगन् प्रथमऽजाः ऋतस्य आत् इत् वाचः अश्नुवे भागं अस्याः ॥३७॥ अपाङ् प्राङ् एति स्वधया गृभीतः अमर्त्यः मर्त्येन सऽयोनिः ता शश्वंता विषूचीना विऽयंता नि अन्यं चिक्युः न नि चिक्युः अन्यं ॥३८॥ ऋचः अक्षरे परमे विऽओमन् यस्मिन् देवाः अधि विश्वे निऽसेदुः यः तत् न वेद किं ऋचा करिष्यति ये इत् तत् विदुः ते इमे सं आसते ॥३९॥ सुयवसऽअत् भगऽवती हि भूयाः अथो वयं भगऽवंतः स्याम अद्धि तृणं अघ्न्ये विश्वऽदानीं पिब शुद्धं उदकं आऽचरंती ॥४०॥२१॥ गौरीः मिमाय सलिलानि तक्षती एकऽपदी द्विऽपदी सा चतुःऽपदी

अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥४१॥
तस्याः समुद्रा अधि वि क्षरंति तेन जीवंति प्रदिशश्चतस्रः।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥४२॥ शकमयं धूम-
मारादपश्यं विषूवता पर एनावरेण। उक्षाणं पृश्निम-
पचंत वीरास्तानि धर्माणि प्रथमान्यासन् ॥४३॥ त्रयः
केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषां। विश्व-
मेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपं ॥४४॥
चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये
मनीषिणः। गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो
मनुष्या वदंति ॥४५॥ इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यः
स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदंत्यग्निं यमं
मातरिश्वानमाहुः ॥४६॥२२॥ कृष्णं नियानं हरयः सुप-
र्णा अपो वसाना दिवमुत्पतंति। त आववृत्रन्त्सदनादृत-
स्यादिद्घृतेन पृथिवी व्युद्यते ॥४७॥ द्वादश प्रधयश्चक्रमेकं
त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन्त्साकं त्रिशता न
शंकवोऽर्पिताः षष्टिर्न चलाचलासः ॥४८॥ यस्ते स्तनः
शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि। यो रत्नधा
वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥४९॥ यज्ञेन
यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं
महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥५०॥
समानमेतदुदकमुच्चैत्यव चाहभिः। भूमिं पर्जन्या जिन्वंति
दिवं जिन्वंत्यग्नयः ॥५१॥ दिव्यं सुपर्णं वायसं बृहंतमपां
गर्भं दर्शतमोषधीनां। अभीपतो वृष्टिभिस्तर्पयंतं सरस्वंत-
मवसे जोहवीमि ॥५२॥२३॥२२॥

अष्टाऽपदी नवऽपदी बभूवुषी सहस्रऽअक्षरा परमे विऽओमन्
॥४१॥ तस्याः समुद्राः अधि वि क्षरंति तेन जीवंति प्रऽदिशः
चतस्रः ततः क्षरति अक्षरं तत् विश्वं उप जीवति ॥४२॥ शकऽ-
ऽमयं धूमं आरात् अपश्यं विषुऽवता परः एना अवरेण उक्षाणं
पृश्निं अपचंत वीराः तानि धर्माणि प्रथमानि आसन् ॥४३॥
त्रयः केशिनः ऋतुऽथा वि चक्षते संवत्सरे वपते एकः एषां विश्वं
एकः अभि चष्टे शचीभिः ध्राजिः एकस्य ददृशे न रूपं ॥ ४४ ॥
चत्वारि वाक् परिऽमिता पदानि तानि विदुः ब्राह्मणाः ये मनी-
षिणः गुहा त्रीणि निऽहिता न इंगयंति तुरीयं वाचः मनुष्याः
वदंति ॥४५॥ इंद्रं मित्रं वरुणं अग्निं आहुः अथो इति दिव्यः सः सु-
ऽपर्णः गरुत्मान् एकं सत् विप्राः बहुधा वदंति अग्निं यमं मा-
तरिश्वानं आहुः ॥४६॥२२॥ कृष्णं निऽयानं हरयः सुऽपर्णाः अपः
वसानाः दिवं उत् पतंति ते आ अववृत्रन् सदनात् ऋतस्य
आत् इत् घृतेन पृथिवी वि उद्यते ॥४७॥ द्वादश प्रऽधयः चक्रं
एकं त्रीणि नभ्यानि कः ऊं इति तत् चिकेत तस्मिन् साकं त्रिऽशताः
न शंकवः अर्पिताः षष्टिः न चलाचलासः ॥ ४८ ॥ यः ते स्तनः
शशयः यः मयःऽभूः येन विश्वा पुष्यसि वार्याणि यः रत्नऽधाः
वसुऽवित् यः सुऽदत्रः सरस्वति तं इह धातवे करिति ॥४९॥ यज्ञेन
यज्ञं अयजंत देवाः तानि धर्माणि प्रथमानि आसन् ते ह नाकं
महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥ ५० ॥ समानं
एतत् उदकं उत् च एति अव च अहऽभिः भूमिं पर्जन्याः जि-
न्वंति दिवं जिन्वंति अग्नयः ॥५१॥ दिव्यं सुऽपर्णं वायसं बृहंतं
अपां गर्भं दर्शतं ओषधीनां अभीपतः वृष्टिऽभिः तर्पयंतं सर-
स्वंतं अवसे जोहवीमि ॥५२॥२३॥२२॥

॥१६५॥ १. २. ४. ६. ८. १०–१२. इंद्रः। ३. ५. ७. ९. मरुतः। १३–१५ अगस्त्यः॥
मरुत्वानिंद्रः॥ त्रिष्टुप्॥

॥१६५॥ कया शुभा सवयसः सनीळाः समान्या मरुतः सं मिमिक्षुः। कया मती कुत एतास एतेऽर्चंति शुष्मं वृषणो वसूया॥१॥ कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त। श्येनाँ इव ध्रजतो अंतरिक्षे केन महा मनसा रीरमाम॥२॥ कुतस्त्वमिंद्र माहिनः सन्नेको यासि सत्पते किं त इत्था। सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे॥३॥ ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः। आ शासते प्रति हर्यंत्युक्थेमा हरी वहतस्ता नो अच्छ॥४॥ अतो वयमंतमेभिर्युजानाः स्वक्षत्रेभिस्तन्व१ः शुंभमानाः। महोभिरेताँ उप युज्महे न्विंद्र स्वधामनु हि नो बभूथ॥५॥२४॥ क्व१ स्या वो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये। अहं ह्यू१ग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः॥६॥ भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः। भूरीणि हि कृणवामा शविष्ठेंद्र क्रत्वा मरुतो यद्वशाम॥७॥ वधीं वृत्रं मरुत इंद्रियेण स्वेन भामेन तविषो बभूवान्। अहमेता मनवे विश्वश्चंद्राः सुगा अपश्चकर वज्रबाहुः॥८॥ अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः। न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध॥९॥ एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा। अहं ह्यू१ग्रो मरुतो विदानो यानि च्यवमिंद्र इदीश एषां॥१०॥२५॥ अमंदन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र। इंद्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः॥११॥ एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो

॥१६५॥ कया शुभा सऽवयसः सऽनीळाः समान्या मरुतः सं मिमिक्षुः कया मती कुतः आऽइतासः एते अर्चंति शुष्मं वृषणः वसुऽया ॥१॥ कस्य ब्रह्माणि जुजुषुः युवानः कः अध्वरे मरुतः आ ववर्त श्येनान्ऽइव ध्रजतः अंतरिक्षे केन महा मनसा रीरमाम ॥२॥ कुतः त्वं इंद्र माहिनः सन् एकः यासि सत्ऽपते किं ते इत्था सं पृच्छसे संऽअराणः शुभानैः वोचेः तत् नः हरिऽ-ऽवः यत् ते अस्मे ॥३॥ ब्रह्माणि मे मतयः शं सुतासः शुष्मः इयर्ति प्रऽभृतः मे अद्रिः आ शासते प्रति हर्यंति उक्था इमा हरी वहतः ता नः अच्छ ॥४॥ अतः वयं अंतमेभिः युजानाः स्वऽक्षत्रेभिः तन्वः शुंभमानाः महःऽभिः एतान् उप युज्महे नु इंद्र स्वधां अनु हि नः बभूथ ॥५॥२४॥ क्व स्या वः मरुतः स्वधा आसीत् यत् मां एकं संऽअधत्त अहिऽहत्ये अहं हि उग्रः तविषः तुविष्मान् विश्वस्य शत्रोः अनमं वधऽस्नैः ॥६॥ भूरि चकर्थ युज्येभिः अस्मे समानेभिः वृषभ पौंस्येभिः भूरीणि हि कृण-वाम शविष्ठ इंद्र क्रत्वा मरुतः यत् वशाम ॥७॥ वधीं वृत्रं मरुतः इंद्रियेण स्वेन भामेन तविषः बभूवान् अहं एताः मनवे विश्व-ऽचंद्राः सुऽगाः अपः चकर् वज्रऽबाहुः ॥८॥ अनुत्तं आ ते मघ-ऽवन् नकिः नु न त्वाऽवान् अस्ति देवता विदानः न जायमानः नशते न जातः यानि करिष्या कृणुहि प्रऽवृद्ध ॥९॥ एकस्य चित् मे विऽभु अस्तु ओजः या नु दधृष्वान् कृणवै मनीषा अहं हि उग्रः मरुतः विदानः यानि च्यवं इंद्रः इत् ईशे एषां ॥१०॥२५॥ अमंदत् मा मरुतः स्तोमः अत्र यत् मे नरः श्रुत्यं ब्रह्म चक्र इंद्राय वृष्णे सुऽमखाय मह्यं सख्ये सखायः तन्वे तनूभिः ॥११॥ एव इत् एते प्रति मा रोचमानाः अनेद्यः श्रवः आ इषः

दधानाः । संचक्ष्या मरुतश्चंद्रवर्णा अच्छांत मे छदयाथा च नूनं ॥१२॥ को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः । मन्मानि चित्रा अपिवातयंत एषां भूत नवेदा म ऋतानां ॥ १३ ॥ आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा । ओ षु वर्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत ॥ १४ ॥ एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं ॥ १५ ॥ २६ ॥ ३ ॥

---

॥ १६६ ॥ १–१५ ॥ अगस्त्यः ॥ मरुतः ॥ १–१३ जगती । १४. १५. त्रिष्टुप् ॥

॥ १६६ ॥ तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे । ऐधेव यामन्मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ॥ १ ॥ नित्यं न सूनुं मधु बिभ्रत उप क्रीळंति क्रीळा विदथेषु घृष्वयः । नक्षंति रुद्रा अवसा नमस्विनं न मर्धंति स्वतवसो हविष्कृतं ॥ २ ॥ यस्मा ऊमासो अमृता अरासत रायस्पोषं च हविषा ददाशुषे । उक्षंत्यस्मै मरुतो हिता इव पुरू रजांसि पयसा मयोभुवः ॥ ३ ॥ आ ये रजांसि तविषीभिरव्यंत प्र व एवासः स्वयतासो अध्रजन् । भयंते विश्वा भुवनानि हर्म्या चित्रो वो यामः प्रयतास्वृष्टिषु ॥ ४ ॥ यत्त्वेषयामा नदयंत पर्वतान्दिवो वा पृष्ठं नर्या अचुच्यवुः । विश्वो वो अज्मन्भयते वनस्पती रथीयंतीव प्र जिहीत ओषधिः ॥ ५ ॥ १ ॥ यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन । यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥ ६ ॥ प्र स्कंभदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुताः । अर्चंत्यर्क

दधानाः संऽचक्ष्यं मरुतः चंद्रऽवर्णाः अच्छांत मे छदयाथ च नूनं ॥१२॥ कः नु अत्र मरुतः ममहे वः प्र यातन सखीन् अच्छ सखायः मन्मानि चित्राः अपिऽवातयंतः एषां भूत नवेदाः मे ऋतानां ॥१३॥ आ यत् दुवस्यात् दुवसे न कारुः अस्मान् चक्रे मान्यस्य मेधा ओ सु वर्त मरुतः विप्रं अच्छ इमा ब्रह्माणि जरिता वः अर्चत् ॥१४॥ एषः वः स्तोमः मरुतः इयं गीः मांदार्यस्य मान्यस्य कारोः आ इषा यासीष्ट तन्वे वयां विद्याम इषं वृजनं जीरऽदानुं ॥१५॥२६॥३॥

---

॥ १६६ ॥ तत् नु वोचाम रभसाय जन्मने पूर्वं महिऽत्वं वृषभस्य केतवे ऐधाऽइव यामन् मरुतः तुविऽस्वनः युधाऽइव शक्राः तविषाणि कर्तन ॥१॥ नित्यं न सूनुं मधु बिभ्रतः उप क्रीळंति क्रीळाः विदथेषु घृष्वयः नक्षंति रुद्राः अवसा नमस्विनं न मर्धंति स्वऽतवसः हविःऽकृतं ॥२॥ यस्मै ऊमासः अमृताः अरासत रायः पोषं च हविषा ददाशुषे उक्षंति अस्मै मरुतः हिताःऽइव पुरु रजांसि पयसा मयःऽभुवः ॥३॥ आ ये रजांसि तविषीभिः अव्यत प्र वः एवासः स्वऽयतासः अध्रजन् भयंते विश्वा भुवनानि हर्म्या चित्रः वः यामः प्रऽयतासु ऋष्टिषु ॥४॥ यत् त्वेषऽयामाः नदयंत पर्वतान् दिवः वा पृष्ठं नर्याः अचुच्यवुः विश्वः वः अज्मन् भयते वनस्पतिः रथियंतीऽइव प्र जिहीते ओषधिः ॥५॥१॥ यूयं नः उग्राः मरुतः सुऽचेतुना अरिष्टऽग्रामाः सुऽमतिं पिपर्तन यत्र वः दिद्युत् रदति क्रिविःऽदती रिणाति पश्वः सुधिताऽइव बर्हणा ॥६॥ प्र स्कंभऽदेष्णाः अनवभ्रऽराधसः अलातृणासः विदथेषु सुऽस्तुताः अर्चंति अर्कं

मंदिरस्य पीतये विदुर्वीरस्य प्रथमानि पौंस्या ॥७॥ शतभुजिभिस्तमभिहुतेरघात्पूर्भी रक्षता मरुतो यमावत । जनं यमुग्रास्तवसो विरप्शिनः पाथना शंसात्तनयस्य पुष्टिषु ॥८॥ विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृध्येव तविषाण्याहिता । अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि वावृते ॥९॥ भूरीणि भद्रा नर्येषु बाहुषु वक्षःसु रुक्मा रभसासो अंजयः । अंसेष्वेताः पविषु क्षुरा अधि वयो न पक्षान्व्यनु श्रियो धिरे ॥१०॥२॥ महांतो मह्ना विभ्वो३ विभूतयो दूरेदृशो ये दिव्या इव स्तृभिः । मंद्राः सुजिह्वाः स्वरितार आसभिः संमिश्ला इंद्रे मरुतः परिष्टुभः ॥११॥ तद्वः सुजाता मरुतो महित्वनं दीर्घं वो दात्रमदितेरिव व्रतं । इंद्रश्चन त्यजसा वि ह्रुणाति तज्जनाय यस्मै सुकृते अराध्वं ॥१२॥ तद्वो जामित्वं मरुतः परे युगे पुरू यच्छंसममृतास आवत । अया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे ॥१३॥ येन दीर्घं मरुतः शूशवाम युष्माकेन परीणसा तुरासः । आ यत्ततनन्वृजने जनास एभिर्यज्ञेभिस्तदभीष्टिमश्यां ॥१४॥ एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं ॥१५॥३॥

---

॥१६७॥ १—११ अगस्त्यः ॥ १ इंद्रः । २—११ मरुतः ॥ त्रिष्टुप् ॥

॥ १६७ ॥ सहस्रं त इंद्रोतयो नः सहस्रमिषो हरिवो गूर्ततमाः । सहस्रं रायो मादयध्यै सहस्रिण उप नो यंतु वाजाः ॥१॥ आ नोऽवोभिर्मरुतो यांत्वच्छा ज्येष्ठेभिर्वा बृहद्दिवैः सुमायाः । अध यदेषां नियुतः परमाः समुद्रस्य चिद्धनयंत

मदिरस्य पीतये विदुः वीरस्य प्रथमानि पौंस्या ॥ ७ ॥ शतभुजिऽभिः तं अभिऽहुतेः अघात् पूःऽभिः रक्षत मरुतः यं आवत जनं यं उग्राः तवसः विऽरप्शिनः पाथन शंसात् तनयस्य पुष्टिषु ॥ ८ ॥ विश्वानि भद्रा मरुतः रथेषु वः मिथस्पृध्याऽइव तविषाणि आऽहिता अंसेषु आ वः प्रऽपथेषु खादयः अक्षः वः चक्रा समया वि ववृते ॥ ९ ॥ भूरीणि भद्रा नर्येषु बाहुषु वक्षःऽसु रुक्माः रभसासः अंजयः अंसेषु एताः पविषु क्षुराः अधि वयः न पक्षान् वि अनु श्रियः धिरे ॥ १० ॥ २ ॥ महांतः मह्ना विऽभ्वः विऽभूतयः दूरेऽदृशः ये दिव्याःऽइव स्तृऽभिः मंद्राः सुऽजिह्वाः स्वरितारः आसऽभिः संऽमिश्लाः इंद्रे मरुतः परिऽस्तुभः ॥ ११ ॥ तत् वः सुऽजाताः मरुतः महिऽत्वनं दीर्घं वः दात्रं अदितेःऽइव व्रतं इंद्रः चन त्यजसा वि ह्रुणाति तत् जनाय यस्मै सुऽकृते अराध्वं ॥ १२ ॥ तत् वः जामिऽत्वं मरुतः परे युगे पुरु यत् शंसं अमृतासः आवत अया धिया मनवे श्रुष्टिं आव्य साकं नरः दंसनैः आ चिकित्रिरे ॥ १३ ॥ येन दीर्घं मरुतः शूशवाम युष्माकेन परीणसा तुरासः आ यत् ततनन् वृजने जनासः एभिः यज्ञेभिः तत् अभि इष्टिं अश्यां ॥ १४ ॥ एषः वः स्तोमः मरुतः इयं गीः मांदार्यस्य मान्यस्य कारोः आ इषा यासीष्ट तन्वे वयां विद्याम इषं वृजनं जीरऽदानुं ॥ १५ ॥ ३ ॥

---

॥ १६७ ॥ सहस्रं ते इंद्र ऊतयः नः सहस्रं इषः हरिऽवः गूर्तऽतमाः सहस्रं रायः मादयध्यै सहस्रिणः उप नः यंतु वाजाः ॥ १ ॥ आ नः अवःऽभिः मरुतः यांतु अच्छ ज्येष्ठेभिः वा बृहत्ऽदिवैः सुऽमायाः अध यत् एषां निऽयुतः परमाः समुद्रस्य चित् धनयंत

पारे ॥२॥ मिम्यक्ष येषु सुधिता घृताची हिरण्यनिर्णिगुपरा
न ऋष्टिः। गुहा चरंती मनुषो न योषा सभावती विदथ्येव
सं वाक् ॥३॥ परा शुभ्रा अयासो यव्या साधारण्येव मरुतो
मिमिक्षुः। न रोदसी अप नुदंत घोरा जुषंत वृधं सख्याय देवाः
॥४॥ जोषद्यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः।
आ सूर्येव विधतो रथं गात्त्वेषप्रतीका नभसो नेत्या ॥५॥४॥
आस्थापयंत युवतिं युवानः शुभे निमिश्लां विदथेषु पज्रां।
अर्को यद्वो मरुतो हविष्मान्गायद्गाथं सुतसोमो दुवस्यन् ॥६॥
प्र तं विवक्मि वक्म्यो य एषां मरुतां महिमा सत्यो अस्ति।
सचा यदीं वृषमणा अहंयुः स्थिरा चिज्जनीर्वहते सुभागाः
॥७॥ पांति मित्रावरुणाववद्याच्चयत ईमर्यमो अप्रशस्तान्।
उत च्यवंते अच्युता ध्रुवाणि वावृध ईं मरुतो दातिवारः ॥८॥
नही नु वो मरुतो अंत्यस्मे आरात्ताच्चिच्छवसो अंतमापुः।
ते धृष्णुना शवसा शूशुवांसोऽर्णो न द्वेषो धृषता परि ष्टुः ॥९॥
वयमद्येंद्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये। वयं पुरा महि
च नो अनु द्यून्तन्न ऋभुक्षा नरामनु ष्यात् ॥१०॥ एष वः
स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः। एषा यासीष्ट
तन्वे वयां विद्यामेषं वृजनं जीरदानुं ॥११॥५॥

---

॥१६८॥ १–१० अगस्त्यः ॥ मरुतः ॥ १–७ जगती । ८–१० त्रिष्टुप् ॥

॥१६८॥ यज्ञायज्ञा वः समना तुतुर्वणिर्धियंधियं वो
देवया उ दधिध्वे। आ वोऽर्वाचः सुविताय रोदस्योर्महे
ववृत्यामवसे सुवृक्तिभिः ॥१॥ वव्रासो न ये स्वजाः स्वतवस
इषं स्वरभिजायंत धूतयः। सहस्रियासो अपां नोर्मय आसा

पारे ॥ २ ॥ मिम्यक्ष येषु सुऽधिता घृताची हिरण्यऽनिर्निक्
उपरा न ऋष्टिः गुहा चरंती मनुषः न योषा सभाऽवती वि-
दथ्याऽइव सं वाक् ॥ ३ ॥ परा शुभ्राः अयासः यव्या साधारण्या-
ऽइव मरुतः मिमिक्षुः न रोदसी अप नुदंत घोराः जुषंत वृधं
सख्याय देवाः ॥ ४ ॥ जोषत् यत् ईं असुर्या सचध्यै विसितऽस्तु-
का रोदसी नृऽमनाः आ सूर्याऽइव विधतः रथं गात् त्वेषऽप्रतीका
का नभसः न इत्या ॥ ५ ॥ ४ ॥ आ अस्थापयंत युवतिं युवानः
शुभे निऽमिश्लां विदथेषु पज्रां अर्कः यत् वः मरुतः हविष्मान्
गायत् गाथं सुतऽसोमः दुवस्यन् ॥ ६ ॥ प्र तं विवक्मि वक्म्यः
यः एषां मरुतां महिमा सत्यः अस्ति सचा यत् ईं वृषऽमनाः
अहंऽयुः स्थिरा चित् जनीः वहते सुऽभागाः ॥ ७ ॥ पांति मि-
त्रावरुणौ अवद्यात् चयते ईं अर्यमो अप्रऽशस्तान् उत च्यवंते
अच्युता ध्रुवाणि ववृधे ईं मरुतः दातिऽवारः ॥ ८ ॥ नहि नु वः
मरुतः अंति अस्मे आरात्तात् चित् शवसः अंतं आपुः ते धृ-
ष्णुना शवसा शूशुऽवांसः अर्णः न द्वेषः धृषता परि स्थुः ॥ ९ ॥
वयं अद्य इंद्रस्य प्रेष्ठाः वयं श्वः वोचेमहि सऽमर्ये वयं पुरा महि
च नः अनु द्यून् तत् नः ऋभुक्षाः नरां अनु स्यात् ॥ १० ॥ एषः
वः स्तोमः मरुतः इयं गीः मांदार्यस्य मान्यस्य कारोः आ इषा
यासीष्ट तन्वे वयां विद्याम इषं वृजनं जीरऽदानुं ॥ ११ ॥ ५ ॥

---

॥ १६८ ॥ यज्ञाऽयज्ञा वः समना तुतुर्वणिः धियंऽधियं वः दे-
वऽयाः ऊं इति दधिध्वे आ वः अर्वाचः सुवितायं रोदस्योः महे ववृ-
त्यां अवसे सुवृक्तिऽभिः ॥ १ ॥ वव्रासः न ये स्वऽजाः स्वऽतवसः
इषं स्वः अभिऽजायंत धूतयः सहस्रियासः अपां न ऊर्मयः आसा

गावो वंद्यासो नोक्षणः॥२॥ सोमासो न ये सुतास्तृप्तांशवो हृत्सु पीतासो दुवसो नासते । ऐषामंसेषु रंभिणीव रारभे हस्तेषु खादिश्च कृतिश्च सं दधे॥३॥ अव स्वयुक्ता दिव आ वृथा ययुरमर्त्याः कशया चोदत त्मना । अरेणवस्तुविजाता अचुच्यवुर्दृळ्हानि चिन्मरुतो भ्राजदृष्टयः॥४॥ को वोऽन्तर्मरुत ऋष्टिविद्युतो रेजति त्मना हन्वेव जिह्वया । धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्यो३ नैतशः॥५॥६॥ क्व स्विदस्य रजसो महस्परं क्वावरं मरुतो यस्मिन्नायय । यच्च्यावयथ विथुरेव संहितं व्यद्रिणा पतथ त्वेषमर्णवं॥६॥ सातिर्न वोऽमवती स्वर्वती त्वेषा विपाका मरुतः पिपिष्वती । भद्रा वो रातिः पृणतो न दक्षिणा पृथुज्रयी असुर्येव जंजती॥७॥ प्रति ष्टोभंति सिंधवः पविभ्यो यदभ्रियां वाचमुदीरयंति । अव स्मयंत विद्युतः पृथिव्यां यदी घृतं मरुतः प्रुष्णुवंति॥८॥ असूत पृश्निर्महते रणाय त्वेषमयासां मरुतामनीकं । ते सप्सरासोऽजनयंताभ्वमादित्स्वधामिषिरां पर्यपश्यन्॥९॥ एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं॥१०॥७॥

---

॥१६९॥१-८ अगस्त्यः॥ इंद्रः॥ १. ३-८ त्रिष्टुप्। २ चतुष्पदा विराट्॥

॥ १६९ ॥ महश्चित्त्वमिंद्र यत एतान्महश्चिदसि त्यजसो वरूता । स नो वेधो मरुतां चिकित्वान्सुम्ना वनुष्व तव हि प्रेष्ठा॥१॥ अयुज्रन्त इंद्र विश्वकृष्टीर्विदानासो निष्षिधो मर्त्यत्रा । मरुतां पृत्सुतिर्हासमाना स्वर्मीळ्हस्य प्रधनस्य सातौ॥२॥ अम्यक्सा त इंद्र ऋष्टिरस्मे सनेम्यभ्वं

गावः वंद्यासः न उक्षणः ॥२॥ सोमासः न ये सुताः तृप्तऽअंशवः
हृत्ऽसु पीतासः दुवसः न आसते आ एषां अंसेषु रंभिणीऽइव
रराभे हस्तेषु खादिः च कृतिः च सं दधे ॥३॥ अव स्वऽयुक्ताः
दिवः आ वृथा ययुः अमर्त्याः कशया चोदत त्मना अरेणवः
तुविऽजाताः अचुच्यवुः दृळ्हानि चित् मरुतः भ्राजत्ऽऋष्टयः
॥४॥ कः वः अंतः मरुतः ऋष्टिऽविद्युतः रेजति त्मना हन्वा-
ऽइव जिह्वया धन्वऽच्युतः इषां न यामनि पुरुऽप्रैषाः अहन्यः
न एतशः ॥५॥६॥ क्व स्वित् अस्य रजसः महः परं क्व अवरं मरुतः
यस्मिन् आऽयय यत् च्यवयथ विथुराऽइव संऽहितं वि अद्रि-
णा पतथ त्वेषं अर्णवं ॥६॥ सातिः न वः अमऽवती स्वःऽवती
त्वेषा विऽपाका मरुतः पिपिष्वती भद्रा वः रातिः पृणतः न
दक्षिणा पृथुऽज्रयी असुर्याऽइव जंजती ॥७॥ प्रति स्तोभंति
सिंधवः पविऽभ्यः यत् अभ्रियां वाचं उत्ऽईरयंति अव स्मयंत
विऽद्युतः पृथिव्यां यदि घृतं मरुतः प्रुष्णुवंति ॥८॥ असूत पृश्निः
महते रणाय त्वेषं अयासां मरुतां अनीकं ते सप्सरासः अजनयंत
अभ्वं आत् इत् स्वधां इषिरां परि अपश्यन् ॥९॥ एषः वः स्तोमः
मरुतः इयं गीः मांदार्यस्य मान्यस्य कारोः आ इषा यासीष्ट
तन्वे वयां विद्याम इषं वृजनं जीरऽदानुं ॥१०॥७॥

---

॥१६९॥ महः चित् त्वं इंद्र यतः एतान् महः चित् असि
त्यजसः वरूता सः नः वेधः मरुतां चिकित्वान् सुम्ना वनुष्व तव
हि प्रेष्ठा ॥१॥ अयुज्रन् ते इंद्र विश्वऽकृष्टीः विदानासः निःऽसिधः
मर्त्यऽत्रा मरुतां पृत्सुतिः हासमाना स्वःऽमीळ्हस्य प्रऽधनस्य
सातौ ॥२॥ अम्यक् सा ते इंद्र ऋष्टिः अस्मे सनेमि अभ्वं

मरुतो जुनंति । अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥३॥ त्वं तू न इंद्र तं रयिं दा ओजिष्ठया दक्षिणयेव रातिं । स्तुतश्च यास्ते चकनंत वायोः स्तनं न मध्वः पीपयंत वाजैः ॥४॥ त्वे राय इंद्र तोशतमाः प्रणेतारः कस्य चिदृतायोः । ते षु णो मरुतो मृळयंतु ये स्मा पुरा गातूयंतीव देवाः ॥५॥८॥ प्रति प्र याहींद्र मीळ्हुषो नॄन्महः पार्थिवे सदने यतस्व । अध यदेषां पृथुबुध्नास एतास्तीर्थे नार्यः पौंस्यानि तस्थुः ॥६॥ प्रति घोराणामेतानामयासां मरुतां शृण्व आयतामुपब्दिः । ये मर्त्यं पृतनायंतमूमैर्ऋणावानं न पतयंत सर्गैः ॥७॥ त्वं मानेभ्य इंद्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः । स्तवानेभिः स्तवसे देव देवैर्विद्यामेषं वृजनं जीरदानुं ॥८॥९॥

---

॥१७०॥१.३.४ इंद्रः।२.५ अगस्त्यः॥ इंद्रः॥१ बृहती।२–४ अनुष्टुप्।५ त्रिष्टुप्॥

॥१७०॥ न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतं । अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥१॥ किं न इंद्र जिघांससि भ्रातरो मरुतस्तव । तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥२॥ किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे । विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥३॥ अरं कृण्वंतु वेदिं समग्निमिंधतां पुरः । तत्रामृतस्य चेतनं यज्ञं ते तनवावहै ॥४॥ त्वमीशिषे वसुपते वसूनां त्वं मित्राणां मित्रपते धेष्ठः । इंद्र त्वं मरुद्भिः सं वदस्वाध प्राशान ऋतुथा हवींषि ॥५॥१०॥

---

॥१७१॥१–६ अगस्त्यः॥१.२ मरुतः।३–६ मरुत्वानिंद्रः॥ त्रिष्टुप्॥

॥१७१॥ प्रति व एना नमसाहमेमि सूक्तेन भिक्षे सु-

मरुतः जुनंति अग्निः चित् हि स्म अतसे शुशुक्वान् आपः न द्वीपं दधति प्रयांसि ॥ ३ ॥ त्वं तु नः इंद्र तं रयिं दाः ओजिष्ठया दक्षिणयाऽइव रातिं स्तुतः च याः ते चकनंत वायोः स्तनं न मध्वः पीपयंत वाजैः ॥ ४ ॥ त्वे रायः इंद्र तोशऽतमाः प्रऽनेतारः कस्य चित् ऋतऽयोः ते सु नः मरुतः मृळयंतु ये स्म पुरा गातुयंतिऽइव देवाः ॥ ५ ॥ ८ ॥ प्रति प्र याहि इंद्र मीळ्हुषः नॄन् महः पार्थिवे सदने यतस्व अध यत् एषां पृथुऽबुध्नासः एताः तीर्थे न अर्यः पौंस्यानि तस्थुः ॥ ६ ॥ प्रति घोराणां एतानां अयासां मरुतां शृण्वे आऽयतां उपब्दिः ये मर्त्यं पृतनाऽयंतं ऊमैः ऋणऽवानं न पतयंत सर्गैः ॥ ७ ॥ त्वं मानेभ्यः इंद्र विश्वऽजन्या रद मरुतऽभिः शुरुधः गोऽअग्राः स्तवानेभिः स्तवसे देव देवैः विद्याम इषं वृजनं जीरऽदानुं ॥ ८ ॥ ९ ॥

---

॥ १७० ॥ न नूनं अस्ति नो श्वः कः तत् वेद यत् अद्भुतं अन्यस्य चित्तं अभि संऽचरेण्यं उत आऽधीतं वि नश्यति ॥ १ ॥ किं नः इंद्र जिघांससि भ्रातरः मरुतः तव तेभिः कल्पस्व साधुऽया मा नः संऽअरणे वधीः ॥ २ ॥ किं नः भ्रातः अगस्त्य सखा सन् अति मन्यसे विद्म हि ते यथा मनः अस्मभ्यं इत् न दित्ससि ॥ ३ ॥ अरं कृण्वंतु वेदिं सं अग्निं इंधतां पुरः तत्र अमृतस्य चेतनं यज्ञं ते तनवावहै ॥ ४ ॥ त्वं ईशिषे वसुऽपते वसूनां त्वं मित्राणां मित्रऽपते धेष्ठः इंद्र त्वं मरुतऽभिः सं वदस्व अध प्र अशान ऋतुऽथा हवींषि ॥ ५ ॥ १० ॥

---

॥ १७१ ॥ प्रति वः एना नमसा अहं एमि सुऽउक्तेन भिक्षे सु-

मतिं तुराणां । रराणता मरुतो वेद्याभिर्नि हेळो धत्त वि मुचध्वमश्वान् ॥१॥ एष वः स्तोमो मरुतो नमस्वान्हृदा तष्टो मनसा धायि देवाः । उपेमा यात मनसा जुषाणा यूयं हि ष्ठा नमस इद्वृधासः ॥२॥ स्तुतासो नो मरुतो मृळयंतूत स्तुतो मघवा शंभविष्ठः । ऊर्ध्वा नः संतु कोम्या वनान्यहानि विश्वा मरुतो जिगीषा ॥३॥ अस्मादहं तविषादीषमाण इंद्राद्भिया मरुतो रेजमानः । युष्मभ्यं हव्या निशितान्यासन्तान्यारे चकृमा मृळता नः ॥४॥ येन मानासश्चितयंत उस्रा व्युष्टिषु शवसा शश्वतीनां । स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभिः स्थविरः सहोदाः ॥५॥ त्वं पाहींद्र सहीयसो नॄन्भवा मरुद्भिरवयातहेळाः । सुप्रकेतेभिः सासहिर्दधानो विद्यामेषं वृजनं जीरदानुं ॥ ६ ॥ ११ ॥

॥ १७२ ॥ १-३ अगस्त्यः ॥ मरुतः ॥ गायत्री ॥

॥१७२॥ चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः । मरुतो अहिभानवः ॥१॥ आरे सा वः सुदानवो मरुत ऋंजती शरुः । आरे अश्मा यमस्यथ ॥२॥ तृणस्कंदस्य नु विशः परि वृंक्त सुदानवः । ऊर्ध्वान्नः कर्त जीवसे ॥ ३ ॥ १२ ॥

॥ १७३ ॥ १-१३ अगस्त्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ १७३ ॥ गायत्साम नभन्यं१ यथा वेरर्चाम तद्वावृधानं स्वर्वत् । गावो धेनवो बर्हिष्यदब्धा आ यत्सद्मानं दिव्यं विवासान् ॥ १ ॥ अर्चद्वृषा वृषभिः स्वेदुहव्यैर्मृगो नाश्नो अति यज्जुगुर्यात् । प्र मंदयुर्मनां गूर्त होता भरते मर्यो मिथुना यजत्रः ॥ २ ॥ नक्षद्धोता परि सद्म मिता यन्भरद्गर्भमा शरदः पृथिव्याः । क्रंददश्वो नयमानो रुवद्गौरंतर्दूतो न

ऽमतिं तुराणां रराणतो मरुतः वेद्याभिः नि हेळः धत्त वि मुचध्वं अश्वान् ॥१॥ एषः वः स्तोमः मरुतः नमस्वान् हृदा तष्टः मनसा धायि देवाः उप ईं आ यात मनसा जुषाणाः यूयं हि स्थ नमसः इत् वृधासः ॥२॥ स्तुतासः नः मरुतः मृळयंतु उत स्तुतः मघऽवा शंऽभविष्ठः ऊर्ध्वा नः संतु कोम्या वनानि अहानि विश्वा मरुतः जिगीषा ॥३॥ अस्मात् अहं तविषात् ईषमाणः इंद्रात् भिया मरुतः रेजमानः युष्मभ्यं हव्या निऽशितानि आसन् तानि आरे चकृम मृळत नः ॥४॥ येन मानासः चितयंते उस्राः विऽउष्टिषु शवसा शश्वतीनां सः नः मरुत्ऽभिः वृषभ श्रवः धाः उग्रः उग्रेभिः स्थविरः सहःऽदाः ॥५॥ त्वं पाहि इंद्र सहीयसः नृन् भव मरुत्ऽभिः अवयातऽहेळाः सुऽप्रकेतेभिः ससहिः दधानः विद्याम इषं वृजनं जीरऽदानुं ॥६॥११॥

---

॥१७२॥ चित्रः वः अस्तु यामः चित्रः ऊती सुऽदानवः मरुतः अहिऽभानवः ॥१॥ आरे सा वः सुऽदानवः मरुतः ऋंजती शरुः आरे अश्मा यं अस्यथ ॥२॥ तृणऽस्कंदस्य नु विशः परि वृंक्त सुऽदानवः ऊर्ध्वान् नः कर्त जीवसे ॥३॥१२॥

---

॥१७३॥ गायत् साम नभन्यं यथा वेः अर्चाम तत् ववृधानं स्वःऽवत् गावः धेनवः बर्हिषि अदब्धाः आ यत् सद्मानं दिव्यं विवासान् ॥१॥ अर्चत् वृषा वृषऽभिः स्वऽइदुहव्यैः मृगः न अश्नः अति यत् जुगुर्यात् प्र मंदयुः मनां गूर्त होता भरते मर्यः मिथुना यजत्रः ॥२॥ नक्षत् होता परि सद्म मिता यन् भरत् गर्भं आ शरदः पृथिव्याः क्रंदत् अश्वः नयमानः रुवत् गौः अंतः दूतः न

रोदसी चरद्वाक् ॥३॥ ता कर्माषतरास्मै प्र च्यौत्नानि देवयंतो भरंते । जुजोषदिंद्रो दस्मवर्चा नासत्येव सुग्म्यो रथेष्ठाः ॥४॥ तमु ष्टुहींद्रं यो ह सत्वा यः शूरो मघवा यो रथेष्ठाः । प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसो विहंता ॥५॥१३॥ प्र यदित्था महिना नृभ्यो अस्त्यरं रोदसी कक्ष्ये३नास्मै । सं विव्य इंद्रो वृजनं न भूमा भर्ति स्वधावाँ ओपशमिव द्याम् ॥६॥ समत्सु त्वा शूर सतामुराणं प्रपथिंतमं परितंसयध्यै । सजोषस इंद्रं मदे क्षोणीः सूरिं चिद्ये अनुमदंति वाजैः ॥७॥ एवा हि ते शं सवना समुद्र आपो यत्त आसु मदंति देवीः । विश्वा ते अनु जोष्या भूद्गौः सूरींश्चिद्यदि धिषा वेषि जनान् ॥८॥ असाम यथा सुषखाय एन स्वभिष्टयो नरां न शंसैः । असद्यथा न इंद्रो वंदनेष्ठास्तुरो न कर्म नयमान उक्था ॥९॥ विष्पर्धसो नरां न शंसैरस्माकासदिंद्रो वज्रहस्तः । मित्रायुवो न पूर्पतिं सुशिष्टौ मध्यायुव उप शिक्षंति यज्ञैः ॥१०॥१४॥ यज्ञो हि ष्मेंद्रं कश्चिदृंधञ्जुहुराणश्चिन्मनसा परियन् । तीर्थे नाच्छा तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वा ॥११॥ मो षू ण इंद्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वंदते गीः ॥१२॥ एषः स्तोम इंद्र तुभ्यमस्मे एतेन गातुं हरिवो विदो नः । आ नो ववृत्याः सुविताय देव विद्यामेषं वृजनं जीरदानुम् ॥ १३ ॥ १५ ॥

---

॥ १७४ ॥ १–१० अगस्त्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ १७४ ॥ त्वं राजेंद्र ये च देवा रक्षा नॄन्पाह्यसुर त्वमस्मान् । त्वं सत्पतिर्मघवा नस्तरुत्रस्त्वं सत्यो वसवानः सहो-

रोदसी चरत् वाक् ॥३॥ ता कर्म अषऽतरा अस्मै प्र च्यौत्ना-
नि देवऽयंतः भरंते जुजोषत् इंद्रः दस्मऽवर्चाः नासत्याऽइव सु-
ग्म्यः रथेऽस्थाः ॥४॥ तं ऊं स्तुहि इंद्रं यः ह सत्वा यः शूरः मघ-
ऽवा यः रथेऽस्थाः प्रतीचः चित् योधीयान् वृषण्ऽवान् ववव्रुषः
चित् तमसः विऽहंता ॥५॥१३॥ प्र यत् इत्था महिना नृऽभ्यः
अस्ति अरं रोदसी कक्ष्ये न अस्मै सं विव्ये इंद्रः वृजनं न भूम भर्ति
स्वधाऽवान् ओपशंऽइव द्यां ॥६॥ समत्ऽसु त्वा शूर सतां उराणं
प्रपथिन्ऽतमं परिऽतंसयध्यै सऽजोषसः इंद्रं मदे क्षोणीः सूरिं
चित् ये अनुऽमदंति वाजैः ॥७॥ एव हि ते शं सवना समुद्रे आपः
यत् ते आसु मदंति देवीः विश्वा ते अनु जोष्या भूत् गौः सूरीन्
चित् यदि धिषा वेषि जनान् ॥८॥ असाम यथा सुऽसखायः एन
सुऽअभिष्टयः नरां न शंसैः असत् यथा नः इंद्रः वंदनेऽस्थाः तुरः
न कर्म नयमानः उक्था ॥९॥ विऽस्पर्धसः नरां न शंसैः अस्माक
असत् इंद्रः वज्रऽहस्तः मित्रऽयुवः न पूःऽपतिं सुऽशिष्टौ मध्य-
ऽयुवः उप शिक्षंति यज्ञैः ॥१०॥१४॥ यज्ञः हि स्म इंद्रं कः चित्
ऋंधन् जुहुराणः चित् मनसा परिऽयन् तीर्थे न अच्छ ततृषाणं
ओकः दीर्घः न सिध्रं आ कृणोति अध्वा ॥११॥ मो सु नः इंद्र
अत्र पृत्ऽसु देवैः अस्ति हि स्म ते शुष्मिन् अवऽयाः महः चित्
यस्य मीळ्हुषः यव्या हविष्मतः मरुतः वंदते गीः ॥१२॥ एषः
स्तोमः इंद्र तुभ्यं अस्मे एतेन गातुं हरिऽवः विदः नः आ नः
ववृत्याः सुविताय देव विद्याम इषं वृजनं जीरऽदानुं ॥१३॥१५॥

---

॥१७४॥ त्वं राजा इंद्र ये च देवाः रक्ष नॄन् पाहि असुर त्वं अ-
स्मान् त्वं सत्ऽपतिः मघऽवा नः तरुत्रः त्वं सत्यः वसवानः सहः-

दाः ॥१॥ दनो विश इंद्र मृध्रवाचः सप्त यत्पुरः शर्म शारदी-र्दर्त् । ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रंधीः ॥२॥ अजा वृत इंद्र शूरपत्नीर्द्यां च येभिः पुरुहूत नूनं । रक्षो अग्निमशुषं तूर्वयाणं सिंहो न दमे अपांसि वस्तोः ॥३॥ शेषन्नु त इंद्र सस्मिन्योनौ प्रशस्तये पवीरवस्य मह्ना । सृज-दर्णांस्यव यद्युधा गास्तिष्ठद्धरी धृषता मृष्ट वाजान् ॥४॥ वह कुत्समिंद्र यस्मिंश्चाकन्त्स्यूमन्यू ऋज्रा वातस्याश्वा । प्र सूरश्चक्रं वृहतादभीकेऽभि स्पृधो यासिषद्वज्रबाहुः ॥५॥१६॥ जघन्वाँ इंद्र मित्रेरूञ्चोदप्रवृद्धो हरिवो अदाशून् । प्र ये पश्य-न्नर्यमणं सचायोस्त्वया शूर्ता वहमाना अपत्यं ॥६॥ रपत्क-विरिंद्रार्कसातौ क्षां दासायोपबर्हणीं कः । करत्तिस्रो मघवा दानुचित्रा नि दुर्योणे कुयवाचं मृधि श्रेत् ॥७॥ सना ता त इंद्र नव्या आगुः सहो नभोऽविरणाय पूर्वीः । भिनत्पुरो न भिदो अदेवीर्ननमो वधरदेवस्य पीयोः ॥८॥ त्वं धुनिरिंद्र धुनिमतीर्ऋणोरपः सीरा न स्रवंतीः । प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥९॥ त्वमस्माकमिंद्र विश्वध स्या अवृकतमो नरां नृपाता । स नो विश्वासां स्पृधां सहोदा विद्यामेषं वृजनं जीरदानुं ॥१०॥१७॥

---

॥१७५॥ १–६ ॥ अगस्त्यः ॥ इंद्रः ॥ १ स्कंधोग्रीवी बृहती । २–५ अनुष्टुप् ।
६ त्रिष्टुप् ॥

॥१७५॥ मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः । वृषा ते वृष्ण इंदुर्वाजी सहस्रसातमः ॥१॥ आ नस्ते गंतु मत्सरो वृषा मदो वरेण्यः । सहावाँ इंद्र सानसिः पृतनाषा-ळमर्त्यः ॥२॥ त्वं हि शूरः सनिता चोदयो मनुषो रथं । सहा-

ऽदाः ॥१॥ दर्नः विशः इंद्र मृध्रऽवाचः सप्त यत् पुरः शर्म शारदीः
दर्त् ऋणोः अपः अनवद्य अर्णाः यूने वृत्रं पुरुऽकुत्साय रंधीः
॥२॥ अज वृतः इंद्र शूरऽपत्नीः द्यां च येभिः पुरुऽहूत नूनं रक्षो'
अग्निं अशुषं तूर्वयाणं सिंहः न दमे अपांसि वस्तोः ॥३॥ शेषन्
नु ते इंद्र सस्मिन् योनौ प्रऽशस्तये पवीरवस्य मह्ना सृजत् अर्णां-
सि अव यत् युधा गाः तिष्ठत् हरी' धृषता मृष्ट वाजान् ॥४॥
वह कुत्सं इंद्र यस्मिन् चाकन् स्यूमन्यू' ऋज्रा वातस्य अश्वा
प्र सूरः चक्रं वृहतात् अभीके अभि स्पृधः यासिषत् वज्रऽबाहुः
॥५॥१६॥ जघन्वान् इंद्र मित्रेरून् चोदऽप्रवृद्धः हरिऽवः अदा-
शून् प्र ये पश्यन् अर्यमणं सचा आयोः त्वया शूर्ताः वर्हमा-
नाः अपत्यं ॥६॥ रपत् कविः इंद्र अर्कऽसातौ क्षां दासाय उप-
ऽबर्हणीं कः० करत् तिस्रः मघऽवा दानुऽचित्राः नि दुर्योणे कु-
यवाचं मृधि श्रेत् ॥७॥ सना ता ते इंद्र नव्याः आ अगुः सहः
नभः अविऽरणाय पूर्वीः भिनत् पुरः न भिदः अदेवीः ननमः
वधः अदेवस्य पीयोः ॥८॥ त्वं धुनिः इंद्र धुनिऽमतीः ऋणोः
अपः सीराः न स्रवंतीः प्र यत् समुद्रं अति शूर पर्षि पारय तु-
र्वशं यदुं स्वस्ति ॥९॥ त्वं अस्माकं इंद्र विश्वध स्याः अवृकऽतमः
नरां नृऽपाता सः नः विश्वासां स्पृधां सहःऽदाः विद्याम इषं
वृजनं जीरऽदानुं ॥१०॥१७॥

---

॥१७५॥ मत्सि अपायि ते महः पात्रस्यऽइव हरिऽवः मत्सरः
मदः वृषा ते वृष्णे इंदुः वाजी सहस्रऽसातमः ॥१॥ आ नः ते
गंतु मत्सरः वृषा मदः वरेण्यः सहऽवान् इंद्र सानसिः पृतना-
षाट् अमर्त्यः ॥२॥ त्वं हि शूरः सनिता चोदयः मनुषः रथं सह-

वान्दस्युमव्रतमोषः पात्रं न शोचिषा॥३॥ मुषाय सूर्यं कवे चक्रमीशान ओजसा। वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥४॥ शुष्मिंतमो हि ते मदो द्युम्निंतम उत क्रतुः। वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः॥५॥ यथा पूर्वेभ्यो जरितृभ्य इंद्र मय इवापो न तृष्यते बभूथ। तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुं॥६॥१८॥

॥१७६॥ १–६ अगस्त्यः॥ इंद्रः॥ १–५ अनुष्टुप्। ६ त्रिष्टुप्॥

॥१७६॥ मत्सि नो वस्यइष्टय इंद्रमिंदो वृषा विश। ऋघायमाण इन्वसि शत्रुमंति न विंदसि॥१॥ तस्मिन्ना वेशया गिरो य एकश्चर्षणीनां। अनु स्वधा यमुप्यते यवं न चर्कृषद्वृषा॥२॥ यस्य विश्वानि हस्तयोः पंच क्षितीनां वसु। स्पाशयस्व यो अस्मध्रुग्दिव्येवाशनिर्जहि॥३॥ असुन्वंतं समं जहि दूणाशं यो न ते मयः। अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते॥४॥ आवो यस्य द्विबर्हसोऽर्केषु सानुषगसत्। आजाविंद्रस्येंदो प्रावो वाजेषु वाजिनं॥५॥ यथा पूर्वेभ्यो जरितृभ्य इंद्र मय इवापो न तृष्यते बभूथ। तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुं॥६॥१९॥

॥१७७॥ १–५ अगस्त्यः॥ इंद्रः॥ त्रिष्टुप्॥

॥१७७॥ आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इंद्रः। स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ्॥१॥ ये ते वृषणो वृषभास इंद्र ब्रह्मयुजो वृषरथासो अत्याः। ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् हवामहे त्वा सुत इंद्र सोमे॥२॥ आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिषिक्ता मधूनि। युक्त्वा वृषभ्यां वृषभ क्षितीनां हरि-

ऽवान् दस्युं अव्रतं ओषः पात्रं न शोचिषा ॥ ३ ॥ मुषाय सूर्यं कवे चक्रं ईशानः ओजसा वह शुष्णाय वधं कुत्सं वातस्य अश्वैः ॥ ४ ॥ शुष्मिन्ऽतमः हि ते मदः द्युम्निन्ऽतमः उत क्रतुः वृत्रऽघ्ना वरिवःऽविदा मंसीष्ठाः अश्वऽसातमः ॥ ५ ॥ यथा पूर्वेभ्यः जरितृऽभ्यः इंद्र मयःऽइव आपः न तृष्यते बभूथ तां अनु त्वा निऽविदं जोहवीमि विद्याम इषं वृजनं जीरऽदानुं ॥ ६ ॥ १८ ॥

---

॥ १७६ ॥ मत्सि नः वस्यःऽइष्टये इंद्रं इंदो इति वृषा आ विश ऋघायमाणः इन्वसि शत्रुं अंति न विंदसि ॥ १ ॥ तस्मिन् आ वेशय गिरः यः एकः चर्षणीनां अनु स्वधा यं उप्यते यवं न चर्कृषत् वृषा ॥ २ ॥ यस्य विश्वानि हस्तयोः पंच क्षितीनां वसु स्पाशयस्व यः अस्मऽध्रुक् दिव्याऽइव अशनिः जहि ॥ ३ ॥ असुन्वंतं समं जहि दुःऽनशं यः न ते मयः अस्मभ्यं अस्य वेदनं दद्धि सूरिः चित् ओहते ॥ ४ ॥ आवः यस्य द्विऽबर्हसः अर्केषु सानुषक् असत् आजौ इंद्रस्य इंदो इति प्र आवः वाजेषु वाजिनं ॥ ५ ॥ यथा पूर्वेभ्यः जरितृऽभ्यः इंद्र मयःऽइव आपः न तृष्यते बभूथ तां अनु त्वा निऽविदं जोहवीमि विद्याम इषं वृजनं जीरऽदानुं ॥ ६ ॥ १९ ॥

---

॥ १७७ ॥ आ चर्षणिऽप्राः वृषभः जनानां राजा कृष्टीनां पुरुऽहूतः इंद्रः स्तुतः श्रवस्यन् अवसा उप मद्रिक् युक्त्वा हरी इति वृषणा आ याहि अर्वाङ् ॥ १ ॥ ये ते वृषणः वृषभासः इंद्र ब्रह्मऽयुजः वृषऽरथासः अत्याः तान् आ तिष्ठ तेभिः आ याहि अर्वाङ् हवामहे त्वा सुते इंद्र सोमे ॥ २ ॥ आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिऽसिक्ता मधूनि युक्त्वा वृषऽभ्यां वृषभ क्षितीनां हरि-

भ्यां याहि प्रवतोप मद्रिक्॥३॥ अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिंद्र सोमः। स्तीर्णं बर्हिरा तु शक्र प्र याहि पिबा निषद्य वि मुचा हरी इह॥४॥ ओ सुष्टुत इंद्र याह्यर्वाङुप ब्रह्माणि मान्यस्य कारोः। विद्याम वस्तोरवसा गृणंतो विद्यामेषं वृजनं जीरदानुं॥५॥२०॥

---

॥१७८॥ १-५ अगस्त्यः॥ इंद्रः॥ त्रिष्टुप्॥

॥१७८॥ यद्ध स्या त इंद्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती। मा नः कामं महयंतमा धग्विश्वा ते अश्यां पर्याप आयोः॥१॥ न घा राजेंद्र आ दभन्नो या नु स्वसारा कृणवंत योनौ। आपश्चिदस्मै सुतुका अवेषन्गमन्न इंद्रः सख्या वयश्च॥२॥ जेता नृभिरिंद्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः। प्रभर्ता रथं दाशुष उपाक उद्यंता गिरो यदि च त्मना भूत्॥३॥ एवा नृभिरिंद्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत्। समर्य इषः स्तवते विवाचि सत्राकरो यजमानस्य शंसः॥४॥ त्वया वयं मघवन्निंद्र शत्रूनभि ष्याम महतो मन्यमानान्। त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजनं जीरदानुं॥५॥२१॥

---

॥१७९॥ १.२ लोपमुद्रा। ३.४ अगस्त्यः। ५.६ अंतेवासी ब्रह्मचारी॥ रतिः॥ १-४.६ त्रिष्टुप्। ५ बृहती॥

॥१७९॥ पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो जरयंतीः। मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः॥१॥ ये चिद्धि पूर्व ऋतसाप आसन्त्साकं देवेभिरवदन्नृतानि। ते चिदवासुर्नह्यंतमापुः समू नु पत्नीर्वृषभिर्जगम्युः॥२॥ न मृषा श्रांतं यदवंति देवा विश्वा इत्स्पृधो अभ्यश्नवाव। जयावेदत्र शत-

ऽभ्यां याहि प्रऽवता उप मद्रिक् ॥३॥ अयं यज्ञः देवऽयाः अयं मियेधः इमा ब्रह्माणि अयं इंद्र सोमः स्तीर्णं बर्हिः आ तु शक्र प्र याहि पिब निऽसद्य वि मुच हरी इति इह ॥४॥ ओ इति सुऽस्तुतः इंद्र याहि अर्वाङ् उप ब्रह्माणि मान्यस्य कारोः विद्याम वस्तोः अवसा गृणंतः विद्याम इषं वृजनं जीरऽदानुं ॥५॥२०॥

---

॥१७८॥ यत् ह स्या ते इंद्र श्रुष्टिः अस्ति यया बभूथ जरितृऽभ्यः ऊती मा नः कामं महयंतं आ धक् विश्वा ते अश्यां परि आपः आयोः ॥१॥ न घ राजा इंद्रः आ दभत् नः या नु स्वसारा कृणवंत योनौ आपः चित् अस्मै सुऽतुकाः अवेषन् गमत् नः इंद्रः सख्या वयः च ॥२॥ जेता नृऽभिः इंद्रः पृत्ऽसु शूरः श्रोता हवं नाधमानस्य कारोः प्रऽभर्ता रथं दाशुषः उपाके उत्ऽयंता गिरः यदि च त्मना भूत् ॥३॥ एव नृऽभिः इंद्रः सुऽश्रवस्या प्रऽखादः पृक्षः अभि मित्रिणः भूत् सऽमर्ये इषः स्तवते विऽवाचि सत्राऽकरः यजमानस्य शंसः ॥४॥ त्वया वयं मघऽवन् इंद्र शत्रून् अभि स्याम महतः मन्यमानान् त्वं त्राता त्वं ऊं इति नः वृधे भूः विद्याम इषं वृजनं जीरऽदानुं ॥५॥२१॥

---

॥१७९॥ पूर्वीः अहं शरदः शश्रमाणा दोषाः वस्तोः उषसः जरयंतीः मिनाति श्रियं जरिमा तनूनां अपि ऊं इति नु पत्नीः वृषणः जगम्युः ॥१॥ ये चित् हि पूर्वे ऋतऽसापः आसन् साकं देवेभिः अवदन् ऋतानि ते चित् अव असुः नहि अंतं आपुः सं ऊं इति नु पत्नीः वृषऽभिः जगम्युः ॥२॥ न मृषा श्रांतं यत् अवंति देवाः विश्वाः इत् स्पृधः अभि अश्नवाव जयाव इत् अत्र शत-

नीथमाजिं यत्सम्यंचा मिथुनावभ्यजाव ॥३॥ नदस्य मा
रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् । लोपा-
मुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसंतं ॥४॥
इमं नु सोममंतितो हृत्सु पीतमुप ब्रुवे । यत्सीमागश्चकृमा
तत्सु मृळतु पुलुकामो हि मर्त्यः ॥५॥ अगस्त्यः खनमानः
खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः
पुपोष सत्या देवेष्वाशिषो जगाम ॥६॥२२॥२३॥

---

॥ १८० ॥ १–१० अगस्त्यः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥१८०॥ युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि
दीयत् । हिरण्ययया वां पवयः प्रुषायन्मध्वः पिबंता उषसः
सचेथे ॥१॥ युवमत्यस्याव नक्षथो यद्विपत्मनो नर्यस्य प्रय-
ज्योः । स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे
च ॥२॥ युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।
अंतर्यद्वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥३॥
युवं ह घर्मं मधुमंतमत्रयेऽपो न क्षोदोऽवृणीतमेषे । तद्वां
नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति यंति मध्वः ॥४॥ आ
वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः । अपः
क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥५॥२३॥
नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिं ।
प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजं ॥६॥ वयं
चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।
अधा चिद्धि ष्माश्विनावनिंद्या पाथो हि ष्मा वृषणावंतिदेवं
॥७॥ युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सा-

ऽनीथं आजिं यत् सम्यंचा मिथुनौ अभि अजाव ॥३॥ नदस्य मा रुधतः कामः आ अगन् इतः आऽजातः अमुतः कुतः चित् लोपामुद्रा वृषणं निः रिणाति धीरं अधीरा धयति श्वसंतं ॥४॥ इमं नु सोमं अंतितः हृत्ऽसु पीतं उप ब्रुवे यत् सीं आगः चकृम तत् सु मृळतु पुलुऽकामः हि मर्त्यः ॥ ५ ॥ अगस्त्यः खनमानः खनित्रैः प्रऽजां अपत्यं बलं इच्छमानः उभौ वर्णौ ऋषिः उग्रः पुपोष सत्याः देवेषु आऽशिषः जगाम ॥६॥२२॥२३॥

---

॥१८०॥ युवोः रजांसि सुऽयमासः अश्वाः रथः यत् वां परि अर्णांसि दीयत् हिरण्ययाः वां पवयः प्रुषायन् मध्वः पिबंतौ उषसः सचेथे ॥१॥ युवं अत्यस्य अव नक्षथः यत् विऽपत्मनः नर्यस्य प्रऽयज्योः स्वसा यत् वां विश्वऽगूर्ती॰ भराति वाजाय ईट्टे मधुऽपौ इषे च ॥२॥ युवं पयः उस्रियायां अधत्तं पक्वं आमायां अव पूर्व्यं गोः अंतः यत् वनिनः वां ऋतऽप्सू॰ ह्वारः न शुचिः यजते हविष्मान् ॥३॥ युवं ह घर्मं मधुऽमंतं अत्रये अपः न क्षोदः अवृणीतं एषे तत् वां नरौ अश्विना पश्वःऽइष्टिः रथ्याऽइव चक्रा प्रति यंति मध्वः ॥४॥ आ वां दानाय ववृतीय दस्रा गोः ओहेन तौग्र्यः न जिव्रिः अपः क्षोणी सचते माहिना वां जूर्णः वां अक्षुः अंहसः यजत्रा ॥५॥२३॥ नि यत् युवेथे नियुतः सुऽदानू॰ उप स्वधाभिः सृजथः पुरंऽधिं प्रेषत् वेषत् वातः न सूरिः आ महे ददे सुऽव्रतः न वाजं ॥६॥ वयं चित् हि वां जरितारः सत्याः विपन्यामहे वि पणिः हितऽवान् अध चित् हि स्म अश्विनौ अनिंद्या पाथः हि स्म वृषणौ अंतिऽदेवं ॥७॥ युवां चित् हि स्म अश्विनौ अनु द्यून् विऽरुद्रस्य प्रऽस्रवणस्य सा-

तौ। अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥८॥ प्र यद्वहेथे महिना रथस्य प्र स्यंद्रा याथो मनुषो न होता। धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम ॥९॥ तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यं। अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुं ॥ १० ॥ २४ ॥

---

॥ १८१ ॥ १-९ अगस्त्यः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥१८१॥ कदु प्रेष्ठाविषां रयीणामध्वर्यंता यदुन्निनीथो अपां। अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानां ॥१॥ आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः। मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहंतु ॥२॥ आ वां रथोऽवनिर्न प्रवत्वान्सृप्रवंधुरः सुविताय गम्याः। वृष्णः स्थातारा मनसो जवीयानहंपूर्वो यजतो धिष्ण्या यः ॥३॥ इहेह जाता समवावशीतामरेपसा तन्वा३नामभिः स्वैः। जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥४॥ प्र वां निचेरुः ककुहो वशाँ अनु पिशंगरूपः सदनानि गम्याः। हरी अन्यस्य पीपयंत वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ॥५॥२५॥ प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन्। एवैरन्यस्य पीपयंत वाजैर्वेषंतीरूर्ध्वा नद्यो न आगुः ॥६॥ असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरंती। उपस्तुताववतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥७॥ उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन्। वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥८॥ युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हवि-

। अगस्त्यः नरां नृषु प्रऽशंस्तः कारांधुनीऽइव चितयत् सहस्रैः
॥ प्र यत् वहेथे महिना रथस्य प्र स्यंद्रा याथः मनुषः न होतां
र्यं सूरिऽभ्यः उत वा सुऽअश्व्यं नासत्या रयिऽसाचः स्याम ॥९॥
वां रथं वयं अद्य हुवेम स्तोमैः अश्विना सुविताय नव्यं अरिं-
ऽनेमिं परि द्यां इयानं विद्याम इषं वृजनं जीरऽदानुं ॥१०॥२४॥

---

॥१८१॥ कत् ऊं इति प्रेष्ठौ इषां रयीणां अध्वर्यंता यत् उत्ऽनि-
थः अपां अयं वां यज्ञः अकृत प्रऽशस्तिं वसुऽधिती इति अवि-
रा जनानां ॥१॥ आ वां अश्वासः शुचयः पयःऽपाः वात-
हसः दिव्यासः अत्याः मनःऽजुवः वृषणः वीतऽपृष्ठाः आ इह
ऽराजः अश्विना वहंतु ॥२॥ आ वां रथः अवनिः न प्रवत्वान्
प्रऽवंधुरः सुविताय गम्याः वृष्णः स्थातारा मनसः जवीयान्
हंऽपूर्वः यजतः धिष्ण्या यः ॥३॥ इहऽइह जाता सं अवावशी-
तां अरेपसा तन्वा नामऽभिः स्वैः जिष्णुः वां अन्यः सुऽमखस्य
रिः दिवः अन्यः सुऽभगः पुत्रः ऊहे ॥४॥ प्र वां निऽचेरुः ककुहः
शान् अनु पिशंगऽरूपः सदनानि गम्याः हरी इति अन्यस्य पी-
यंत वाजैः मथ्रा रजांसि अश्विना वि घोषैः ॥५॥२५॥ प्र वां
रत्ऽवान् वृषभः न निष्षाट् पूर्वीः इषः चरति मध्वः इष्णन्
वैः अन्यस्य पीपयंत वाजैः वेषंतीः ऊर्ध्वाः नद्यः नः आ अगुः
६॥ असर्जि वां स्थविरा वेधसा गीः बाळ्हे अश्विना त्रेधा क्षरंती
पऽस्तुती अवतं नाधमानं यामन् अयामन् शृणुतं हवं मे ॥७॥
उत स्या वां रुशतः वप्ससः गीः त्रिऽबर्हिषि सदसि पिन्वते
न् वृषा वां मेघः वृषणा पीपाय गोः न सेके मनुषः दशस्यन्
८॥ युवां पूषाऽइव अश्विना पुरंऽधिः अग्निं उषां न जरते हवि-

ष्मान्। हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुं ॥९॥२६॥

॥१८२॥ १-८ अगस्त्यः ॥ अश्विनौ ॥ १-५. ७ जगती। ६. ८ त्रिष्टुप्॥

॥१८२॥ अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः। धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥१॥ इंद्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा। पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥२॥ किमत्र दस्रा कृणुथः किमासाथे जनो यः कश्चिदहविर्महीयते। अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृणुतं वचस्यवे ॥३॥ जंभयतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना। वाचंवाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥४॥ युवमेतं चक्रथुः सिंधुषु प्लवमात्मन्वंतं पक्षिणं तौग्र्याय कं। येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥५॥२७॥ अवविद्धं तौग्र्यमप्स्व१ंतरनारंभणे तमसि प्रविद्धं। चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयंति ॥६॥ कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत्। पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कं ॥७॥ तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन्। अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुं ॥८॥२८॥

॥१८३॥ १-६ अगस्त्यः ॥ अश्विनौ ॥ त्रिष्टुप्॥

॥१८३॥ तं युंजाथां मनसो यो जवीयान् त्रिवंधुरो वृषणा यस्त्रिचक्रः। येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो

स्मान् हुवे यत् वां वरिवस्या गृणानः विद्याम इषं वृजनं जीरऽदानुं ॥ ९ ॥ २६ ॥

---

॥ १८२ ॥ अभूत् इदं वयुनं ओ सु भूषत रथः वृषणऽ वान् मदंत मनीषिणः धियंऽजिन्वा धिष्ण्या विश्पलावसू दिवः नपाता सुऽकृते शुचिऽव्रता ॥ १ ॥ इंद्रऽतमा हि धिष्ण्या मरुत्ऽतमा दस्रा दंसिष्ठा रथ्या रथिऽतमा पूर्णं रथं वहेथे मध्वः आऽचितं तेन दाश्वांसं उप याथः अश्विना ॥ २ ॥ किं अत्र दस्रा कृणुथः किं आसाथे जनः यः कः चित् अहविः महीयते अति क्रमिष्टं जुरतं पणेः असुं ज्योतिः विप्राय कृणुतं वचस्यवे ॥ ३ ॥ जंभयतं अभितः रायतः शुनः हतं मृधः विदथुः तानि अश्विना वाचंऽवाचं जरितुः रत्निनीं कृतं उभा शंसं नासत्या अवतं मम ॥ ४ ॥ युवं एतं चक्रथुः सिंधुषु प्लवं आत्मन्ऽवंतं पक्षिणं तौग्र्याय कं येन देवऽत्रा मनसा निःऽऊहथुः सुऽपप्तनि पेतथुः क्षोदसः महः ॥ ५ ॥ २७ ॥ अवऽविद्धं तौग्र्यं अप्ऽसु अंतः अनारंभणे तमसि प्रऽविद्धं चतस्रः नावः जठलस्य जुष्टाः उत् अश्विऽभ्यां इषिताः पारयंति ॥ ६ ॥ कः स्वित् वृक्षः निःऽस्थितः मध्ये अर्णसः यं तौग्र्यः नाधितः परिऽअसस्वजत् पर्णा मृगस्य पतरोःऽइव आऽरभे उत् अश्विनौ ऊहथुः श्रोमताय कं ॥ ७ ॥ तत् वां नरा नासत्यौ अनु स्यात् यत् वां मानासः उचथं अवोचन् अस्मात् अद्य सदसः सोम्यात् आ विद्याम इषं वृजनं जीरऽदानुं ॥ ८ ॥ २८ ॥

---

॥ १८३ ॥ तं युंजाथां मनसः यः जवीयान् त्रिऽवंधुरः वृषणा यः त्रिऽचक्रः येन उपऽयाथः सुऽकृतः दुरोणं त्रिऽधातुना पतथः

विनै पर्णैः ॥१॥ सुवृद्रथो वर्तते यन्नभि क्षां यत्तिष्ठथः क्रतु-मंतानु पृक्षे । वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥२॥ आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् । येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥३॥ मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तं । अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनां ॥४॥ युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान् । दिशं न दिष्टामृजूयेव यंता मे हवं नासत्योप यातं ॥५॥ अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि । एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं ॥६॥२९॥४॥

---

॥ १८४ ॥ १–६ अगस्त्यः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥१८४॥ ता वामद्य तावपरं हुवेमोच्छंत्यामुषसि वह्नि-रुक्थैः । नासत्या कुह चित्संतावर्यो दिवो नपाता सुदास्त-राय ॥१॥ अस्मे ऊ षु वृषणा मादयेथामुत्पणींर्हतमूर्म्या मदं-ता । श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः ॥२॥ श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः । वच्यंते वां ककुहा अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ॥३॥ अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः । अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदंति ॥४॥ एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति । यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदंता ॥५॥ अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि । एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं ॥६॥१॥

विः न पर्णैः ॥१॥ सुऽवृत् रथः वर्तते यन् अभि क्षां यत् तिष्ठथः क्रतुऽमंता अनु पृक्षे वपुः वपुष्या सचतां इयं गीः दिवः दुहित्रा उषसा सचेथे ॥२॥ आ तिष्ठतं सुऽवृतं यः रथः वां अनु व्रतानि वर्तते हविष्मान् येन नरा नासत्या इषयध्यै वर्तिः याथः तनयाय त्मने च ॥३॥ मा वां वृकः मा वृकीः आ दधर्षीत् मा परि वर्क्तं उत मा अति धक्तं अयं वां भागः निऽहितः इयं गीः दस्रौ इमे वां निऽधयः मधूनां ॥४॥ युवां गोतमः पुरुऽमीळ्हः अत्रिः दस्रा हवते अवसे हविष्मान् दिशं न दिष्टां ऋजुयाऽइव यंता आ मे हवं नासत्या उप यातं ॥५॥ अतारिष्म तमसः पारं अस्य प्रति वां स्तोमः अश्विनौ अधायि आ इह यातं पथिऽभिः देवऽयानैः विद्याम इषं वृजनं जीरऽदानुं ॥६॥२९॥४॥

---

॥१८४॥ ता वां अद्य तौ अपरं हुवेम उच्छंत्यां उषसि वह्निः उक्थैः नासत्या कुह चित् संतौ अर्यः दिवः नपाता सुदाःऽतराय ॥१॥ अस्मे ऊं सु वृषणा मादयेथां उत् पणीन् हतं ऊर्म्या मदंता श्रुतं मे अच्छोक्तिऽभिः मतीनां एष्टा नरा निऽचेतारा च कर्णैः ॥२॥ श्रिये पूषन् इषुकृताऽइव देवा नासत्या वहतुं सूर्यायाः वच्यंते वां ककुहाः अप्ऽसु जाताः युगा जूर्णाऽइव वरुणस्य भूरेः ॥३॥ अस्मे सा वां माध्वी रातिः अस्तु स्तोमं हिनोतं मान्यस्य कारोः अनु यत् वां श्रवस्या सुऽदानू सुऽवीर्याय चर्षणयः मदंति ॥४॥ एषः वां स्तोमः अश्विनौ अकारि मानेभिः मघऽवाना सुऽवृक्ति यातं वर्तिः तनयाय त्मने च अगस्त्ये नासत्या मदंता ॥५॥ अतारिष्म तमसः पारं अस्य प्रति वां स्तोमः अश्विनौ अधायि आ इह यातं पथिऽभिः देवऽयानैः विद्याम इषं वृजनं जीरऽदानुं ॥६॥१॥

॥ १८५ ॥ १–११ अगस्त्यः ॥ द्यावापृथिव्यौ ॥ त्रिष्टुप् ॥

॥१८५॥ कत॒रा पूर्वा॒ कत॒राप॑रा॒योः क॒था जा॒ते क॑वयः॒ को वि वे॑द। विश्वं॒ त्मना॑ बिभृतो॒ यद्ध॒ नाम॒ वि व॑र्तेते॒ अह॑नी च॒क्रिये॑व॥१॥ भूरिं॒ द्वे अच॑रन्ती॒ चर॑न्तं प॒द्वन्तं॒ गर्भ॑मप॒दी द॑धाते। नित्यं॒ न सू॒नुं पि॒त्रोरु॒पस्थे॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त् ॥२॥ अ॒ने॒हो दा॒त्रमदि॑तेरन॒र्वं हु॒वे स्व॑र्वदव॒धं नम॑स्वत्। तद्रो॑दसी जनयतं जरि॒त्रे द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्॥३॥ अत॑प्यमाने॒ अव॒साव॑न्ती॒ अनु॑ ष्याम॒ रोद॑सी दे॒वपु॑त्रे। उ॒भे दे॒वाना॑मु॒भये॑भि॒रह्नां॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्॥४॥ सं॒गच्छ॑माने युव॒ती सम॑न्ते॒ स्वसा॑रा जा॒मी पि॒त्रोरु॒पस्थे॑। अ॒भि॒जिघ्र॑न्ती॒ भुव॑नस्य॒ नाभिं॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्॥५॥२॥ उ॒र्वी सद्म॑नी बृह॒ती ऋ॒तेन॑ हु॒वे दे॒वाना॒मव॑सा॒ जनि॑त्री। द॒धा॒ते॒ ये अ॒मृतं॑ सु॒प्रती॑के॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त्॥६॥ उ॒र्वी पृ॒थ्वी ब॑हु॒ले दू॒रेअ॑न्ते॒ उप॑ ब्रुवे॒ नम॑सा य॒ज्ञे अ॒स्मिन्। द॒धा॒ते॒ ये सु॒भगे॑ सु॒प्रतू॑र्ती॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त् ॥७॥ दे॒वान्वा॒ यच्च॑कृ॒मा कच्चि॒दागः॒ सखा॑यं वा॒ सद॒मिज्जास्प॑तिं वा। इ॒यं धीर्भू॑या अव॒यान॑मेषां॒ द्यावा॒ रक्ष॑तं पृथिवी नो॒ अभ्वा॑त् ॥८॥ उ॒भा शंसा॒ नर्या॒ माम॑विष्टामु॒भे मामू॒ती अव॑सा सचेताम्। भूरि॑ चिद॒र्यः सु॒दास्त॑राये॒षा मद॑न्त इषयेम देवाः॥९॥ ऋ॒तं दि॒वे तद॑वोचं पृथि॒व्या अ॑भिश्रा॒वाय॑ प्रथ॒मं सु॑मे॒धाः। पा॒ताम॑व॒द्याद्दु॑रि॒ताद॒भीके॑ पि॒ता मा॒ता च॑ रक्षता॒मवो॑भिः॥१०॥ इ॒दं द्या॑वापृथिवी स॒त्यम॑स्तु॒ पित॒र्मात॒र्यदि॒होप॑ब्रु॒वे वा॑म्। भू॒तं दे॒वाना॑मव॒मे अवो॑भि॒र्वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुम्॥११॥३॥

॥१८५॥ कतरा पूर्वा कतरा अपरा अयोः कथा जाते कवयः
ः वि वेद विश्वं त्मना बिभृतः यत् ह नाम वि.वर्तेते अहनी
चक्रियाऽइव ॥१॥ भूरिं द्वे अचरंती चरंतं पत्ऽवंतं गर्भं अप-
ी दधाते नित्यं न सूनुं पित्रोः उपऽस्थे द्यावा रक्षतं पृथिवी
ः अभ्वात् ॥२॥ अनेहः दात्रं अदितेः अनर्वं हुवे स्वःऽवत् अवधं
मस्वत् तत् रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नः
भ्वात् ॥३॥ अतप्यमाने अवसा अवंती अनु स्याम रोदसी
वऽपुत्रे उभे देवानां उभयेभिः अह्नां द्यावा रक्षतं पृथिवी
ः अभ्वात् ॥४॥ संऽगच्छमाने युवती संऽअंते स्वसारा जा-
ी पित्रोः उपऽस्थे अभिऽजिघ्रंती भुवनस्य नाभिं द्यावा
क्षतं पृथिवी नः अभ्वात् ॥५॥२॥ उर्वी सद्मनी बृहती ऋतेन
वे देवानां अवसा जनित्री दधाते ये अमृतं सुऽप्रतीके द्या-
ा रक्षतं पृथिवी नः अभ्वात् ॥६॥ उर्वी पृथ्वी बहुले दूरेऽअंते
पं ब्रुवे नमसा यज्ञे अस्मिन् दधाते ये सुऽभगे सुऽप्रतूर्ती
ावा रक्षतं पृथिवी नः अभ्वात् ॥ ७॥ देवान् वा यत् चकृम
त् चित् आगः सखायं वा सदं इत् जाःऽपतिं वा इयं धीः
्याः अवऽयानं एषां द्यावा रक्षतं पृथिवी नः अभ्वात् ॥८॥
भा शंसा नर्या मां अविष्टां उभे मां ऊती अवसा सचेतां
ूरि चित् अर्यः सुदाःऽतराय इषा मदंतः इषयेम देवाः ॥ ९ ॥
तं दिवे तत् अवोचं पृथिव्यै अभिऽश्रावाय प्रथमं सुऽमेधाः
ातां अवद्यात् दुःऽइतात् अभीके पिता माता च रक्षतां अवः-
भिः ॥१०॥ इदं द्यावापृथिवी सत्यं अस्तु पितः मातः यत् इह
उपऽब्रुवे वां भूतं देवानां अवमे अवःऽभिः विद्याम इषं वृजनं
जीरऽदानुं ॥ ११ ॥३॥

॥१८६॥ १-११ अगस्त्यः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥१८६॥ आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु । अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥१॥ आ नो विश्व आस्क्रा गमंतु देवा मित्रो अर्यमा वरुणः सजोषाः । भुवन्यथा नो विश्वे वृधासः करन्सुषाहा विथुरं न शवः ॥२॥ प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः । असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः ॥३॥ उप व एषे नमसा जिगीषोषासानक्ता सुदुघेव धेनुः । समाने अहन्विमिमानो अर्कं विषुरूपे पयसि सस्मिन्नूधन् ॥४॥ उत नोऽहिर्बुध्न्योऽमयस्कः शिशुं न पिप्युषीव वेति सिंधुः । येन नपातमपां जुनाम मनोजुवो वृषणो यं वहंति ॥५॥४॥ उत न ईं त्वष्टा गंत्वच्छा स्मत्सूरिभिरभिपित्वे सजोषाः । आ वृत्रहेंद्रश्चर्षणिप्रास्तुविष्टमो नरां न इह गम्याः ॥६॥ उत न ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहंति । तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसंत ॥७॥ उत न ईं मरुतो वृद्धसेनाः स्मद्रोदसी समनसः सदंतु । पृषदश्वासोऽवनयो न रथा रिशादसो मित्रयुजो न देवाः ॥८॥ प्र नु यदेषां महिना चिकित्रे प्र युंजते प्रयुजस्ते सुवृक्ति । अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायंत सेनाः ॥९॥ प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि संति । अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥१०॥ इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः । नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुम् ॥११॥५॥

॥१८६॥ आ नः इळाभिः विदथे सुऽशस्ति विश्वानरः सविता देवः एतु अपि यथा युवानः मत्सथ नः विश्वं जगत् अभिऽपित्वे मनीषा ॥१॥ आ नः विश्वे आस्क्राः गमंतु देवाः मित्रः अर्यमा वरुणः सऽजोषाः भुवन् यथा नः विश्वे वृधासः करन् सुऽसहा विथुरं न शवः ॥२॥ प्रेष्ठं वः अतिथिं गृणीषे अग्निं शस्तिऽभिः तुर्वणिः सऽजोषाः असत् यथा नः वरुणः सुऽकीर्तिः इषः च पर्षत् अरिऽगूर्तः सूरिः ॥३॥ उप वः आ ईषे नमसा जिगीषा उषसानक्ता सुदुघाऽइव धेनुः समाने अहन् विऽमिमानः अर्कं विषुऽरूपे पयसि सस्मिन् ऊधन् ॥४॥ उत नः अहिः बुध्न्यः मयः कः॰ शिशुं न पिप्युषीऽइव वेति सिंधुः येन नपातं अपां जुनाम मनःऽजुवः वृषणः यं वहंति ॥५॥४॥ उत नः ईं त्वष्टा आ गंतु अच्छ स्मत् सूरिऽभिः अभिऽपित्वे सऽजोषाः आ वृत्रऽहा इंद्रः चर्षणिऽप्राः तुविःऽतमः नरां नः इह गम्याः ॥६॥ उत नः ईं मतयः अश्वऽयोगाः शिशुं न गावः तरुणं रिहंति तं ईं गिरः ज-नयः न पत्नीः सुरभिःऽतमं नरां नसंत ॥७॥ उत नः ईं मरुतः वृद्धऽसेनाः स्मत् रोदसी सऽमनसः सदंतु पृषत्ऽअश्वासः अ-वनयः न रथाः रिशादसः मित्रऽयुजः न देवाः ॥८॥ प्र नु यत् एषां महिना चिकित्रे प्र युंजते प्रऽयुजः ते सुऽवृक्ति अध यत् एषां सुऽदिने न शरुः विश्वं आ इरिणं प्रुषायंत सेनाः ॥९॥ प्रो अ-श्विनौ अवसे कृणुध्वं प्र पूषणं स्वऽतवसः हि संति अद्वेषः वि-ष्णुः वातः ऋभुक्षाः अच्छ सुम्नाय ववृतीय देवान् ॥१०॥ इयं सा वः अस्मे दीधितिः यजत्राः अपिऽप्राणी च सदनी च भू-याः नि या देवेषु यतते वसुऽयुः विद्याम इषं वृजनं जीर-ऽदानुं ॥११॥५॥

॥ १८७ ॥ १–११ अगस्त्यः ॥ अन्नस्तुतिः ॥ १ अनुष्टुब्गर्भोष्णिक् । २. ४. ८–१० गायत्री ।
३. ५–७ अनुष्टुप् । ११ अनुष्टुब्बृहती वा ॥

॥१८७॥ पितुं नु स्तोषं महो धर्माणं तविषीम्। यस्य त्रितो
व्योजसा वृत्रं। विपर्वमर्दयत् ॥१॥ स्वादो पितो मधो पितो
वयं त्वा ववृमहे। अस्माकमविता भव ॥२॥ उप नः पितवा
चर शिवः शिवाभिरूतिभिः। मयोभुरद्विषेण्यः सखा सुशेवो
अद्वयाः ॥३॥ तव त्ये पितो रसा रजांस्यनु विष्ठिताः। दिवि
वाता इव श्रिताः ॥४॥ तव त्ये पितो ददतस्तव स्वादिष्ठ ते
पितो। प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥५॥६॥ त्वे
पितो महानां देवानां मनो हितं। अकारि चारु केतुना
तवाहिमवसावधीत् ॥६॥ यददो पितो अजगन्विवस्व पर्वतानां। अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥७॥
यदपामोषधीनां परिंशमारिशामहे। वातापे पीव इद्भव ॥८॥
यत्ते सोम गवाशिरो यवाशिरो भजामहे। वातापे पीव इद्भव
॥९॥ करम्भ ओषधे भव पीवो वृक्क उदारथिः। वातापे पीव
इद्भव ॥१०॥ तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम।
देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादं ॥११॥७॥

---

॥ १८८ ॥ १–११ अगस्त्यः ॥ आप्रियः ॥ गायत्री ॥

॥१८८॥ समिद्धो अद्य राजसि देवो देवैः सहस्रजित्। दूतो
हव्या कविर्वह ॥१॥ तनूनपादृतं यते मध्वा यज्ञः समज्यते।
दधत्सहस्रिणीरिषः ॥२॥ आजुह्वानो न ईड्यो देवाँ आ
वक्षि यज्ञियान्। अग्ने सहस्रसा असि ॥३॥ प्राचीनं
बर्हिरोजसा सहस्रवीरमस्तृणन्। यत्रादित्या विराजथ
॥४॥ विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः।
दुरो घृतान्यक्षरन् ॥५॥८॥ सुरुक्मे हि सुपेशसाधि श्रिया

॥१८७॥ पितुम् नु स्तोषम् महः धर्माणम् तविषीम् यस्य त्रितः वि ओजसा वृत्रम् विऽपर्वम् अर्दयत् ॥१॥ स्वादो इति पितो इति मधो इति पितो इति वयम् त्वा ववृमहे अस्माकम् अविता भव ॥२॥ उप नः पितो इति आ चर शिवः शिवाभिः ऊतिऽभिः मयःऽभुः अद्विषेण्यः सखा सुऽशेवः अद्वयाः ॥३॥ तव त्ये पितो इति रसाः रजांसि अनु विऽस्थिताः दिवि वाताःऽइव श्रिताः ॥ ४ ॥ तव त्ये पितो इति ददतः तव स्वादिष्ठ ते पितो इति प्र स्वाद्मानः रसानाम् तुविग्रीवाःऽइव ईरते ॥ ५ ॥ ६ ॥ त्वे इति पितो इति महानाम् देवानाम् मनः हितम् अकारि चारु केतुना तव अहिम् अवसा अवधीत् ॥ ६ ॥ यत् अदः पितो इति अजगन् विवस्व पर्वतानाम् अत्र चित् नः मधो इति पितो इति अरम् भक्षाय गम्याः ॥७॥ यत् अपाम् ओषधीनाम् परिंशम् आऽरिशामहे वातापे पीवः इत् भव ॥ ८ ॥ यत् ते सोम गोऽआशिरः यवऽआशिरः भजामहे वातापे पीवः इत् भव ॥९॥ करम्भः ओषधे भव पीवः वृक्कः उदारथिः वातापे पीवः इत् भव ॥१०॥ तम् त्वा वयम् पितो इति वचःऽभिः गावः न हव्या सुसूदिम देवेभ्यः त्वा सधऽमादम् अस्मभ्यम् त्वा सधऽमादम् ॥ ११ ॥ ७ ॥

---

॥ १८८ ॥ सम्ऽइद्धः अद्य राजसि देवः देवैः सहस्रऽजित् दूतः हव्या कविः वह ॥१॥ तनूऽनपात् ऋतम् यते मध्वा यज्ञः सम् अज्यते दधत् सहस्रिणीः इषः ॥ २ ॥ आऽजुह्वानः नः ईड्यः देवान् आ वक्षि यज्ञियान् अग्ने सहस्रऽसाः असि ॥३॥ प्राचीनम् बर्हिः ओजसा सहस्रऽवीरम् अस्तृणन् यत्र आदित्याः विऽराजथ ॥४॥ विऽराट् सम्ऽराट् विऽभ्वीः प्रऽभ्वीः बह्वीः च भूयसीः च याः दुरः घृतानि अक्षरन् ॥५॥८॥ सुऽरुक्मे हि सुऽपेशसा अधि श्रिया

विराजंतः । उषासाविह सीदतां ॥६॥ प्रथमा हि सुवाचसा होतारा दैव्या कवी । यज्ञं नो यक्षतामिमं ॥ ७ ॥ भारतीळे सरस्वति या वः सर्वा उपब्रुवे । ता नश्चोदयत श्रिये ॥ ८ ॥ त्वष्टा रूपाणि हि प्रभुः पशून्विश्वान्त्समानजे । तेषां नः स्फातिमा यंज ॥ ९ ॥ उप त्मन्या वनस्पते पाथो देवेभ्यः सृज । अग्निर्हव्यानि सिष्वदत् ॥१०॥ पुरोगा अग्निर्देवानां गायत्रेण समंज्यते । स्वाहाकृतीषु रोचते ॥ ११ ॥ ९ ॥

---

॥ १८९ ॥ १-८ अगस्त्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१८९॥ अग्ने नयं सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥ अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ २ ॥ अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमंत कृष्टीः । पुनरस्मभ्यं सुविताय देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥ ३ ॥ पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् । मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥ ४ ॥ मा नो अग्नेऽव सृजो अघायाविष्यवे रिपवे दुच्छुनायै । मा दत्वते दशते मादते नो मा रीषते सहसावन्परा दाः ॥ ५ ॥ १० ॥ वि घ त्वावाँ ऋतजात यंसद्गृणानो अग्ने तन्वे३ वरूथं । विश्वाद्रिरिक्षोरुत वा निनित्सोरभिह्रुतामसि हि देव विष्पट् ॥ ६ ॥ त्वं ताँ अग्न उभयान्वि विद्वान्वेषि प्रपित्वे मनुषो यजत्र । अभिपित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भिर्नाक्रः ॥ ७ ॥ अवो-

विऽराजंतः उषसौं आ इह सीदतां ॥६॥ प्रथमा हि सुऽवाचंसा
होतारा दैव्या कवी यज्ञं नः यक्षतां इमं ॥७॥ भारति इळे सर-
स्वति याः वः सर्वाः उपऽब्रुवे ताः नः चोदयत श्रिये ॥८॥ त्वष्टा
रूपाणि हि प्रऽभुः पशून् विश्वान् संऽआनजे तेषां नः स्फा-
तिं आ यज ॥९॥ उप त्मन्या वनस्पते पार्थः देवेभ्यः सृज अग्निः
हव्यानि सिस्वदत् ॥१०॥ पुरःऽगाः अग्निः देवानां गायत्रेण सं
अज्यते स्वाहाऽकृतीषु रोचते ॥११॥९॥

---

॥१८९॥ अग्ने नयं सुऽपथा राये अस्मान् विश्वानि देव वयु-
नानि विद्वान् युयोधि अस्मत् जुहुराणं एनः भूयिष्ठां ते नमः-
ऽउक्तिं विधेम ॥१॥ अग्ने त्वं पारय नव्यः अस्मान् स्वस्तिऽभिः
अति दुःऽगानि विश्वा पूः च पृथ्वी बहुला नः उर्वी भव तोकाय
तनयाय शं योः ॥२॥ अग्ने त्वं अस्मत् युयोधि अमीवाः अनग्नि-
ऽत्राः अभि अमंत कृष्टीः पुनः अस्मभ्यं सुवितायं देव क्षां वि-
श्वेभिः अमृतेभिः यजत्र ॥३॥ पाहि नः अग्ने पायुऽभिः अजस्रैः
उत प्रिये सदने आ शुशुक्वान् मा ते भयं जरितारं यविष्ठ नूनं
विदत् मा अपरं सहस्वः ॥४॥ मा नः अग्ने अव सृजः अघायं
अविष्यवे रिपवे दुच्छुनायै मा दत्वते दशते मा अदते नः मा रि-
षते सहसाऽवन् परा दाः ॥५॥१०॥ वि घ त्वाऽवान् ऋतऽजात
यंसत् गृणानः अग्ने तन्वे वरूथं विश्वात् रिरिक्षोः उत वा नि-
निस्तोः अभिऽहुतां असि हि देव विष्पट् ॥६॥ त्वं तान् अग्ने
उभयान् वि विद्वान् वेषि प्रऽपित्वे मनुषः यजत्र अभिऽपित्वे
मनवे शास्यः भूः मर्मृजेन्यः उशिक्ऽभिः न अक्रः ॥७॥ अवो-

चाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ । वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुं ॥८॥११॥

---

॥ १९० ॥ १–८ अगस्त्यः ॥ बृहस्पतिः ॥ त्रिष्टुप् ॥

॥१९०॥ अनर्वाणं वृषभं मंद्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः । गाथान्यः सुरुचो यस्य देवा आशृण्वंति नवमानस्य मर्ताः ॥१॥ तमृत्विया उप वाचः सचंते सर्गो न यो देवयतामसर्जि । बृहस्पतिः स ह्यंजो वरांसि विभ्वाभवत्समृते मातरिश्वा ॥२॥ उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत्सवितेव प्र बाहू । अस्य क्रत्वाहन्यो३यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥३॥ अस्य श्लोको दिवीयते पृथिव्यामत्यो न यंसद्यक्षभृद्विचेताः । मृगाणां न हेतयो यंति चेमा बृहस्पतेरहिमायाँ अभि द्यून् ॥४॥ ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवंति पज्राः । न दूढ्ये३ अनु ददासि वामं बृहस्पते चयस इत्पियारुं ॥५॥१२॥ सुप्रैतुः सूयवसो न पंथा दुर्नियंतुः परिप्रीतो न मित्रः । अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवंतो अस्थुः ॥६॥ सं यं स्तुभोऽवनयो न यंति समुद्रं न स्रवतो रोधचक्राः । स विद्वाँ उभयं चष्टे अंतर्बृहस्पतिस्तर आपश्च गृध्रः ॥७॥ एवा महस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभो धायि देवः । स नः स्तुतो वीरवद्धातु गोमद्विद्यामेषं वृजनं जीरदानुं ॥८॥१३॥

---

॥ १९१ ॥ १–१६ विषशंकावानगस्त्यः ॥ अप्तृणसूर्याः ॥ १–९. १४–१६ अनुष्टुप् । १०–१२ महापंक्तिः । १३ महाबृहती ॥

॥ १९१ ॥ कंकतो न कंकतोऽथो सतीनकंकतः । द्वाविति

चाम निऽवचनानि अस्मिन् मानस्य सूनुः सहसाने अग्नौ वयं सहस्रं ऋषिऽभिः सनेम विद्याम इषं वृजनं जीरऽदानुं ॥ ८ ॥ ११ ॥

---

॥ १९० ॥ अनर्वाणं वृषभं मंद्रऽजिह्वं बृहस्पतिं वर्धय नव्यं अर्कैः गाथान्यः सुऽरुचः यस्य देवाः आऽशृण्वंति नवमानस्य मर्ताः ॥१॥ तं ऋत्वियाः उप वाचः सचंते सर्गः न यः देवऽयतां असर्जि बृहस्पतिः सः हि अंजः वरांसि विऽभ्वा अभवत् सं ऋते मातरिश्वा ॥२॥ उपऽस्तुतिं नमसः उतऽयतिं च श्लोकं यंसत् सविताऽइव प्र बाहू अस्य क्रत्वा अहन्यः यः अस्ति मृगः न भीमः अरक्षसः तुविष्मान् ॥३॥ अस्य श्लोकः दिवि ईयते पृथिव्यां अत्यः न यंसत् यक्षऽभृत् विऽचेताः मृगाणां न हेतयः यंति च इमाः बृहस्पतेः अहिऽमायान् अभि द्यून् ॥ ४ ॥ ये त्वा देव उस्रिकं मन्यमानाः पापाः भद्रं उपऽजीवंति पज्राः न दुःऽध्ये अनु ददासि वामं बृहस्पते चयसे इत् पियारुं ॥ ५ ॥ १२ ॥ सुऽप्रैतुः सुऽयवसः न पंथाः दुःऽनियंतुः परिऽप्रीतः न मित्रः अनर्वाणः अभि ये चक्षते नः अपिऽवृताः अपऽऊर्णुवंतः अस्थुः ॥६॥ सं ये स्तुभः अवनयः न यंति समुद्रं न स्रवतः रोधऽचक्राः सः विद्वान् उभयं चष्टे अंतः बृहस्पतिः तरः आपः च गृध्रः ॥७॥ एव महः तुविऽजातः तुविष्मान् बृहस्पतिः वृषभः धायि देवः सः नः स्तुतः वीरऽवत् धातु गोऽमत् विद्याम इषं वृजनं जीरऽदानुं ॥ ८ ॥ १३ ॥

---

॥ १९१ ॥ कंकतः न कंकतः अथो सतीनऽकंकतः द्वौ इति

प्लुषी इति न्य१दृष्टा अलिप्सत ॥१॥ अदृष्टान्हंत्यायत्यथो हंति परायती । अथो अवघ्नती हंत्यथो पिनष्टि पिंषती ॥२॥ शरासः कुशरासो दर्भासः सैर्या उत । मौंजा अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत ॥३॥ नि गावो गोष्ठे असदन्नि मृगासो अविक्षत । नि केतवो जनानां न्य१दृष्टा अलिप्सत ॥४॥ एत उ त्ये प्रत्यदृश्रन्प्रदोषं तस्करा इव । अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥५॥१४॥ द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा । अदृष्टा विश्वदृष्टास्तिष्ठतेळयता सु कं ॥६॥ ये अंस्या ये अंग्याः सूचीका ये प्रकंकताः । अदृष्टाः किं चनेह वः सर्वे साकं नि जस्यत ॥७॥ उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा । अदृष्टान्सर्वाञ्जंभयन्सर्वाश्च यातुधान्यः ॥८॥ उदपप्तदसौ सूर्यः पुरु विश्वानि जूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥९॥ सूर्ये विषमा संजामि दृतिं सुरावतो गृहे । सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१०॥१५॥ इयत्तिका शकुंतिका सका जघास ते विषं । सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥११॥ त्रिः सप्त विष्पुलिंगका विषस्य पुष्यमक्षन् । ताश्चिन्नु न मरंति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१२॥ नवानां नवतीनां विषस्य रोपुषीणां । सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१३॥ त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः । तास्ते विषं वि जभ्रिर उदकं कुंभिनीरिव ॥१४॥ इयत्तकः कुषुंभकस्तकं भिनद्म्यश्मना । ततो विषं प्र

मुषीं इति नि अदृष्टाः अलिप्सत ॥१॥ अदृष्टान् हंति आऽयती
अथो॑ हंति पराऽयती अथो॑ अवऽघ्नती हंति अथो॑ पिनष्टि
पिंषती ॥२॥ शरासः कुशरासः दर्भासः सैर्याः उत मौंजाः अदृष्टाः
वैरिणाः सर्वे साकं नि अलिप्सत ॥३॥ नि गावः गोऽस्थे असदन्
नि मृगासः अविक्षत नि केतवः जनानां नि अदृष्टाः अलिप्सत
॥४॥ एते ऊं त्ये प्रति अदृश्रन् प्रऽदोषं तस्कराःऽइव अदृष्टाः वि-
श्वऽदृष्टाः प्रतिऽबुद्धाः अभूतन ॥५॥१४॥ द्यौः वः पिता पृथिवी मा-
ता सोमः भ्राता अदितिः स्वसा अदृष्टाः विश्वऽदृष्टाः तिष्ठत इ-
लयत सु कं ॥६॥ ये अंस्याः ये अंग्याः सूचीकाः ये प्रऽकंकताः अ-
दृष्टाः किं चन इह वः सर्वे साकं नि जस्यत ॥७॥ उत् पुरस्तात् सूर्यः
एति विश्वऽदृष्टः अदृष्टऽहा अदृष्टान् सर्वान् जंभयन् सर्वाः च
यातुऽधान्यः ॥८॥ उत् अपप्तत् असौ सूर्यः पुरु विश्वानि जूर्वन्
आदित्यः पर्वतेभ्यः विश्वऽदृष्टः अदृष्टऽहा ॥९॥ सूर्ये विषं आ
सजामि दृतिं सुराऽवतः गृहे सः चित् नु न मराति नो॑ वयं
मराम आरे अस्य योजनं हरिऽस्थाः मधु त्वा मधुला चकार
॥१०॥१५॥ इयत्तिका शकुंतिका सका जघास ते विषं सो॑ चित्
नु न मराति नो॑ वयं मराम आरे अस्य योजनं हरिऽस्थाः
मधु त्वा मधुला चकार ॥११॥ त्रिः सप्त विष्पुलिंगकाः विषस्य
पुष्यं अक्षन् ताः चित् नु न मरंति नो॑ वयं मराम आरे अस्य
योजनं हरिऽस्थाः मधु त्वा मधुला चकार ॥१२॥ नवानां नव-
तीनां विषस्य रोपुषीणां सर्वासां अग्रभं नामं आरे अस्य यो-
जनं हरिऽस्थाः मधु त्वा मधुला चकार ॥ १३ ॥ त्रिः सप्त मयूर्यः
सप्त स्वसारः अग्रुवः ताः ते विषं वि जभ्रिरे उदकं कुंभिनीःऽइव
॥ १४ ॥ इयत्तकः कुषुंभकः तकं भिनद्मि अश्मना ततः विषं प्र

वावृते पराचीरनु संवतः ॥१५॥ कुषुंभकस्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषं ॥१६॥१६॥२४॥१॥

॥ इति प्रथमं मंडलं समाप्तं ॥

---

॥१॥ १–१६ ॥ गृत्समद आंगिरसः शौनहोत्रः पश्चाद्भार्गवः शौनकः ॥ अग्निः ॥ जगती ॥

॥१॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥१॥ तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः । तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥२॥ त्वमग्न इंद्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः । त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वं विधर्तः सचसे पुरंध्या ॥३॥ त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः । त्वमर्यमा सत्पतिर्यस्य संभुजं त्वमंशो विदथे देव भाजयुः ॥४॥ त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यं । त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥५॥१७॥ त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना ॥६॥ त्वमग्ने द्रविणोदा अरंकृते त्वं देवः सविता रत्नधा असि । त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्तेऽविधत् ॥७॥ त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृंजते । त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति ॥८॥ त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचं । त्वं पुत्रो भवसि

॥२२॥ त्रिऽकद्रुकेषु महिषः यवऽआशिरं तुविऽशुष्मः तृपत् सोमं अपिबत् विष्णुना सुतं यथा अवशत् सः ईं ममाद् महि कर्म कर्तवे महां उरुं सः एनं सश्चत् देवः देवं सत्यं इंद्रं सत्यः इंदुः ॥१॥ अध त्विषिऽमान् अभि ओजसा क्रिविं युधा अभवत् आ रोदसी' अपृणत् अस्य मज्मना प्र ववृधे अधत्त अन्यं जठरे प्र ईं अरिच्यत सः एनं सश्चत् देवः देवं सत्यं इंद्रं सत्यः इंदुः ॥ २ ॥ साकं जातः क्रतुना साकं ओजसा ववक्षिथ साकं वृद्धः वीर्यैः सासहिः मृधः विऽचर्षणिः दाता राधः स्तुवते काम्यं वसु सः एनं सश्चत् देवः देवं सत्यं इंद्रं सत्यः इंदुः ॥३॥ तव त्यत् नर्यं नृतो' अपः इंद्र प्रथमं पूर्व्यं दिवि प्रऽवाच्यं कृतं यत् देवस्य शवसा प्र अरिणाः असुं रिणन् अपः भुवत् विश्वं अभि अदेवं ओजसा विदात् ऊर्जं शतऽक्रतुः विदात् इषं ॥४॥२८॥२॥

---

॥२३॥ गणानां त्वा गणऽपतिं हवामहे कविं कवीनां उपमश्रवःऽतमं ज्येष्ठऽराजं ब्रह्मणां ब्रह्मणः पते आ नः शृण्वन् ऊतिऽभिः सीद् सदनं ॥१॥ देवाः चित् ते असुर्य प्रऽचेतसः बृहस्पते यज्ञियं भागं आनशुः उस्राःऽइव सूर्यः ज्योतिषा महः विश्वेषां इत् जनिता ब्रह्मणां असि ॥२॥ आ विऽबाध्य परिऽरपः तमांसि च ज्योतिष्मंतं रथं ऋतस्य तिष्ठसि बृहस्पते भीमं अमित्रऽदंभनं रक्षःऽहनं गोत्रऽभिदं स्वःऽविदं ॥ ३ ॥ सुनीतिऽभिः नयसि त्रायसे जनं यः तुभ्यं दाशात् न तं अंहः अश्नवत् ब्रह्मऽद्विषः तपनः मन्युऽमीः असि बृहस्पते महि तत् ते महिऽत्वनं ॥ ४ ॥ न तं अंहः न दुःऽइतं कुतः चन न अरातयः तितिरुः न द्वयाविनः विश्वाः इत् अस्मात् ध्वरसः वि बाधसे यं सुऽगोपाः

रक्षांसि ब्रह्मणस्पते ॥५॥२९॥ त्वं नो॑ गोपाः प॑थिकृद्विचक्षण-
स्तव॑ व्रताय॑ मतिभिर्जरामहे। बृहस्पते यो नो॑ अभि ह्वरो॑
दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥६॥ उत वा यो नो॑ म-
र्चयादनागसोऽरातीवा मर्तः सानुको वृकः। बृहस्पते अप तं
वर्तया पथः सुगं नो॑ अस्यै देववीतये कृधि ॥७॥ त्रातारं त्वा
तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुं। बृहस्पते देवनिदो
नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥८॥ त्वया वयं
सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि। या नो॑
दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥९॥
त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा।
मा नो॑ दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्ता-
रिषीमहि ॥१०॥३०॥ अनानुदो वृषभो जग्मिराहवं निष्टप्ता
शत्रुं पृतनासु सासहिः। असि सत्य ऋणया ब्रह्मणस्पत उ-
ग्रस्य चिद्दमिता वीळुहर्षिणः ॥११॥ अदेवेन मनसा यो
रिषण्यति शासामुग्रो मन्यमानो जिघांसति। बृहस्पते मा
प्रणक्तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥१२॥ भरेषु
हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनं। विश्वा
इदर्यो अभिदिप्स्वो३ मृधो बृहस्पतिर्वि ववर्हा रथाँ इव
॥१३॥ तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवी-
र्यं। आविस्तत्कृष्व यदसत्त उक्थ्यं१ बृहस्पते वि परिरा-
पो अर्दय ॥१४॥ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति
क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं
धेहि चित्रं ॥१५॥३१॥ मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे
निरामिणो रिपवोऽन्नेषु जागृधुः। आ देवानामोहते वि

से ब्रह्मणः पते ॥५॥२९॥ त्वं नः गोपाः पथिऽकृत् विऽचक्षणः
व्रताय मतिऽभिः जरामहे बृहस्पते यः नः अभि ह्वरः दधे
तं मर्मेतु दुच्छुना हरस्वती ॥६॥ उत वा यः नः मर्चयात्
ागसः अरातिऽवा मर्तः सानुकः वृकः बृहस्पते अप तं वर्तय
सुऽगं नः अस्यै देवऽवीतये कृधि ॥७॥ त्रातारं त्वा तनूनां
महे अवऽस्पर्तः अधिऽवक्तारं अस्मऽयुं बृहस्पते देवऽनिदः
र्हय मा दुःऽएवाः उत्ऽतरं सुम्नं उत् नशन् ॥८॥ त्वया वयं
वृधा ब्रह्मणः पते स्पार्हा वसु मनुष्या आ ददीमहि याः नः
ाक्षितः याः अरातयः अभि संति जंभय ताः अनप्नसः ॥९॥
वयं उत्ऽतमं धीमहे वयः बृहस्पते पप्रिणा सस्निना युजा
नः दुःऽशंसः अभिऽदिप्सुः ईशत प्र सुऽशंसाः मतिऽभिः ता-
महि ॥१०॥३०॥ अननुऽदः वृषभः जग्मिः आऽहवं निःऽतप्ता
पृतनासु ससहिः असि सत्यः ऋणऽयाः ब्रह्मणः पते उ-
चित् दमिता वीळुऽहर्षिणः ॥११॥ अदेवेन मनसा यः
ष्यति शासां उग्रः मन्यमानः जिघांसति बृहस्पते मा प्रणक्
नः वधः नि कर्म मन्युं दुःऽएवस्य शर्धतः ॥१२॥ भरेषु हव्यः
ता उपऽसद्यः गंता वाजेषु सनिता धनंऽधनं विश्वाः इत्
ः अभिऽदिप्स्वः मृधः बृहस्पतिः वि ववर्ह रथान्ऽइव ॥१३॥
ष्ठया तपनी रक्षसः तप ये त्वा निदे दधिरे दृष्टऽवीर्यं आविः
कृष्व यत् असत् ते उक्थ्यं बृहस्पते वि परिऽरपः अर्दय
॥ बृहस्पते अति यत् अर्यः अर्हात् द्युऽमत् विऽभाति क्रतु-
त् जनेषु यत् दीदयत् शवसा ऋतऽप्रजात तत् अस्मासु
णं धेहि चित्रं ॥१५॥३१॥ मा नः स्तेनेभ्यः ये अभि द्रुहः
निरामिणः रिपवः अन्नेषु जगृधुः आ देवानां ओहते वि

ऽयो हृदि बृहस्पते न परः साम्नो विदुः ॥१६॥ विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत्साम्नःसाम्नः कविः । स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हंता मह ऋतस्य धर्तरि ॥१७॥ तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदंगिरः । इंद्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवं ॥१८॥ ब्रह्मणस्पते त्वमस्य यंता सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवंति देवा बृहद्वदेम विदथे सुवीराः ॥१९॥३२॥६॥

---

॥ २४ ॥ १–१६ गृत्समदः ॥ १–११. १३–१६ ब्रह्मणस्पतिः । १२ ब्रह्मणस्पतिरिंद्रश्च ॥
१–११. १३–१५ जगती । १२. १६ त्रिष्टुप् ॥

॥२४॥ सेमामविड्ढि प्रभृतिं य ईशिषेऽया विधेम नवया महा गिरा । यथा नो मीढ्वान्स्तवते सखा तव बृहस्पते सीषधः सोत नो मतिं ॥१॥ यो नंत्वान्यनमन्न्योजसोतादर्दर्मन्युना शंबराणि वि । प्राच्यावयदच्युता ब्रह्मणस्पतिरा चाविशद्वसुमंतं वि पर्वतं ॥२॥ तद्देवानां देवतमाय कर्त्वमश्रथ्नन्दृळ्हाव्रदंत वीळिता । उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥३॥ अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् । तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणं ॥४॥ सना ता का चिद्भुवना भवीत्वा माद्भिः शरद्भिर्दुरो वरंत वः । अयतंता चरतो अन्यदन्यदिद्या चकार वयुना ब्रह्मणस्पतिः ॥५॥१॥ अभिनक्षंतो अभि ये तमानशुर्निधिं पणीनां परमं गुहा हितं । ते विद्वांसः प्रतिचक्ष्यानृता पुनर्यत उ आयन्तदुदीयुराविशं ॥६॥ ऋतावानः प्रतिचक्ष्यानृता पुनरात आ तस्थुः कवयो महस्पथः ।

मर्यः हृदि बृहस्पते न परः साम्नः विदुः ॥१६॥ विश्वेभ्यः हि त्वा भुवनेभ्यः परि त्वष्टा अजनत् साम्नःऽसाम्नः कविः सः ऋणऽचित् ऋणऽयाः ब्रह्मणः पतिः द्रुहः हंता महः ऋतस्य धर्तरि ॥१७॥ तव श्रिये वि अजिहीत पर्वतः गवां गोत्रं उतऽअसृजः यत् अंगिरः इंद्रेण युजा तमसा परिऽवृतं बृहस्पते निः अपां औब्जः अर्णवं ॥१८॥ ब्रह्मणः पते त्वं अस्य यंता सुऽउक्तस्य बोधि तनयं च जिन्व विश्वं तत् भद्रं यत् अवंति देवाः बृहत् वदेम विदथे सुऽवीराः ॥१९॥३२॥६॥

---

॥२४॥ सः इमां अविड्ढि प्रऽभृतिं यः ईशिषे अया विधेम नवया महा गिरा यथा नः मीढ्वान् स्तवते सखा तव बृहस्पते सीसधः सः उत नः मतिं ॥१॥ यः नंत्वानि अनमत् नि ओजसा उत अदर्दः मन्युना शंबराणि वि प्र अच्यवयत् अच्युता ब्रह्मणः पतिः आ च अविशत् वसुऽमंतं वि पर्वतं ॥२॥ तत् देवानां देवऽतमाय कर्त्वं अश्रथ्नन् दृळ्हा अव्रदंत वीळिता उत् गाः आजत् अभिनत् ब्रह्मणा वलं अगूहत् तमः वि अचक्षयत् स्वः॰ ॥ ३ ॥ अश्मऽआस्यं अवतं ब्रह्मणः पतिः मधुऽधारं अभि यं ओजसा अतृणत् तं एव विश्वे पपिरे स्वःऽदृशः बहु साकं सिसिचुः उत्सं उद्रिणं ॥४॥ सना ता का चित् भुवना भवीत्वा मात्ऽभिः शरत्ऽभिः दुरः वरंत वः अयतंता चरतः अन्यत्ऽअन्यत् इत् या चकार वयुना ब्रह्मणः पतिः ॥५॥१॥ अभिऽनक्षंतः अभि ये तं आनशुः निऽधिं पणीनां परमं गुहा हितं ते विद्वांसः प्रतिऽचक्ष्य अनृता पुनः यतः ऊं आयन् तत् उत् ईयुः आऽविशं ॥६॥ ऋतऽवानः प्रतिऽचक्ष्य अनृता पुनः आ अतः आ तस्थुः कवयः महः पथः

ते बाहुभ्यां धमितमग्निमश्मनि नकिः षो अस्त्यरणो जहुर्हि तं ॥७॥ ऋतज्येन क्षिप्रेण ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना । तस्य साध्वीरिषवो याभिरस्यति नृचक्षसो दृशये कर्णयोनयः ॥८॥ स संनयः स विनयः पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः । चाक्ष्मो यद्वाजं भरते मती धनादित्सूर्यस्तपति तप्यतुर्वृथा ॥९॥ विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या । इमा सातानि वेन्यस्य वाजिनो येन जना उभये भुंजते विशः ॥१०॥२॥ योऽवरे वृजने विश्वथा विभुर्महामु रण्वः शवसा ववक्षिथ । स देवो देवान्प्रति पप्रथे पृथु विश्वेदु ता परिभूर्ब्रह्मणस्पतिः ॥११॥ विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनंति व्रतं वां । अच्छेंद्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातं ॥१२॥ उताशिष्ठा अनु शृण्वंति वह्नयः सभेयो विप्रो भरते मती धना । वीळुद्वेषा अनु वश ऋणमाददिः स ह वाजी समिथे ब्रह्मणस्पतिः ॥१३॥ ब्रह्मणस्पतेरभवद्यथावशं सत्यो मन्युर्महि कर्मा करिष्यतः । यो गा उदाजत्स दिवे वि चाभजन्महीव रीतिः शवसासरत्पृथक् ॥१४॥ ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम रथ्यो३ वयस्वतः । वीरेषु वीराँ उप पृङ्धि नस्त्वं यदीशानो ब्रह्मणा वेषि मे हवं ॥१५॥ ब्रह्मणस्पते त्वमस्य यंता सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवंति देवा बृहद्वदेम विदथे सुवीराः ॥१६॥३॥

---

॥२५॥ १-५ गृत्समदः ॥ ब्रह्मणस्पतिः ॥ जगती ॥

॥२५॥ इंधानो अग्निं वनवद्वनुष्यतः कृतब्रह्मा शूशु-

हुऽभ्यां धमितं अग्निं अश्मनि नकिः सः अस्ति अरणः जहुः
। ॥ ७ ॥ ऋतऽज्येन क्षिप्रेण ब्रह्मणः पतिः यत्र वष्टि प्र तत्
ाति धन्वना तस्य साध्वीः इषवः याभिः अस्यति नृऽचक्षसः
। कर्णऽयोनयः ॥ ८ ॥ सः संऽनयः सः विऽनयः पुरःऽहितः
ऽस्तुतः सः युधि ब्रह्मणः पतिः चाक्ष्मः यत् वाजं भरते मती
आत् इत् सूर्यः तपति तप्यतुः वृथा ॥ ९ ॥ विऽभु प्रऽभु प्रथमं
ाऽवतः बृहस्पतेः सुऽविदत्राणि राध्या इमा सातानि वेन्य-
ाजिनः येन जनाः उभये भुंजते विशः ॥ १० ॥ २ ॥ यः अवरे
। विश्वऽथा विऽभुः महां ऊं इति रण्वः शवसा ववक्षिथ सः देवः
न् प्रति पप्रथे पृथु विश्वा इत् ऊं इति ता परिऽभूः ब्रह्मणः पतिः
। विश्वं सत्यं मघऽवाना युवोः इत् आपः चन प्र मिनंति
वां अच्छ इंद्राब्रह्मणस्पती हविः नः अन्नं युजाऽइव वा-
। जिगातं ॥ १२ ॥ उत आशिष्ठाः अनु शृण्वंति वह्नयः सभेयः
ः भरते मती धना वीळुऽद्वेषाः अनु वशा ऋणं आऽददिः
वाजी संऽइध्ये ब्रह्मणः पतिः ॥ १३ ॥ ब्रह्मणः पतेः अभवत्
ऽवशं सत्यः मन्युः महि कर्म करिष्यतः यः गाः उतऽआजत्
द्वे वि च अभजत् महीऽइव रीतिः शवसा असरत् पृथक्
। ब्रह्मणः पते सुऽयमस्य विश्वहा रायः स्याम रथ्यः वयस्वतः
। वीरान् उप पृङ्धि नः त्वं यत् ईशानः ब्रह्मणा वेषि मे हवं
। ब्रह्मणः पते त्वं अस्य यंता सुऽउक्तस्य बोधि तनयं च जिन्व
तत् भद्रं यत् अवंति देवाः बृहत् वदेम विदथे सुऽवीराः
॥ ३ ॥

---

२५ ॥ इंधानः अग्निं वनवत् वनुष्यतः कृतऽब्रह्मा शूशु-

वद्रातहंव्य इत्। जातेनं जातमति स प्र संसृते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥१॥ वीरेभिर्वीरान्वनवद्वनुष्यतो गोभी रयिं पंप्रथद्बोधति त्मनां। तोकं च तस्य तनयं च वर्धते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥२॥ सिंधुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रीँरभि वष्ट्योजसा। अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥३॥ तस्मा अर्षति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति। अनिभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥४॥ तस्मा इद्विश्वे धुनयंत सिंधवोऽच्छिद्रा शर्म दधिरे पुरूणि। देवानां सुम्ने सुभगः स एधते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥५॥४॥

---

॥२६॥१–४ गृत्समदः॥ ब्रह्मणस्पतिः॥ जगती॥

॥२६॥ ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयंतमभ्यसत्। सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भंजाति भोजनं ॥१॥ यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये। हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आ वृणीमहे ॥२॥ स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिं ॥३॥ यो अस्मै हव्यैर्घृतवद्भिरविधत्प्र तं प्राचा नयति ब्रह्मणस्पतिः। उरुष्यतीमंहसो रक्षती रिषो३ंहोश्चिदस्मा उरुचक्रिरद्भुतः ॥४॥५॥

---

॥२७॥१–१७ कूर्मो गार्त्समदो गृत्समदो वा॥ आदित्याः॥ त्रिष्टुप्॥

॥२७॥ इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि। शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो

तऽहव्यः इत् जातेन जातं अति सः प्र सर्सृते यंऽयं युजं
ब्रह्मणः पतिः ॥१॥ वीरेभिः वीरान् वनवत् वनुष्यतः गोभिः
यऽप्रथत् बोधति त्मना तोकं च तस्य तनयं च वर्धते यंऽयं
कृणुते ब्रह्मणः पतिः ॥२॥ सिंधुः न क्षोदः शिमीऽवान् ऋघा-
वृषाऽइव वध्रीन् अभि वष्टि ओजसा अग्नेःऽइव प्रऽसितिः
ह वर्तवे यंऽयं युजं कृणुते ब्रह्मणः पतिः ॥३॥ तस्मै अर्षति
: असश्चतः सः सत्वऽभिः प्रथमः गोषु गच्छति अनिभृ-
विषिः हंति ओजसा यंऽयं युजं कृणुते ब्रह्मणः पतिः ॥४॥
इत् विश्वे धुनयंत सिंधवः अच्छिद्रा शर्म दधिरे पुरूणि देवा-
सुऽभगः सः एधते यंऽयं युजं कृणुते ब्रह्मणः पतिः ॥५॥४॥

---

२६॥ ऋजुः इत् शंसः वनवत् वनुष्यतः देवऽयन् इत् अदेव-
अभि असत् सुप्रऽअवीः इत् वनवत् पृतऽसु दुस्तरं यज्वा
भंज्योः वि भजाति भोजनं ॥१॥ यजस्व वीर प्र विहि मना-
भद्रं मनः कृणुष्व वृत्रऽतूर्ये हविः कृणुष्व सुऽभगः यथा
से ब्रह्मणः पतेः अवः आ वृणीमहे ॥२॥ सः इत् जनेन सः
सः जन्मना सः पुत्रैः वाजं भरते धना नृऽभिः देवानां यः
आऽविवासति श्रद्धाऽमनाः हविषा ब्रह्मणः पतिं ॥३॥
स्मै हव्यैः घृतवत्ऽभिः अविधत् प्र तं प्राचा नयति ब्रह्मणः
उरुष्यति ईं अंहसः रक्षति रिषः अंहोः चित् अस्मै उरु-
: अद्भुतः ॥४॥५॥

---

२७॥ इमाः गिरः आदित्येभ्यः घृतऽस्नूः सनात् राजऽभ्यः
जुहोमि शृणोतु मित्रः अर्यमा भगः नः तुविऽजातः वरुणः

दक्षो अंशः ॥१॥ इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा
वरुणो जुषंत । आदित्यासः शुचयो धारपूता अवृजिना अन-
वद्या अरिष्टाः ॥२॥ त आदित्यास उरवो गभीरा अदब्धासो
दिप्संतो भूर्यक्षाः । अंतः पश्यंति वृजिनोत साधु सर्वं रा-
जभ्यः परमा चिदंति ॥३॥ धारयंत आदित्यासो जगत्स्था
देवा विश्वस्य भुवनस्य गोपाः । दीर्घाधियो रक्षमाणा असु-
र्यमृतावानश्चयमाना ऋणानि ॥४॥ विद्यामादित्या अवसो
वो अस्य यदर्यमन्भय आ चिन्मयोभु । युष्माकं मित्रावरुणा
प्रणीतौ परि श्वभ्रेव दुरितानि वृज्यां ॥५॥६॥ सुगो हि वो
अर्यमन्मित्र पंथा अनृक्षरो वरुण साधुरस्ति । तेनादित्या
अधि वोचता नो यच्छता नो दुष्परिहंतु शर्म ॥६॥ पिपर्तु
नो अदिती राजपुत्राति द्वेषांस्यर्यमा सुगेभिः । बृहन्मित्रस्य
वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः ॥७॥ तिस्रो भूमी-
र्धारयन् त्रीँरुत द्यून्त्रीणि व्रता विदथे अंतरेषां । ऋतेना-
दित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु ॥८॥ त्री
रोचना दिव्या धारयंत हिरण्ययाः शुचयो धारपूताः । अस्व-
प्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय ॥९॥ त्वं
विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्ताः । शतं
नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥१०॥७॥
न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत
पश्चा । पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्यो-
तिरश्यां ॥११॥ यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयंति
पुष्टयश्च नित्याः । स रेवान्याति प्रथमो रथेन वसुदावा वि-
दथेषु प्रशस्तः ॥१२॥ शुचिरपः सूयवसा अदब्ध उप क्षेति

दक्षः अंशः ॥१॥ इमं स्तोमं सऽक्रतवः मे अद्य मित्रः अर्यमा वरुणः
जुषंत आदित्यासः शुचयः धारऽपूताः अवृजिनाः अनवद्याः अ-
रिष्टाः ॥२॥ ते आदित्यासः उरवः गभीराः अदब्धासः दिप्संतः भूरि-
ऽअक्षाः अंतः पश्यंति वृजिना उत साधु सर्वं राजऽभ्यः परमा
चित् अंति ॥३॥ धारयंतः आदित्यासः जगत् स्थाः देवाः वि-
श्वस्य भुवनस्य गोपाः दीर्घऽधियः रक्षमाणाः असुर्यं ऋतऽवानः
चयमानाः ऋणानि ॥४॥ विद्यां आदित्याः अवसः वः अस्य यत्
अर्यमन् भये आ चित् मयःऽभु युष्माकं मित्रावरुणा प्रऽनीतौ
परि श्वभ्राऽइव दुःऽइतानि वृज्यां ॥५॥६॥ सुऽगः हि वः अर्यमन्
मित्र पंथाः अनृक्षरः वरुण साधुः अस्ति तेन आदित्याः अधि
वोचत नः यच्छत नः दुःऽपरिहंतु शर्मं ॥६॥ पिपर्तु नः अदितिः
राजऽपुत्रा अति द्वेषांसि अर्यमा सुऽगेभिः बृहत् मित्रस्य वरु-
णस्य शर्मं उप स्याम पुरुऽवीराः अरिष्टाः ॥७॥ तिस्रः भूमीः धा-
रयन् त्रीन् उत द्यून् त्रीणि व्रता विदथे अंतः एषां ऋतेन आदि-
त्याः महि वः महिऽत्वं तत् अर्यमन् वरुण मित्र चारु ॥८॥ त्री
रोचना दिव्या धारयंत हिरण्ययाः शुचयः धारऽपूताः अस्वप्न-
ऽजः अनिऽमिषाः अदब्धाः उरुऽशंसाः ऋजवे मर्त्याय ॥९॥ त्वं
विश्वेषां वरुण असि राजा ये च देवाः असुर ये च मर्ताः शतं नः
रास्व शरदः विऽचक्षे अश्याम आयूंषि सुऽधितानि पूर्वा ॥१०॥७॥
न दक्षिणा वि चिकिते न सव्या न प्राचीनं आदित्याः न उत
पश्चा पाक्या चित् वसवः धीर्या चित् युष्माऽनीतः अभयं ज्यो-
तिः अश्यां ॥११॥ यः राजऽभ्यः ऋतनिऽभ्यः ददाश यं वर्धयंति
पुष्टयः च नित्याः सः रेवान् याति प्रथमः रथेन वसुऽदावा वि-
दथेषु प्रऽशस्तः ॥१२॥ शुचिः अपः सुऽयवसाः अदब्धः उप क्षेति

वृद्धवयाः सुवीरः। नकिष्टं घ्नंत्यंतितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥१३॥ अदिते मित्र वरुणोत मृळ यद्वो वयं चकृमा कच्चिदागः। उर्वश्यामभयं ज्योतिरिंद्र मा नो दीर्घा अभि नशन्तमिस्राः ॥१४॥ उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन्। उभा क्षयावाजयन्याति पृत्सूभावर्धौ भवतः साधू अस्मै ॥१५॥ या वो माया अभिद्रुहे यजत्राः पाशा आदित्या रिपवे विचृत्ताः। अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम ॥१६॥ माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः। मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥१७॥८॥

---

॥ २८ ॥ १–११ कूर्मो गार्त्समदो गृत्समदो वा ॥ वरुणः ॥ त्रिष्टुप् ॥

॥२८॥ इदं कवेरादित्यस्य स्वराजो विश्वानि सांत्यभ्यस्तु मह्ना। अति यो मंद्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥१॥ तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः। उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥२॥ तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः। यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥३॥ प्र सीमादित्यो असृजद्विधर्ताँ ऋतं सिंधवो वरुणस्य यंति। न श्राम्यंति न वि मुचंत्येते वयो न पप्तू रघुया परिज्मन् ॥४॥ वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य। मा तंतुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥५॥९॥ अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय। दामेव वत्साद्वि मुमुग्ध्यं-

वृद्धऽवयाः सुऽवीरः नकिः तं घ्नंति अंतितः न दूरात् यः आदि-त्यानां भवति प्रऽनीतौ ॥१३॥ अदिते मित्र वरुण उत मृळ यत् वः वयं चकृम कत् चित् आगः उरु अश्यां अभयं ज्योतिः इंद्र मा नः दीर्घाः अभि नशन् तमिस्राः ॥१४॥ उभे अस्मै पीपयतः संऽईची॰ दिवः वृष्टिं सुऽभगः नाम पुष्यन् उभा क्षयौ आऽजयन् याति पृत्ऽसु उभौ अर्धौ भवतः साधू अस्मै ॥१५॥ याः वः मायाः अभिऽद्रुहे यजत्राः पाशाः आदित्याः रिपवे विऽचृत्ताः अश्वीऽइव तान् अति येषं रथेन अरिष्टाः उरौ आ शर्मन् स्याम ॥१६॥ मा अहं मघोनः वरुण प्रियस्य भूरिऽदाव्नः आ विदं शूनं आपेः मा रायः राजन् सुऽयमात् अव स्थां बृहत् वदेम विदथे सुऽवीराः ॥१७॥८॥

---

॥२८॥ इदं कवेः आदित्यस्य स्वऽराजः विश्वानि संति अभि अस्तु मह्ना अति यः मंद्रः यजथाय देवः सुऽकीर्तिं भिक्षे वरुणस्य भूरेः ॥१॥ तव व्रते सुऽभगासः स्याम सुऽआध्यः वरुण तुस्तुऽवांसः उपऽअयने उषसां गोऽमतीनां अग्नयः न जरमाणाः अनु द्यून् ॥२॥ तव स्याम पुरुऽवीरस्य शर्मन् उरुऽशंसस्य वरुण प्रऽनेतः॰ यूयं नः पुत्राः अदितेः अदब्धाः अभि क्षमध्वं युज्याय देवाः ॥३॥ प्र सीं आदित्यः असृजत् विऽधर्ता ऋतं सिंधवः वरुणस्य यंति न श्राम्यंति न वि मुचंति एते वयः न पप्तुः रघुऽया परिऽज्मन् ॥४॥ वि मत् श्रथय रशनांऽइव आगः ऋध्याम ते वरुण खां ऋतस्य मा तंतुः छेदि वयतः धियं मे मा मात्रा शारि अपसः पुरा ऋतोः ॥५॥९॥ अपो सु म्यक्ष वरुण भियसं मत् संऽराट् ऋतऽवः अनु मा गृभाय दामऽइव वत्सात् वि मुमुग्धि

ह्रो नहि त्वदारे निमिषश्चनेशे ॥६॥ मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर भ्रीणन्ति । मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥७॥ नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम । त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥८॥ परं ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजं । अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि ॥९॥ यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह । स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥१०॥ माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः । मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥११॥१०॥

---

॥ २९ ॥ १–७ कूर्मो गार्त्समदो गृत्समदो वा ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥२९॥ धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः । शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥१॥ यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत । अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च ॥२॥ किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन । यूयं नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात ॥३॥ हये देवा यूयमिदापयः स्थ ते मृळत नाधमानाय मह्यं । मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वापिषु श्रमिष्म ॥४॥ प्र व एको मिमय भूर्यागो यन्मा पितेव कितवं शशास । आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥५॥ अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयं । त्राध्वं

अंहः नहि त्वत् आरे निऽमिषः चन ईशे ॥६॥ मा नः वधैः वरुण
ये ते इष्टौ एनः कृण्वंतं असुर भ्रीणंति मा ज्योतिषः प्रऽवसथानि
गन्म वि सु मृधः शिश्रथः जीवसे नः ॥७॥ नमः पुरा ते वरुण उत
नूनं उत अपरं तुविऽजात ब्रवाम त्वे हि कं पर्वते न श्रितानि
अप्रऽच्युतानि दुःऽदभ व्रतानि ॥८॥ परा ऋणा सावीः अध मत्-
ऽकृतानि मा अहं राजन् अन्यऽकृतेन भोजं अविऽउष्टाः इत्
नु भूयसीः उषसः आ नः जीवान् वरुण तासु शाधि ॥९॥ यः मे
राजन् युज्यः वा सखा वा स्वप्ने भयं भीरवे मह्यं आह स्तेनः वा
यः दिप्सति नः वृकः वा त्वं तस्मात् वरुण पाहि अस्मान् ॥१०॥
मा अहं मघोनः वरुण प्रियस्य भूरिऽदाव्नः आ विदं शूनं आपेः
मा रायः राजन् सुऽयमात् अव स्थां बृहत् वदेम विदथे सुऽवीराः
॥११॥१०॥

---

॥२९॥ धृतऽव्रताः आदित्याः इषिराः आरे मत् कर्त रहसूःऽइव
आगः शृण्वतः वः वरुण मित्र देवाः भद्रस्य विद्वान् अवसे हुवे
वः ॥१॥ यूयं देवाः प्रऽमतिः यूयं ओजः यूयं द्वेषांसि सनुतः युयोत
अभिऽक्षत्तारः अभि च क्षमध्वं अद्य च नः मृळयत अपरं च ॥२॥
किं ऊं नु वः कृणवाम अपरेण किं सनेन वसवः आप्येन यूयं नः
मित्रावरुणा अदिते च स्वस्तिं इंद्रामरुतः दधात ॥३॥ हये देवाः
यूयं इत् आपयः स्थ ते मृळत नाधमानाय मह्यं मा वः रथः मध्य-
मऽवाट् ऋते भूत् मा युष्मावत्ऽसु आपिषु श्रमिष्म ॥४॥ प्र वः
एकः मिमय भूरि आगः यत् मा पिताऽइव कितवं शशास आरे
पाशाः आरे अघानि देवाः मा मा अधि पुत्रे विःऽइव ग्रभीष्ट ॥५॥
अर्वाचः अद्य भवत यजत्राः आ वः हार्दि भयमानः व्ययेयं त्राध्वं

नो देवा निजुरो वृकस्य मार्त्यं कर्तादवपदो यजत्राः ॥६॥ माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः। मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥७॥११॥

---

३० ॥ १–११ गृत्समदः ॥ १–५. ७. ८२. १० इंद्रः। ६ इंद्रासोमौ। ८१ सरस्वती। ९ बृहस्पतिः। ११ मरुतः ॥ १–१० त्रिष्टुप्। ११ जगती ॥

॥३०॥ ऋतं देवाय कृण्वते सवित्र इंद्रायाहिघ्ने न रमंत आपः। अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसां ॥१॥ यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुष उवाच। पथो रदंतीरनु जोषमस्मै दिवेदिवे धुनयो यंत्यर्थं ॥२॥ ऊर्ध्वो ह्यस्थादध्यंतरिक्षेऽधा वृत्राय प्र वधं जभार। मिहं वसान उप हीमदुद्रोत्तिग्मायुधो अजयच्छत्रुमिंद्रः ॥३॥ बृहस्पते तपुषाश्नेव विध्य वृकद्वरसो असुरस्य वीरान्। यथा जघंथ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिंद्र ॥४॥ अव क्षिप दिवो अश्मानमुच्चा येन शत्रुं मंदसानो निजूर्वाः। तोकस्य सातौ तनयस्य भूरेरस्माँ अर्धं कृणुतादिंद्र गोनां ॥५॥१२॥ प्र हि क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ। इंद्रासोमा युवमस्माँ अविष्टमस्मिन्भयस्थे कृणुतमु लोकं ॥६॥ न मा तमन्न श्रमन्नोत तंद्रन्न वोचाम मा सुनोतेति सोमं। यो मे पृणाद्यो ददद्यो निबोधाद्यो मा सुन्वंतमुप गोभिरायत् ॥७॥ सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून्। त्यं चिच्छर्धंतं तविषीयमाणमिंद्रो हंति वृषभं शंडिकानां ॥८॥ यो नः सनुत्य उत वा जिघत्नुरभिख्याय तं तिगितेन विध्य बृहस्पत आयुधैर्जेषि शत्रून्द्रुहे रीषंतं परि धेहि राजन् ॥९॥ अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि

नः देवाः निऽजुरः वृकस्य त्राध्वं कर्तात् अवऽपदः यजत्राः ॥६॥ मा
अहं मघोनः वरुण प्रियस्य भूरिऽदाव्नः आ विदं शूनं आपेः मा
रायः राजन् सुऽयमात् अव स्थां बृहत् वदेम विदथे सुऽवीराः
॥ ७ ॥ ११ ॥

---

॥३०॥ ऋतं देवाय कृण्वते सवित्रे इंद्राय अहिऽघ्ने न रमंते आपः
अहःऽअहः याति अक्तुः अपां कियति आ प्रथमः सर्गः आसां
॥१॥ यः वृत्राय सिनं अत्र अभरिष्यत् प्र तं जनित्री विदुषे उवाच
पथः रदंतीः अनु जोषं अस्मै दिवेऽदिवे धुनयः यंति अर्थं ॥२॥ ऊ-
र्ध्वः हि अस्थात् अधि अंतरिक्षे अध वृत्राय प्र वधं जभार मिहं
वसानः उप हि ईं अदुद्रोत् तिग्मऽआयुधः अजयत् शत्रुं इंद्रः ॥३॥
बृहस्पते तपुषा अश्नाऽइव विध्य वृकऽद्वरसः असुरस्य वीरान्
यथा जघंथ धृषता पुरा चित् एव जहि शत्रुं अस्माकं इंद्र ॥४॥ अव
क्षिप दिवः अश्मानं उच्चा येन शत्रुं मंदसानः निऽजूर्वाः तोकस्य
साता तनयस्य भूरेः अस्मान् अर्धं कृणुतात् इंद्र गोनां ॥५॥१२॥
प्र हि क्रतुं वृहथः यं वनुथः रध्रस्य स्थः यजमानस्य चोदौ इंद्रासो-
मा युवं अस्मान् अविष्टं अस्मिन् भयऽस्थे कृणुतं ऊं लोकं ॥६॥
न मा तमत् न श्रमत् न उत तंद्रत् न वोचाम मा सुनोत इति सोमं
यः मे पृणात् यः ददत् यः निऽबोधात् यः मा सुन्वंतं उप गोभिः
आ अयत् ॥७॥ सरस्वति त्वं अस्मान् अविड्ढि मरुत्वती धृषती
जेषि शत्रून् त्यं चित् शर्धंतं तविषीऽयमाणं इंद्रः हंति वृषभं शंडि-
कानां ॥८॥ यः नः सनुत्यः उत वा जिघत्नुः अभिऽख्याय तं तिगि-
तेन विध्य बृहस्पते आयुधैः जेषि शत्रून् द्रुहे रिषंतं परि धेहि राजन्
॥९॥ अस्माकेभिः सत्वऽभिः शूर शूरैः वीर्या कृधि यानि ते कर्त्वानि

ज्योगभूवन्ननुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥१०॥ तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनं। यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे ॥११॥१३॥

॥ ३१ ॥ १–७ गृत्समदः ॥ विश्वे देवाः ॥ १–६ जगती । ७ त्रिष्टुप् ॥

॥ ३१ ॥ अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा । प्र यद्वयो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवंतो वनर्षदः ॥१॥ अध स्मा न उदवता सजोषसो रथं देवासो अभि विक्षु वाजयुं । यदाशवः पद्याभिस्तित्रतो रजः पृथिव्याः सानौ जंघनंत पाणिभिः ॥२॥ उत स्य न इंद्रो विश्वचर्षणिर्दिवः शर्धेन मारुतेन सुक्रतुः । अनु नु स्थात्यवृकाभिरूतिभी रथं महे सनये वाजसातये ॥३॥ उत स्य देवो भुवनस्य सक्षणिस्त्वष्टा ग्नाभिः सजोषा जूजुवद्रथं । इळा भगो बृहद्दिवोत रोदसी पूषा पुरंधिरश्विनावधा पती ॥४॥ उत त्ये देवी सुभगे मिथूदृशोषासानक्ता जगतामपीजुवा । स्तुषे यद्वां पृथिवि नव्यसा वचः स्थातुश्च वयस्त्रिवया उपस्तिरे ॥५॥ उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज एकपादुत । त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ॥६॥ एता वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सं । श्रवस्यवो वाजं चकानाः सप्तिर्न रथ्यो अह धीतिमश्याः ॥ ७ ॥ १४ ॥

॥ ३२ ॥ १–८ गृत्समदः ॥ १ द्यावापृथिव्यौ । २.३ इंद्रस्त्वष्टा वा । ४.५ राका । ६.७ सिनीवाली । ८ लिंगोक्तदेवताः ॥ १–५ जगती । ६–८ अनुष्टुप् ॥

॥३२॥ अस्य मे द्यावापृथिवी ऋतायतो भूतमवित्री वचसः सिषासतः । ययोरायुः प्रतरं ते इदं पुर उपस्तुते वसूयुर्वां

ज्योक् अभूवन् अनुऽधूपितासः हत्वी तेषां आ भर नः वसूनि ॥१०॥ तं वः शर्धं मारुतं सुम्नऽयुः गिरा उप ब्रुवे नमसा दैव्यं जनं यथा रयिं सर्वऽवीरं नशामहै अपत्यऽसाचं श्रुत्यं दिवेऽदिवे ॥११॥१३॥

---

॥३१॥ अस्माकं मित्रावरुणा अवतं रथं आदित्यैः रुद्रैः वसुऽभिः सचाऽभुवा प्र यत् वयः न पप्तन् वस्मनः परि श्रवस्यवः हृषीवऽवंतः वनऽसदः ॥१॥ अध स्म नः उत् अवत सऽजोषसः रथं देवासः अभि विक्षु वाजऽयुं यत् आशवः पद्याभिः तित्रतः रजः पृथिव्याः सानौ जंघनंत पाणिऽभिः ॥२॥ उत स्यः नः इंद्रः विश्वऽचर्षणिः दिवः शर्धेन मारुतेन सुऽक्रतुः अनु नु स्थाति अवृकाभिः ऊतिऽभिः रथं महे सनये वाजऽसातये ॥३॥ उत स्यः देवः भुवनस्य सक्षणिः त्वष्टा ग्नाभिः सऽजोषाः जूजुवत् रथं इळा भगः बृहत्ऽदिवा उत रोदसी पूषा पुरंऽधिः अश्विनौ अध पती ॥४॥ उत त्ये देवी सुऽभगे मिथुऽदृशा उषसानक्ता जगतां अपिऽजुवा स्तुषे यत् वां पृथिवि नव्यसा वचः स्थातुः च वयः त्रिऽवयाः उपऽस्तिरे ॥५॥ उत वः शंसं उशिजांऽइव श्मसि अहिः बुध्न्यः अजः एकऽपात् उत त्रितः ऋभुक्षाः सविता चनः दधे अपां नपात् आशुऽहेमा धिया शमि ॥६॥ एता वः वश्मि उत्ऽयता यजत्राः अतक्षन् आयवः नव्यसे सं श्रवस्यवः वाजं चकानाः सप्तिः न रथ्यः अह धीतिं अश्याः ॥७॥१४॥

---

॥३२॥ अस्य मे द्यावापृथिवी ऋतऽयतः भूतं अवित्री वचसः सिसासतः ययोः आयुः प्रऽतरं ते इदं पुरः उपऽस्तुते वसुऽयुः वां

महो दधे ॥१॥ मा नो गुह्या रिप आयोरहन्दभन्मा न आभ्यो रीरधो दुच्छुनाभ्यः । मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत्त्वेमहे ॥२॥ अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतं । पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ॥३॥ राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यं ॥४॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥५॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥६॥ या सुबाहुः स्वंगुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥७॥ या गुंगूर्या सिनीवाली या राका या सरस्वती । इंद्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥८॥१५॥३॥

॥ ३३ ॥ १-१५ गृत्समदः ॥ रुद्रः ॥ त्रिष्टुप् ॥

॥३३॥ आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः । अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥१॥ त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः । व्य१स्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥२॥ श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो । पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥३॥ मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती । उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥४॥ हवीमभिर्हवते यो हविर्भिरव स्तोमेभि

महः दधे ॥१॥ मा नः गुह्याः रिपः आयोः अहन् दभन् मा नः आ-
भ्यः रीरधः दुच्छुनाभ्यः मा नः वि यौः सख्या विद्धि तस्य नः सुम्न-
ऽयता मनसा तत् त्वा ईमहे ॥२॥ अहेळता मनसा श्रुष्टिं आ वह
दुहानां धेनुं पिप्युषीं असश्चतं पद्याभिः आशुं वचसा च वाजिनं
त्वां हिनोमि पुरुऽहूत विश्वहा ॥३॥ राकां अहं सुऽहवां सुऽस्तुती
हुवे शृणोतु नः सुऽभगा बोधतु त्मना सीव्यतु अपः सूच्या अ-
च्छिद्यमानया ददातु वीरं शतऽदायं उक्थ्यं ॥४॥ याः ते राके सु-
ऽमतयः सुऽपेशसः याभिः ददासि दाशुषे वसूनि ताभिः नः अद्य
सुऽमनाः उपऽआगहि सहस्रऽपोषं सुऽभगे रराणा ॥५॥ सिनी-
वालि पृथुऽस्तुके या देवानां असि स्वसा जुषस्व हव्यं आऽहुतं
प्रऽजां देवि दिदिड्ढि नः ॥६॥ या सुऽबाहुः सुऽअंगुरिः सुऽसूमा
बहुऽसूवरी तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥७॥ या
गुंगूः या सिनीवाली या राका या सरस्वती इंद्राणीं अह्वे ऊतये
वरुणानीं स्वस्तये ॥८॥१५॥३॥

---

॥३३॥ आ ते पितः मरुतां सुम्नं एतु मा नः सूर्यस्य संऽदृशः युयो-
ः अभि नः वीरः अर्वति क्षमेत प्र जायेमहि रुद्र प्रऽजाभिः ॥१॥
त्वाऽदत्तेभिः रुद्र शंऽतमेभिः शतं हिमाः अशीय भेषजेभिः वि अस्मत्
द्वेषः विऽतरं वि अंहः वि अमीवाः चातयस्व विषूचीः ॥२॥
श्रेष्ठः जातस्य रुद्र श्रिया असि तवःऽतमः तवसां वज्रऽबाहो
पर्षि नः पारं अंहसः स्वस्ति विश्वाः अभिऽइतीः रपसः युयोधि
॥३॥ मा त्वा रुद्र चुक्रुधाम नमःऽभिः मा दुःऽस्तुती वृषभ मा स-
ऽहूती उत् नः वीरान् अर्पय भेषजेभिः भिषक्ऽतमं त्वा भिषजां
शृणोमि ॥४॥ हवीमऽभिः हवते यः हविःऽभिः अव स्तोमेभिः

रुद्रं दिधीय। आदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै॥५॥१६॥ उन्मा ममंद वृषभो मरुत्वान्त्वक्षीयसा वयसा नाधमानं। घृणीव छायामरपा अशीया विवासेयं रुद्रस्य सुम्नं ॥६॥ क्व१स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः। अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः॥७॥ प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि। नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम॥८॥ स्थिरेभिरंगैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः। ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यं॥९॥ अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपं। अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति॥१०॥१७॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रं। मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपंतु सेनाः॥११॥ कुमारश्चित्पितरं वंदमानं प्रति नानाम रुद्रोपयंतं। भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे॥१२॥ या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु। यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि॥१३॥ परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात्। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ॥१४॥ एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि। हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः॥१५॥१८॥

---

॥३४॥ १-१५ गृत्समदः॥ मरुतः॥ १-१४ जगती। १५ त्रिष्टुप्॥

॥३४॥ धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः। अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमंतो

रुद्रं दिषीय सुऽहवः मा नः अस्यै बभ्रुः सुऽशिप्रः रीरधत् मनायै ॥५॥१६॥ उत् मा ममंद वृषभः मरुत्वान् त्वक्षीयसा वयसा नाधमानं घृणिऽइव छायां अरपाः अशीय आ विवासेयं रुद्रस्य सुम्नं ॥६॥ क्वं स्यः ते रुद्र मृळयाकुः हस्तः यः अस्ति भेषजः जलाषः अपऽभर्ता रपसः दैव्यस्य अभि नु मा वृषभ चक्षमीथाः ॥७॥ प्र बभ्रवे वृषभाय श्वितीचे महः महीं सुऽस्तुतिं ईरयामि नमस्य कल्मलीकिनं नमःऽभिः गृणीमसि त्वेषं रुद्रस्य नाम ॥८॥ स्थिरेभिः अंगैः पुरुऽरूपः उग्रः बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ईशानात् अस्य भुवनस्य भूरेः न वै ऊं योषत् रुद्रात् असुर्यं ॥९॥ अर्हन् बिभर्षि सायकानि धन्व अर्हन् निष्कं यजतं विश्वऽरूपं अर्हन् इदं दयसे विश्वं अभ्वं न वै ओजीयः रुद्र त्वत् अस्ति ॥१०॥१७॥ स्तुहि श्रुतं गर्तऽसदं युवानं मृगं न भीमं उपऽहत्नुं उग्रं मृळ जरित्रे रुद्र स्तवानः अन्यं ते अस्मत् नि वपंतु सेनाः ॥११॥ कुमारः चित् पितरं वंदमानं प्रति ननाम रुद्र उपऽयंतं भूरेः दातारं सत्ऽपतिं गृणीषे स्तुतः त्वं भेषजा रासि अस्मे ॥१२॥ या वः भेषजा मरुतः शुचीनि या शंऽतमा वृषणः या मयःऽभु यानि मनुः अवृणीत पिता नः ता शं च योः च रुद्रस्य वश्मि ॥१३॥ परि नः हेतिः रुद्रस्य वृज्याः परि त्वेषस्य दुःऽमतिः मही गात् अव स्थिरा मघवत्ऽभ्यः तनुष्व मीढ्वः तोकाय तनयाय मृळ ॥१४॥ एव बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि हवनऽश्रुत् नः रुद्र इह बोधि बृहत् वदेम विदथे सुऽवीराः ॥ १५ ॥ १८ ॥

---

३४॥ धाराऽवराः मरुतः धृष्णुऽओजसः मृगाः न भीमाः तविषीभिः अर्चिनः अग्नयः न शुशुचानाः ऋजीषिणः भृमिं धमंतः

अप गा अवृण्वत ॥१॥ द्यावो न स्तृभिश्चितयंत खादिनो
व्य१भ्रिया न द्युतयंत वृष्टयः । रुद्रो यद्वो मरुतो रुक्मवक्षसो
वृषाजनि पृश्न्याः शुक्र ऊधनि ॥२॥ उक्षंते अश्वाँ अत्याँ इवा-
जिषु नदस्य कर्णैस्तुरयंत आशुभिः । हिरण्यशिप्रा मरुतो
दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ॥३॥ पृक्षे ता विश्वा
भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः । पृषदश्वासो
अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥४॥ इंधन्वभि-
र्धेनुभी रप्शदूधभिरध्वस्मभिः पथिभिर्भ्राजदृष्टयः । आ हंसासो
न स्वसराणि गंतन मधोर्मदाय मरुतः समन्यवः ॥५॥१९॥
आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि
गंतन । अश्वामिव पिप्यत धेनुमूधनि कर्ता धियं जरित्रे
वाजपेशसं ॥६॥ तं नो दात मरुतो वाजिनं रथ आपानं
ब्रह्म चितयद्दिवेदिवे । इषं स्तोतृभ्यो वृजनेषु कारवे सनिं
मेधामरिष्टं दुष्टरं सहः ॥७॥ यद्युंजते मरुतो रुक्मवक्षसो-
ऽश्वान्रथेषु भग आ सुदानवः । धेनुर्न शिश्वे स्वसरेषु पिन्वते
जनाय रातहविषे महीमिषं ॥८॥ यो नो मरुतो वृकताति
मर्त्यो रिपुर्दधे वसवो रक्षता रिषः । वर्तयत तपुषा चक्रि-
याभि तमव रुद्रा अशसो हंतना वधः ॥९॥ चित्रं तद्वो मरुतो
याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः । यद्वा निदे नवमा-
नस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः ॥१०॥२०॥ तान्वो
महो मरुत एवयाव्नो विष्णोरेषस्य प्रभृथे हवामहे । हिरण्य-
वर्णान्ककुहान्यतस्रुचो ब्रह्मण्यंतः शंस्यं राध ईमहे ॥११॥ ते द-
शग्वाः प्रथमा यज्ञमूहिरे ते नो हिन्वंतूषसो व्युष्टिषु । उषा न
रामीररुणैरपोर्णुते महो ज्योतिषा शुचता गोअर्णसा ॥१२॥ ते

अप गाः अवृण्वत ॥१॥ द्यावः न स्तृऽभिः चितयंत खादिनः वि
अभ्रियाः न द्युतयंत वृष्टयः रुद्रः यत् वः मरुतः रुक्मऽवक्षसः वृषा
अजनि पृश्न्याः शुक्रे ऊधनि ॥२॥ उक्षंते अश्वान् अत्यान्ऽइव
आजिषु नदस्य कर्णैः तुरयंते आशुऽभिः हिरण्यऽशिप्राः मरुतः
दविध्वतः पृक्षं याथ पृषतीभिः सऽमन्यवः ॥३॥ पृक्षे ता विश्वा भु-
वना ववक्षिरे मित्राय वा सदं आ जीरऽदानवः पृषत्ऽअश्वासः
अनवभ्रऽराधसः ऋजिप्यासः न वयुनेषु धूःऽसदः ॥४॥ इंधन्व-
ऽभिः धेनुऽभिः रप्शदूधऽभिः अध्वस्मऽभिः पथिऽभिः भ्राजत्-
ऽऋष्टयः आ हंसासः न स्वसराणि गंतन मधोः मदाय मरुतः स-
ऽमन्यवः ॥५॥१९॥ आ नः ब्रह्माणि मरुतः सऽमन्यवः नरां न शंसः
सवनानि गंतन अश्वांऽइव पिप्यत धेनुं ऊधनि कर्त धियं जरित्रे
वाजऽपेशसं ॥६॥ तं नः दात मरुतः वाजिनं रथे आपानं ब्रह्म चि-
तयत् दिवेऽदिवे इषं स्तोतृऽभ्यः वृजनेषु कारवे सनिं मेधां अरिष्टं
दुस्तरं सहः ॥७॥ यत् युंजते मरुतः रुक्मऽवक्षसः अश्वान् रथेषु भगे
आ सुऽदानवः धेनुः न शिश्वे स्वसरेषु पिन्वते जनाय रातऽहविषे
महीं इषं ॥८॥ यः नः मरुतः वृकऽताति मर्त्यः रिपुः दधे वसवः
रक्षत रिषः वर्तयत तपुषा चक्रिया अभि तं अव रुद्राः अशसः
हंतन वधः ॥९॥ चित्रं तत् वः मरुतः याम चेकिते पृश्न्याः
यत् ऊधः अपि आपयः दुहुः यत् वा निदे नवमानस्य रुद्रियाः
त्रितं जराय जुरतां अदाभ्याः ॥१०॥२०॥ तान् वः महः मरुतः एव-
ऽयाव्नः विष्णोः एषस्य प्रऽभृथे हवामहे हिरण्यऽवर्णान् ककुहा-
न् यतऽस्रुचः ब्रह्मण्यंतः शंस्यं राधः ईमहे ॥११॥ ते दशऽग्वाः प्रथ-
माः यज्ञं ऊहिरे ते नः हिन्वंतु उषसः विऽउष्टिषु उषाः न रामीः
अरुणैः अप ऊर्णुते महः ज्योतिषा शुचता गोऽअर्णसा ॥१२॥ ते

क्षोणीभिररुणेभिर्नाञ्जिभी रुद्रा ऋतस्य सदनेषु वावृधुः । निमेघमाना अत्येन पाजसा सुश्चंद्रं वर्णं दधिरे सुपेशसं ॥१३॥ तॉं इयानो महि वरूथमूतय उप घेदेना नमसा गृणीमसि । त्रितो न यान्पंच होतॄनभिष्टय आववर्तदवरांश्चक्रियावसे ॥१४॥ यया रध्रं पारयथात्यंहो यया निदो मुंचथ वंदितारं । अर्वाची सा मरुतो या व ऊतिरो षु वाश्रेव सुमतिर्जिगातु ॥१५॥२१॥

---

॥ ३५ ॥ १-१५ गृत्समदः ॥ अपांनपात् ॥ त्रिष्टुप् ॥

॥३५॥ उपेममसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे । अपां नपादाशुहेमा कुवित्स सुपेशसस्करति जोषिषद्धि ॥१॥ इमं स्वस्मै हृद आ सुतष्टं मंत्रं वोचेम कुविदस्य वेदत् । अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान ॥२॥ समन्या यंत्युप यंत्यन्याः समानमूर्वं नद्यः पृणंति । तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥३॥ तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यंत्यापः । स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥४॥ अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषंत्यन्नं । कृता इवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनां ॥५॥२२॥ अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः संपृचः पाहि सूरीन् । आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि ॥६॥ स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति । सो अपां नपादूर्जयन्नप्स्वंतर्वसुदेयाय विधते वि भाति ॥७॥ यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति । वया इदन्या

क्षोणीभिः अरुणेभिः न अंजिऽभिः रुद्राः ऋतस्य सदनेषु ववृधुः
निऽमेघमानाः अत्येन पाजसा सुऽचंद्रं वर्णं दधिरे सुऽपेशसं
॥१३॥ तान् इयानः महि वरूथं ऊतये उप घ इत् एना नमसा गृ-
णीमसि त्रितः न यान् पंच होतॄन् अभिष्टये आऽववर्तत् अव-
रान् चक्रिया अवसे ॥१४॥ यया रध्रं पारयथ अति अंहः यया नि-
दः मुंचथ वंदितारं अर्वाची सा मरुतः या वः ऊतिः ओ सु वा-
श्राऽइव सुऽमतिः जिगातु ॥ १५ ॥ २१ ॥

---

॥३५॥ उप ईं असृक्षि वाजऽयुः वचस्यां चनः दधीत नाद्यः
गिरः मे अपां नपात् आशुऽहेमा कुवित् सः सुऽपेशसः करति
जोषिषत् हि ॥१॥ इमं सु अस्मै हृदः आ सुऽतष्टं मंत्रं वोचेम कुवित्
अस्य वेदत् अपां नपात् असुर्यस्य मह्ना विश्वानि अर्यः भुवना
जजान ॥२॥ सं अन्याः यंति उप यंति अन्याः समानं ऊर्वं नद्यः
पृणंति तं ऊं शुचिं शुचयः दीदिऽवांसं अपां नपातं परि तस्थुः
आपः ॥३॥ तं अस्मेराः युवतयः युवानं मर्मृज्यमानाः परि यंति
आपः सः शुक्रेभिः शिक्वऽभिः रेवत् अस्मे दीदाय अनिध्मः घृत-
ऽनिर्निक् अप्ऽसु ॥४॥ अस्मै तिस्रः अव्यथ्याय नारीः देवाय दे-
वीः दिधिषंति अन्नं कृताःऽइव उप हि प्रऽसर्स्रे अप्ऽसु सः पीयूषं
धयति पूर्वऽसूनां ॥५॥२२॥ अश्वस्य अत्र जनिम अस्य च स्वः द्रुहः
रिषः संऽपृचः पाहि सूरीन् आमासु पूर्षु परः अप्रऽमृष्यं न अरा-
तयः वि नशन् न अनृतानि ॥६॥ स्वे आ दमे सुऽदुघा यस्य धेनुः
स्वधां पीपाय सुऽभु अन्नं अत्ति सः अपां नपात् ऊर्जयन् अप्-
सु अंतः वसुऽदेयाय विधते वि भाति ॥७॥ यः अप्ऽसु आ शुचि-
ना दैव्येन ऋतऽवा अजस्रः उर्विया विऽभाति वयाः इत् अन्या

भुवनान्यस्य प्र जायंते वीरुधश्च प्रजाभिः ॥८॥ अपां नपादा
ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः । तस्य ज्येष्ठं महि-
मानं वहंतीर्हिरण्यवर्णाः परि यंति यह्वीः ॥९॥ हिरण्यरूपः स
हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः । हिरण्ययात्परि योने-
र्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥१०॥२३॥ तदस्यानीकमुत
चारु नामापीच्यं वर्धते नप्तुरपां । यमिंधते युवतयः समित्था
हिरण्यवर्णं घृतमन्नमस्य ॥११॥ अस्मै बहूनामवमाय सख्ये
यज्ञैर्विधेम नमसा हविर्भिः । सं सानु मार्ज्मि दिधिषामि
बिल्मैर्दधाम्यन्नैः परि वंद ऋग्भिः ॥१२॥ स ईं वृषाजनयत्तासु
गर्भं स ईं शिशुर्धयति तं रिहंति । सो अपां नपादनभिम्ला-
तवर्णोऽन्यस्येवेह तन्वा विवेष ॥१३॥ अस्मिन्पदे परमे तस्थि-
वांसमध्वस्मभिर्विश्वहा दीदिवांसं । आपो नप्त्रे घृतमन्नं वहं-
तीः स्वयमत्कैः परि दीयंति यह्वीः ॥१४॥ अयांसमग्ने सुक्षितिं
जनायायांसमु मघवद्भ्यः सुवृक्तिं । विश्वं तद्भद्रं यदवंति देवा
बृहद्वदेम विदथे सुवीराः ॥१५॥२४॥

---

॥३६॥१-६ गृत्समदः ॥ १ इंद्रो मधुश्च । २ मरुतो माधवश्च । ३ त्वष्टा शुक्रश्च
४ अग्निः शुचिश्च । ५ इंद्रो नभश्च । ६ मित्रावरुणौ नभस्यश्च ॥ जगती ॥

॥३६॥ तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्त्सीमवि-
भिरद्रिभिर्नरः । पिबेंद्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं
प्रथमो य ईशिषे ॥१॥ यज्ञैः संमिश्लाः पृषतीभिरृष्टिभिर्या-
मञ्छुभ्रासो अंजिषु प्रिया उत । आसद्या बर्हिर्भरतस्य सूनवः
पोत्रादा सोमं पिबता दिवो नरः ॥२॥ अमेव नः सुहवा आ
हि गंतन नि बर्हिषि सदतना रणिष्टन । अथा मंदस्व जुजु-
षाणो अंधसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥३॥ आ वक्षि

भुवनानि अस्य प्र जायंते वीरुधः च प्रऽजाभिः ॥८॥ अपां नपात्
आ हि अस्थात् उपऽस्थं जिह्मानां ऊर्ध्वः विऽद्युतं वसानः तस्य
ज्येष्ठं महिमानं वहंतीः हिरण्यऽवर्णाः परि यंति यह्वीः ॥९॥ हि-
रण्यऽरूपः सः हिरण्यऽसंदृक् अपां नपात् सः इत् ऊं हिरण्य-
ऽवर्णः हिरण्ययात् परि योनेः निऽसद्य हिरण्यऽदाः ददति अन्नं
अस्मै ॥१०॥२३॥ तत् अस्य अनीकं उत चारु नाम अपीच्यं वर्धते
नप्तुः अपां यं इंधते युवतयः सं इत्था हिरण्यऽवर्णं घृतं अन्नं अस्य
॥११॥ अस्मै बहूनां अवमाय सख्ये यज्ञैः विधेम नमसा हविःऽभिः
सं सानु मार्ज्मि दिधिषामि बिल्मैः दधामि अन्नैः परि वंदे ऋक्-
ऽभिः ॥१२॥ सः ईं वृषा अजनयत् तासु गर्भं सः ईं शिशुः धयति तं
रिहंति सः अपां नपात् अनभिम्लातऽवर्णः अन्यस्यऽइव इह
तन्वा विवेष ॥१३॥ अस्मिन् पदे परमे तस्थिऽवांसं अध्वस्मऽभिः
विश्वहा दीदिऽवांसं आपः नप्त्रे घृतं अन्नं वहंतीः स्वयं अत्कैः परि
दीयंति यह्वीः ॥१४॥ अयांसं अग्ने सुऽक्षितिं जनाय अयांसं ऊं
मघवत्ऽभ्यः सुऽवृक्तिं विश्वं तत् भद्रं यत् अवंति देवाः बृहत् व-
देम विदथे सुऽवीराः ॥ १५ ॥ २४ ॥

---

॥३६॥ तुभ्यं हिन्वानः वसिष्ट गाः अपः अधुक्षन् सीं अविऽभिः
अद्रिऽभिः नरः पिब इंद्र स्वाहा प्रऽहुतं वषट्ऽकृतं होत्रात् आ
सोमं प्रथमः यः ईशिषे ॥१॥ यज्ञैः संऽमिश्लाः पृषतीभिः ऋष्टिऽभिः
यामन् शुभ्रासः अंजिषु प्रियाः उत आऽसद्य बर्हिः भरतस्य सून-
वः पोत्रात् आ सोमं पिबत दिवः नरः ॥२॥ अमाऽइव नः सुऽह-
वाः आ हि गंतन नि बर्हिषि सदतन रणिष्टन अथ मंदस्व जुजु-
षाणः अंधसः त्वष्टः देवेभिः जनिऽभिः सुमत्ऽगणः ॥३॥ आ वसि

देवाँ इह विप्र यक्षि चोशन्होतर्नि षदा योनिषु त्रिषु । प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्तव भागस्य तृप्णुहि ॥४॥ एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः । तुभ्यं सुतो मघवन्तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत्पिब ॥५॥ जुषेथां यज्ञं बोधतं हवस्य मे सत्तो होता निविदः पूर्व्या अनु । अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा पिबतं सोम्यं मधु ॥६॥२५॥७॥

॥ ३७ ॥ १-६ गृत्समदः ॥ १-४ द्रविणोदाः । ५ अश्विनौ । ६ अग्निः ॥ जगती ॥

॥३७॥ मंदस्व होत्रादनु जोषमंधसोऽध्वर्यवः स पूर्णां वष्ट्यासिचं । तस्मा एतं भरत तद्वशो ददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥१॥ यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते । अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥२॥ मेद्यंतु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते । आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥३॥ अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितं । तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥४॥ अर्वाचमद्य यय्यं नृवाहणं रथं युंजाथामिह वां विमोचनं । पृंक्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ॥५॥ जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिं । विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविः ॥६॥१॥

॥ ३८ ॥ १-११ गृत्समदः ॥ सविता ॥ त्रिष्टुप् ॥

॥३८॥ उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा

देवान् इह विप्र यक्षि च उशन् होतः नि सद् योनिषु त्रिषु प्रति वीहि प्रऽस्थितं सोम्यं मधु पिब आग्नींध्रात् तव भागस्य तृप्णुहि ॥४॥ एषः स्यः ते तन्वः नृम्णऽवर्धनः सहः ओजः प्रऽदिवि बाह्वोः हितः तुभ्यं सुतः मघऽवन् तुभ्यं आऽभृतः त्वं अस्य ब्राह्मणात् आ तृपत् पिब ॥५॥ जुषेथां यज्ञं बोधतं हवस्य मे सत्तः होता निऽविदः पूर्व्याः अनु अच्छ राजाना नमः एति आऽवृतं प्रऽशास्त्रात् आ पिबतं सोम्यं मधु ॥ ६ ॥ २५ ॥ ७ ॥

---

॥३७॥ मंदस्व होत्रात् अनु जोषं अंधसः अध्वर्यवः सः पूर्णां वष्टि आऽसिचं तस्मै एतं भरत तत्ऽवशः ददिः होत्रात् सोमं द्रविणःऽदः पिब ऋतुऽभिः ॥ १ ॥ यं ऊं इति पूर्वं अहुवे तं इदं हुवे सः इत् ऊं इति हव्यः ददिः यः नाम पत्यते अध्वर्युऽभिः प्रऽस्थितं सोम्यं मधु पोत्रात् सोमं द्रविणःऽदः पिब ऋतुऽभिः ॥२॥ मेदंतु ते वह्नयः येभिः ईयसे अरिषण्यन् वीळयस्व वनस्पते आऽयूय धृष्णो इति अभिऽगूर्य त्वं नेष्ट्रात् सोमं द्रविणःऽदः पिब ऋतुऽभिः ॥ ३ ॥ अपात् होत्रात् उत पोत्रात् अमत्त उत नेष्ट्रात् अजुषत प्रयः हितं तुरीयं पात्रं अमृक्तं अमर्त्यं द्रविणःऽदाः पिबतु द्राविणःऽदसः ॥४॥ अर्वाचं अद्य यय्यं नृऽवाहनं रथं युंजाथां इह वां विऽमोचनं पृंक्तं हवींषि मधुना आ हि कं गतं अथ सोमं पिबतं वाजिनीवसू इति वाजिनीऽवसू ॥५॥ जोषि अग्ने संऽइधं जोषि आऽहुतिं जोषि ब्रह्म जन्यं जोषि सुऽस्तुतिं विश्वेभिः विश्वान् ऋतुना वसो इति महः उशन् देवान् उशतः पायय हविः ॥ ६ ॥ १ ॥

---

॥३८॥ उत् ऊं इति स्यः देवः सविता सवाय शश्वत्ऽतमं तत्ऽअपाः

वर्हिरस्यात् । नूनं देवेभ्यो वि हि धाति रत्नमथाभजद्वी- तिहोत्रं स्वस्तौ ॥१॥ विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति । आपश्चिदस्य व्रत आ नि- मृग्रा अयं चिद्वातो रमते परिज्मन् ॥२॥ आशुभिश्चि- द्यान्वि मुचाति नूनमरीरमदतमानं चिदेतोः । अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥३॥ पुनः समव्यद्विततं वयंती मध्या कर्तोर्न्यधाच्छक्म धीरः । उत्संहा- यास्थाद्व्यृतूँरदर्धरमतिः सविता देव आगात् ॥४॥ नानौ- कांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥५॥२॥ समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरता- ममाभूत् । शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितु- र्दैव्यस्य ॥६॥ त्वया हितमप्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः । वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनंति ॥७॥ याद्राध्यं वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः । विश्वो मार्तांडो व्रजमा पशुर्गात्स्थ- शो जन्मानि सविता व्याकः ॥८॥ न यस्येंद्रो वरुणो न मित्रो व्रतमर्यमा न मिनंति रुद्रः । नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥९॥ भगं धियं वाजयंतः पुरंधिं नराशंसो ग्रास्पतिर्नो अव्याः । आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥१०॥ अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आ गात् । शं यत्स्तोतृभ्य आपये भवात्युरुशंसाय सवि- तर्जरित्रे ॥११॥३॥

वह्निः अस्थात् नूनं देवेभ्यः वि हि धाति रत्नं अथ आ अभजत् वीतिऽहोत्रं स्वस्तौ ॥१॥ विश्वस्य हि श्रुष्टये देवः ऊर्ध्वः प्र बाहवा पृथुऽपाणिः सिसर्ति आपः चित् अस्य व्रते आ निऽमृग्राः अयं चित् वातः रमते परिऽज्मन् ॥२॥ आशुऽभिः चित् यान् वि मुचाति नूनं अरीरमत् अतमानं चित् एतोः अर्यषूणां चित् नि अयान् अविष्यां अनु व्रतं सवितुः मोकी आ अगात् ॥३॥ पुनः सं अव्यत् विऽततं वयंती मध्या कर्तोः नि अधात् शक्म धीरः उत संऽहाय अस्थात् वि ऋतून् अदर्धः अरमतिः सविता देवः आ अगात् ॥४॥ नाना ओकांसि दुर्यः विश्वं आयुः वि तिष्ठते प्रऽभवः शोकः अग्नेः ज्येष्ठं माता सूनवे भागं आ अधात् अनु अस्य केतं इषितं सवित्रा ॥५॥२॥ संऽआववर्ति विऽस्थितः जिगीषुः विश्वेषां कामः चरतां अमा अभूत् शश्वान् अपः विऽकृतं हित्वी आ अगात् अनु व्रतं सवितुः दैव्यस्य ॥६॥ त्वया हितं अप्यं अप्ऽसु भागं धन्व अनु आ मृगयसः वि तस्थुः वनानि विऽभ्यः नकिः अस्य तानि व्रता देवस्य सवितुः मिनंति ॥७॥ यात्ऽराध्यं वरुणः योनिं अप्यं अनिऽशितं निऽमिषि जर्भुराणः विश्वः मार्ताण्डः व्रजं आ पशुः गात् स्थऽशः जन्मानि सविता वि आ अकः ॥८॥ न यस्य इंद्रः वरुणः न मित्रः व्रतं अर्यमा न मिनंति रुद्रः न अरातयः तं इदं स्वस्ति हुवे देवं सवितारं नमःऽभिः ॥९॥ भगं धियं वाजयंतः पुरंऽधिं नराशंसः माः पतिः नः अव्याः आऽअये वामस्य संऽगथे रयीणां प्रियाः देवस्य सवितुः स्याम ॥१०॥ अस्मभ्यं तत् दिवः अत्ऽभ्यः पृथिव्याः त्वया दत्तं काम्यं राधः आ गात् शं यत् स्तोतृऽभ्यः आपये भवाति उरुऽशंसाय सवितः जरित्रे ॥११॥३॥

॥ ३९ ॥ १-८ गृत्समदः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥३९॥ ग्रावा॑णेव॒ तदिदर्थं॑ जरेथे गृध्रे॑व वृ॒क्षं नि॑धि॒मंत॒मच्छ॑ । ब्रह्मा॑णेव वि॒दथ॑ उक्थ॒शासा॑ दू॒तेव॒ हव्या॒ जन्या॑ पुरु॒त्रा ॥१॥ प्रा॒त॒र्यावा॑णा र॒थ्ये॑व वी॒राजेव॑ य॒मा वर॒मा सं॑चेथे । मेने॑ इव त॒न्वा॒३॒॑ शुंभ॑माने॒ दंप॑तीव क्रतु॒विदा॒ जने॑षु ॥२॥ शृंगे॑व नः प्रथ॒मा गं॑तम॒र्वाक् श॒फावि॑व ज॒र्भुरा॑णा॒ तरो॑भिः । च॒क्र॒वा॒के॑व॒ प्रति॒ वस्तो॑रुस्रा॒र्वाचा॑ यातं र॒थ्ये॑व शक्रा ॥३॥ ना॒वेव॑ नः पारयतं यु॒गेव॒ नभ्ये॑व न उपधी॑व प्र॒धीव॑ । श्वाने॑व नो॒ अरि॑षण्या त॒नूनां॒ खृग॑लेव वि॒स्रसः॑ पातम॒स्मान् ॥४॥ वाते॑वाजु॒र्या न॒द्ये॑व री॒तिर॒क्षी इ॑व॒ चक्षु॒षा या॑तम॒र्वाक् । हस्ता॑विव त॒न्वे॒३॒॑ शंभ॑विष्ठा॒ पादे॑व नो नयतं॒ वस्यो॒ अच्छ॑ ॥५॥४॥ ओष्ठा॑विव॒ मध्वा॒स्ने वदं॑ता॒ स्तना॑विव पिप्यतं जी॒वसे॑ नः । नासे॑व नस्त॒न्वो॑ रक्षि॒तारा॒ कर्णा॑विव सु॒श्रुता॑ भूतम॒स्मे ॥६॥ हस्ते॑व श॒क्तिम॒भि सं॑द॒दी नः॒ क्षामे॑व नः॒ सम॑जतं॒ रजां॑सि । इ॒मा गिरो॑ अश्विना युष्म॒यंतीः॒ क्ष्णोत्रे॑णेव॒ स्वधि॑तिं॒ सं शि॑शीतं ॥७॥ ए॒तानि॑ वाम॒श्विना॒ वर्ध॑नानि॒ ब्रह्म॒ स्तोमं॑ गृत्सम॒दासो॑ अक्रन् । तानि॑ नरा जुजुषा॒णोप॑ यातं बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥८॥५॥

---

॥ ४० ॥ १-६ गृत्समदः ॥ १-६[1] सोमापूषणौ । ६[2] अदितिश्च ॥ त्रिष्टुप् ॥

॥४०॥ सोमा॑पूषणा॒ जन॑ना रयी॒णां जन॑ना दि॒वो जन॑ना पृथि॒व्याः । जा॒तौ विश्व॑स्य॒ भुव॑नस्य गो॒पौ दे॒वा अ॑कृण्वन्न॒मृत॑स्य॒ नाभि॑ं ॥१॥ इ॒मौ दे॒वौ जाय॑मानौ जुषंते॒मौ तमां॑सि गूहता॒मजु॑ष्टा । आ॒भ्यामिंद्रः॑ प॒क्वमा॒मास्वं॒तः सो॑मापू॒षभ्यां॑ जनदु॒स्रिया॑सु ॥२॥ सोमा॑पूषणा॒ रज॑सो वि॒मानं॑ स॒प्तच॑क्रं॒ रथ॒म॑-

॥३९॥ ग्रावाणाऽइव तत् इत् अर्थं जरेथे गृध्राऽइव वृक्षं निधिऽमंतं अच्छ ब्रह्माणाऽइव विदथे उक्थऽशसा दूताऽइव हव्या जन्या पुरुऽत्रा ॥१॥ प्रातःऽयावाना रथ्याऽइव वीरा अजाऽइव यमा वरं आ सचेथे मेनेऽइव॰ तन्वा शुंभमाने दंपतीऽइव॰ क्रतुऽविदा जनेषु ॥२॥ शृंगाऽइव नः प्रथमा गंतं अर्वाक् शफौऽइव जर्भुराणा तरःऽभिः चक्रवाकाऽइव प्रति वस्तोः उस्रा अर्वाचा यातं रथ्याऽइव शक्रा ॥३॥ नावाऽइव नः पारयतं युगाऽइव नभ्याऽइव नः उपधीऽइव॰ प्रधीऽइव॰ श्वानाऽइव नः अरिषण्या तनूनां खृगलाऽइव विऽस्रसः पातं अस्मान् ॥४॥ वाताऽइव अजुर्या नद्याऽइव रीतिः अक्षीऽइव॰ चक्षुषा आ यातं अर्वाक् हस्तौऽइव तन्वे शंऽभविष्ठा पदाऽइव नः नयतं वस्यः अच्छ ॥५॥४॥ ओष्ठौऽइव मधु आस्ने वदंता स्तनौऽइव पिप्यतं जीवसे नः नासाऽइव नः तन्वः रक्षितारा कर्णौऽइव सुऽश्रुता भूतं अस्मे ॥६॥ हस्ताऽइव शक्तिं अभि संऽददी॰ नः क्षामऽइव नः सं अजतं रजांसि इमाः गिरः अश्विना युष्मऽयंतीः क्ष्णोत्रेणऽइव स्वऽधितिं सं शिशीतं ॥७॥ एतानि वां अश्विना वर्धनानि ब्रह्म स्तोमं गृत्सऽमदासः अक्रन् तानि नरा जुजुषाणा उप यातं बृहत् वदेम विदथे सुऽवीराः ॥८॥५॥

---

॥४०॥ सोमापूषणा जनना रयीणां जनना दिवः जनना पृथिव्याः जातौ विश्वस्य भुवनस्य गोपौ देवाः अकृण्वन् अमृतस्य नाभिं ॥१॥ इमौ देवौ जायमानौ जुषंत इमौ तमांसि गूहतां अजुष्टा आभ्यां इंद्रः पक्वं आमासु अंतः सोमापूषऽभ्यां जनत् उस्रियासु ॥२॥ सोमापूषणा रजसः विऽमानं सप्तऽचक्रं रथं अ-

विश्वमिन्वं । विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पं-
चरश्मिं ॥३॥ दिव्य१न्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यंत-
रिक्षे । तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पोषं वि ष्यतां नाभिमस्मे
॥४॥ विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण
एति । सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना ज-
येम ॥५॥ धियं पूषा जिन्वतु विश्वमिन्वो रयिं सोमो रयिपति-
र्दधातु । अवतु देव्यदितिरनर्वा बृहद्वदेम विदथे सुवीराः ॥६॥६॥

---

॥ ४१ ॥ १–२१ गृत्समदः ॥ १. २ वायुः । ३ इंद्रवायू । ४–६ मित्रावरुणौ । ७–९ अश्विनौ । १०–१२ इंद्रः । १३–१५ विश्वे देवाः । १६–१८ सरस्वती । १९.१.२. २०.२१ द्यावापृथिव्यौ हविर्धाने वा । १९.३. द्यावापृथिव्यौ हविर्धाने वाग्निर्वा ॥ १–१५. १९–२१ गायत्री । १६. १७. अनुष्टुप् । १८ बृहती ॥

॥४१॥ वायो ये ते सहस्रिणो रथासस्तेभिरा गहि । नियुत्वा-
न्सोमपीतये ॥१॥ नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते । गं-
तासि सुन्वतो गृहं ॥२॥ शुक्रस्याद्य गवाशिर इंद्रवायू नियुत्व-
तः । आ यातं पिबतं नरा ॥३॥ अयं वां मित्रावरुणा सुतः सोम
ऋतावृधा । ममेदिह श्रुतं हवं ॥४॥ राजानावनभिद्रुहा ध्रुवे
सदस्युत्तमे । सहस्रस्थूण आसाते ॥५॥७॥ ता सम्राजा घृतासुती
आदित्या दानुनस्पती । सचेते अनवह्वरं ॥६॥ गोमदू षु नास-
त्याश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यं ॥७॥ न यत्परो नांतर
आदधर्षद्वृषण्वसू । दुःशंसो मर्त्यो रिपुः ॥८॥ ता न आ वोळ्हम-
श्विना रयिं पिशंगसंदृशं । धिष्ण्या वरिवोविदं ॥९॥ इंद्रो अंग
महद्भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥१०॥८॥
इंद्रश्च मृळयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः
॥११॥ इंद्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्वि-
चर्षणिः ॥१२॥ विश्वे देवास आ गत शृणुता म इमं हवं । एदं

विश्वऽमिन्वं विषुऽवृतं मनसा युज्यमानं तं जिन्वथः वृषणा
पंचऽरश्मिं ॥३॥ दिवि अन्यः सदनं चक्रे उच्चा पृथिव्यां अन्यः अ-
धि अंतरिक्षे तौ अस्मभ्यं पुरुऽवारं पुरुऽक्षुं रायः पोषं वि स्यतां
नाभिं अस्मे॰ ॥४॥ विश्वानि अन्यः भुवना जजान विश्वं अन्यः
अभिऽचक्षाणः एति सोमापूषणौ अवतं धियं मे युवाभ्यां वि-
श्वाः पृतनाः जयेम ॥५॥ धियं पूषा जिन्वतु विश्वंऽइन्वः रयिं सोमः
रयिऽपतिः दधातु अवतु देवी अदितिः अनर्वा बृहत् वदेम वि-
दथे सुऽवीराः ॥६॥६॥

---

॥४१॥ वायो॰ ये ते सहस्रिणः रथासः तेभिः आ गहि नियुत्वान्
सोमऽपीतये ॥१॥ नियुत्वान् वायो॰ आ गहि अयं शुक्रः अयामि
ते गंता असि सुन्वतः गृहं ॥२॥ शुक्रस्य अद्य गोऽआशिरः इंद्रवा-
यू॰ नियुत्वतः आ यातं पिबतं नरा ॥३॥ अयं वां मित्रावरुणा सुतः
सोमः ऋतऽवृधा मम इत् इह श्रुतं हवं ॥४॥ राजानौ अनभिऽद्रु-
हा ध्रुवे सदसि उत्ऽतमे सहस्रऽस्थूणे आसाते॰ ॥५॥७॥ ता सं-
ऽराजा घृतऽआसुती॰ आदित्या दानुनः पती॰ सचेते॰ अनव-
ऽह्वरं ॥६॥ गोऽमत् ऊं॰ सु नासत्या अश्वऽवत् यातं अश्विना
वर्तिः रुद्रा नृऽपाय्यं ॥७॥ न यत् परः न अंतरः आऽदधर्षत् वृषण्-
वसू॰ दुःऽशंसः मर्त्यः रिपुः ॥८॥ ता नः आ वोळ्हं अश्विना रयिं
पिशंगऽसंदृशं धिष्ण्या वरिवःऽविदं ॥९॥ इंद्रः अंग महत् भयं
अभि सत् अप चुच्यवत् सः हि स्थिरः विऽचर्षणिः ॥१०॥८॥ इंद्रः
च मृळयाति नः न नः पश्चात् अघं नशत् भद्रं भवाति नः पुरः
॥११॥ इंद्रः आशाभ्यः परि सर्वाभ्यः अभयं करत् जेता शत्रून् वि-
ऽचर्षणिः ॥१२॥ विश्वे देवासः आ गत शृणुत मे इमं हवं आ इदं

बर्हिर्नि षीदत ॥१३॥ तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः। एतं पिबत काम्यं ॥१४॥ इंद्रज्येष्ठा मरुद्गणा देवासः पूषरातयः। विश्वे मम श्रुता हवं ॥१५॥९॥ अंबितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमंब नस्कृधि ॥१६॥ त्वे विश्वा सरस्वति श्रितायूंषि देव्यां । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥१७॥ इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ १८ ॥ प्रेतां यज्ञस्य शंभुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनं ॥१९॥ द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशं । यज्ञं देवेषु यच्छतां ॥२०॥ आ वामुपस्थमद्रुहा देवाः सीदंतु यज्ञियाः । इहाद्य सोमपीतये ॥ २१ ॥ १० ॥

॥ ४२ ॥ १-३ गृत्समदः ॥ इंद्रः कपिंजलरूपी ॥ त्रिष्टुप् ॥

॥४२॥ कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावं। सुमंगलश्च शकुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥१॥ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता। पित्र्यामनु प्रदिशं कनिक्रदत्सुमंगलो भद्रवादी वदेह॥२॥ अव क्रंद दक्षिणतो गृहाणां सुमंगलो भद्रवादी शकुंते। मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः॥३॥११॥

॥ ४३ ॥ १-३ गृत्समदः ॥ इंद्रः कपिंजलरूपी ॥ १. ३ जगती ॥
२ अतिशक्वर्यष्टिर्वा ॥

॥ ४३ ॥ प्रदक्षिणिदभि गृणंति कारवो वयो वदंत ऋतुथा शकुंतयः । उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥१॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या

बर्हिः नि सीदत ॥१३॥ तीव्रः वः मधुऽमान् अयं शुनऽहोत्रेषु
मत्सरः एतं पिबत काम्यं ॥१४॥ इंद्रऽज्येष्ठाः मरुत्ऽगणाः दे-
वासः पूषऽरातयः विश्वे मम श्रुत हवं ॥१५॥९॥ अंबिऽतमे नदीऽ-
ऽतमे देविऽतमे सरस्वति अप्रशस्ताःऽइव स्मसि प्रऽशस्तिं अंब
नः कृधि ॥१६॥ त्वे विश्वा सरस्वति श्रिता आयूंषि देव्यां शुन-
ऽहोत्रेषु मत्स्व प्रऽजां देवि दिदिड्ढि नः ॥१७॥ इमा ब्रह्म सरस्वति
जुषस्व वाजिनीऽवति या ते मन्म गृत्सऽमदाः ऋतऽवरि प्रिया
देवेषु जुह्वति ॥१८॥ प्र इतां यज्ञस्य शंऽभुवा युवां इत् आ वृणी-
महे अग्निं च हव्यऽवाहनं ॥१९॥ द्यावा नः पृथिवी इमं सिध्रं अद्य
दिविऽस्पृशं यज्ञं देवेषु यच्छतां ॥२०॥ आ वां उपऽस्थं अद्रुहा दे-
वाः सीदंतु यज्ञियाः इह अद्य सोमऽपीतये ॥२१॥१०॥

---

॥४२॥ कनिक्रदत् जनुषं प्रऽब्रुवाणः इयर्ति वाचं अरिताऽइव
नावं सुऽमंगलः च शकुने भवासि मा त्वा का चित् अभिऽभा
विश्व्या विदत् ॥१॥ मा त्वा श्येनः उत् वधीत् मा सुऽपर्णः मा त्वा
विदत् इषुऽमान् वीरः अस्ता पित्र्यां अनु प्रऽदिशं कनिक्रदत्
सुऽमंगलः भद्रऽवादी वद इह ॥२॥ अव क्रंद दक्षिणतः गृहाणां
सुऽमंगलः भद्रऽवादी शकुंते मा नः स्तेनः ईशत मा अघऽशंसः
बृहत् वदेम विदथे सुऽवीराः ॥३॥११॥

---

॥४३॥ प्रऽदक्षिणित् अभि गृणंति कारवः वयः वदंतः ऋतु-
ऽथा शकुंतयः उभे वाचौ वदति सामगाःऽइव गायत्रं च त्रैष्टुभं
च अनु राजति ॥१॥ उद्गाताऽइव शकुने साम गायसि ब्रह्मऽपुत्रः-
ऽइव सवनेषु शंससि वृषाऽइव वाजी शिशुऽमतीः अपिऽइत्य

सर्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद ॥२॥ आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥३॥१२॥४॥२॥

॥ इति द्वितीयं मंडलं समाप्तं ॥

---

॥१॥ १-२३ विश्वामित्रो गाथिनः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१॥ सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै । देवाँ अच्छा दीद्यद्युंजे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥१॥ प्रांचं यज्ञं चकृम वर्धतां गीः समिद्भिरग्निं नमसा दुवस्यन् । दिवः शशासुर्विदथा कवीनां गृत्साय चित्तवसे गातुमीषुः ॥२॥ मयो दधे मेधिरः पूतदक्षो दिवः सुबंधुर्जनुषा पृथिव्याः । अविंदन्नु दर्शतमप्स्व१ंतर्देवासो अग्निमपसि स्वसृणां ॥३॥ अवर्धयन्सुभगं सप्त यह्वीः श्वेतं जज्ञानमरुषं महित्वा । शिशुं न जातमभ्यारुरश्वा देवासो अग्निं जनिमन्वपुष्यन् ॥४॥ शुक्रेभिरंगै रज आततन्वान्क्रतुं पुनानः कविभिः पवित्रैः । शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥५॥१३॥ वव्राजा सीमनदतीरदब्धा दिवो यह्वीरवसाना अनंमाः । सना अत्र युवतयः सयोनीरेकं गर्भं दधिरे सप्त वाणीः ॥६॥ स्तीर्णा अस्य संहतो विश्वरूपा घृतस्य योनौ स्रवथे मधूनां । अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीची ॥७॥ बभ्राणः सूनो सहसो व्यद्यौद्दधानः शुक्रा रभसा वपूंषि । श्चोतंति धारा मधुनो घृतस्य वृषा यत्र वावृधे

सर्वतः नः शकुने भद्रं आ वद विश्वतः नः शकुने पुण्यं आ वद ॥२॥
आऽवदन् त्वं शकुने भद्रं आ वद तूष्णीं आसीनः सुऽमतिं चिकि-
द्धि नः यत् उत्ऽपतन् वदसि कर्करिः यथा बृहत् वदेम विदथे
सुऽवीराः ॥३॥१२॥४॥२॥

॥ इति द्वितीयं मंडलं समाप्तं ॥

---

॥१॥ सोमस्य मा तवसं वक्षि अग्ने वह्निं चकर्थ विदथे यजध्यै
देवान् अच्छ दीद्यत् युंजे अद्रिं शंऽआये अग्ने तन्वं जुषस्व ॥१॥
प्रांचं यज्ञं चकृम वर्धतां गीः समित्ऽभिः अग्निं नमसा दुवस्यन्
दिवः शशासुः विदथा कवीनां गृत्साय चित् तवसे गातुं ईषुः ॥२॥
मयः दधे मेधिरः पूतऽदक्षः दिवः सुऽबंधुः जनुषा पृथिव्याः अवि-
दन् ऊं दर्शतं अप्ऽसु अंतः देवासः अग्निं अपसि स्वसॄणां ॥३॥
अवर्धयन् सुऽभगं सप्त यह्वीः श्वेतं जज्ञानं अरुषं महिऽत्वा शिशुं
न जातं अभि आरुः अश्वाः देवासः अग्निं जनिमन् वपुष्यन् ॥४॥
शुक्रेभिः अंगैः रजः आऽततन्वान् क्रतुं पुनानः कविऽभिः पवि-
त्रैः शोचिः वसानः परि आयुः अपां श्रियः मिमीते बृहतीः अनू-
नाः ॥५॥१३॥ वव्राज सीं अनदतीः अदब्धाः दिवः यह्वीः अवसा-
नाः अनग्नाः सनाः अत्र युवतयः सऽयोनीः एकं गर्भं दधिरे सप्त
वाणीः ॥६॥ स्तीर्णाः अस्य संऽहतः विश्वऽरूपाः घृतस्य योनौ
स्रवथे मधूनां अस्थुः अत्र धेनवः पिन्वमानाः मही दस्मस्य मा-
तरा संऽईची० ॥७॥ बभ्राणः सूनो सहसः वि अद्यौत् दधानः शु-
क्रा रभसा वपूंषि श्चोतंति धाराः मधुनः घृतस्य वृषा यत्र ववृधे

काव्येन ॥८॥ पितुश्चिदूर्धर्जनुषा विवेद व्यस्य धारा असृजद्वि धेनाः। गुहा चरंतं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव ॥९॥ पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत्पीप्यानाः। वृष्णे सपत्नी शुचये सबंधू उभे अस्मै मनुष्ये३नि पाहि ॥१०॥१४॥ उरौ महाँ अनिबाधे ववर्धापो अग्निं यशसः सं हि पूर्वीः। ऋतस्य योनावशयद्दमूना जामीनामग्निरपसि स्वसॄणां ॥११॥ अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः। उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥१२॥ अपां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपं। देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥१३॥ बृहंत इद्भानवो भाऋजीकमग्निं सचंत विद्युतो न शुक्राः। गुहेव वृद्धं सदसि स्वे अंतरपार ऊर्वे अमृतं दुहानाः ॥१४॥ ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः। देवैरवो मिमीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः ॥१५॥१५॥ उपक्षेतारस्तव सुप्रणीतेऽग्ने विश्वानि धन्या दधानाः। सुरेतसा श्रवसा तुंजमाना अभि ष्याम पृतनायूँरदेवान् ॥१६॥ आ देवानामभवः केतुरग्ने मंद्रो विश्वानि काव्यानि विद्वान्। प्रति मर्तौं अवासयो दमूना अनु देवान्रथिरो यासि साधन् ॥१७॥ नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन्। घृतप्रतीक उर्विया व्यद्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥१८॥ आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन्। अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥१९॥ एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचं। महांति

काष्ठेन ॥८॥ पितुः चित् ऊधः जनुषा विवेद वि अस्य धाराः असृ-
जत् वि धेनाः गुहा चरंतं सखिऽभिः शिवेभिः दिवः यह्वीभिः न
गुहा बभूव ॥९॥ पितुः च गर्भं जनितुः च बभ्रे पूर्वीः एकः अधयत्
पीप्यानाः वृष्णे सऽपत्नी॰ शुचये सऽबंधू॰ उभे अस्मै मनुष्ये॰ नि
पाहि ॥ १० ॥ १४ ॥ उरौ महान् अनिऽबाधे ववर्ध आपः अग्निं
यशसः सं हि पूर्वीः ऋतस्य योनौ अशयत् दमूनाः जामीनां
अग्निः अपसि स्वसृणां ॥११॥ अक्रः न बभ्रिः संऽइथे महीनां दि-
दृक्षेयः सूनवे भाःऽऋजीकः उत् उस्रियाः जनिता यः जजान
अपां गर्भः नृऽतमः यह्वः अग्निः ॥१२॥ अपां गर्भं दर्शतं ओषधीनां
वना जजान सुऽभगा विऽरूपं देवासः चित् मनसा सं हि जग्मुः
पनिष्ठं जातं तवसं दुवस्यन् ॥१३॥ बृहंतः इत् भानवः भाःऽऋजी-
कं अग्निं सचंत विऽद्युतः न शुक्राः गुहाःऽइव वृद्धं सदसि स्वे
अंतः अपारे ऊर्वे अमृतं दुहानाः ॥ १४ ॥ ईळे च त्वा यजमानः ह-
विःऽभिः ईळे सखिऽत्वं सुऽमतिं निऽकामः देवैः अवः मिमीहि
सं जरित्रे रक्ष च नः दम्येभिः अनीकैः ॥१५॥१५॥ उपऽक्षेतारः तव
सुऽप्रनीते अग्ने विश्वानि धन्या दधानाः सुऽरेतसा श्रवसा तुंज-
मानाः अभि स्याम पृतनाऽयून् अदेवान् ॥१६॥ आ देवानां अ-
भवः केतुः अग्ने मंद्रः विश्वानि काव्यानि विद्वान् प्रति मर्तान्
अवासयः दमूनाः अनु देवान् रथिरः यासि साधन् ॥१७॥ नि दुरो-
णे अमृतः मर्त्यानां राजा ससाद विदथानि साधन् घृतऽप्रतीकः
उर्विया वि अद्यौत् अग्निः विश्वानि काव्यानि विद्वान् ॥१८॥ आ
नः गहि सख्येभिः शिवेभिः महान् महीभिः ऊतिऽभिः सरण्यन्
अस्मे रयिं बहुलं संऽतरुत्रं सुऽवाचं भागं यशसं कृधि नः ॥१९॥
एता ते अग्ने जनिम सनानि प्र पूर्व्याय नूतनानि वोचं महांति

वृष्णो सर्वना कृतेमा जन्मंजन्मन् निहितो जातवेदाः ॥२०॥ जन्मंजन्मन् निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः। तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥२१॥ इमं यज्ञं सहसावन् त्वं नो देवत्रा धेहि सुक्रतो ररांणः। प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥२२॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥२३॥१६॥

---

॥ २ ॥ १–१५ विश्वामित्रः ॥ अग्निर्वैश्वानरः ॥ जगती ॥

॥२॥ वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि। द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति ॥१॥ स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत्पुत्र ईड्यः। हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः ॥२॥ क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयंत चित्तिभिः। रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे ॥३॥ आ मंद्रस्य सनिष्यंतो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियं। रातिं भृगूणामुशिजं कविक्रतुमग्निं राजंतं दिव्येन शोचिषा ॥४॥ अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः। यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसां ॥५॥१७॥ पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः। अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥६॥ आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन्। सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः ॥७॥ नमस्यत

वृष्णे सवना कृता इमा जन्मन्ऽजन्मन् निऽहितः जातऽवेदाः
॥२०॥ जन्मन्ऽजन्मन् निऽहितः जातऽवेदाः विश्वामित्रेभिः इ-
ध्यते अजस्रः तस्य वयं सुऽमतौ यज्ञियस्य अपि भद्रे सौमनसे
स्याम ॥२१॥ इमं यज्ञं सहसाऽवन् त्वं नः देवऽत्रा धेहि सुऽक्रतो°
रराणः प्र यंसि होतः बृहतीः इषः नः अग्ने महि द्रविणं आ यजस्व
॥२२॥ इळां अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध
स्यात् नः सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे॰
॥२३॥१६॥

---

॥२॥ वैश्वानराय धिषणां ऋतऽवृधे घृतं न पूतं अग्नये जना-
मसि द्विता होतारं मनुषः च वाघतः धिया रथं न कुलिशः सं ऋ-
ण्वति ॥१॥ सः रोचयत् जनुषा रोदसी॰ उभे॰ सः मात्रोः अभवत्
पुत्रः ईड्यः हव्यऽवाट् अग्निः अजरः चनःऽहितः दुःऽदभः विशां
अतिथिः विभाऽवसुः ॥२॥ क्रत्वा दक्षस्य तरुषः विऽधर्मणि देवा-
सः अग्निं जनयन्त चित्तिऽभिः रुरुचानं भानुना ज्योतिषा महां
अत्यं न वाजं सनिष्यन् उप ब्रुवे ॥३॥ आ मन्द्रस्य सनिष्यन्तः वरेण्यं
वृणीमहे अह्रयं वाजं ऋग्मियं रातिं भृगूणां उशिजं कविऽक्रतुं
अग्निं राजन्तं दिव्येन शोचिषा ॥४॥ अग्निं सुम्नाय दधिरे पुरः जनाः
वाजऽश्रवसं इह वृक्तऽबर्हिषः यतऽस्रुचः सुऽरुचं विश्वऽदेव्यं रु-
द्रं यज्ञानां साधत्ऽइष्टिं अपसां ॥५॥१७॥ पावकऽशोचे तव हि
क्षयं परि होतः यज्ञेषु वृक्तऽबर्हिषः नरः अग्ने दुवः इच्छमानासः
आप्यं उप आसते द्रविणं धेहि तेभ्यः ॥६॥ आ रोदसी॰ अपृणत्
आ स्वः महत् जातं यत् एनं अपसः अधारयन् सः अध्वराय परि
नीयते कविः अत्यः न वाजऽसातये चनःऽहितः ॥७॥ नमस्यत

हव्यदातिं स्वध्वरं दुवस्यत दम्यं जातवेदसं । रथीर्ऋतस्य
बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥८॥ तिस्रो य-
ह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः । ता-
सामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥९॥
विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्त्स्वधितिं
न तेजसे । स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु
दीधरत् ॥१०॥१८॥ स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु
नानदन्न सिंहः । वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दय-
मानो वि दाशुषे ॥११॥ वैश्वानरः प्रत्नथा नाकमारुहद्दिवस्पृष्ठं
भंदमानः सुमन्मभिः । स पूर्ववज्जनयंजंतवे धनं समानमज्मं
पर्येति जागृविः ॥१२॥ ऋतावानं यज्ञियं विप्रमुक्थ्य१मा
यं दधे मातरिश्वा दिवि क्षयं । तं चित्रयामं हरिकेशमीमहे
सुदीतिमग्निं सुविताय नव्यसे ॥१३॥ शुचिं न यामन्निषिरं
स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधं । अग्निं मूर्धानं दिवो
अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् ॥१४॥ मंद्रं हो-
तारं शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिं । रथं न
चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद्राय ईमहे ॥१५॥१९॥

---

॥ ३ ॥ १–११ विश्वामित्रः ॥ अग्निर्वैश्वानरः ॥ जगती ॥

॥३॥ वैश्वानराय पृथुपाजसे विपो रत्ना विधंत धरुणेषु
गातवे । अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता
न दूदुषत् ॥१॥ अंतर्दूतो रोदसी दस्म ईयते होता निषत्तो
मनुषः पुरोहितः । क्षयं बृहंतं परि भूषति द्युभिर्देवेभिरग्निरि-
षितो धियावसुः ॥२॥ केतुं यज्ञानां विदथस्य साधनं विप्रासो
अग्निं महयंत चित्तिभिः । अपांसि यस्मिन्नधि संदधुर्गिरस्त-

हव्यऽदातिं सुऽ अध्वरं दुवस्यत दम्यं जातऽवेदसं रथीः ऋतस्य बृहतः विऽ चर्षणिः अग्निः देवानां अभवत् पुरःऽ हितः ॥८॥ तिस्रः यह्वस्य संऽ इधः परिऽ ज्मनः अग्नेः अपुनन् उशिजः अमृत्यवः तासां एकां अदधुः मर्त्ये भुजं ऊं इति लोकं ऊं इति द्वे इति उप जामिं ईयतुः ॥९॥ विशां कविं विश्पतिं मानुषीः इषः सं सीं अकृण्वन् स्वऽ धितिं न तेजसे सः उतऽ वतः निऽ वतः याति वेविषत् सः गर्भं एषु भुवनेषु दीधरत् ॥१०॥१८॥ सः जिन्वते जठरेषु प्रजज्ञिऽवान् वृषा चित्रेषु नानदत् न सिंहः वैश्वानरः पृथुऽ पाजाः अमर्त्यः वसु रत्ना दयमानः वि दाशुषे ॥११॥ वैश्वानरः प्रत्नऽ था नाकं आ अरुहत् दिवः पृष्ठं भंदमानः सुमन्मऽ भिः सः पूर्वऽ वत् जनयन् जंतवे धनं समानं अज्मं परि एति जागृविः ॥१२॥ ऋतऽ वानं यज्ञियं विप्रं उक्थ्यं आ यं दधे मातरिश्वा दिवि क्षयं तं चित्रऽ यामं हरिऽ केशं ईमहे सुऽ दीतिं अग्निं सुविताय नव्यसे ॥१३॥ शुचिं न यामन् इषिरं स्वःऽ दृशं केतुं दिवः रोचनऽ स्थां उषःऽ बुधं अग्निं मूर्धानं दिवः अप्रतिऽ स्कुतं तं ईमहे नमसा वाजिनं बृहत् ॥१४॥ मंद्रं होतारं शुचिं अद्वयाविनं दमूनसं उक्थ्यं विश्वऽ चर्षणिं रथं न चित्रं वपुषाय दर्शतं मनुःऽ हितं सदं इत् रायः ईमहे ॥१५॥१९॥

---

॥३॥ वैश्वानराय पृथुऽ पाजसे विपः रत्ना विधंत धरुणेषु गातवे अग्निः हि देवान् अमृतः दुवस्यति अथ धर्माणि सनता न दूदुषत् ॥१॥ अंतः दूतः रोदसी इति दस्मः ईयते होता निऽ सत्तः मनुषः पुरःऽ हितः क्षयं बृहंतं परि भूषति द्युऽ भिः देवेभिः अग्निः इषितः धियाऽ वसुः ॥२॥ केतुं यज्ञानां विदथस्य साधनं विप्रासः अग्निं महयंत चित्तिऽ भिः अपांसि यस्मिन् अधि संऽ दधुः गिरः त-

स्मिन्त्सुम्नानि यजमान आ चके ॥३॥ पिता यज्ञानामसुरो
विपश्चितां विमानमग्निर्वयुनं च वाघतां । आ विवेश रोद-
सी भूरिवर्पसा पुरुप्रियो भंदते धामभिः कविः ॥४॥ चंद्रमग्निं
चंद्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदं । विगाहं तूर्णिं
तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥५॥२०॥
अग्निर्देवेभिर्मनुषश्च जंतुभिस्तन्वानो यज्ञं पुरुपेशसं धिया ।
रथीरंतरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः
॥६॥ अग्ने जरस्व स्वपत्य आयुन्यूर्जा पिन्वस्व समिषो दि-
दीहि नः । वयांसि जिन्व बृहतश्च जागृव उशिग्देवानामसि
सुक्रतुर्विपां ॥७॥ विश्पतिं यह्वमतिथिं नरः सदा यंतारं
धीनामुशिजं च वाघतां । अध्वराणां चेतनं जातवेदसं प्र
शंसंति नमसा जूतिभिर्वृधे ॥८॥ विभावा देवः सुरणः परि
क्षितीरग्निर्बभूव शवसा सुमद्रथः । तस्य व्रतानि भूरिपोषिणो
वयमुप भूषेम दम आ सुवृक्तिभिः ॥९॥ वैश्वानर तव धामान्या
चके येभिः स्वर्विदभवो विचक्षण । जात आपृणो भुवनानि
रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥१०॥ वैश्वानरस्य
दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः । उभा पितरा
महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥११॥२१॥

---

॥ ४ ॥ १-११ विश्वामित्रः ॥ आप्रियः ॥ त्रिष्टुप् ॥

॥४॥ समित्समित्सुमना बोध्यस्मे शुचाशुचा सुमतिं
रासि वस्वः । आ देव देवान्यजथाय वक्षि सखा सखीं-
न्त्सुमना यक्ष्यग्ने ॥१॥ यं देवासस्त्रिरहन्नायजंते दिवेदिवे
वरुणो मित्रो अग्निः । सेमं यज्ञं मधुमंतं कृधी नस्तनू-

स्मिन् सुम्नानि यजमानः आ चके॥३॥ पिता यज्ञानां असुरः वि-
पःऽचितां विऽमानं अग्निः वयुनं च वाघतां आ विवेश रोदसी इति
भूरिऽवर्पसा पुरुऽप्रियः भंदते धामऽभिः कविः ॥४॥ चंद्रं अग्निं
चंद्रऽरथं हरिऽव्रतं वैश्वानरं अप्सुऽसदं स्वःऽविदं विऽगाहं तूर्णिं
तविषीभिः आऽवृतं भूर्णिं देवासः इह सुऽश्रियं दधुः ॥५॥२०॥
अग्निः देवेभिः मनुषः च जंतुऽभिः तन्वानः यज्ञं पुरुऽपेशसं धिया
रथीः अंतः ईयते साधदिष्टिऽभिः जीरः दमूनाः अभिशस्तिऽचा-
तनः॥६॥ अग्ने जरस्व सुऽअपत्ये आयुनि ऊर्जा पिन्वस्व सं इषः
दिदीहि नः वयांसि जिन्व बृहतः च जागृवे उशिक् देवानां असि
सुऽक्रतुः विपां॥७॥ विश्पतिं यह्वं अतिथिं नरः सदा यंतारं धीनां
उशिजं च वाघतां अध्वराणां चेतनं जातऽवेदसं प्र शंसंति नम-
सा जूतिऽभिः वृधे ॥ ८ ॥ विभाऽवा देवः सुऽरणः परि क्षितीः
अग्निः बभूव शवसा सुमत्ऽरथः तस्य व्रतानि भूरिऽपोषिणः
वयं उप भूषेम दमे आ सुवृक्तिऽभिः ॥९॥ वैश्वानर तव धामानि
आ चके येभिः स्वःऽवित् अभवः विऽचक्षण जातः आ अपृणः
भुवनानि रोदसी इति अग्ने ता विश्वा परिऽभूः असि त्मना॥१०॥ वै-
श्वानरस्य दंसनाभ्यः बृहत् अरिणात् एकः सुऽअपस्यया कविः
उभा पितरा महयन् अजायत अग्निः द्यावापृथिवी इति भूरिऽरे-
तसा ॥ ११ ॥ २१ ॥

---

॥४॥ समित्ऽसमित् सुऽमनाः बोधि अस्मे इति शुचाऽशुचा सु-
ऽमतिं रासि वस्वः आ देव देवान् यजथाय वक्षि सखा सखीन्
सुऽमनाः यक्षि अग्ने ॥१॥ यं देवासः त्रिः अहन् आऽयजंते दिवे-
ऽदिवे वरुणः मित्रः अग्निः सः इमं यज्ञं मधुऽमंतं कृधि नः तनू-

नपाहृतयोनिं विधंतं ॥२॥ प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं यजध्यै । अच्छा नमोभिर्वृषभं वंदध्यै स देवान्यक्षदिषितो यजीयान् ॥३॥ ऊर्ध्वो वां गातुरध्वरे अकार्यूर्ध्वा शोचींषि प्रस्थिता रजांसि । दिवो वा नाभा न्यसादि होता स्तृणीमहि देवव्यचा वि बर्हिः ॥४॥ सप्त होत्राणि मनसा वृणाना इन्वंतो विश्वं प्रति यन्नृतेन । नृपेशसो विदथेषु प्र जाता अभी३मं यज्ञं वि चरंत पूर्वीः ॥५॥२२॥ आ भंदमाने उषसा उपाके उत स्मयेते तन्वा३ विरूपे । यथा नो मित्रो वरुणो जुजोषदिंद्रो मरुत्वाँ उत वा महोभिः ॥६॥ दैव्या होतारा प्रथमा न्यृंजे सप्त पृक्षासः स्वधया मदंति । ऋतं शंसंत ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः ॥७॥ आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः । सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदंतु ॥८॥ तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥९॥ वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति । सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥१०॥ आ याह्यग्ने समिधानो अर्वाङिंद्रेण देवैः सरथं तुरेभिः । बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयंतां ॥११॥२३॥

---

॥५॥ १-११ विश्वामित्रः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥५॥ प्रत्यग्निरुषसश्चेकितानोऽबोधि विप्रः पदवीः कवीनां । पृथुपाजा देवयद्भिः समिद्धोऽप द्वारा तमसो वह्निरावः ॥१॥ प्रेद्वग्निर्वावृधे स्तोमेभिर्गीर्भिः स्तोतॄणां नमस्य उक्थैः । पूर्वीर्ऋतस्य संदृशश्चकानः सं

ऽनपात् घृतऽयोनिं विधंतं॥२॥ प्र दीधितिः विश्वऽवारा जिगाति होतारं इळः प्रथमं यजध्यै अच्छ नमःऽभिः वृषभं वंदध्यै सः देवान् यक्षत् इषितः यजीयान्॥३॥ ऊर्ध्वः वां गातुः अध्वरे अकारि ऊर्ध्वा शोचींषि प्रऽस्थिता रजांसि दिवः वा नाभा नि असादि होता स्तृणीमहि देवऽव्यचाः वि बर्हिः॥४॥ सप्त होत्राणि मनसा वृणानाः इन्वंतः विश्वं प्रति यन् ऋतेन नृऽपेशसः विदथेषु प्र जाताः अभि इमं यज्ञं वि चरंत पूर्वीः॥५॥२२॥ आ भंदमाने उषसा उपाके उत स्मयेते तन्वा विऽरूपे॰ यथा नः मित्रः वरुणः जुजोषत् इंद्रः मरुत्वान् उत वा महःऽभिः॥६॥ दैव्या होतारा प्रथमा नि ऋंजे सप्त पृक्षासः स्वधया मदंति ऋतं शंसंतः ऋतं इत् ते आहुः अनु व्रतं व्रतऽपाः दीध्यानाः॥७॥ आ भारती भारतीभिः सऽजोषाः इळा देवैः मनुष्येभिः अग्निः सरस्वती सारस्वतेभिः अर्वाक् तिस्रः देवीः बर्हिः आ इदं सदंतु॥८॥ तत् नः तुरीपं अध पोषयित्नु देव त्वष्टः वि रराणः स्यस्व॰ यतः वीरः कर्मण्यः सुऽदक्षः युक्तऽग्रावा जायते देवऽकामः॥९॥ वनस्पते अव सृज उप देवान् अग्निः हविः शमिता सूदयाति सः इत् ऊं होता सत्यऽतरः यजाति यथा देवानां जनिमानि वेद॥१०॥ आ याहि अग्ने संऽइधानः अर्वाङ् इंद्रेण देवैः सऽरथं तुरेभिः बर्हिः नः आस्तां अदितिः सुऽपुत्रा स्वाहा देवाः अमृताः मादयंतां॥११॥२३॥

---

॥५॥ प्रति अग्निः उषसः चेकितानः अबोधि विप्रः पदऽवीः कवीनां पृथुऽपाजाः देवयत्ऽभिः संऽइद्धः अप द्वारा तमसः वह्निः आवः॰॥१॥ प्र इत् ऊं अग्निः ववृधे स्तोमेभिः गीःऽभिः स्तोतॄणां नमस्यः उक्थैः पूर्वीः ऋतस्य संऽदृशः चकानः सं दूतः

अद्यौदुषसो विरोके ॥२॥ अधाय्यग्निर्मानुषीषु विक्ष्व१पां
गर्भो मित्र ऋतेन साधन् । आ हर्यतो यजतः सान्वस्थादभूदु
विप्रो हव्यो मतीनां ॥३॥ मित्रो अग्निर्भवति यत्समिद्धो
मित्रो होता वरुणो जातवेदाः । मित्रो अध्वर्युरिषिरो दमूना
मित्रः सिंधूनामुत पर्वतानां ॥४॥ पाति प्रियं रिपो अग्रं पदं
वेः पाति यह्वश्चरणं सूर्यस्य । पाति नाभा सप्तशीर्षाणमग्निः
पाति देवानामुपमादमृष्वः ॥५॥२४॥ ऋभुश्चक्र ईड्यं चारु
नाम विश्वानि देवो वयुनानि विद्वान् । ससस्य चर्म घृतवत्पदं
वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥६॥ आ योनिमग्निर्घृतवंतमस्था-
त्पृथुप्रगाणमुशंतमुशानः । दीद्यानः शुचिर्ऋष्वः पावकः पु-
नःपुनर्मातरा नव्यसी कः ॥७॥ सद्यो जात ओषधीभिर्ववक्षे
यदी वर्धंति प्रस्वो घृतेन । आप इव प्रवता शुंभमाना उरु-
ष्यदग्निः पित्रोरुपस्थे ॥८॥ उदु ष्टुतः समिधा यह्वो अद्यौद्वर्ष्म-
न्दिवो अधि नाभा पृथिव्याः । मित्रो अग्निरीड्यो मातरिश्वा
दूतो वक्षद्यजथाय देवान् ॥९॥ उदस्तंभीत्समिधा नाकमृ-
ष्वो३ग्निर्भवन्नुत्तमो रोचनानां । यदी भृगुभ्यः परि मातरिश्वा
गुहा संतं हव्यवाहं समीधे ॥१०॥ इळामग्ने पुरुदंसं सनिं
गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजा-
वाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥२५॥

---

॥ ६ ॥ १–११ विश्वामित्रः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥६॥ प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देव-
यंतः । दक्षिणावाड्वाजिनी प्राच्येति हविर्भरंत्यग्नये घृताची
॥१॥ आ रोदसी अपृणा जायमान उत प्र रिक्था अध नु
प्रयज्यो । दिवश्चिदग्ने महिना पृथिव्या वच्यंतां ते वह्नयः सप्त-

अद्यौत् उषसः विऽरोके ॥२॥ अधायि अग्निः मानुषीषु विक्षु अपां
गर्भः मित्रः ऋतेन साधन् आ हर्यतः यजतः सानु अस्थात् अभूत्
ऊं विप्रः हव्यः मतीनां ॥३॥ मित्रः अग्निः भवति यत् संऽइद्धः मि-
त्रः होता वरुणः जातऽवेदाः मित्रः अध्वर्युः इषिरः दमूनाः मित्रः
सिंधूनां उत पर्वतानां ॥४॥ पाति प्रियं रिपः अग्रं पदं वेः पाति
यह्वः चरणं सूर्यस्य पाति नाभा सप्तऽशीर्षाणं अग्निः पाति देवा-
नां उपऽमादं ऋष्वः ॥५॥२४॥ ऋभुः चक्रे ईड्यं चारु नाम विश्वा-
नि देवः वयुनानि विद्वान् ससस्य चर्म घृतऽवत् पदं वेः तत् इत्
अग्निः रक्षति अप्रऽयुच्छन् ॥६॥ आ योनिं अग्निः घृतऽवंतं अ-
स्थात् पृथुऽप्रगानं उशंतं उशानः दीद्यानः शुचिः ऋष्वः पावकः
पुनःऽपुनः मातरा नव्यसी॰ कः॰ ॥७॥ सद्यः जातः ओषधीभिः
ववक्षे यदि वर्धंति प्रऽस्वः घृतेन आपःऽइव प्रऽवता शुंभमानाः
उरुष्यत् अग्निः पित्रोः उपऽस्थे ॥८॥ उत् ऊं स्तुतः संऽइधा यह्वः
अद्यौत् वर्ष्मन् दिवः अधि नाभा पृथिव्याः मित्रः अग्निः ईड्यः
मातरिश्वा आ दूतः वक्षत् यजथाय देवान् ॥९॥ उत् अस्तंभीत्
संऽइधा नाकं ऋष्वः अग्निः भवन् उत्ऽतमः रोचनानां यदि भृ-
गुऽभ्यः परि मातरिश्वा गुहा संतं हव्यऽवाहं संऽईधे ॥१०॥ इळां
अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध स्यात् नः
सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे ॥११॥२५॥

---

॥६॥ प्र कारवः मनना वच्यमानाः देवद्रीचीं नयत देवऽयंतः
दक्षिणाऽवाट् वाजिनी प्राची एति हविः भरंती अग्नये घृताची
॥१॥ आ रोदसी॰ अपृणाः जायमानः उत प्र रिक्थाः अध नु प्र-
ऽयज्यो॰ दिवः चित् अग्ने महिना पृथिव्याः वच्यंतां ते वह्नयः सप्त-

जिह्वाः ॥२॥ द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयंते दमाय। यदी विशो मानुषीर्देवयंतीः प्रयस्वतीरीळते शुक्रमर्चिः ॥३॥ महान्त्सधस्थे ध्रुव आ निषत्तोऽंतर्द्यावा माहिने हर्यमाणः। आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ॥४॥ व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततंथ। त्वं दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनां ॥५॥२६॥ ऋतस्य वा केशिना योग्याभिर्घृतस्नुवा रोहिता धुरि धिष्व। अथा वह देवान्देव विश्वान्त्स्वध्वरा कृणुहि जातवेदः ॥६॥ दिवश्चिदा ते रुचयंत रोका उषो विभातीरनु भासि पूर्वीः। अपो यदग्न उशधग्वनेषु होतुर्मंद्रस्य पनयंत देवाः ॥७॥ उरौ वा ये अंतरिक्षे मदंति दिवो वा ये रोचने संति देवाः। ऊमा वा ये सुहवासो यजत्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥८॥ ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥९॥ स होता यस्य रोदसी चिदुर्वी यज्ञंयज्ञमभि वृधे गृणीतः। प्राची अध्वरेव तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥१०॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥२७॥८॥२॥

---

॥ ७ ॥ १-११ विश्वामित्रः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥७॥ प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः। परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥१॥ दिवक्षसो धेनवो वृष्णो अश्वा देवीरा तस्थौ मधुमद्वहंतीः। ऋतस्य त्वा सदसि क्षेमयंतं पर्येका चरति वर्त-

ऽजिह्वाः ॥२॥ द्यौः च त्वा पृथिवी यज्ञियासः नि होतारं सादयंते दमाय यदि विशः मानुषीः देवऽयंतीः प्रयस्वतीः ईळते शुक्रं अर्चिः ॥३॥ महान् सधऽस्थे ध्रुवः आ निऽसत्तः अंतः द्यावा माहिने हर्यमाणः आस्क्रे सऽपत्नी॰ अजरे॰ अमृक्ते॰ सबःऽदुघे॰ उरुऽगायस्य धेनू॰ ॥४॥ व्रता ते अग्ने महतः महानि तव क्रत्वा रोदसी॰ आ ततंथ त्वं दूतः अभवः जायमानः त्वं नेता वृषभ चर्षणीनां ॥५॥२६॥ ऋतस्य वा केशिना योग्याभिः घृतऽस्नुवा रोहिता धुरि धिष्व अथ आ वह देवान् देव विश्वान् सुऽअध्वरा कृणुहि जातऽवेदः ॥६॥ दिवः चित् आ ते रुचयंत रोकाः उषः विऽभातीः अनु भासि पूर्वीः अपः यत् अग्ने उशधक् वनेषु होतुः मंद्रस्य पनयंत देवाः ॥७॥ उरौ वा ये अंतरिक्षे मदंति दिवः वा ये रोचने संति देवाः ऊमाः वा ये सुऽहवासः यजत्राः आऽयेमिरे रथ्यः अग्ने अश्वाः ॥८॥ आ एभिः अग्ने सऽरथं याहि अर्वाङ् नानाऽरथं वा विऽभवः हि अश्वाः पत्नीऽवतः त्रिंशतं त्रीन् च देवान् अनुऽस्वधं आ वह मादयस्व ॥९॥ सः होता यस्य रोदसी॰ चित् उर्वी॰ यज्ञंऽयज्ञं अभि वृधे गृणीतः प्राची॰ अध्वराऽइव तस्थतुः सुऽमेके॰ ऋतऽवरी॰ ऋतऽजातस्य सत्ये॰ ॥१०॥ इळां अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध स्यात् नः सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे॰ ॥११॥२७॥८॥२॥

---

॥७॥ प्र ये आरुः शितिऽपृष्ठस्य धासेः आ मातरा विविशुः सप्त वाणीः परिऽक्षिता पितरा सं चरेते॰ प्र सर्स्राते॰ दीर्घं आयुः प्रऽयक्षे ॥१॥ दिवक्षसः धेनवः वृष्णः अश्वाः देवीः आ तस्थौ मधुऽमत् वहंतीः ऋतस्य त्वा सदसि क्षेमऽयंतं परि एका चरति वर्ते॰

निं गोः ॥२॥ आ सीमरोहत्सुयमा भवंतीः पतिश्चिकित्वान्रयिविद्रयीणां। प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत्पुरुधप्रतीकः ॥३॥ महिं त्वाष्ट्रमूर्जयंतीरजुर्यं स्तभूयमानं वहतो वहंति। व्यंगेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश ॥४॥ जानंति वृष्णो अरुषस्य शेवमुत ब्रध्नस्य शासने रणंति। दिवोरुचः सुरुचो रोचमाना इळा येषां गण्या माहिना गीः ॥५॥१॥ उतो पितृभ्यां प्रविदानु घोषं महो महद्भ्यामनयंत शूषं। उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम जरितुर्ववक्ष ॥६॥ अध्वर्युभिः पंचभिः सप्त विप्राः प्रियं रक्षंते निहितं पदं वेः। प्रांचो मदंत्युक्षणो अजुर्या देवा देवानामनु हि व्रता गुः ॥७॥ दैव्या होतारा प्रथमा न्यृंजे सप्त पृक्षासः स्वधया मदंति। ऋतं शंसंत ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः ॥८॥ वृषायंते महे अत्याय पूर्वीर्वृष्णे चित्राय रश्मयः सुयामाः। देव होतर्मंद्रतरश्चिकित्वान्महो देवान्रोदसी एह वक्षि ॥९॥ पृक्षप्रयजो द्रविणः सुवाचः सुकेतव उषसो रेवदूषुः। उतो चिदग्ने महिना पृथिव्याः कृतं चिदेनः सं महे दशस्य ॥१०॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥११॥२॥

॥ ८ ॥ १–११ विश्वामित्रः ॥ १–५ यूपः। ६.७.९.१० यूपाः। ८ विश्वे देवा यूपा वा ॥ ११ छिन्नयूपस्य मूलभूतः स्थाणुः ॥ १.२.४–६.८–११ त्रिष्टुप्। ३.७ अनुष्टुप् ॥

॥८॥ अंजंति त्वामध्वरे देवयंतो वनस्पते मधुना दैव्येन। यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥१॥ समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरं। आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभ-

नि गोः ॥२॥ आ सीं अरोहत् सुऽयमाः भवंतीः पतिः चिकित्वान् रयिऽवित् रयीणां प्र नीलंऽपृष्ठः अतसस्य धासेः ताः अवासयत् पुरुधऽप्रतीकः ॥३॥ महि त्वाष्ट्रं ऊर्जयंतीः अजुर्यं स्तभुऽयमानं वहतः वहंति वि अंगेभिः दिद्युतानः सधऽस्थे एकांऽइव रोदसी आ विवेश ॥४॥ जानंति वृष्णः अरुषस्य शेवं उत ब्रध्नस्य शासने रणंति दिवःऽरुचः सुऽरुचः रोचमानाः इळाः येषां गण्याः माहिना गीः ॥५॥१॥ उतो पितृऽभ्यां प्रऽविदा अनु घोषं महः महत्ऽभ्यां अनयंत शूषं उक्षा ह यत्र परि धानं अक्तोः अनु स्वं धाम जरितुः ववक्ष ॥६॥ अध्वर्युऽभिः पंचऽभिः सप्त विप्राः प्रियं रक्षंते निऽहितं पदं वेः॰ प्रांचः मदंति उक्षणः अजुर्याः देवाः देवानां अनु हि व्रताः गुः॰ ॥७॥ दैव्या होतारा प्रथमा नि ऋंजे सप्त पृक्षासः स्वधया मदंति ऋतं शंसंतः ऋतं इत् ते आहुः अनु व्रतं व्रतऽपाः दीध्यानाः ॥८॥ वृषऽयंति महे अत्याय पूर्वीः वृष्णे चित्राय रश्मयः सुऽयामाः देव होतः मंद्रऽतरः चिकित्वान् महः देवान् रोदसी आ इह वक्षि ॥९॥ पृक्षऽप्रयजः द्रविणः सुऽवाचः सुऽकेतवः उषसः रेवत् ऊषुः उतो चित् अग्ने महिना पृथिव्याः कृतं चित् एनः सं महे दशस्य ॥१०॥ इळां अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध स्यात् नः सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे ॥११॥२॥

---

॥८॥ अंजंति त्वां अध्वरे देवऽयंतः वनस्पते मधुना दैव्येन यत् ऊर्ध्वः तिष्ठाः द्रविणा इह धत्तात् यत् वा क्षयः मातुः अस्याः उपऽस्थे ॥१॥ संऽइद्धस्य श्रयमाणः पुरस्तात् ब्रह्म वन्वानः अजरं सुऽवीरं आरे अस्मत् अमतिं बाधमानः उत् श्रयस्व महते सौभ-

गाय ॥२॥ उच्छ्र्यस्व वनस्पते वर्ष्मन्पृथिव्या अधि। सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥३॥ युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः। तं धीरासः कवय उन्नयंति स्वाध्यो३ मनसा देवयंतः ॥४॥ जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्धमानः। पुनंति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचं ॥५॥३॥ यान्वो नरो देवयंतो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष। ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषंतु रत्नं ॥६॥ ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः। ते नो व्यंतु वार्यं देवत्रा क्षेत्रसाधसः ॥७॥ आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी अंतरिक्षं। सजोषसो यज्ञमवंतु देवा ऊर्ध्वं कृण्वंत्वध्वरस्य केतुं ॥८॥ हंसा इव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः। उन्नीयमानाः कविभिः पुरस्ताद्देवा देवानामपि यंति पाथः ॥९॥ शृंगाणीवेच्छृंगिणां सं ददृश्रे चषालवंतः स्वरवः पृथिव्यां। वाघद्भिर्वा विहवे श्रोषमाणा अस्माँ अवंतु पृतनाज्येषु ॥१०॥ वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम। यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥११॥४॥

---

॥ ९ ॥ १–९ विश्वामित्रः ॥ अग्निः ॥ १–८ बृहती । ९ त्रिष्टुप् ॥

॥९॥ सखायस्त्वा ववृमहे देवं मर्तास ऊतये। अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसं ॥१॥ कायमानो वना त्वं यन्मातॄरजगन्नपः। न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥२॥ अति तृष्टं ववक्षिथाथैव सुमना असि। प्रप्रान्ये यंति पर्यन्य आसते येषां सख्ये असि श्रितः ॥३॥ ईयि-

गाय ॥२॥ उत् श्रयस्व वनस्पते वर्ष्मन् पृथिव्याः अधि सुऽमिती मीयमानः वर्चः धाः यज्ञऽवाहसे ॥३॥ युवा सुऽवासाः परिऽवीतः आ अगात् सः ऊं श्रेयान् भवति जायमानः तं धीरासः कवयः उत् नयंति सुऽआध्यः मनसा देवऽयंतः ॥४॥ जातः जायते सुदिनऽत्वे अह्नां सऽमर्ये आ विदथे वर्धमानः पुनंति धीराः अपसः मनीषा देवऽयाः विप्रः उत् इयर्ति वाचं ॥५॥३॥ यान् वः नरः देवऽयंतः निऽमिम्युः वनस्पते स्वऽधितिः वा ततक्ष ते देवासः स्वरवः तस्थिऽवांसः प्रजाऽवत् असे दिधिषंतु रत्नं ॥६॥ ये वृक्णासः अधि क्षमि निऽमितासः यतऽस्रुचः ते नः व्यंतु वार्यं देवऽत्रा क्षेत्रऽसाधसः ॥७॥ आदित्याः रुद्राः वसवः सुऽनीथाः द्यावाक्षामा पृथिवी अंतरिक्षं सऽजोषसः यज्ञं अवंतु देवाः ऊर्ध्वं कृण्वंतु अध्वरस्य केतुं ॥८॥ हंसाःऽइव श्रेणिऽशः यतानाः शुक्रा वसानाः स्वरवः नः आ अगुः उतऽनीयमानाः कविऽभिः पुरस्तात् देवाः देवानां अपि यंति पाथः ॥९॥ शृंगाणिऽइव इत् शृंगिणां सं ददृश्रे चषालऽवंतः स्वरवः पृथिव्यां वाघतऽभिः वा विऽहवे श्रोषमाणाः अस्मान् अवंतु पृतनाज्येषु ॥१०॥ वनस्पते शतऽवल्शः वि रोह सहस्रऽवल्शाः वि वयं रुहेम यं त्वां अयं स्वऽधितिः तेजमानः प्रऽनिनाय महते सौभगाय ॥ ११ ॥ ४ ॥

---

॥९॥ सखायः त्वा ववृमहे देवं मर्तासः ऊतये अपां नपातं सुऽभगं सुऽदीदितिं सुऽप्रतूर्तिं अनेहसं ॥१॥ कायमानः वना त्वं यत् मातॄः अजगन् अपः न तत् ते अग्ने प्रऽमृषे निऽवर्तनं यत् दूरे सन् इह अभवः ॥२॥ अति तृष्टं ववक्षिथ अथ एव सुऽमनाः असि प्रऽप्र अन्ये यंति परि अन्ये आसते येषां सख्ये असि श्रितः ॥३॥ ईयि-

वांसमति स्रिधः शश्वतीरति सश्चतः। अन्वीमविंदन्निचिरासो अद्रुहो ऽप्सु सिंहमिव श्रितं ॥४॥ ससृवांसमिव त्मनाग्निमित्था तिरोहितं। ऐनं नयन्मातरिश्वा परावतो देवेभ्यो मथितं परि॥५॥५॥ तं त्वा मर्ता अगृभ्णत देवेभ्यो हव्यवाहन। विश्वान्यद्यज्ञाँ अभिपासि मानुष तव क्रत्वा यविष्ठ्य ॥६॥ तद्भद्रं तव दंसना पाकाय चिच्छदयति। त्वां यदग्ने पशवः समासते समिद्धमपिशर्वरे॥७॥ आ जुहोता स्वध्वरं शीरं पावकशोचिषं। आशुं दूतमजिरं प्रत्नमीड्यं श्रुष्टी देवं सपर्यत ॥८॥ त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्। औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयंत ॥९॥६॥

---

॥१०॥ १-९ विश्वामित्रः॥ अग्निः॥ उष्णिक्॥

॥१०॥ त्वामग्ने मनीषिणः सम्राजं चर्षणीनां। देवं मर्तास इंधते समध्वरे॥१॥ त्वां यज्ञेष्वृत्विजमग्ने होतारमीळते। गोपा ऋतस्य दीदिहि स्वे दमे॥२॥ स घा यस्ते ददाशति समिधा जातवेदसे। सो अग्ने धत्ते सुवीर्यं स पुष्यति ॥३॥ स केतुरध्वराणामग्निर्देवेभिरा गमत्। अंजानः सप्त होतृभिर्हविष्मते॥४॥ प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत्। विपां ज्योतींषि बिभ्रते न वेधसे॥५॥७॥ अग्निं वर्धंतु नो गिरो यतो जायत उक्थ्यः। महे वाजाय द्रविणाय दर्शतः॥६॥ अग्ने यजिष्ठो अध्वरे देवान्देवयते यज। होता मंद्रो वि राजस्यति स्रिधः॥७॥ स नः पावक दीदिहि द्युमदस्मे सुवीर्यं। भवा स्तोतृभ्यो अंतमः स्वस्तये॥८॥ तं त्वा विप्रा विपन्यवो जागृवांसः समिंधते। हव्यवाहममर्त्यं सहोवृधं ॥९॥८॥

ऽवांसं अति स्रिधः शश्वतीः अति सश्चतः अनु ईं अविंदन् नि-ऽचिरासः अद्रुहः अप्ऽसु सिंहंऽइव श्रितं ॥४॥ ससृवांसंऽइव त्मना अग्निं इत्था तिरःऽहितं आ एनं नयत् मातरिश्वा पराऽवतः देवेभ्यः मथितं परि ॥५॥५॥ तं त्वा मर्ताः अगृभ्णत देवेभ्यः हव्य-ऽवाहन विश्वान् यत् यज्ञान् अभिऽपासि मानुष तव क्रत्वा य-विष्ठ्य ॥६॥ तत् भद्रं तव दंसना पाकाय चित् छदयति त्वां यत् अग्ने पशवः संऽआसते संऽइद्धं अपिऽशर्वरे ॥७॥ आ जुहोत सुऽअ-ध्वरं शीरं पावकऽशोचिषं आशुं दूतं अजिरं प्रत्नं ईड्यं श्रुष्टी देवं सपर्यत ॥८॥ त्रीणि शता त्री सहस्राणि अग्निं त्रिंशत् च देवाः नव च असपर्यन् औक्षन् घृतैः अस्तृणन् बर्हिः अस्मै आत् इत् होतारं नि असादयंत ॥९॥६॥

---

॥१०॥ त्वां अग्ने मनीषिणः संऽराजं चर्षणीनां देवं मर्तासः इं-धते सं अध्वरे ॥१॥ त्वां यज्ञेषु ऋत्विजं अग्ने होतारं ईळते गोपाः ऋतस्य दीदिहि स्वे दमे ॥२॥ सः घ यः ते ददाशति संऽइधा जात-ऽवेदसे सः अग्ने धत्ते सुऽवीर्यं सः पुष्यति ॥३॥ सः केतुः अध्वराणां अग्निः देवेभिः आ गमत् संजानः सप्त होतृऽभिः हविष्मते ॥४॥ प्र होत्रे पूर्व्यं वचः अग्नये भरत बृहत् विपां ज्योतींषि बिभ्रते न वेधसे ॥५॥७॥ अग्निं वर्धंतु नः गिरः यतः जायते उक्थ्यः महे वाजाय द्र-विणाय दर्शतः ॥६॥ अग्ने यजिष्ठः अध्वरे देवान् देवऽयते यज हो-ता मंद्रः वि राजसि अति स्रिधः ॥७॥ सः नः पावक दीदिहि द्यु-ऽमत् अस्मे सुऽवीर्यं भव स्तोतृऽभ्यः अंतमः स्वस्तये ॥८॥ तं त्वा विप्राः विपन्यवः जागृऽवांसः सं इंधते हव्यऽवाहं अमर्त्यं सहः-ऽवृधं ॥९॥८॥

॥ ११ ॥ १–९ विश्वामित्रः ॥ अग्निः ॥ गायत्री ॥

॥११॥ अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः। स वेद यज्ञमानुषक् ॥१॥ स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः। अग्निर्धिया समृण्वति ॥२॥ अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः। अर्थं ह्यस्य तरणि ॥३॥ अग्निं सूनुं सनश्रुतं सहसो जातवेदसं। वह्निं देवा अकृण्वत ॥४॥ अदाभ्यः पुरएता विशामग्निर्मानुषीणां। तूर्णी रथः सदा नवः ॥५॥९॥ साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः। अग्निस्तुविश्रवस्तमः ॥६॥ अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः। क्षयं पावकशोचिषः ॥७॥ परि विश्वानि सुधिताग्नेरश्याम मन्मभिः। विप्रासो जातवेदसः ॥८॥ अग्ने विश्वानि वार्या वाजेषु सनिषामहे। त्वे देवास एरिरे ॥९॥१०॥

॥ १२ ॥ १–९ विश्वामित्रः ॥ इंद्राग्नी ॥ गायत्री ॥

॥१२॥ इंद्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यं। अस्य पातं धियेषिता ॥१॥ इंद्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः। अया पातमिमं सुतं ॥२॥ इंद्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृंपतां ॥३॥ तोशा वृत्रहणा हुवे सजित्वानापराजिता। इंद्राग्नी वाजसातमा ॥४॥ प्र वामर्चत्युक्थिनो नीथाविदो जरितारः। इंद्राग्नी इष आ वृणे ॥५॥११॥ इंद्राग्नी नवतिं पुरो दासपत्नीरधूनुतं। साकमेकेन कर्मणा ॥६॥ इंद्राग्नी अपसस्पर्युप प्र यंति धीतयः। ऋतस्य पथ्या३ अनु ॥७॥ इंद्राग्नी तविषाणि वां सधस्थानि प्रयांसि च। युवोरप्तूर्यं हितं ॥८॥ इंद्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यं ॥९॥१२॥१॥

॥ १३ ॥ १–७ ॥ ऋषभो वैश्वामित्रः ॥ अग्निः ॥

॥१३॥ प्र वो देवायाग्नये ब

॥११॥ अग्निः होता पुरःऽहितः अध्वरस्य विऽचर्षणिः सः वेद यज्ञं आनुषक् ॥१॥ सः हव्यऽवाट् अमर्त्यः उशिक् दूतः चनःऽहितः अग्निः धिया सं ऋण्वति ॥२॥ अग्निः धिया सः चेतति केतुः यज्ञस्य पूर्व्यः अर्थं हि अस्य तरणि ॥३॥ अग्निं सूनुं सनऽश्रुतं सहसः जातऽवेदसं वह्निं देवाः अकृण्वत ॥४॥ अदाभ्यः पुरःऽएता विशां अग्निः मानुषीणां तूर्णिः रथः सदा नवः ॥५॥९॥ सह्वान् विश्वाः अभिऽयुजः क्रतुः देवानां अमृक्तः अग्निः तुविश्रवःऽतमः ॥६॥ अभि प्रयांसि वाहसा दाश्वान् अश्नोति मर्त्यः क्षयं पावकऽशोचिषः ॥७॥ परि विश्वानि सुऽधिता अग्नेः अश्याम मन्मऽभिः विप्रासः जातऽवेदसः ॥८॥ अग्ने विश्वानि वार्या वाजेषु सनिषामहे त्वे देवासः आ ईरिरे ॥ ९ ॥ १० ॥

---

॥१२॥ इंद्राग्नी आ गतं सुतं गीःऽभिः नभः वरेण्यं अस्य पातं धिया इषिता ॥१॥ इंद्राग्नी जरितुः सचा यज्ञः जिगाति चेतनः अया पातं इमं सुतं ॥२॥ इंद्रं अग्निं कविऽछदा यज्ञस्य जूत्या वृणे ता सोमस्य इह तृंपतां ॥३॥ तोशा वृत्रऽहना हुवे सऽजित्वाना अपराऽजिता इंद्राग्नी वाजऽसातमा ॥४॥ प्र वां अर्चति उक्थिनः नीथऽविदः जरितारः इंद्राग्नी इषः आ वृणे ॥५॥११॥ इंद्राग्नी नवतिं पुरः दासऽपत्नीः अधूनुतं साकं एकेन कर्मणा ॥६॥ इंद्राग्नी अपसः परि उप प्र यंति धीतयः ऋतस्य पथ्याः अनु ॥७॥ इंद्राग्नी तविषाणि वां सधऽस्थानि प्रयांसि च युवोः अप्ऽतूर्यं हितं ॥८॥ इंद्राग्नी रोचना दिवः परि वाजेषु भूषथः तत् वां चेति प्र वीर्यं ॥ ९ ॥ १२ ॥ १ ॥

---

त्वं अग्नये बर्हिषं अर्चे अस्मै गमंत देवेभिः आ

स नो यजिष्ठो बर्हिरा संदत् ॥१॥ ऋतावा यस्य रोदसी दक्षं सचंत ऊतयः । हविष्मंतस्तमीळते तं सनिष्यंतोऽवसे ॥२॥ स यंता विप्र एषां स यज्ञानामथा हि षः । अग्निं तं वो दुवस्यत दाता यो वनिता मघं ॥३॥ स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा । यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा ॥४॥ दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः । ऋक्वाणो अग्निमिंधते होतारं विश्पतिं विशां ॥५॥ उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥६॥ नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितं ॥७॥१३॥

---

॥ १४ ॥ १-७ ऋषभो वैश्वामित्रः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१४॥ आ होता मंद्रो विदथान्यस्थात्सत्यो यज्वा कवितमः स वेधाः । विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत् ॥१॥ अयामि ते नमउक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः । विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र ॥२॥ द्रवतां त उषसा वाजयंती अग्ने वातस्य पथ्याभिरच्छ । यत्सीमंजंति पूर्व्यं हविर्भिरा वंधुरेव तस्थतुर्दुरोणे ॥३॥ मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् । यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयंत्सूर्यो नॄन् ॥४॥ वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य । यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥५॥ त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यंत्यूतयो वि वाजाः । त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने ॥६॥ तुभ्यं दक्ष कविक्रतो यानीमा देव मर्तासो अध्वरे

ः नः यजिष्ठः बर्हिः आ सदत् ॥ १ ॥ घृतऽवा यस्य रोदसी दक्षं
र्चंति ऊतयः हविष्मंतः तं ईळते तं सनिष्यंतः अवसे ॥ २ ॥ सः यं-
ा विप्रः एषां सः यज्ञानां अथ हि सः अग्निं तं वः दुवस्यत दाता
ः वनिता मघं ॥ ३ ॥ सः नः शर्माणि वीतये अग्निः यच्छतु शंऽतमा
तः नः पृष्णऽवत् वसु दिवि क्षितिऽभ्यः अप्ऽसु आ ॥ ४ ॥ दीदिऽवां-
अपूर्व्यं वस्वीभिः अस्य धीतिऽभिः ऋक्वाणः अग्निं इंधते होतारं
वेश्पतिं विशां ॥ ५ ॥ उत नः ब्रह्मन् अविषः उक्थेषु देवऽहूतमः
नः शोच मरुत्ऽवृधः अग्ने सहस्रऽसातमः ॥ ६ ॥ नु नः रास्व स-
स्रऽवत् तोकऽवत् पुष्टिऽमत् वसु द्युऽमत् अग्ने सुऽवीर्यं वर्षिष्ठं
अनुपऽक्षितं ॥ ७ ॥ १३ ॥

---

॥ १४ ॥ आ होता मंद्रः विदथानि अस्थात् सत्यः यज्वा कवि-
ऽतमः सः वेधाः विद्युत्ऽरथः सहसः पुत्रः अग्निः शोचिःऽकेशः
पृथिव्यां पाजः अश्रेत् ॥ १ ॥ अयामि ते नमःऽउक्तिं जुषस्व ऋत-
वः तुभ्यं चेतते सहस्वः विद्वान् आ वक्षि विदुषः नि सत्सि मध्ये
आ बर्हिः ऊतये यजत्र ॥ २ ॥ द्रवतां ते उषसा वाजयंती अग्ने वा-
तस्य पथ्याभिः अच्छ यत् सीं अंजंति पूर्व्यं हविःऽभिः आ वंधुराऽ-
इव तस्थतुः दुरोणे ॥ ३ ॥ मित्रः च तुभ्यं वरुणः सहस्वः अग्ने विश्वे
मरुतः सुम्नं अर्चन् यत् शोचिषा सहसः पुत्र तिष्ठाः अभि क्षितीः
प्रथयन् सूर्यः नॄन् ॥ ४ ॥ वयं ते अद्य ररिम हि कामं उत्तानऽहस्ताः
नमसा उपऽसद्य यजिष्ठेन मनसा यक्षि देवान् अस्रेधता मन्मना
विप्रः अग्ने ॥ ५ ॥ त्वत् हि पुत्र सहसः वि पूर्वीः देवस्य यंति ऊ-
तयः वि वाजाः त्वं देहि सहस्रिणं रयिं नः अद्रोघेण वचसा सत्यं
अग्ने ॥ ६ ॥ तुभ्यं दक्ष कविऽक्रतो॰ यानि इमा देव मर्तासः अध्वरे

अकर्मे। त्वं विश्वस्य सुरथस्य बोधि सर्वं तदमे अमृत स्वदेह ॥ ७ ॥ १४ ॥

---

॥ १५ ॥ १–७ उत्कीलः कात्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१५॥ वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः। सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥१॥ त्वं नो अस्या उषसो व्युष्टौ त्वं सूर उदिते बोधि गोपाः। जन्मेव नित्यं तनयं जुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥२॥ त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि। वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥३॥ अषाळ्हो अग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान्। यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥४॥ अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः। रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥५॥ प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे। देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥६॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ७ ॥ १५ ॥

---

॥ १६ ॥ १–६ उत्कीलः कात्यः ॥ अग्निः ॥ १.३.५ बृहती। २.४.६ सतोबृहती ॥

॥ १६ ॥ अयमग्निः सुवीर्यस्येशे महः सौभगस्य। राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानां ॥ १ ॥ इमं नरो मरुतः सश्चता वृधं यस्मिन्रायः शेवृधासः। अभि ये संति पृतनासु दूढ्यो विश्वाहा शत्रुमादभुः ॥ २ ॥ स त्वं नो रायः शिशीहि मीढ्वो अग्ने सुवीर्यस्य। तुविद्युम्न वर्षिष्ठस्य प्रजावतोऽनमीवस्य

अर्कमे त्वं विश्वस्य सुऽरथस्य बोधि सर्वं तत् अग्ने अमृत स्वद इह ॥ ७ ॥ १४ ॥

---

॥ १५ ॥ वि पाजसा पृथुना शोशुचानः बाधस्व द्विषः रक्षसः अमीवाः सुऽशर्मणः बृहतः शर्मणि स्यां अग्नेः अहं सुऽहवस्य प्रऽनीतौ ॥ १ ॥ त्वं नः अस्याः उषसः विऽउष्टौ त्वं सूरे उत्ऽइते बोधि गोपाः जन्मऽइव नित्यं तनयं जुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥ २ ॥ त्वं नृऽचक्षाः वृषभ अनु पूर्वीः कृष्णासु अग्ने अरुषः वि भाहि वसो॰ नेषि च पर्षि च अति अंहः कृधि नः राये उशिजः यविष्ठ ॥ ३ ॥ अषाळ्हः अग्ने वृषभः दिदीहि पुरः विश्वाः सौभगा संऽजिगीवान् यज्ञस्य नेता प्रथमस्य पायोः जातऽवेदः बृहतः सुऽप्रनीते ॥ ४ ॥ अच्छिद्रा शर्म जरितः पुरूणि देवान् अच्छ दीद्यानः सुऽमेधाः रथः न सस्निः अभि वक्षि वाजं अग्ने त्वं रोदसी॰ नः सुऽमेके॰ ॥ ५ ॥ प्र पीपय वृषभ जिन्व वाजान् अग्ने त्वं रोदसी॰ नः सुऽदोघे॰ देवेभिः देव सुऽरुचा रुचानः मा नः मर्तस्य दुःऽमतिः परि स्थात् ॥ ६ ॥ इळां अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध स्यात् नः सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे॰ ॥ ७ ॥ १५ ॥

---

॥ १६ ॥ अयं अग्निः सुऽवीर्यस्य ईशे महः सौभगस्य रायः ईशे सुऽअपत्यस्य गोऽमतः ईशे वृत्रऽहथानां ॥ १ ॥ इमं नरः मरुतः सश्चत वृधं यस्मिन् रायः शेऽवृधासः अभि ये संति पृतनासु दुःऽध्यः विश्वाहा शत्रुं आऽदभुः ॥ २ ॥ सः त्वं नः रायः शिशीहि मीढ्वः अग्ने सुऽवीर्यस्य तुविऽद्युम्न वर्षिष्ठस्य प्रजाऽवतः अनमीवस्य

शुष्मिणः॥३॥ चक्रिर्यो विश्वा भुवनाभि सासहिश्चक्रिर्देवेष्वा दुवः। आ देवेषु यतत आ सुवीर्य आ शंस उत नृणां ॥४॥ मा नो अग्नेऽमतये मावीरतायै रीरधः। मागोतायै सहसस्पुत्र मा निदेऽप द्वेषांस्या कृधि ॥५॥ शग्धि वाजस्य सुभग प्रजावतोऽग्ने बृहतो अध्वरे। सं राया भूयसा सृज मयोभुना तुविद्युम्न यशस्वता ॥६॥१६॥

॥१७॥ १–५ कतो वैश्वामित्रः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१७॥ समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः। शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो अग्निर्यजथाय देवान् ॥१॥ यथायजो होत्रमग्ने पृथिव्या यथा दिवो जातवेदश्चिकित्वान्। एवानेन हविषा यक्षि देवान्मनुष्वद्यज्ञं प्र तिरेममद्य ॥२॥ त्रीण्यायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने। ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥३॥ अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः। त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिं ॥४॥ यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शंभुः। तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥५॥१७॥

॥१८॥ १–५ कतो वैश्वामित्रः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१८॥ भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः। पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥१॥ तपो ष्वग्ने अन्तराँ अमित्रान्तपा शंसमररुषः परस्य। तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासः ॥२॥ इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं

शुष्मिणः ॥३॥ चक्रिः यः विश्वा भुवना अभि ससहिः चक्रिः देवे-
षु आ दुवः आ देवेषु यतते आ सुऽवीर्ये आ शंसे उत नृणां ॥४॥ मा
नः अग्ने अमतये मा अवीरतायै रीरधः मा अगोतायै सहसः पुत्र
मा निदे अप द्वेषांसि आ कृधि ॥५॥ शग्धि वाजस्य सुऽभग प्रजा-
ऽवतः अग्ने बृहतः अध्वरे सं राया भूयसा सृज मयःऽभुना तुवि-
ऽद्युम्न यशस्वता ॥ ६ ॥ १६ ॥

---

॥ १७ ॥ संऽइध्यमानः प्रथमा अनु धर्म सं अक्तुऽभिः अज्यते
विश्वऽवारः शोचिःऽकेशः घृतऽनिर्निक् पावकः सुऽयज्ञः अग्निः
यजथाय देवान् ॥१॥ यथा अयजः होत्रं अग्ने पृथिव्याः यथा दिवः
जातऽवेदः चिकित्वान् एव अनेन हविषा यक्षि देवान् मनुष्वत्
यज्ञं प्र तिर इमं अद्य ॥२॥ त्रीणि आयूंषि तव जातऽवेदः तिस्रः
आऽजानीः उषसः ते अग्ने ताभिः देवानां अवः यक्षि विद्वान्
अथ भव यजमानाय शं योः ॥३॥ अग्निं सुऽदीतिं सुऽदृशं गृणंतः
नमस्यामः त्वा ईड्यं जातऽवेदः त्वां दूतं अरतिं हव्यऽवाहं देवाः
अकृण्वन् अमृतस्य नाभिं ॥४॥ यः त्वत् होता पूर्वः अग्ने यजीयान्
द्विता च सत्ता स्वधया च शंऽभुः तस्य अनु धर्म प्र यज चिकित्वः
अथ नः धाः अध्वरं देवऽवीतौ ॥ ५ ॥ १७ ॥

---

॥ १८ ॥ भव नः अग्ने सुऽमनाः उपऽइतौ सखाऽइव सख्ये पि-
तराऽइव साधुः पुरुऽद्रुहः हि क्षितयः जनानां प्रति प्रतीचीः दह-
तात् अरातीः ॥१॥ तपो सु अग्ने अंतरान् अमित्रान् तप शंसं
अररुषः परस्य तपो वसो चिकितानः अचित्तान् वि ते तिष्ठंतां
अजराः अयासः ॥२॥ इध्मेन अग्ने इच्छमानः घृतेन जुहोमि हव्यं

तरसे बलाय। यावदीशे ब्रह्मणा वंदमान इमां धियं शतसेयाय देवी ॥३॥ उच्छोचिषा सहसस्पुत्र स्तुतो बृहद्वयः शशमानेषु धेहि। रेवदग्ने विश्वामित्रेषु शं योर्मर्मृज्मा ते तन्वं१भूरि कृत्वः ॥४॥ कृधि रत्नं सुसनितर्धनानां स घेदग्ने भवसि यत्समिद्धः। स्तोतुर्दुरोणे सुभगस्य रेवत्सृप्रा करस्ना दधिषे वपूंषि ॥५॥१८॥

॥१९॥ १-५ गाथी॥ अग्निः॥ त्रिष्टुप्॥

॥१९॥ अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरं। स नो यक्षद्देवताता यजीयान्राये वाजाय वनते मघानि ॥१॥ प्र ते अग्ने हविष्मतीमियर्म्यच्छा सुद्युम्नां रातिनीं घृताचीं। प्रदक्षिणिद्देवतातिमुराणः सं रातिभिर्वसुभिर्यज्ञमश्रेत् ॥२॥ स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः। अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥३॥ भूरीणि हि त्वे दधिरे अनीकाग्ने देवस्य यज्यवो जनासः। स आ वह देवतातिं यविष्ठ शर्धो यदद्य दिव्यं यजासि ॥४॥ यत्त्वा होतारमनजन्मियेधे निषादयंतो यजथाय देवाः। स त्वं नो अग्नेऽवितेह बोध्यधि श्रवांसि धेहि नस्तनूषु ॥५॥१९॥

॥२०॥ १-५ गाथी॥ १.५ विश्वे देवाः। २-४ अग्निः॥ त्रिष्टुप्॥

॥२०॥ अग्निमुषसमश्विना दधिक्रां व्युष्टिषु हवते वह्निरुक्थैः। सुज्योतिषो नः शृण्वंतु देवाः सजोषसो अध्वरं वावशाना ॥१॥ अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः। तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥२॥ अग्ने भूरीणि तव जातवेदो देव स्वधाव

तरसे बलाय यावत् ईशे ब्रह्मणा वंदमानः इमां धियं शतऽसेयाय देवी ॥३॥ उत शोचिषा सहसः पुत्र स्तुतः बृहत् वयः शशमानेषु धेहि रेवत् अग्ने विश्वामित्रेषु शं योः मर्मृज्म ते तन्वं भूरि कृत्वः ॥४॥ कृधि रत्नं सुऽसनितः धनानां सः घ इत् अग्ने भवसि यत् संऽइद्धः स्तोतुः दुरोणे सुऽभगस्य रेवत् सृप्रा करस्ना दधिषे वपूंषि ॥५॥१८॥

---

॥१९॥ अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वऽविदं अमूरं सः नः यक्षत् देवऽताता यजीयान् राये वाजाय वनते मघानि ॥१॥ प्र ते अग्ने हविष्मंतीं इयर्मि अच्छ सुऽद्युम्नां रातिनीं घृताचीं प्रऽदक्षिणित् देवऽतातिं उराणः सं रातिऽभिः वसुऽभिः यज्ञं अश्रेत् ॥२॥ सः तेजीयसा मनसा त्वाऽऊतः उत शिक्ष सुऽअपत्यस्य शिक्षोः अग्ने रायः नृऽतमस्य प्रऽभूतौ भूयाम ते सुऽस्तुतयः च वस्वः ॥३॥ भूरीणि हि त्वे दधिरे अनीका अग्ने देवस्य यज्यवः जनासः सः आ वह देवऽतातिं यविष्ठ शर्धः यत् अद्य दिव्यं यजासि ॥४॥ यत् त्वा होतारं अनजन् मियेधे निऽसादयंतः यजथाय देवाः सः त्वं नः अग्ने अविता इह बोधि अधि श्रवांसि धेहि नः तनूषु ॥५॥१९॥

---

॥२०॥ अग्निं उषसं अश्विना दधिऽक्रां विऽउष्टिषु हवते वह्निः उक्थैः सुऽज्योतिषः नः शृण्वंतु देवाः सऽजोषसः अध्वरं वावशानाः ॥१॥ अग्ने त्री ते वाजिना त्री सधऽस्था तिस्रः ते जिह्वाः ऋतऽजात पूर्वीः तिस्रः ऊं इति ते तन्वः देवऽवाताः ताभिः नः पाहि गिरः अप्रऽयुच्छन् ॥२॥ अग्ने भूरीणि तव जातऽवेदः देव स्वधाऽवः

मृतस्य नाम॑। यावं माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबंधो ॥३॥ अग्निर्नेता भग इव क्षितीनां दैवीनां देव ऋतुपा ऋतावा। स वृत्रहा सनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणंतं ॥४॥ दधिक्रामग्निमुषसं च देवीं बृहस्पतिं सवितारं च देवं। अश्विना मित्रावरुणा भगं च वसून्रुद्राँ आदित्याँ इह हुवे ॥५॥२०॥

॥२१॥ १-५ गाथी ॥ अग्निः ॥ १.४ त्रिष्टुप्। २.३ अनुष्टुप्। ५ विराड्रूपा सतोबृहती ॥

॥२१॥ इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व। स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥१॥ घृतवंतः पावक ते स्तोकाः श्चोतंति मेदसः। स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यं ॥२॥ तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय संत्य। ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥३॥ तुभ्यं श्चोतंत्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥४॥ ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे। श्चोतंति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहि ॥५॥२१॥

॥२२॥ १-५ गाथी ॥ पुरीष्या अग्नयः ॥ १-३.५ त्रिष्टुप्। ४ अनुष्टुप् ॥

॥२२॥ अयं सो अग्निर्यस्मिन्त्सोममिंद्रः सुतं दधे जठरे वावशानः। सहस्रिणं वाजमत्यं न सप्तिं ससवान्त्सन्त्स्तूयसे जातवेदः ॥१॥ अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र। येनांतरिक्षमुर्वाततंथ त्वेषः स भानुरर्णवो नृचक्षाः ॥२॥ अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये। या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठंत आपः ॥३॥ पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः।

अमृतस्य नाम याः च मायाः मायिनां विश्वऽइन्व त्वे पूर्वीः सं-ऽदधुः पृष्टऽबंधो॰ ॥३॥ अग्निः नेता भगःऽइव क्षितीनां दैवीनां देवः ऋतुऽपाः ऋतऽवा सः वृत्रऽहा सनयः विश्वऽवेदाः पर्षत् विश्वा अति दुःऽइता गृणंतं ॥४॥ दधिऽक्रां अग्निं उषसं च देवीं बृहस्पतिं सवितारं च देवं अश्विना मित्रावरुणा भगं च वसून् रु-द्रान् आदित्यान् इह हुवे ॥५॥२०॥

---

॥२१॥ इमं नः यज्ञं अमृतेषु धेहि इमा हव्या जातऽवेदः जुषस्व स्तोकानां अग्ने मेदसः घृतस्य होतः प्र अशान प्रथमः निऽसद्य ॥१॥ घृतऽवंतः पावक ते स्तोकाः श्चोतंति मेदसः स्वऽधर्मन् दे-वऽवीतये श्रेष्ठं नः धेहि वार्यं ॥२॥ तुभ्यं स्तोकाः घृतऽश्चुतः अग्ने विप्राय संत्य ऋषिः श्रेष्ठः सं इध्यसे यज्ञस्य प्रऽअविता भव ॥३॥ तुभ्यं श्चोतंति अध्रिऽगो॰ शचीऽवः स्तोकासः अग्ने मेदसः घृतस्य कविऽशस्तः बृहता भानुना आ अगाः हव्या जुषस्व मेधिर ॥४॥ ओजिष्ठं ते मध्यतः मेदः उत्ऽभृतं प्र ते वयं ददामहे श्चोतंति ते वसो स्तोकाः अधि त्वचि प्रति तान् देवऽशः विहि ॥५॥२१॥

---

॥२२॥ अयं सः अग्निः यस्मिन् सोमं इंद्रः सुतं दधे जठरे वावशा-नः सहस्रिणं वाजं अत्यं न सप्तिं ससऽवान् सन् स्तूयसे जातऽवेदः ॥१॥ अग्ने यत् ते दिवि वर्चः पृथिव्यां यत् ओषधीषु अप्ऽसु आ यजत्र येन अंतरिक्षं उरु आऽततंथ त्वेषः सः भानुः अर्णवः नृ-ऽचक्षाः ॥२॥ अग्ने दिवः अर्णं अच्छ जिगासि अच्छ देवान् ऊचिषे धिष्ण्याः ये याः रोचने परस्तात् सूर्यस्य याः च अवस्तात् उप-ऽतिष्ठंते आपः ॥३॥ पुरीष्यासः अग्नयः प्रवणेभिः सऽजोषसः जु-

षंतां यज्ञमद्रुहोऽनमीवा इषो महीः ॥४॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ५ ॥ २२ ॥

॥२३॥ १–५ देवश्रवा देववातश्च भारतौ ॥ अग्निः ॥ १.२.४.५ त्रिष्टुप् ॥ ३ सतोबृहती ॥

॥ २३ ॥ निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता । जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे अमृतं जातवेदाः ॥१॥ अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षं । अग्ने वि पश्य बृहताभि रायेषां नो नेता भवतादनु द्यून् ॥२॥ दश क्षिपः पूर्व्यं सीमजीजनन्सुजातं मातृषु प्रियं । अग्निं स्तुहि दैववातं देवश्रवो यो जनानामसद्वशी ॥३॥ नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नां । दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि ॥४॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ५ ॥ २३ ॥

॥ २४ ॥ १–५ विश्वामित्रः ॥ अग्निः ॥ १ अनुष्टुप् । २–४ गायत्री ॥

॥२४॥ अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसे ॥१॥ अग्न इळा समिध्यसे वीतिहोत्रो अमर्त्यः । जुषस्व सू नो अध्वरं ॥२॥ अग्ने द्युम्नेन जागृवे सहसः सूनवाहुत । एदं बर्हिः सदो मम ॥३॥ अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिरः । यज्ञेषु ये उ चायवः ॥४॥ अग्ने दा दाशुषे रयिं वीरवंतं परीणसं । शिशीहि नः सूनुमतः ॥ ५ ॥ २४ ॥

॥ २५ ॥ १–५ विश्वामित्रः ॥ १–३.५ अग्निः । ४ इन्द्राग्नी ॥ विराट् ॥

॥२५॥ अग्ने दिवः सूनुरसि प्रचेतास्तना पृथिव्या उत विश्ववेदाः । ऋधग्देवाँ इह यजा चिकित्वः ॥ १ ॥ अग्निः सनोति

पंतां यज्ञं अदुहः अनमीवाः इषः महीः ॥४॥ इळां अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध स्यात् नः सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे ॥५॥२२॥

---

॥२३॥ निःऽमथितः सुऽधितः आ सधऽस्थे युवा कविः अध्वरस्य प्रऽनेता जूर्यत्ऽसु अग्निः अजरः वनेषु अत्र दधे अमृतं जातऽवेदाः ॥१॥ अमंथिष्टां भारता रेवत् अग्निं देवऽश्रवाः देवऽवातः सुऽदक्षं अग्ने वि पश्य बृहता अभि राया इषां नः नेता भवतात् अनु द्यून् ॥२॥ दश क्षिपः पूर्व्यं सीं अजीजनन् सुऽजातं मातृषु प्रियं अग्निं स्तुहि दैवऽवातं देवऽश्रवः यः जनानां असत् वशी ॥३॥ नि त्वा दधे वरे आ पृथिव्याः इळायाः पदे सुदिनऽत्वे अह्नां दृषत्ऽवत्यां मानुषे आपयायां सरस्वत्यां रेवत् अग्ने दिदीहि ॥४॥ इळां अग्ने पुरुऽदंसं सनिं गोः शश्वत्ऽतमं हवमानाय साध स्यात् नः सूनुः तनयः विजाऽवा अग्ने सा ते सुऽमतिः भूतु अस्मे ॥५॥२३॥

---

॥२४॥ अग्ने सहस्व पृतनाः अभिऽमातीः अप अस्य दुस्तरः तरन् अरातीः वर्चः धाः यज्ञऽवाहसे ॥१॥ अग्ने इळा सं इध्यसे वीतिऽहोत्रः अमर्त्यः जुषस्व सु नः अध्वरं ॥२॥ अग्ने द्युम्नेन जागृवे सहसः सूनो आऽहुत आ इदं बर्हिः सदः मम ॥३॥ अग्ने विश्वेभिः अग्निऽभिः देवेभिः महय गिरः यज्ञेषु ये ऊं चायवः ॥४॥ अग्ने दाः दाशुषे रयिं वीरऽवंतं परीणसं शिशीहि नः सूनुऽमतः ॥५॥२४॥

---

॥२५॥ अग्ने दिवः सूनुः असि प्रऽचेताः तना पृथिव्याः उत विश्वऽवेदाः ऋधक् देवान् इह यज चिकित्वः ॥१॥ अग्निः सनोति

वीर्याणि विद्वान्त्सनोति वाजममृताय भूषन् । स नो देवाँ एह वहा पुरुक्षो ॥२॥ अग्निर्द्यावापृथिवी विश्वजन्ये आ भाति देवी अमृते अमूरः । क्षयन्वाजैः पुरुश्चंद्रो नमोभिः ॥३॥ अग्न इंद्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातं । अमर्धंता सोमपेयाय देवा ॥४॥ अग्ने अपां समिध्यसे दुरोणे नित्यः सूनो सहसो जातवेदः । सधस्थानि महयमान ऊती ॥५॥२५॥

---

॥ २६ ॥ १–६. ८. ९ विश्वामित्रः । ७ आत्मा ॥ १–३ वैश्वानरः । ४–६ मरुतः । ७. ८ अग्निरात्मा वा । ९ विश्वामित्रोपाध्यायः ॥ १–६ जगती । ७–९ त्रिष्टुप् ॥

॥२६॥ वैश्वानरं मनसाग्निं निचाय्या हविष्मंतो अनुषत्यं स्वर्विदं । सुदानुं देवं रथिरं वसूयवो गीर्भी रण्वं कुशिकासो हवामहे ॥१॥ तं शुभ्रमग्निमवसे हवामहे वैश्वानरं मातरिश्वानमुक्थ्यं । बृहस्पतिं मनुषो देवतातये विप्रं श्रोतारमतिथिं रघुष्यदं ॥२॥ अश्वो न क्रंदञ्जनिभिः समिध्यते वैश्वानरः कुशिकेभिर्युगेयुगे । स नो अग्निः सुवीर्यं स्वश्व्यं दधातु रत्नममृतेषु जागृविः ॥३॥ प्र यंतु वाजास्तविषीभिरग्नयः शुभे संमिश्लाः पृषतीरयुक्षत । बृहदुक्षो मरुतो विश्ववेदसः प्र वेपयंति पर्वताँ अदाभ्याः ॥४॥ अग्निश्रियो मरुतो विश्वकृष्टय आ त्वेषमुग्रमव ईमहे वयं । ते स्वानिनो रुद्रिया वर्षनिर्णिजः सिंहा न हेषक्रतवः सुदानवः ॥५॥२६॥ व्रातंव्रातं गणंगणं सुशस्तिभिरग्नेर्भामं मरुतामोज ईमहे । पृषदश्वासो अनवभ्रराधसो गंतारो यज्ञं विदथेषु धीराः ॥६॥ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥७॥ त्रिभिः पवित्रैरपुपोद्ध्यर्कं हृदा मतिं ज्योतिरनु प्रजानन् । वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत् ॥८॥ श-

वीर्याणि विद्वान् सनोति वाजं अमृताय भूषन् सः नः देवान् आ इह वह पुरुऽक्षो॰॥२॥ अग्निः द्यावापृथिवी विश्वऽजन्ये॰ आ भाति देवी॰ अमृते॰ अमूरः क्षयन् वाजैः पुरुऽचंद्रः नमःऽभिः ॥ ३ ॥ अग्ने इंद्रः च दाशुषः दुरोणे सुतऽवतः यज्ञं इह उप यातं अमर्धंता सोमऽपेयाय देवा ॥४॥ अग्ने अपां सं इध्यसे दुरोणे नित्यः सूनो सहसः जातऽवेदः सधऽस्थानि महयमानः ऊती ॥ ५ ॥ २५ ॥

---

॥२६॥ वैश्वानरं मनसा अग्निं निऽचाय्य हविष्मंतः अनुऽसत्यं स्वःऽविदं सुऽदानुं देवं रथिरं वसुऽयवः गीःऽभिः रण्वं कुशिकासः हवामहे ॥१॥ तं शुभ्रं अग्निं अवसे हवामहे वैश्वानरं मातरिश्वानं उक्थ्यं बृहस्पतिं मनुषः देवऽतातये विप्रं श्रोतारं अतिथिं रघुस्यदं ॥२॥ अश्वः न क्रंदन् जनिऽभिः सं इध्यते वैश्वानरः कुशिकेभिः युगेऽयुगे सः नः अग्निः सुऽवीर्यं सुऽअश्व्यं दधातु रत्नं अमृतेषु जागृविः ॥३॥ प्र यंतु वाजाः तविषीभिः अग्नयः शुभे संऽमिश्लाः पृषतीः अयुक्षत बृहत्ऽउक्षः मरुतः विश्वऽवेदसः प्र वेपयंति पर्वतान् अदाभ्याः ॥४॥ अग्निऽश्रियः मरुतः विश्वऽकृष्टयः आ त्वेषं उग्रं अवः ईमहे वयं ते स्वानिनः रुद्रियाः वर्षऽनिर्निजः सिंहाः न हेषऽक्रतवः सुऽदानवः ॥५॥२६॥ व्रातंऽव्रातं गणंऽगणं सुशस्तिऽभिः अग्नेः भामं मरुतां ओजः ईमहे पृषत्ऽअश्वासः अनवभ्रऽराधसः गंतारः यज्ञं विदथेषु धीराः ॥६॥ अग्निः अस्मि जन्मना जातऽवेदाः घृतं मे चक्षुः अमृतं मे आसन् अर्कः त्रिऽधातुः रजसः विऽमानः अजस्रः घर्मः हविः अस्मि नाम ॥७॥ त्रिऽभिः पवित्रैः अपुपोत् हि अर्कं हृदा मतिं ज्योतिः अनु प्रऽजानन् वर्षिष्ठं रत्नं अकृत स्वधाभिः आत् इत् द्यावापृथिवी परि अपश्यत् ॥८॥ श-

तधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानां । मेळिं मदंतं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचं ॥ ९ ॥ २७ ॥

॥ २७ ॥ १–१५ विश्वामित्रः ॥ १ ऋतव अग्निर्वा । २–१५ अग्निः ॥ गायत्री ॥

॥२७॥ प्र वो वाजा अभिद्यवो हविष्मंतो घृताच्या । देवाञ्जिगाति सुम्नयुः ॥१॥ ईळे अग्निं विपश्चितं गिरा यज्ञस्य साधनं । श्रुष्टीवानं धितावानं ॥२॥ अग्ने शकेम ते वयं यमं देवस्य वाजिनः । अति द्वेषांसि तरेम ॥ ३ ॥ समिध्यमानो अध्वरेऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे ॥४॥ पृथुपाजा अमर्त्यो घृतनिर्णिक्स्वाहुतः । अग्निर्यज्ञस्य हव्यवाट् ॥५॥२८॥ तं सबाधो यतस्रुच इत्था धिया यज्ञवंतः । आ चक्रुरग्निमूतये ॥६॥ होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥७॥ वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥८॥ धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥९॥ नि त्वा दधे वरेण्यं दक्षस्येळा सहस्कृत । अग्ने सुदीतिमुशिजं ॥ १० ॥ २९ ॥ अग्निं यंतुरमप्तुरमृतस्य योगे वनुषः । विप्रा वाजैः समिंधते ॥११॥ ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि । अग्निमीळे कविक्रतुं ॥१२॥ ईळेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥१३॥ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मंत ईळते ॥१४॥ वृषणं त्वा वयं वृषन्वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥१५॥३०॥

॥ २८ ॥ १–६ विश्वामित्रः ॥ अग्निः ॥ १.२.६ गायत्री । ३ उष्णिक् । ४ त्रिष्टुप् । ५ जगती ॥

॥२८॥ अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः । प्रातःसावे धियावसो ॥१॥ पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः । तं जुषस्व यविष्ठ्य ॥२॥ अग्ने वीहि पुरोळाशमाहुतं तिरोअह्न्यं ।

ऽधारं उत्सं अक्षीयमाणं विपःऽचितं पितरं वक्त्वानां मेळिं म-
तं पित्रोः उपऽस्थे तं रोदसी इति पिपृतं सत्यऽवाचं ॥ ९ ॥ २७ ॥

---

॥२७॥ प्र वः वाजाः अभिऽद्यवः हविष्मंतः घृताच्या देवान्
जिगाति सुम्नऽयुः ॥१॥ ईळे अग्निं विपःऽचितं गिरा यज्ञस्य साधनं
श्रुष्टीऽवानं धितऽवानं ॥२॥ अग्ने शकेम ते वयं यमं देवस्य वाजि-
नः अति द्वेषांसि तरेम ॥३॥ संऽइध्यमानः अध्वरे अग्निः पावकः
ड्यः शोचिःऽकेशः तं ईमहे ॥४॥ पृथुऽपाजाः अमर्त्यः घृतऽनि-
र्णिक् सुऽआहुतः अग्निः यज्ञस्य हव्यऽवाट् ॥५॥२८॥ तं सऽबाधः य-
ऽस्रुचः इत्था धिया यज्ञऽवंतः आ चक्रुः अग्निं ऊतये ॥६॥ होता
वः अमर्त्यः पुरस्तात् एति मायया विदथानि प्रऽचोदयन् ॥७॥
वाजी वाजेषु धीयते अध्वरेषु प्र नीयते विप्रः यज्ञस्य साधनः ॥८॥
धिया चक्रे वरेण्यः भूतानां गर्भं आ दधे दक्षस्य पितरं तना ॥९॥
नि त्वा दधे वरेण्यं दक्षस्य इळा सहःऽकृत अग्ने सुऽदीतिं उशिजं
॥१०॥२९॥ अग्निं यंतुरं अप्ऽतुरं ऋतस्य योगे वनुषः विप्राः वाजैः
इंधते ॥११॥ ऊर्जः नपातं अध्वरे दीदिऽवांसं उप द्यवि अग्निं ई-
ऽकविऽक्रतुं ॥१२॥ ईळेन्यः नमस्यः तिरः तमांसि दर्शतः सं अग्निः
ध्यते वृषा ॥१३॥ वृषो इति अग्निः सं इध्यते अश्वः न देवऽवाहनः तं
विष्मंतः ईळते ॥१४॥ वृषणं त्वा वयं वृषन् वृषणः सं इधीमहि
ग्ने दीद्यतं बृहत् ॥ १५ ॥ ३० ॥

---

॥२८॥ अग्ने जुषस्व नः हविः पुरोळाशं जातऽवेदः प्रातःऽसावे
धियाऽवसो इति ॥१॥ पुरोळाः अग्ने पचतः तुभ्यं वा घ परिऽकृतः तं
षस्व यविष्ठ्य ॥२॥ अग्ने वीहि पुरोळाशं आऽहुतं तिरःऽअह्न्यं

सहसः सूनुरस्यध्वरे हितः ॥३॥ माध्यंदिने सवने जातवेदः पुरोळाशमिह कवे जुषस्व । अग्ने यह्वस्य तव भागधेयं न प्र मिनंति विदथेषु धीराः ॥४॥ अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनवाहुतं । अथा देवेष्वध्वरं विपन्यया धा रत्नवंतममृतेषु जागृविं ॥५॥ अग्ने वृधान आहुतिं पुरोळाशं जातवेदः । जुषस्व तिरोअह्न्यं ॥ ६ ॥ ३१ ॥

---

॥२९॥१–१६ विश्वामित्रः॥१–४.६–१६ अग्निः। ५ ऋत्विज अग्निर्वा॥१.४.१०.१२ अनुष्टुप्। २.३.५.७–९.१३.१६ त्रिष्टुप्। ६.११.१४.१५ जगती॥

॥२९॥ अस्तीदमधिमंथनमस्ति प्रजननं कृतं । एतां विश्पत्नीमा भराग्निं मंथाम पूर्वथा ॥१॥ अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु । दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥२॥ उत्तानायामव भरा चिकित्वान्सद्यः प्रवीता वृषणं जजान । अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥३॥ इळायास्त्वा पदे वयं नाभा पृथिव्या अधि । जातवेदो नि धीमह्यग्ने हव्याय वोळ्हवे ॥४॥ मंथता नरः कविमद्वयंतं प्रचेतसममृतं सुप्रतीकं । यज्ञस्य केतुं प्रथमं पुरस्तादग्निं नरो जनयता सुशेवं ॥५॥३२॥ यदी मंथंति बाहुभिर्वि रोचतेऽश्वो न वाज्यरुषो वनेष्वा । चित्रो न यामन्नश्विनोरनिवृतः परि वृणक्त्यश्मनस्तृणा दहन् ॥६॥ जातो अग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः । यं देवास ईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥७॥ सीद होतः स्व उ लोके चिकित्वान्सादया यज्ञं सुकृतस्य योनौ । देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥८॥ कृणोत धूमं वृषणं सखायोऽस्रेधंत इतन वाजमच्छ । अयमग्निः पृतनाषाट् सुवीरो येन देवासो असहंत

सहसः सूनुः असि अध्वरे हितः ॥३॥ माध्यंदिने सवने जातऽवेदः पुरोळाशं इह कवे जुषस्व अग्ने यह्वस्य तव भागऽधेयं न प्र मिनंति विदथेषु धीराः ॥४॥ अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनो' आऽहुतं अथ देवेषु अध्वरं विपन्यया धाः रत्नऽवंतं अमृतेषु जागृविं ॥५॥ अग्ने वृधानः आऽहुतिं पुरोळाशं जातऽवेदः जुषस्व तिरःऽअह्न्यं ॥६॥३१॥

---

॥२९॥ अस्ति इदं अधिऽमंथनं अस्ति प्रऽजननं कृतं एतां विश्पत्नीं आ भर अग्निं मंथाम पूर्वऽथा ॥१॥ अरण्योः निऽहितः जातऽवेदाः गर्भःऽइव सुऽधितः गर्भिणीषु दिवेऽदिवे ईड्यः जागृवत्ऽभिः हविष्मत्ऽभिः मनुष्येभिः अग्निः ॥२॥ उत्तानायां अव भर चिकित्वान् सद्यः प्रऽवीता वृषणं जजान अरुषऽस्तूपः रुशत् अस्य पाजः इळायाः पुत्रः वयुने अजनिष्ट ॥३॥ इळायाः त्वा पदे वयं नाभा पृथिव्याः अधि जातऽवेदः नि धीमहि अग्ने हव्याय वोळ्हवे ॥४॥ मंथत नरः कविं अद्वयंतं प्रऽचेतसं अमृतं सुऽप्रतीकं यज्ञस्य केतुं प्रथमं पुरस्तात् अग्निं नरः जनयत सुऽशेवं ॥५॥३२॥ यदि मंथंति बाहुऽभिः वि रोचते अश्वः न वाजी अरुषः वनेषु आ चित्रः न यामन् अश्विनोः अनिवृतः परि वृणक्ति अश्मनः तृणा दहन् ॥६॥ जातः अग्निः रोचते चेकितानः वाजी विप्रः कविऽशस्तः सुऽदानुः यं देवासः ईड्यं विश्वऽविदं हव्यऽवाहं अदधुः अध्वरेषु ॥७॥ सीद होतः' स्वे ऊं' लोके चिकित्वान् सादय यज्ञं सुऽकृतस्य योनौ देवऽअवीः देवान् हविषा यजासि अग्ने बृहत् यजमाने वयः धाः ॥८॥ कृणोत धूमं वृषणं सखायः अस्रेधंतः इतन वाजं अच्छ अयं अग्निः पृतनाषाट् सुऽवीरः येन देवासः असहंत

दस्यून् ॥९॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।
तं जानन्नग्न आ सीदाथा नो वर्धया गिरः ॥१०॥३३॥ तनून-
पादुच्यते गर्भ आसुरो नराशंसो भवति यद्विजायते। मातरि-
श्वा यदमिमीत मातरि वातस्य सर्गो अभवत्सरीमणि ॥११॥
सुनिर्मथा निर्मथितः सुनिधा निहितः कविः। अग्ने स्वध्वरा
कृणु देवान्देवयते यज ॥१२॥ अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं
तरणिं वीळुजंभं। दश स्वसारो अग्रुवः समीचीः पुमांसं जा-
तमभि सं रभंते ॥१३॥ प्र सप्तहोता सनकादरोचत मातुरुपस्थे
यदशोचदूधनि। न नि मिषति सुरणो दिवेदिवे यदसुरस्य
जठरादजायत ॥१४॥ अमित्रायुधो मरुतामिव प्रयाः प्रथम-
जा ब्रह्मणो विश्वमिद्विदुः। द्युम्नवद्ब्रह्म कुशिकास एरिर ए-
कएको दमे अग्निं समीधिरे ॥१५॥ यदद्य त्वा प्रयति यज्ञे अ-
स्मिन्होतश्चिकित्वोऽवृणीमहीह। ध्रुवमया ध्रुवमुताशमिष्ठाः
प्रजानन्विद्वाँ उप याहि सोमं ॥ १६ ॥ ३४ ॥ १ ॥ २ ॥

---

॥ ३० ॥ १–२२ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३०॥ इच्छंति त्वा सोम्यासः सखायः सुन्वंति सोमं दधति
प्रयांसि। तितिक्षंते अभिशस्तिं जनानामिंद्र त्वदा कश्चन हि
प्रकेतः ॥१॥ न ते दूरे परमा चिद्रजांस्या तु प्र याहि हरिवो
हरिभ्यां। स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः स-
मिधाने अग्नौ ॥२॥ इंद्रः सुशिप्रो मघवा तरुत्रो महाव्रात-
स्तुविकूर्मिर्ऋघावान्। यदुग्रो धा बाधितो मर्त्येषु क्व१त्या ते
वृषभ वीर्याणि ॥३॥ त्वं हि ष्मा च्यावयन्नच्युतान्येको वृत्रा
चरसि जिघ्नमानः। तव द्यावापृथिवी पर्वतासोऽनु व्रताय नि-

दस्यून् ॥९॥ अयं ते योनिः ऋत्वियः यतः जातः अरोचथाः तं जा-
नन् अग्ने आ सीद अथ नः वर्धय गिरः ॥१०॥३३॥ तनूऽनपात् उ-
च्यते गर्भः आसुरः नराशंसः भवति यत् विऽजायते मातरिश्वा
यत् अमिमीत मातरि वातस्य सर्गः अभवत् सरीमणि ॥११॥ सु-
निःऽमथा निःऽमथितः सुऽनिधा निऽहितः कविः अग्ने सुऽअ-
ध्वरा कृणु देवान् देवऽयते यज ॥१२॥ अजीजनन् अमृतं मर्त्यासः
अस्रेमाणं तरणिं वीळुऽजंभं दश स्वसारः अग्रुवः संऽईचीः पु-
मांसं जातं अभि सं रभंते ॥१३॥ प्र सप्तऽहोता सनकात् अरोचत
मातुः उपऽस्थे यत् अशोचत् ऊधनि न नि मिषति सुऽरणः दि-
वेऽदिवे यत् असुरस्य जठरात् अजायत ॥१४॥ अमित्रऽयुधः
मरुतांऽइव प्रऽयाः प्रथमऽजाः ब्रह्मणः विश्वं इत् विदुः द्युम्न-
ऽवत् ब्रह्म कुशिकासः आ ईरिरे एकःऽएकः दमे अग्निं सं ईधिरे
॥१५॥ यत् अद्य त्वा प्रऽयति यज्ञे अस्मिन् होतः चिकित्वः अवृ-
णीमहि इह ध्रुवं अयाः ध्रुवं उत अशमिष्ठाः प्रऽजानन् विद्वान्
उप याहि सोमं ॥१६॥३४॥१॥२॥

---

॥३०॥ इच्छंति त्वा सोम्यासः सखायः सुन्वंति सोमं दधति
प्रयांसि तितिक्षंते अभिऽशस्तिं जनानां इंद्र त्वत् आ कः चन हि
प्रऽकेतः ॥१॥ न ते दूरे परमा चित् रजांसि आ तु प्र याहि हरिऽवः
हरिऽभ्यां स्थिराय वृष्णे सवना कृता इमा युक्ताः ग्रावाणः सं-
ऽइधाने अग्नौ ॥२॥ इंद्रः सुऽशिप्रः मघऽवा तरुत्रः महाऽव्रातः
तुविऽकूर्मिः ऋघावान् यत् उग्रः धाः बाधितः मर्त्येषु क्व त्या ते
वृषभ वीर्याणि ॥३॥ त्वं हि स्म च्यवयन् अच्युतानि एकः वृत्रा
चरसि जिघ्नमानः तव द्यावापृथिवी पर्वतासः अनु व्रताय नि-

मिमतेव तस्थुः ॥४॥ उताभये पुरुहूत श्रवोभिरेको दृळ्हमवदो
वृत्रहा सन् । इमे चिदिंद्र रोदसी अपारे यत्संगृभ्णा मघवन्का-
शिरित्ते ॥५॥१॥ प्र सू त इंद्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृ-
णन्नेतु शत्रून् । जहि प्रतीचो अनूचः पराचो विश्वं सत्यं
कृणुहि विष्टमस्तु ॥६॥ यस्मै धायुरदधा मर्त्यायाभक्तं चिद्भजते
गेह्यं१ सः । भद्रा त इंद्र सुमतिर्घृताची सहस्रदाना पुरुहूत
रातिः ॥७॥ सहदानुं पुरुहूत क्षियंतमहस्तमिंद्र सं पिणक्कु-
णारुं । अभि वृत्रं वर्धमानं पियारुमपादमिंद्र तवसा जघंथ
॥८॥ नि सामनामिषिरामिंद्र भूमिं महीमपारां सदने ससत्थ ।
अस्तभ्नाद्द्यां वृषभो अंतरिक्षमर्षंत्वापस्त्वयेह प्रसूताः ॥९॥
अलातृणो वल इंद्र व्रजो गोः पुरा हंतोर्भयमानो व्यार ।
सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमंतीः
॥१०॥२॥ एको द्वे वसुमती समीची इंद्र आ पप्रौ पृथिवीमुत
द्यां । उतांतरिक्षादभि नः समीक इषो रथीः सयुजः शूर
वाजान् ॥११॥ दिशः सूर्यो न मिनाति प्रदिष्टा दिवेदिवे
हर्यश्वप्रसूताः । सं यदानळध्वन आदिदश्वैर्विमोचनं कृणुते
तत्त्वस्य ॥१२॥ दिदृक्षंत उषसो यामन्नक्तोर्विवस्वत्या महि
चित्रमनीकं । विश्वे जानंति महिना यदागादिंद्रस्य कर्म
सुकृता पुरूणि ॥१३॥ महि ज्योतिर्निहितं वक्षणास्वामा
पक्वं चरति बिभ्रती गौः । विश्वं स्वाद्म संभृतमुस्रियायां
यत्सीमिंद्रो अदधाद्भोजनाय ॥१४॥ इंद्र दृह्य यामकोशा अ-
भूवन्यज्ञाय शिक्ष गृणते सखिभ्यः । दुर्मायवो दुरेवा मर्त्यासो
निषंगिणो रिपवो हंत्वासः ॥१५॥३॥ सं घोषः शृण्वेऽवमैर-
मित्रैर्जही न्येष्वशनिं तपिष्ठां । वृश्चेमधस्ताद्वि रुजा सहस्व

मिताःऽइव तस्थुः ॥४॥ उत अभये पुरुऽहूत श्रवःऽभिः एकः दृळ्हं
अवदः वृत्रऽहा सन् इमे चित् इंद्र रोदसी अपारे यत् संऽगृभ्णाः
मघऽवन् काशिः इत् ते ॥५॥१॥ प्र सु ते इंद्र प्रऽवता हरिऽभ्यां प्र ते
वज्रः प्रऽमृणन् एतु शत्रून् जहि प्रतीचः अनूचः पराचः विश्वं सत्यं
कृणुहि विष्टं अस्तु ॥६॥ यस्मै धायुः अदधाः मर्त्याय अभक्तं चित्
भजते गेह्यं सः भद्रा ते इंद्र सुऽमतिः घृताची सहस्रऽदाना पुरुऽहू-
त रातिः ॥७॥ सहऽदानुं पुरुऽहूत क्षियंतं अहस्तं इंद्र सं पिणक् कु-
णारुं अभि वृत्रं वर्धमानं पियारुं अपादं इंद्र तवसा जघंथ ॥८॥
नि सामनां इषिरां इंद्र भूमिं महीं अपारां सदने ससत्थ अस्तभ्ना-
त् द्यां वृषभः अंतरिक्षं अर्षंतु आपः त्वया इह प्रऽसूताः ॥९॥ अ-
लातृणः वलः इंद्र व्रजः गोः पुरा हंतोः भयमानः वि आर सुऽगान्
पथः अकृणोत् निःऽअजे गाः प्र आवन् वाणीः पुरुऽहूतं धमंतीः
॥१०॥२॥ एकः द्वे वसुऽमती॰ संऽईची॰ इंद्रः आ पप्रौ पृथिवीं उत
द्यां उत अंतरिक्षात् अभि नः संऽईके इषः रथीः सऽयुजः शूर वा-
जान् ॥११॥ दिशः सूर्यः न मिनाति प्रऽदिष्टाः दिवेऽदिवे हर्यश्व-
ऽप्रसूताः सं यत् आनट् अध्वनः आत् इत् अश्वैः विऽमोचनं कृणु-
ते तत् तु अस्य ॥१२॥ दिदृक्षंते उषसः यामन् अक्तोः विवस्वत्याः
महि चित्रं अनीकं विश्वे जानंति महिना यत् आ अगात् इंद्रस्य
कर्म सुऽकृता पुरूणि ॥१३॥ महि ज्योतिः निऽहितं वक्षणासु आ-
मा पक्वं चरति बिभ्रती गौः विश्वं स्वाद्म संऽभृतं उस्रियायां यत्
सीं इंद्रः अदधात् भोजनाय ॥१४॥ इंद्र दृह्य यामऽकोशाः अभूवन्
यज्ञाय शिक्ष गृणते सखिऽभ्यः दुःऽमायवः दुःऽएवाः मर्त्यासः
निषंगिणः रिपवः हंत्वासः ॥१५॥३॥ सं घोषः शृण्वे अवमैः अमि-
त्रैः जहि नि एषु अशनिं तपिष्ठां वृश्च ईं अधस्तात् वि रुज सहस्व

जहि रक्षो मघवन्रंधयस्व ॥ १६ ॥ उद्वृह रक्षः सहमूलमिंद्र वृश्चा मध्यं प्रत्यग्रं शृणीहि । आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥ १७ ॥ स्वस्तये वाजिभिश्च प्रणेतः सं यन्महीरिष आसत्सि पूर्वीः । रायो वंतारो बृहतः स्याम्मास्मे अस्तु भग इंद्र प्रजावान् ॥ १८ ॥ आ नो भर भगमिंद्र द्युमंतं नि ते देष्णस्य धीमहि प्ररेके । ऊर्व इव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनां ॥ १९ ॥ इमं कामं मंदया गोभिरश्वैश्चंद्रवता राधसा पप्रथश्च । स्वर्यवो मतिभिस्तुभ्यं विप्रा इंद्राय वाहः कुशिकासो अक्रन् ॥ २० ॥ आ नो गोत्रा दर्दृहि गोपते गाः समस्मभ्यं सनयो यंतु वाजाः । दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्यं सु मघवन्बोधि गोदाः ॥ २१ ॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ । शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥ २२ ॥ ४ ॥

॥ ३१ ॥ १–२२ विश्वामित्रः कुशिको वा ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३१ ॥ शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् । पिता यत्र दुहितुः सेकमृंजन्सं शग्म्येन मनसा दधन्वे ॥ १ ॥ न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानं । यदी मातरो जनयंत वह्निमन्यः कर्ता सुकृतोरन्य ऋंधन् ॥ २ ॥ अग्निर्जज्ञे जुह्वा३ रेजमानो महस्पुत्राँ अरुषस्य प्रयक्षे । महान्गर्भो मह्या जातमेषां मही प्रवृद्धर्यश्वस्य यज्ञैः ॥ ३ ॥ अभि जैत्रीरसचंत स्पृधानं महि ज्योतिस्तमसो निरजानन् । तं जानतीः प्रत्युदायन्नुषासः पतिर्गवामभवदेक इंद्रः ॥ ४ ॥ वीळौ सतीरभि धीरा अतृंदन्प्राचाहिन्वन्मनसा सप्त विप्राः । विश्वामविंदन्पथ्यामृतस्य प्र-

हि रक्षः मघऽवन् रंधयस्व ॥१६॥ उत् वृह रक्षः सहऽमूलं इंद्र वृश्च मध्यं प्रति अग्रं शृणीहि आ कीवतः सललूकं चकर्थ ब्रह्मऽद्विषे तपुषिं हेतिं अस्य ॥१७॥ स्वस्तये वाजिऽभिः च प्रऽनेतः॰सं यत् महीः इषः आऽसत्सि पूर्वीः रायः वंतारः बृहतः स्याम अस्मे इति अस्तु भर्गः इंद्र प्रजाऽवान् ॥१८॥ आ नः भर भर्गं इंद्र द्युऽमंतं नि ते देष्णस्य धीमहि प्रऽरेके ऊर्वःऽइव पप्रथे कामः अस्मे इति तं आ पृण वसुऽपते वसूनां ॥१९॥ इमं कामं मंदय गोभिः अश्वैः चंद्रऽवता राधसा पप्रथः च स्वःऽयवः मतिऽभिः तुभ्यं विप्राः इंद्राय वाहः कुशिकासः अक्रन् ॥२०॥ आ नः गोत्रा दर्दृहि गोऽपते गाः सं अस्मभ्यं सनयः यंतु वाजाः दिवक्षाः असि वृषभ सत्यऽशुष्मः अस्मभ्यं सु मघऽवन् बोधि गोऽदाः ॥२१॥ शुनं हुवेम मघऽवानं इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥२२॥४॥

---

॥३१॥ शासत् वह्निः दुहितुः नप्त्यं गात् विद्वान् ऋतस्य दीधितिं सपर्यन् पिता यत्र दुहितुः सेकं ऋंजन् सं शग्म्येन मनसा दधन्वे ॥१॥ न जामये तान्वः रिक्थं अरैक् चकार गर्भं सनितुः निऽधानं यदि मातरः जनयंत वह्निं अन्यः कर्ता सुऽकृतोः अन्यः ऋंधन् ॥२॥ अग्निः जज्ञे जुह्वा रेजमानः महः पुत्रान् अरुषस्य प्रऽयक्षे महान् गर्भः महि आ जातं एषां मही प्रऽवृत् हरिऽअश्वस्य यज्ञैः ॥३॥ अभि जैत्रीः असचंत स्पृधानं महि ज्योतिः तमसः निः अजानन् तं जानतीः प्रति उत् आयन् उषसः पतिः गवां अभवत् एकः इंद्रः ॥४॥ वीळौ सतीः अभि धीराः अतृंदन् प्राचा अहिन्वन् मनसा सप्त विप्राः विश्वां अविंदन् पथ्यां ऋतस्य प्र-

जानन्नित्ता नमसा विवेश ॥ ५ ॥ ५ ॥ विदद्यदी सरमा रुग्ण-
मद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः । अग्रं नयत्सुपद्यक्षराणामच्छा
रवं प्रथमा जानती गात् ॥ ६ ॥ अगच्छदु विप्रतमः सखीयन्न-
सूदयत्सुकृते गर्भमद्रिः । ससान मर्यो युवभिर्मखस्यन्नथाभव-
दंगिराः सद्यो अर्चन् ॥ ७ ॥ सतःसतः प्रतिमानं पुरोभू-
र्विश्वा वेद जनिमा हंति शुष्णं । प्र णो दिवः पदवीर्गव्यु-
रर्चन्त्सखा सखीँरमुंचन्निरवद्यात् ॥ ८ ॥ नि गव्यता मनसा
सेदुरर्कैः कृण्वानासो अमृतत्वाय गातुं । इदं चिन्नु सदनं
भूर्येषां येन मासाँ असिषासन्नृतेन ॥ ९ ॥ संपश्यमाना
अमदन्नभि स्वं पयः प्रत्नस्य रेतसो दुघानाः । वि रोदसी
अतपद्घोष एषां जाते निःष्ठामदधुर्गोषु वीरान् ॥ १० ॥ ६ ॥
स जातेभिर्वृत्रहा सेदु हव्यैरुदुस्रिया असृजदिंद्रो अर्कैः ।
उरूच्यस्मै घृतवद्भरंती मधु स्वाद्म दुदुहे जेन्या गौः ॥ ११ ॥
पित्रे चिच्चक्रुः सदनं समस्मै महि त्विषीमत्सुकृतो वि
हि ख्यन् । विष्कभ्नंतः स्कंभनेना जनित्री आसीना ऊर्ध्वं
रभसं वि मिन्वन् ॥ १२ ॥ मही यदि धिषणा शिश्नथे धात्स-
द्योवृधं विभ्वं१ रोदस्योः । गिरो यस्मिन्ननवद्याः समीची-
र्विश्वा इंद्राय तविषीरनुत्ताः ॥ १३ ॥ मह्या ते सख्यं वश्मि
शक्तीरा वृत्रघ्ने नियुतो यंति पूर्वीः । महि स्तोत्रमव
आगन्म सूरेरस्माकं सु मघवन्बोधि गोपाः ॥ १४ ॥ महि
क्षेत्रं पुरु श्चंद्रं विविद्वानादित्सखिभ्यश्चरथं समैरत् । इंद्रो
नृभिरजनद्दीद्यानः साकं सूर्यमुषसं गातुमग्निं ॥ १५ ॥ ७ ॥
अपश्चिदेष विभ्वो३ दमूनाः प्र सध्रीचीरसृजद्विश्वश्चंद्राः ।
मध्वः पुनानाः कविभिः पवित्रैर्द्युभिर्हिन्वंत्यक्तुभिर्धनुत्रीः

ऽजानन् इत् ता नमसा आ विवेश ॥५॥५॥ विदत् यदि सरमा रु-
ग्णं अद्रेः महि पाथः पूर्व्यं सध्र्यक् कः० अग्रं नयत् सुऽपदी अक्षरा-
णां अच्छ रवं प्रथमा जानती गात् ॥६॥ अगच्छत् ऊं इति विप्रऽतमः
सखिऽयन् असूदयत् सुऽकृते गर्भं अद्रिः ससान मर्यः युवऽभिः
मखस्यन् अथ अभवत् अंगिराः सद्यः अर्चन् ॥७॥ सतःऽसतः
प्रतिऽमानं पुरःऽभूः विश्वा वेद जनिम हंति शुष्णं प्र नः दिवः
पदऽवीः गव्युः अर्चन् सखा सखीन् अमुंचत् निः अवद्यात् ॥८॥
नि गव्यता मनसा सेदुः अर्कैः कृण्वानासः अमृतऽत्वाय गातुं
इदं चित् नु सदनं भूरि एषां येन मासान् असिसासन् ऋतेन
॥९॥ संऽपश्यमानाः अमदन् अभि स्वं पयः प्रत्नस्य रेतसः दुघा-
नाः वि रोदसी अतपत् घोषः एषां जाते निःऽस्थां अदधुः गोषु
वीरान् ॥१०॥६॥ सः जातेभिः वृत्रऽहा सः इत् ऊं इति हव्यैः उत् उस्रि-
याः असृजत् इंद्रः अर्कैः उरूची अस्मै घृतऽवत् भरंती मधु स्वाद्म
दुदुहे जेन्या गौः ॥११॥ पित्रे चित् चक्रुः सदनं सं अस्मै महि त्विषि-
ऽमत् सुऽकृतः वि हि ख्यन् विऽस्कभ्नंतः स्कंभनेन जनित्री आ-
सीनाः ऊर्ध्वं रभसं वि मिन्वन् ॥१२॥ मही यदि धिषणा शिश्नथे
धात् सद्यःऽवृधं विऽभ्वं रोदस्योः गिरः यस्मिन् अनवद्याः संऽई-
चीः विश्वाः इंद्राय तविषीः अनुत्ताः ॥१३॥ महि आ ते सख्यं वश्मि
शक्तीः आ वृत्रऽघ्ने निऽयुतः यंति पूर्वीः महि स्तोत्रं अवः आ अ-
गन्म सूरेः अस्माकं सु मघऽवन् बोधि गोपाः ॥१४॥ महि क्षेत्रं पुरु
चंद्रं विविद्वान् आत् इत् सखिऽभ्यः चरथं सं ऐरत् इंद्रः नृऽभिः
अजनत् दीद्यानः साकं सूर्यं उषसं गातुं अग्निं ॥१५॥७॥ अपः चित्
एषः विऽभ्वः दमूनाः प्र सध्रीचीः असृजत् विश्वऽचंद्राः मध्वः पु-
नानाः कविऽभिः पवित्रैः द्युऽभिः हिन्वंति अक्तुऽभिः धनुत्रीः

॥१६॥ अनु कृष्णे वसुधिती जिहाते उभे सूर्यस्य मंहना यजत्रे।
परि यत्ते महिमानं वृजध्यै सखाय इंद्र काम्या ऋजिप्याः
॥१७॥ पतिर्भव वृत्रहन्सूनृतानां गिरां विश्वायुर्वृषभो वयो-
धाः। आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः स-
रण्यन् ॥१८॥ तमंगिरस्वन्नमसा सपर्यन्नव्यं कृणोमि सन्यसे
पुराजां। द्रुहो वि याहि बहुला अदेवीः स्वश्च नो मघव-
न्सातये धाः ॥१९॥ मिहः पावकाः प्रतता अभूवन्स्वस्ति
नः पिपृहि पारमासां। इंद्र त्वं रथिरः पाहि नो रिषो मक्षू-
मक्षू कृणुहि गोजितो नः ॥२०॥ अदेदिष्ट वृत्रहा गोपतिर्गा
अंतः कृष्णाँ अरुषैर्धामभिर्गात्। प्र सूनृता दिशमान ऋतेन
दुरश्च विश्वा अवृणोदप स्वाः ॥२१॥ शुनं हुवेम मघवानमिं-
द्रमस्मिन्भरे नृतमं वाजसातौ। शृण्वंतमुग्रमूतये समत्सु घ्नंतं
वृत्राणि संजितं धनानां ॥ २२ ॥ ८ ॥

॥ ३२ ॥ १–१७ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३२॥ इंद्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु
यत्ते। प्रप्रुथ्या शिप्रे मघवन्नृजीषिन्विमुच्या हरी इह माद-
यस्व ॥१॥ गवाशिरं मंथिनमिंद्र शुक्रं पिबा सोमं ररिमा ते
मदाय। ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व
॥२॥ ये ते शुष्मं ये तविषीमवर्धन्नर्चंत इंद्र मरुतस्त ओजः।
माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥३॥
त इन्न्वस्य मधुमद्विविप्र इंद्रस्य शर्धो मरुतो य आसन्। ये-
भिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥४॥ मनुष्व-
दिंद्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय। स आ ववृत्स्व
हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥५॥९॥ त्वमपो यद्ध

॥१६॥ अनु कृष्णे वसुऽधिती॰ जिहाते उभे सूर्यस्य मंहना यज-
त्रे परि यत् ते महिमानं वृजध्यै सखायः इंद्र काम्याः ऋजिप्याः
॥१७॥ पतिः भव वृत्रऽहन् सूनृतानां गिरां विश्वऽआयुः वृषभः व-
यःऽधाः आ नः गहि सख्येभिः शिवेभिः महान् महीभिः ऊति-
ऽभिः सरण्यन् ॥१८॥ तं अंगिरस्वत् नमसा सपर्यन् नव्यं कृणोमि
सन्यसे पुराऽजां द्रुहः वि याहि बहुलाः अदेवीः स्वः॰ च नः मघ-
ऽवन् सातये धाः ॥१९॥ मिहः पावकाः प्रऽतताः अभूवन् स्वस्ति
नः पिपृहि पारं आसां इंद्र त्वं रथिरः पाहि नः रिषः मक्षुऽमक्षु कृणु-
हि गोऽजितः नः ॥२०॥ अदेदिष्ट वृत्रऽहा गोऽपतिः गाः अंतरिति कृ-
ष्णान् अरुषैः धामऽभिः गात् प्र सूनृताः दिशमानः ऋतेन दुरः च
विश्वाः अवृणोत् अप स्वाः ॥२१॥ शुनं हुवेम मघऽवानं इंद्रं अ-
स्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं
वृत्राणि संऽजितं धनानां ॥ २२ ॥ ८ ॥

---

॥३२॥ इंद्र सोमं सोमऽपते पिब इमं माध्यंदिनं सवनं चारु यत्
ते प्रऽप्रुथ्य शिप्रे मघऽवन् ऋजीषिन् विऽमुच्य हरी इह मादय-
स्व ॥१॥ गोऽआशिरं मंथिनं इंद्र शुक्रं पिब सोमं ररिम ते मदाय
ब्रह्मऽकृता मारुतेन गणेन सऽजोषाः रुद्रैः तृपत् आ वृषस्व ॥२॥
ये ते शुष्मं ये तविषीं अवर्धन् अर्चंतः इंद्र मरुतः ते ओजः माध्यं-
दिने सवने वज्रऽहस्त पिब रुद्रेभिः सऽगणः सुऽशिप्र ॥३॥ ते इत्
नु अस्य मधुऽमत् विविप्रे इंद्रस्य शर्धः मरुतः ये आसन् येभिः वृ-
त्रस्य इषितः विवेद अमर्मणः मन्यमानस्य मर्म ॥४॥ मनुष्वत् इंद्र
सवनं जुषाणः पिब सोमं शश्वते वीर्याय सः आ ववृत्स्व हरिऽअ-
श्व यज्ञैः सरण्युऽभिः अपः अर्णा सिसर्षि ॥५॥९॥ त्वं अपः यत् ह

वृत्रं जघन्वाँ असृजद्वि सिंधून् । ... 

वृत्रं जघन्वाँ अत्याँ इव प्रासृजः सर्तवाजौ । शयानमिंद्र चरता वधेन वव्रिवांसं परि देवीरदेवं ॥६॥ यजाम इन्नमसा वृद्धमिंद्रं बृहंतमृष्वमजरं युवानं । यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥७॥ इंद्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनंति विश्वे । दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥८॥ अद्रोघ सत्यं तव तन्महित्वं सद्यो यज्जातो अपिबो ह सोमं । न द्याव इंद्र तवसस्त ओजो नाहा न मासाः शरदो वरंत ॥९॥ त्वं सद्यो अपिबो जात इंद्र मदाय सोमं परमे व्योमन् । यद्ध द्यावापृथिवी आविवेशीरथाभवः पूर्व्यः कारुधायाः ॥१०॥१०॥

अहन्नहिं परिशयानमर्ण ओजायमानं तुविजात तव्यान् । न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्या३ क्षामवस्थाः ॥११॥ यज्ञो हि त इंद्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः । यज्ञेन यज्ञमव यज्ञियः सन्यज्ञस्ते वज्रमहिहत्य आवत् ॥१२॥ यज्ञेनेंद्रमवसा चक्रे अर्वागैनं सुम्नाय नव्यसे ववृत्यां । यः स्तोमेभिर्वावृधे पूर्व्येभिर्यो मध्यमेभिरुत नूतनेभिः ॥१३॥ विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिंद्रमह्नः । अंहसो यत्र पीपरद्यथा नो नावेव यांतमुभये हवंते ॥१४॥ आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै । समु प्रिया आववृत्रन्मदाय प्रदक्षिणिदभि सोमास इंद्रं ॥१५॥ न त्वा गभीरः पुरुहूत सिंधुर्नाद्रयः परि षंतो वरंत । इत्था सखिभ्य इषितो यदिंद्रा दृळ्हं चिदरुजो गव्यमूर्वं ॥१६॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ । शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥१७॥११॥

वृत्रं जघन्वान् अत्यान्ऽइव प्र असृजः सर्तवै आजौ शयानं इंद्र
चरता वधेन वव्रिऽवांसं परि देवीः अदेवं ॥६॥ यजामः इत् नमसा
वृद्धं इंद्रं बृहंतं ऋष्वं अजरं युवानं यस्य प्रिये· ममतुः यज्ञियस्य न
रोदसी· महिमानं ममाते· ॥७॥ इंद्रस्य कर्म सुऽकृता पुरूणि व्रता-
नि देवाः न मिनंति विश्वे दाधार यः पृथिवीं द्यां उत इमां जजान
सूर्यं उषसं सुऽदंसाः ॥८॥ अद्रोघ सत्यं तव तत् महिऽत्वं सद्यः यत्
जातः अपिबः ह सोमं न द्यावः इंद्र तवसः ते ओजः न अहा न मा-
साः शरदः वरंत ॥९॥ त्वं सद्यः अपिबः जातः इंद्र मदाय सोमं परमे
विऽओमन् यत् ह द्यावापृथिवी· आ अविवेशीः अथ अभवः पू-
र्व्यः कारुऽधायाः ॥१०॥१०॥ अहन् अहिं परिऽशयानं अर्णः ओ-
जायमानं तुविऽजात तव्यान् न ते महिऽत्वं अनु भूत् अध द्यौः
यत् अन्यया स्फिग्या क्षां अवस्थाः ॥११॥ यज्ञः हि ते इंद्र वर्धनः
भूत् उत प्रियः सुतऽसोमः मियेधः यज्ञेन यज्ञं अव यज्ञियः सन्
यज्ञः ते वज्रं अहिऽहत्ये आवत् ॥१२॥ यज्ञेन इंद्रं अवसा आ चक्रे
अर्वाक् आ एनं सुम्नाय नव्यसे ववृत्यां यः स्तोमेभिः ववृधे पूर्व्येभिः
यः मध्यमेभिः उत नूतनेभिः ॥१३॥ विवेष यत् मा धिषणा जजान
स्तवै पुरा पार्यात् इंद्रं अह्नः अंहसः यत्र पीपरत् यथा नः नावा-
ऽइव यांतं उभये हवंते ॥१४॥ आऽपूर्णः अस्य कलशः स्वाहा से-
क्ताऽइव कोशं सिसिचे पिबध्यै सं ऊं· प्रियाः आ अववृत्रन् मदाय
प्रऽदक्षिणित् अभि सोमासः इंद्रं ॥१५॥ न त्वा गभीरः पुरुऽहूत
सिंधुः न अद्रयः परि संतः वरंत इत्था सखिऽभ्यः इषितः यत् इंद्र
आ दृळ्हं चित् अरुजः गव्यं ऊर्वं ॥१६॥ शुनं हुवेम मघऽवानं इंद्रं
अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं
वृत्राणि संऽजितं धनानां ॥१७॥११॥

॥३३॥ १–१३ संवादो नदीभिर्विश्वामित्रस्य। ६. ७ इंद्रः॥ १–१२ त्रिष्टुप्। १३ अनुष्टुप्॥

॥३३॥ प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने। गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥१॥ इंद्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः। समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे ॥२॥ अच्छा सिंधुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म। वत्समिव मातरा संरिहाणे समानं योनिमनु संचरंती ॥३॥ एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरंतीः। न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥४॥ रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः। प्र सिंधुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥५॥१२॥ इंद्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनां। देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥६॥ प्रवाच्यं शश्वधा वीर्यं१ तदिंद्रस्य कर्म यदहिं विवृश्चत्। वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः ॥७॥ एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि। उक्थेषु कारो प्रति नो जुषस्व मा नो नि कः पुरुषत्रा नमस्ते ॥८॥ ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन। नि षू नमध्वं भवता सुपारा अधोअक्षाः सिंधवः स्रोत्याभिः ॥९॥ आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन। नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥१०॥१३॥ यदंग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इंद्रजूतः। अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानां ॥११॥ अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनां। प्र पिन्वध्वमिषयंतीः सुराधा

॥३३॥ प्र पर्वतानां उशती उपऽस्थात् अश्वेऽइव० विऽसिते०
हासमाने गावाऽइव शुभ्रे मातरा रिहाणे विऽपाट् शुतुद्री प-
यसा जवेते ॥१॥ इंद्रऽइषिते० प्रऽसवं भिक्षमाणे अच्छ समुद्रं
रथ्याऽइव याथः संऽआराणे० ऊर्मिऽभिः पिन्वमाने अन्या वां
अन्यां अपि एति शुभ्रे ॥२॥ अच्छ सिंधुं मातृऽतमां अयासं वि-
ऽपाशं उर्वीं सुऽभगां अगन्म वत्संऽइव मातरा संऽरिहाणे० स-
मानं योनिं अनु संऽचरंती० ॥३॥ एना वयं पयसा पिन्वमानाः
अनु योनिं देवऽकृतं चरंतीः न वर्तवे प्रऽसवः सर्गऽतक्तः किंऽयुः
विप्रः नद्यः जोहवीति ॥४॥ रमध्वं मे वचसे सोम्याय ऋतऽवरीः
उप मुहूर्तं एवैः प्र सिंधुं अच्छ बृहती मनीषा अवस्युः अह्वे कुशि-
कस्य सूनुः ॥५॥१२॥ इंद्रः अस्मान् अरदत् वज्रऽबाहुः अप अहन्
वृत्रं परिऽधिं नदीनां देवः अनयत् सविता सुऽपाणिः तस्य वयं
प्रऽसवे यामः उर्वीः ॥६॥ प्रऽवाच्यं शश्वधा वीर्यं तत् इंद्रस्य कर्म
यत् अहिं विऽवृश्चत् वि वज्रेण परिऽसदः जघान आयन् आपः
अयनं इच्छमानाः ॥७॥ एतत् वचः जरितः मा अपि मृष्ठाः आ यत्
ते घोषान् उतऽतरा युगानि उक्थेषु कारो प्रति नः जुषस्व मा
नः नि करिति कः पुरुषऽत्रा नमः ते ॥८॥ ओ सु स्वसारः कारवे शृणोत
ययौ वः दूरात् अनसा रथेन नि सु नमध्वं भवत सुऽपाराः अधः-
ऽअक्षाः सिंधवः स्रोत्याभिः ॥९॥ आ ते कारो शृणवाम वचांसि
ययाथ दूरात् अनसा रथेन नि ते नंसै पीप्यानाऽइव योषा मर्या-
यऽइव कन्या शश्वचै ते० ॥१०॥१३॥ यत् अंग त्वा भरताः संऽतरेयुः
गव्यन् ग्रामः इषितः इंद्रऽजूतः अर्षात् अह प्रऽसवः सर्गऽतक्तः
आ वः वृणे सुऽमतिं यज्ञियानां ॥११॥ अतारिषुः भरताः गव्यवः
सं अभक्त विप्रः सुऽमतिं नदीनां प्र पिन्वध्वं इषयंतीः सुऽराधाः

236*

आ वक्षणाः पृणध्वं यात शीभं ॥१२॥ उद्व ऊर्मिः शम्या हंत्वापो योक्त्राणि मुंचत । मादुष्कृतौ व्येनसाघ्न्यौ शूनमारतां ॥१३॥१४॥

---

॥३४॥ १–११ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३४॥ इंद्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून् । ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे ॥१॥ मखस्य ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन् । इंद्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा ॥२॥ इंद्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः । अहन्व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणां ॥३॥ इंद्रः स्वर्षा जनयन्नहानि जिगायोशिग्भिः पृतना अभिष्टिः । प्रारोचयन्मनवे केतुमह्नामविंदज्ज्योतिर्बृहते रणाय ॥४॥ इंद्रस्तुजो बर्हणा आ विवेश नृवद्दधानो नर्या पुरूणि । अचेतयद्धिय इमा जरित्रे प्रेमं वर्णमतिरच्छुक्रमासां ॥५॥१५॥ महो महानि पनयंत्यस्येंद्रस्य कर्म सुकृता पुरूणि । वृजनेन वृजिनान्सं पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥६॥ युधेंद्रो मह्ना वरिवश्चकार देवेभ्यः सत्पतिश्चर्षणिप्राः । विवस्वतः सदने अस्य तानि विप्रा उक्थेभिः कवयो गृणंति ॥७॥ सत्रासाहं वरेण्यं सहोदां ससवांसं स्वरपश्च देवीः । ससान यः पृथिवीं द्यामुतेमामिंद्रं मदंत्यनु धीरणासः ॥८॥ ससानात्याँ उत सूर्यं ससानेंद्रः ससान पुरुभोजसं गां । हिरण्ययमुत भोगं ससान हत्वी दस्यून्प्रार्यं वर्णमावत् ॥९॥ इंद्र ओषधीरसनोदहानि वनस्पतीँरसनोदंतरिक्षं । बिभेद वलं नुनुदे विवाचो-

आ वक्षणाः पृणध्वं यात शीभं ॥१२॥ उत वः ऊर्मिः शम्याः हंतु आपः योक्त्राणि मुंचत मा अदुःऽकृतौ विऽएनसा अघ्न्यौ शूनं आ अरतां ॥ १३ ॥ १४ ॥

---

॥३४॥ इंद्रः पूःऽभित् आ अतिरत् दासं अर्कैः विदत्ऽवसुः दयमानः वि शत्रून् ब्रह्मऽजूतः तन्वा ववृधानः भूरिऽदात्रः आ अपृणत् रोदसी उभे ॥१॥ मखस्य ते तविषस्य प्र जूतिं इयर्मि वाचं अमृताय भूषन् इंद्र क्षितीनां असि मानुषीणां विशां दैवीनां उत पूर्वऽयावा ॥ २॥ इंद्रः वृत्रं अवृणोत् शर्धऽनीतिः प्र मायिनां अमिनात् वर्पऽनीतिः अहन् विऽअंसं उशधक् वनेषु आविः धेनाः अकृणोत् राम्याणां ॥३॥ इंद्रः स्वःऽसाः जनयन् अहानि जिगाय उशिक्ऽभिः पृतनाः अभिष्टिः प्र अरोचयत् मनवे केतुं अह्नां अविंदत् ज्योतिः बृहते रणाय ॥ ४ ॥ इंद्रः तुजः बर्हणाः आ विवेश नृऽवत् दधानः नर्या पुरूणि अचेतयत् धियः इमाः जरित्रे प्र इमं वर्णं अतिरत् शुक्रं आसां ॥५॥१५॥ महः महानि पनयंति अस्य इंद्रस्य कर्म सुऽकृता पुरूणि वृजनेन वृजिनान् सं पिपेष मायाभिः दस्यून् अभिभूतिऽओजाः ॥६॥ युधा इंद्रः मह्ना वरिवः चकार देवेभ्यः सत्ऽपतिः चर्षणिऽप्राः विवस्वतः सदने अस्य तानि विप्राः उक्थेभिः कवयः गृणंति ॥ ७ ॥ सत्राऽसहं वरेण्यं सहःऽदां ससऽवांसं स्वः अपः च देवीः ससान यः पृथिवीं द्यां उत इमां इंद्रं मदंति अनु धीऽरणासः॥८॥ ससान अत्यान् उत सूर्यं ससान इंद्रः ससान पुरुऽभोजसं गां हिरण्ययं उत भोगं ससान हत्वी दस्यून् प्र आर्यं वर्णं आवत्॥९॥ इंद्रः ओषधीः असनोत् अहानि वनस्पतीन् असनोत् अंतरिक्षं बिभेद वलं नुनुदे विऽवाचः

ऽथाभवद्दमिताभिक्रतूनां ॥१०॥ शुनं हुवेम मघवानमिंद्रम-स्मिन्भरे नृतमं वाजसातौ । शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥ ११ ॥ १६ ॥

॥ ३५ ॥ १–११ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३५॥ तिष्ठा हरी रथ आ युज्यमाना याहि वायुर्न नि-युतो नो अच्छ । पिबास्यंधो अभिसृष्टो अस्मे इंद्र स्वाहा ररिमा ते मदाय ॥१॥ उपाजिरा पुरुहूताय सप्ती हरी र-थस्य धूर्ष्वा युनज्मि । द्रवद्यथा संभृतं विश्वतश्चिदुपेमं यज्ञमा वहात इंद्रं ॥२॥ उपो नयस्व वृषणा तपुष्पोतेमव त्वं वृषभ स्वधावः । ग्रसेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः ॥३॥ ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया स-धमाद आशू । स्थिरं रथं सुखमिंद्राधितिष्ठन्प्रजानन्विद्वाँ उप याहि सोमं ॥ ४ ॥ मा ते हरी वृषणा वीतपृष्ठा नि रीरम-न्यजमानासो अन्ये । अत्यायाहि शश्वतो वयं तेऽरं सुतेभिः कृणवाम सोमैः ॥ ५ ॥ १७ ॥ तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमं सुमना अस्य पाहि । अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इंदुमिंद्र ॥६॥ स्तीर्णं ते बर्हिः सुत इंद्र सोमः कृता धा-ना अत्तवे ते हरिभ्यां । तदोकसे पुरुशाकाय वृष्णे मरुत्वते तुभ्यं राता हवींषि ॥७॥ इमं नरः पर्वतास्तुभ्यमापः समिंद्र गोभिर्मधुमंतमक्रन् । तस्यागत्या सुमना ऋष्व पाहि प्रजा-नन्विद्वान्पथ्या३ अनु स्वाः ॥८॥ याँ आभजो मरुत इंद्र सो-मे ये त्वामवर्धन्नभवन्गणस्ते । तेभिरेतं सजोषा [illegible] ३मेः पिब जिह्वया सोममिंद्र ॥९॥

स्तुतस्यामेवो पाहि जिह्वव

अयं अभवत् दमिता अभिऽक्रतूनां ॥१०॥ शुनं हुवेम मघऽवानं
इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्-
ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥११॥१६॥

---

॥३५॥ तिष्ठ हरी' रथे आ युज्यमाना याहि वायुः न निऽयुतः नः
अच्छ पिबासि अंधः अभिऽसृष्टः अस्मे' इंद्र स्वाहा ररिम ते म-
दाय ॥१॥ उप अजिरा पुरुऽहूताय सप्ती' हरी' रथस्य धूःऽसु आ यु-
नज्मि द्रवत् यथा संऽभृतं विश्वतः चित् उप इमं यज्ञं आ वहातः
इंद्रं ॥२॥ उपो' नयस्व वृषणा तपुःऽपा उत ईं अव त्वं वृषभ स्व-
धाऽवः ग्रसेतां अश्वा वि मुच इह शोणा दिवेऽदिवे सऽदृशीः
अद्धि धानाः ॥३॥ ब्रह्मणा ते ब्रह्मऽयुजा युनज्मि हरी' सखाया
सधऽमादे आशू' स्थिरं रथं सुऽखं इंद्र अधिऽतिष्ठन् प्रऽजानन्
विद्वान् उप याहि सोमं ॥४॥ मा ते हरी' वृषणा वीतऽपृष्ठा नि
रीरमन् यजमानासः अन्ये अतिऽआयाहि शश्वतः वयं ते अरं सु-
तेभिः कृणवाम सोमैः ॥५॥१७॥ तव अयं सोमः त्वं आ इहि अर्वाङ्
शश्वत्ऽतमं सुऽमनाः अस्य पाहि अस्मिन् यज्ञे बर्हिषि आ नि-
ऽसद्य दधिष्व इमं जठरे इंदुं इंद्र ॥६॥ स्तीर्णं ते बर्हिः सुतः इंद्र सोमः
कृताः धानाः अत्तवे ते हरिऽभ्यां तत्ऽओकसे पुरुऽशाकाय वृष्णे
मरुत्वते तुभ्यं राता हवींषि ॥७॥ इमं नरः पर्वताः तुभ्यं आपः सं इंद्र
गोभिः मधुऽमंतं अक्रन् तस्य आऽगत्य सुऽमनाः ऋष्व पाहि प्र-
ऽजानन् विद्वान् पथ्याः अनु स्वाः ॥८॥ यान् आ अभजः मरुतः इंद्र
सोमे ये त्वा अवर्धन् अभवन् गणः ते तेभिः एतं सऽजोषाः वाव-
[illegible] जिह्वया सोमं इंद्र ॥९॥ इंद्र पिब स्वधया चित्
[illegible] ह्या यजत्र अध्वर्योः वा प्रऽयतं शक्र

हस्ताद्धोतुर्वा यज्ञं हविषो जुषस्व ॥१०॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ । शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥११॥१८॥

---

॥३६॥ १–९. ११ विश्वामित्रः । १० घोर आंगिरसः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३६॥ इमामू षु प्रभृतिं सातये धाः शश्वच्छश्वदूतिभिर्यादमानः । सुतेसुते वावृधे वर्धनेभिर्यः कर्मभिर्महद्भिः सुश्रुतो भूत् ॥१॥ इंद्राय सोमाः प्रदिवो विदाना ऋभुर्येभिर्वृषपर्वा विहायाः । प्रयम्यमानान्प्रति षू गृभायेंद्र पिब वृषधूतस्य वृष्णः ॥२॥ पिबा वर्धस्व तव घा सुतास इंद्र सोमासः प्रथमा उतेमे । यथापिबः पूर्व्याँ इंद्र सोमाँ एवा पाहि पन्यो अद्या नवीयान् ॥३॥ महाँ अमत्रो वृजने विरप्श्युग्रं शवः पत्यते धृष्ण्वोजः । नाह विव्याच पृथिवी चनैनं यत्सोमासो हर्यश्वममंदन् ॥४॥ महाँ उग्रो वावृधे वीर्याय समाचक्रे वृषभः काव्येन । इंद्रो भगो वाजदा अस्य गावः प्र जायंते दक्षिणा अस्य पूर्वीः ॥५॥१९॥ प्र यत्सिंधवः प्रसवं यथायन्नापः समुद्रं रथ्येव जग्मुः । अतश्चिदिंद्रः सदसो वरीयान्यदीं सोमः पृणति दुग्धो अंशुः ॥६॥ समुद्रेण सिंधवो यादमाना इंद्राय सोमं सुषुतं भरंतः । अंशुं दुहंति हस्तिनो भरित्रैर्मध्वः पुनंति धारया पवित्रैः ॥७॥ ह्रदा इव कुक्षयः सोमधानाः समी विव्याच सवना पुरूणि । अन्ना यदिंद्रः प्रथमा व्याश वृत्रं जघन्वाँ अवृणीत सोमं ॥८॥ आ तू भर माकिरेतत्परि ष्ठाद्विद्मा हि त्वा वसुपतिं वसूनां । इंद्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व प्र यंधि ॥९॥ अस्मे प्र यंधि मघवन्नृजीषिन्निंद्र रायो विश्ववारस्य भूरेः । अस्मे शतं शरदो जीवसे धा अस्मे

हस्तात् होतुः वा यज्ञं हविषः जुषस्व ॥१०॥ शुनं हुवेम मघऽवानं इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥११॥१८॥

---

॥३६॥ इमां ऊं सु प्रऽभृतिं सातये धाः शश्वत्ऽशश्वत् ऊतिऽभिः यादमानः सुतेऽसुते ववृधे वर्धनेभिः यः कर्मऽभिः महत्ऽभिः सुऽश्रुतः भूत् ॥१॥ इंद्राय सोमाः प्रऽदिवः विदानाः ऋभुः येभिः वृषऽपर्वा विऽहायाः प्रऽयम्यमानान् प्रति सु गृभाय इंद्र पिब वृषऽधूतस्य वृष्णः ॥२॥ पिब वर्धस्व तव घ सुतासः इंद्र सोमासः प्रथमाः उत इमे यथा अपिबः पूर्व्यान् इंद्र सोमान् एव पाहि पन्यः अद्य नवीयान् ॥३॥ महान् अमत्रः वृजने विऽरप्शी उग्रं शवः पत्यते धृष्णु ओजः न अह विव्याच पृथिवी चन एनं यत् सोमासः हरिऽअश्वं अमंदन् ॥४॥ महान् उग्रः ववृधे वीर्याय संऽआचक्रे वृषभः काव्येन इंद्रः भगः वाजऽदाः अस्य गावः प्र जायंते दक्षिणाः अस्य पूर्वीः ॥५॥१९॥ प्र यत् सिंधवः प्रऽसवं यथा आयन् आपः समुद्रं रथ्याःऽइव जग्मुः अतः चित् इंद्रः सदसः वरीयान् यत् ईं सोमः पृणति दुग्धः अंशुः ॥६॥ समुद्रेण सिंधवः यादमानाः इंद्राय सोमं सुऽसुतं भरंतः अंशुं दुहंति हस्तिनः भरित्रैः मध्वः पुनंति धारया पवित्रैः ॥७॥ ह्रदाःऽइव कुक्षयः सोमऽधानाः सं ईं विव्याच सवना पुरूणि अन्ना यत् इंद्रः प्रथमा विऽआश वृत्रं जघन्वान् अवृणीत सोमं ॥८॥ आ तु भर माकिः एतत् परि स्थात् विद्म हि त्वा वसुऽपतिं वसूनां इंद्र यत् ते माहिनं दत्रं अस्ति अस्मभ्यं तत् हरिऽअश्व प्र यंधि ॥९॥ अस्मे प्र यंधि मघऽवन् ऋजीषिन् इंद्र रायः विश्वऽवारस्य भूरेः अस्मे शतं शरदः जीवसे धाः अस्मे

वीराञ्छश्वंत इंद्र शिप्रिन् ॥ १० ॥ शुनं हुवेम मघवानमिंद्रम-स्मिन्भरे नृतमं वाजसातौ । शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥ ११ ॥ २० ॥

॥ ३७ ॥ १–११ विश्वामित्रः ॥ इंद्रः ॥ १–१० गायत्री । ११ अनुष्टुप् ॥

॥३७॥ वार्त्रहत्याय शवसे पृतनाषाह्याय च । इंद्र त्वा वर्तयामसि ॥१॥ अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो । इंद्र कृण्वंतु वाघतः ॥२॥ नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इंद्राभिमातिषाह्ये ॥३॥ पुरुष्टुतस्य धामभिः शतेन महयामसि । इंद्रस्य चर्षणीधृतः ॥४॥ इंद्रं वृत्राय हंतवे पुरुहूतमुप ब्रुवे । भरेषु वाजसातये ॥५॥२१॥ वाजेषु सासहिर्भव त्वामीमहे शतक्रतो । इंद्र वृत्राय हंतवे ॥६॥ द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवःसु च । इंद्र साक्ष्वाभिमातिषु ॥७॥ शुष्मिंतमं न ऊतये द्युम्निनं पाहि जागृविं । इंद्र सोमं शतक्रतो ॥८॥ इंद्रियाणि शतक्रतो या ते जनेषु पंचसु । इंद्र तानि त आ वृणे ॥९॥ अगन्निंद्र श्रवो बृहद्द्युम्नं दधिष्व दुष्टरं । उत्ते शुष्मं तिरामसि ॥१०॥ अर्वावतो न आ गह्यथो शक्र परावतः । उ लोको यस्ते अद्रिव इंद्रेह तत आ गहि ॥११॥२२॥

॥ ३८ ॥ १–१० प्रजापतिर्वैश्वामित्रो वाच्यो वा द्वौ वा तौ विश्वामित्रो वा ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३८॥ अभि तष्टेव दीधया मनीषामत्यो न वाजी सुधुरो जिहानः । अभि प्रियाणि मर्मृशत्पराणि कवींरिच्छामि संदृशे सुमेधाः ॥ १ ॥ इनोत पृच्छ जनिमा कवीनां मनोधृतः सुकृतस्तक्षत द्यां । इमा उ ते प्रण्यो३ वर्धमाना मनोवाता अध नु धर्मणि ग्मन् ॥२॥ नि षीमिदत्र गुह्या दधाना उत क्षत्राय रोदसी समंजन् । सं मात्राभिर्ममिरे येमुरुर्वी अंतर्मही

वीरान् शश्वतः इंद्र शिप्रिन् ॥१०॥ शुनं हुवेम मघऽवानं इंद्रं अ-
स्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं
वृत्राणि संऽजितं धनानां ॥११॥२०॥

---

॥३७॥ वार्त्रऽहत्याय शवसे पृतनाऽसह्याय च इंद्र त्वा आ वर्त-
यामसि ॥१॥ अर्वाचीनं सु ते मनः उत चक्षुः शतऽक्रतो॰ इंद्र कृ-
ण्वंतु वाघतः ॥२॥ नामानि ते शतऽक्रतो॰ विश्वाभिः गीःऽभिः
ईमहे इंद्र अभिमातिऽसह्ये ॥३॥ पुरुऽस्तुतस्य धामऽभिः शतेन
महयामसि इंद्रस्य चर्षणिऽधृतः ॥४॥ इंद्रं वृत्राय हंतवे पुरुऽहूतं
उप ब्रुवे भरेषु वाजऽसातये ॥५॥२१॥ वाजेषु ससहिः भव त्वां ईमहे
शतऽक्रतो॰ इंद्र वृत्राय हंतवे ॥६॥ द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवः-
ऽसु च इंद्र साक्ष्व अभिऽमातिषु ॥७॥ शुष्मिन्ऽतमं नः ऊतये
द्युम्निनं पाहि जागृविं इंद्र सोमं शतऽक्रतो॰ ॥८॥ इंद्रियाणि शत-
ऽक्रतो॰ या ते जनेषु पंचऽसु इंद्र तानि ते आ वृणे ॥९॥ अगन् इंद्र
श्रवः बृहत् द्युम्नं दधिष्व दुस्तरं उत् ते शुष्मं तिरामसि ॥१०॥ अ-
र्वाऽवतः नः आ गहि अथो॰ शक्र पराऽवतः उं॰ लोकः यः ते अ-
द्रिऽवः इंद्र इह ततः आ गहि ॥११॥२२॥

---

॥३८॥ अभि तष्टाऽइव दीधय मनीषां अत्यः न वाजी सुऽधुरः
जिहानः अभि प्रियाणि मर्मृशत् पराणि कवीन् इच्छामि सं-
ऽदृशे सुऽमेधाः ॥१॥ इना उत पृच्छ जनिम कवीनां मनःऽधृतः
सुऽकृतः तक्षत द्यां इमाः ऊं॰ ते प्रऽन्यः वर्धमानाः मनःऽवाताः
अध नु धर्मणि ग्मन् ॥२॥ नि सीं इत् अत्र गुह्या दधानाः उत क्ष-
त्राय रोदसी॰ सं अंजन् सं मात्राभिः ममिरे येमुः उर्वी॰ अंतः मही॰

समृते धायसे धुः ॥३॥ आतिष्ठंतं परि विश्वे अभूषञ्छ्रियो व-
सानश्चरति स्वरोचिः । महत्तद्वृष्णो असुरस्य नामा विश्वरूपो
अमृतानि तस्थौ ॥४॥ असूत पूर्वो वृषभो ज्यायानिमा अस्य
शुरुधः संति पूर्वीः । दिवो नपाता विदथस्य धीभिः क्षत्रं
राजाना प्रदिवो दधाथे ॥५॥२३॥ त्रीणि राजाना विदथे
पुरूणि परि विश्वानि भूषथः सदांसि । अपश्यमत्र मनसा
जगन्वान्व्रते गंधर्वाँ अपि वायुकेशान् ॥६॥ तदिन्न्वस्य वृषभस्य
धेनोरा नामभिर्ममिरे सक्म्यं गोः । अन्यदन्यदसुर्यं१ वसाना
नि मायिनो ममिरे रूपमस्मिन् ॥७॥ तदिन्न्वस्य सवितु-
र्नकिर्मे हिरण्ययीममतिं यामशिश्रेत् । आ सुष्टुती रोदसी
विश्वमिन्वे अपीव योषा जनिमानि वव्रे ॥८॥ युवं प्रत्नस्य
साधथो महो यद्दैवी स्वस्तिः परि णः स्यातं । गोपाजिह्वस्य
तस्थुषो विरूपा विश्वे पश्यंति मायिनः कृतानि ॥९॥ शुनं
हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ । शृण्वंतमु-
ग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥१०॥२४॥३॥

॥ ३९ ॥ १–९ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३९॥ इंद्रं मतिर्हृद आ वच्यमानाच्छा पतिं स्तोमतष्टा
जिगाति । या जागृविर्विदथे शस्यमानेंद्र यत्ते जायते वि-
द्धि तस्य ॥१॥ दिवश्चिदा पूर्व्या जायमाना वि जागृविर्वि-
दथे शस्यमाना । भद्रा वस्त्राण्यर्जुना वसाना सेयमस्मे सन-
जा पित्र्या धीः ॥२॥ यमा चिदत्र यमसूरसूत जिह्वाया अग्रं
पतदा ह्यस्थात् । वपूंषि जाता मिथुना सचेते तमोहना
तपुषो बुध्न एता ॥३॥ नकिरेषां निंदिता मर्त्येषु ये अस्माकं
पितरो गोषु योधाः । इंद्र एषां दृंहिता माहिनावानुद्गोत्रा-

संऽऋते॰ धायसे धुः॰ ॥ ३ ॥ आऽतिष्ठंतं परि विश्वे अभूषन् श्रियः वसानः चरति स्वऽरोचिः महत् तत् वृष्णः असुरस्य नाम आ विश्वऽरूपः अमृतानि तस्थौ ॥ ४ ॥ असूत पूर्वः वृषभः ज्यायान् इमाः अस्य शुरुधः संति पूर्वीः दिवः नपाता विदथस्य धीभिः क्षत्रं राजाना प्रऽदिवः दधाथे ॥ ५ ॥ २३ ॥ त्रीणि राजाना विदथे पुरूणि परि विश्वानि भूषथः सदांसि अपश्यं अत्र मनसा जगन्वान् व्रते गंधर्वान् अपि वायुऽकेशान् ॥ ६ ॥ तत् इत् नु अस्य वृषभस्य धेनोः आ नामऽभिः ममिरे सक्म्यं गोः अन्यत्ऽअन्यत् असुर्यं वसानाः नि मायिनः ममिरे रूपं अस्मिन् ॥ ७ ॥ तत् इत् नु अस्य सवितुः नकिः मे हिरण्ययीं अमतिं यां अशिश्रेत् आ सुऽस्तुती रोदसी विश्वंऽइन्वे॰ अपिऽइव योषा जनिमानि वव्रे ॥ ८ ॥ युवं प्रत्नस्य साधथः महः यत् दैवी स्वस्तिः परि नः स्यातं गोपाजिह्वस्य तस्थुषः विऽरूपा विश्वे पश्यंति मायिनः कृतानि ॥ ९ ॥ शुनं हुवेम मघऽवानं इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥ १० ॥ २४ ॥ ३ ॥

---

॥ ३९ ॥ इंद्रं मतिः हृदः आ वच्यमाना अच्छ पतिं स्तोमऽतष्टा जिगाति या जागृविः विदथे शस्यमाना इंद्र यत् ते जायते विद्धि तस्य ॥ १ ॥ दिवः चित् आ पूर्व्या जायमाना वि जागृविः विदथे शस्यमाना भद्रा वस्त्राणि अर्जुना वसाना सा इयं अस्मे सनऽजा पित्र्या धीः ॥ २ ॥ यमा चित् अत्र यमऽसूः असूत जिह्वायाः अग्रं पतत् आ हि अस्थात् वपूंषि जाता मिथुना सचेते तमःऽहना तपुषः बुध्ने आऽइता ॥ ३ ॥ नकिः एषां निंदिता मर्त्येषु ये अस्माकं पितरः गोषु योधाः इंद्रः एषां दृंहिता माहिनऽवान् उत् गोत्रा-

णिं ससृजे दंसनावान् ॥४॥ सखा ह यत्र सखिभिर्नवग्वैरभिज्ञ्वा सत्वभिर्गा अनुग्मन्। सत्यं तदिंद्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियंतं ॥५॥२५॥ इंद्रो मधु संभृतमुस्रियायां पद्वद्विवेद शफवन्नमे गोः। गुहा हितं गुह्यं गूळ्हमप्सु हस्ते दधे दक्षिणे दक्षिणावान् ॥६॥ ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरिताद्भीके। इमा गिरः सोमपाः सोमवृद्ध जुषस्वेंद्र पुरुतमस्य कारोः॥७॥ ज्योतिर्यज्ञाय रोदसी अनु ष्यादारे स्याम दुरितस्य भूरेः। भूरि चिद्धि तुजतो मर्त्यस्य सुपारासो वसवो बर्हणावत् ॥ ८ ॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ। शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥ ९ ॥ २६ ॥ २ ॥

॥ ४० ॥ १-९ विश्वामित्रः ॥ इंद्रः ॥ गायत्री ॥

॥४०॥ इंद्र त्वा वृषभं वयं सुते सोमे हवामहे। स पाहि मध्वो अंधसः ॥१॥ इंद्र क्रतुविदं सुतं सोमं हर्य पुरुष्टुत। पिबा वृषस्व तातृपिं ॥२॥ इंद्र प्र णो धितावानं यज्ञं विश्वेभिर्देवेभिः। तिर स्तवान विश्पते ॥३॥ इंद्र सोमाः सुता इमे तव प्र यंति सत्पते। क्षयं चंद्रास इंदवः ॥४॥ दधिष्वा जठरे सुतं सोममिंद्र वरेण्यं। तव द्युक्षास इंदवः ॥५॥१॥ गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे। इंद्र त्वादातमिद्यशः ॥६॥ अभि द्युम्नानि वनिन इंद्रं सचंते अक्षिता। पीत्वी सोमस्य वावृधे ॥७॥ अर्वावतो न आ गहि परावतश्च वृत्रहन्। इमा जुषस्व नो गिरः ॥८॥ यदंतरा परावतमर्वावतं च हूयसे। इंद्रेह तत आ गहि ॥९॥२॥

॥ ४१ ॥ १-९ विश्वामित्रः ॥ इंद्रः ॥ गायत्री ॥

॥४१॥ आ तू न इंद्र मद्र्यग्घुवानः सोमपीतये हरिभ्यां या-

भिः समृजे दंसनाऽवान् ॥ ४ ॥ सखा ह यत्र सखिऽभिः नवऽग्वैः अभिऽज्ञु आ सत्वऽभिः गाः अनुऽग्मन् सत्यं तत् इंद्रः दशऽभिः दशऽग्वैः सूर्यं विवेद तमसि क्षियंतं ॥ ५ ॥ २५ ॥ इंद्रः मधु संऽभृतं उस्रियायां पत्ऽवत् विवेद शफऽवत् नमे गोः गुहा हितं गुह्यं गूळ्हं अप्ऽसु हस्ते दधे दक्षिणे दक्षिणऽवान् ॥ ६ ॥ ज्योतिः वृणीत तमसः विऽजानन् आरे स्याम दुःऽइतात् अभीके इमाः गिरः सोमऽपाः सोमऽवृद्ध जुषस्व इंद्र पुरुऽतमस्य कारोः ॥ ७ ॥ ज्योतिः यज्ञाय रोदसी अनु स्यात् आरे स्याम दुःऽइतस्य भूरेः भूरि चित् हि तुजतः मर्त्यस्य सुऽपारासः वसवः बर्हणाऽवत् ॥ ८ ॥ शुनं हुवेम मघऽवानं इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥ ९ ॥ २६ ॥ २ ॥

---

॥ ४० ॥ इंद्र त्वा वृषभं वयं सुते सोमे हवामहे सः पाहि मध्वः अंधसः ॥ १ ॥ इंद्र क्रतुऽविदं सुतं सोमं हर्य पुरुऽस्तुत पिब आ वृषस्व ततृपिं ॥ २ ॥ इंद्र प्र नः धितऽवानं यज्ञं विश्वेभिः देवेभिः तिर स्तवान विश्पते ॥ ३ ॥ इंद्र सोमाः सुताः इमे तव प्र यंति सत्ऽपते क्षयं चंद्रासः इंदवः ॥ ४ ॥ दधिष्व जठरे सुतं सोमं इंद्र वरेण्यं तव द्युक्षासः इंदवः ॥ ५ ॥ १ ॥ गिर्वणः पाहि नः सुतं मधोः धाराभिः अज्यसे इंद्र त्वाऽदातं इत् यशः ॥ ६ ॥ अभि द्युम्नानि वनिनः इंद्रं सचंते अक्षिता पीत्वी सोमस्य ववृधे ॥ ७ ॥ अर्वाऽवतः नः आ गहि पराऽवतः च वृत्रऽहन् इमाः जुषस्व नः गिरः ॥ ८ ॥ यत् अंतरा पराऽवतं अर्वाऽवतं च हूयसे इंद्र इह ततः आ गहि ॥ ९ ॥ २ ॥

---

॥ ४१ ॥ आ तु नः इंद्र मद्र्यक् हुवानः सोमऽपीतये हरिऽभ्यां या-

ह्यद्रिवः ॥१॥ सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक्। अयुज्रन्प्रातरद्रयः ॥२॥ इमा ब्रह्म ब्रह्मवाहः क्रियंत आ बर्हिः सीद। वीहि शूर पुरोळाशं ॥३॥ रारंधि सवनेषु ण एषु स्तोमेषु वृत्रहन्। उक्थेष्विंद्र गिर्वणः ॥४॥ मतयः सोमपामुरुं रिहंति शवसस्पतिं। इंद्रं वत्सं न मातरः ॥५॥३॥ स मंदस्वा ह्यंधसो राधसे तन्वा महे। न स्तोतारं निदे करः ॥६॥ वयमिंद्र त्वायवो हविष्मंतो जरामहे। उत त्वमस्मयुर्वसो ॥७॥ मारे अस्मद्वि मुमुचो हरिप्रियार्वाङ्याहि। इंद्र स्वधावो मत्स्वेह ॥८॥ अर्वाचं त्वा सुखे रथे वहतामिंद्र केशिना। घृतस्नू बर्हिरासदे ॥९॥४॥

॥ ४२ ॥ १–९ विश्वामित्रः ॥ इंद्रः ॥ गायत्री ॥

॥४२॥ उप नः सुतमा गहि सोममिंद्र गवाशिरं। हरिभ्यां यस्ते अस्मयुः ॥१॥ तमिंद्र मदमा गहि बर्हिःष्ठां ग्रावभिः सुतं। कुविन्न्वस्य तृप्णवः ॥२॥ इंद्रमित्था गिरो ममाच्छागुरिषिता इतः। आवृते सोमपीतये ॥३॥ इंद्रं सोमस्य पीतये स्तोमैरिह हवामहे। उक्थेभिः कुविदागमत् ॥४॥ इंद्र सोमाः सुता इमे तान्दधिष्व शतक्रतो। जठरे वाजिनीवसो ॥५॥५॥ विद्मा हि त्वा धनंजयं वाजेषु दधृषं कवे। अधा ते सुम्नमीमहे ॥६॥ इममिंद्र गवाशिरं यवाशिरं च नः पिब। आगत्या वृषभिः सुतं ॥७॥ तुभ्येदिंद्र स्व ओक्ये३ सोमं चोदामि पीतये। एष रारंतु ते हृदि ॥८॥ त्वां सुतस्य पीतये प्रत्नमिंद्र हवामहे। कुशिकासो अवस्यवः ॥९॥६॥

॥ ४३ ॥ १–८ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ४३ ॥ आ याह्यर्वाङुप वंधुरेष्ठास्तवेदनु प्रदिवः सोमपेयं। प्रिया सखाया वि मुचोप बर्हिस्त्वामिमे हव्यवा-

हि अद्रिऽवः ॥१॥ सत्तः होता नः ऋत्वियः तिस्तिरे बर्हिः आनुषक् अयुंजन् प्रातः अद्रयः ॥२॥ इमा ब्रह्म ब्रह्मऽवाहः क्रियंते आ बर्हिः सीद वीहि शूर पुरोळाशं ॥३॥ रारंधि सवनेषु नः एषु स्तोमेषु वृत्रऽहन् उक्थेषु इंद्र गिर्वणः ॥४॥ मतयः सोमऽपां उरुं रिहंति शवसः पतिं इंद्रं वत्सं न मातरः ॥५॥३॥ सः मंदस्व हि अंधसः राधसे तन्वा महे न स्तोतारं निदे करः ॥६॥ वयं इंद्र त्वाऽयवः हविष्मंतः जरामहे उत त्वं अस्मऽयुः वसो ॥७॥ मा आरे अस्मत् वि मुमुचः हरिऽप्रिय अर्वाङ् याहि इंद्र स्वधाऽवः मत्स्व इह ॥८॥ अर्वाचं त्वा सुऽखे रथे वहतां इंद्र केशिना घृतस्नू॰ बर्हिः आऽसदे ॥ ९ ॥ ४ ॥

---

॥४२॥ उप नः सुतं आ गहि सोमं इंद्र गोऽआशिरं हरिऽभ्यां यः ते अस्मऽयुः ॥१॥ तं इंद्र मदं आ गहि बर्हिःऽस्थां ग्रावऽभिः सुतं कुवित् नु अस्य तृष्णवः ॥२॥ इंद्रं इत्था गिरः मम अच्छ अगुः इषिताः इतः आऽवृते सोमऽपीतये ॥३॥ इंद्रं सोमस्य पीतये स्तोमैः इह हवामहे उक्थेभिः कुवित् आऽगमत् ॥४॥ इंद्र सोमाः सुताः इमे तान् दधिष्व शतऽक्रतो॰ जठरे वाजिनीऽवसो॰ ॥५॥५॥ विद्म हि त्वा धनंऽजयं वाजेषु दधृषं कवे अध ते सुम्नं ईमहे ॥६॥ इमं इंद्र गोऽआशिरं यवऽआशिरं च नः पिब आऽगत्य वृषऽभिः सुतं ॥७॥ तुभ्य इत् इंद्र स्वे ओक्ये सोमं चोदामि पीतये एषः रंतु ते हृदि ॥८॥ त्वां सुतस्य पीतये प्रत्नं इंद्र हवामहे कुशिकासः अवस्यवः ॥९॥६॥

---

॥४३॥ आ याहि अर्वाङ् उप वंधुरेऽस्थाः तव इत् अनु प्रऽदिवः सोमऽपेयं प्रिया सखाया वि मुच उप बर्हिः त्वां इमे हव्यऽवा-

हो हवंते ॥१॥ आ याहि पूर्वीरति चर्षणीराँ अर्य आशिष उप नो
हरिभ्यां। इमा हि त्वा मतयः स्तोमतष्टा इंद्र हवंते सख्यं जुषाणाः
॥२॥ आ नो यज्ञं नमोवृधं सजोषा इंद्र देव हरिभिर्याहि तूयं।
अहं हि त्वा मतिभिर्जोहवीमि घृतप्रयाः सधमादे मधूनां ॥३॥
आ च त्वामेता वृषणा वहातो हरी सखाया सुधुरा स्वंगा।
धानावदिंद्रः सवनं जुषाणः सखा सख्युः शृणवद्वंदनानि ॥४॥
कुविन्मा गोपां करसे जनस्य कुविद्राजानं मघवन्नृजीषिन्।
कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शि-
क्षाः ॥५॥ आ त्वा बृहंतो हरयो युजाना अर्वागिंद्र सधमादो
वहंतु। प्र ये द्विता दिव ऋंजंत्याताः सुसंमृष्टासो वृषभस्य मू-
राः ॥६॥ इंद्र पिब वृषधूतस्य वृष्ण आ यं ते श्येन उशते ज-
भार। यस्य मदे च्यावयसि प्र कृष्टीर्यस्य मदे अप गोत्रा ववर्थ
॥७॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ।
शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥८॥७॥

॥ ४४ ॥ १–५ विश्वामित्रः ॥ इंद्रः ॥ बृहती ॥

॥४४॥ अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः। जु-
षाण इंद्र हरिभिर्न आ गह्या तिष्ठ हरितं रथं ॥१॥ हर्यन्नुष-
समर्चयः सूर्यं हर्यन्नरोचयः। विद्वांश्चिकित्वान्हर्यश्व वर्धस इंद्र
विश्वा अभि श्रियः ॥२॥ द्यामिंद्रो हरिधायसं पृथिवीं हरि-
वर्पसं। अधारयद्धरितोर्भूरि भोजनं ययोरंतर्हरिश्चरत् ॥३॥
जज्ञानो हरितो वृषा विश्वमा भाति रोचनं। हर्यश्वो हरितं
धत्त आयुधमा वज्रं बाह्वोर्हरिं ॥४॥ इंद्रो हर्यंतमर्जुनं वज्रं
शुक्रैरभीवृतं। अपावृणोद्धरिभिरद्रिभिः सुतमुद्गा हरिभि-
राजत ॥५॥८॥

इंः हवंते ॥१॥ आ याहि पूर्वीः अति चर्षणीः आ अर्यः आऽशिषः उप नः हरिऽभ्यां इमाः हि त्वा मतयः स्तोमऽतष्टाः इंद्र हवंते सख्यं जुषाणाः ॥२॥ आ नः यज्ञं नमःऽवृधं सऽजोषाः इंद्र देव हरिऽभिः याहि तूयं अहं हि त्वा मतिऽभिः जोहवीमि घृतऽप्रयाः सधऽमादे मधूनां ॥३॥ आ च त्वां एता वृषणा वहातः हरी सखाया सुऽधुरा सुऽअंगा धानाऽवत् इंद्रः सवनं जुषाणः सखा सख्युः शृणवत् वंदनानि ॥४॥ कुवित् मा गोपां करसे जनस्य कुवित् राजानं मघऽवन् ऋजीषिन् कुवित् मा ऋषिं पपिऽवांसं सुतस्य कुवित् मे वस्वः अमृतस्य शिक्षाः ॥५॥ आ त्वा बृहंतः हरयः युजानाः अर्वाक् इंद्र सधऽमादः वहंतु प्र ये द्विता दिवः ऋंजंति आताः सुऽसंमृष्टासः वृषभस्य मूराः ॥६॥ इंद्र पिब वृषऽधूतस्य वृष्णः आ यं ते श्येनः उशते जभार यस्य मदे च्यवयसि प्र कृष्टीः यस्य मदे अप गोत्रा ववर्थ ॥७॥ शुनं हुवेम मघऽवानं इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥८॥७॥

॥४४॥ अयं ते अस्तु हर्यतः सोमः आ हरिऽभिः सुतः जुषाणः इंद्र हरिऽभिः नः आ गहि आ तिष्ठ हरितं रथं ॥१॥ हर्यन् उषसं अर्चयः सूर्यं हर्यन् अरोचयः विद्वान् चिकित्वान् हरिऽअश्व वर्धसे इंद्र विश्वाः अभि श्रियः ॥२॥ द्यां इंद्रः हरिऽधायसं पृथिवीं हरिऽवर्पसं अधारयत् हरितोः भूरि भोजनं ययोः अंतः हरिः चरत् ॥३॥ जज्ञानः हरितः वृषा विश्वं आ भाति रोचनं हरिऽअश्वः हरितं धत्ते आयुधं आ वज्रं बाह्वोः हरिं ॥४॥ इंद्रः हर्यंतं अर्जुनं वज्रं शुक्रैः अभिऽवृतं अप अवृणोत् हरिऽभिः अद्रिऽभिः सुतं उत् गाः हरिऽभिः आजत ॥५॥८॥

॥ ४५ ॥ १–५ विश्वामित्रः ॥ इंद्रः ॥ बृहती ॥

॥४५॥ आ मंद्रैरिंद्र हरिभिर्याहि मयूररोमभिः। मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि ॥१॥ वृत्रखादो वलंरुजः पुरां दर्मो अपामजः। स्थाता रथस्य हर्योरभिस्वर इंद्रो दृळ्हा चिदारुजः ॥२॥ गंभीराँ उदधीँरिव क्रतुं पुष्यसि गा इव। प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥३॥ आ नस्तुजं रयिं भरांशं न प्रतिजानते। वृक्षं पक्वं फलमंकीव धूनुहींद्र संपारणं वसु ॥४॥ स्वयुरिंद्र स्वराळसि स्मद्दिष्टिः स्वयशस्तरः। स वावृधान ओजसा पुरुष्टुत भवा नः सुश्रवस्तमः ॥५॥९॥

---

॥ ४६ ॥ १–५ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥४६॥ युध्मस्य ते वृषभस्य स्वराज उग्रस्य यूनः स्थविरस्य घृष्वेः। अजूर्यतो वज्रिणो वीर्याऽणींद्र श्रुतस्य महतो महानि ॥१॥ महाँ असि महिष वृष्ण्येभिर्धनस्पृदुग्र सहमानो अन्यान् एको विश्वस्य भुवनस्य राजा स योधया च क्षयया च जना ॥२॥ प्र मात्राभी रिरिचे रोचमानः प्र देवेभिर्विश्वतो अप्रतीत प्र मज्मना दिव इंद्रः पृथिव्याः प्रोरोर्महो अंतरिक्षादृजी ॥३॥ उरुं गंभीरं जनुषाभ्युऽग्रं विश्वव्यचसमवतं मतीनां। इंद्रं सोमासः प्रदिवि सुतासः समुद्रं न स्रवत आ विशंति ॥४॥ यं सोममिंद्र पृथिवीद्यावा गर्भं न माता बिभृतस्त्वाया। तं ते हिन्वंति तमु ते मृजंत्यध्वर्यवो वृषभ पातवा उ ॥५॥१०॥

---

॥ ४७ ॥ १–५ विश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥४७॥ मरुत्वाँ इंद्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आ सिंचस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानां ॥१॥ सजोषा इंद्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर वि-

॥४५॥ आ मंद्रैः इंद्र हरिऽभिः याहि मयूररोमऽभिः मा त्वा के चित् नि यमन् विं न पाशिनः अति धन्वऽइव तान् इहि ॥१॥ वृत्रऽखादः वलंऽरुजः पुरां दर्मः अपां अजः स्थाता रथस्य हर्योः अभिऽस्वरे इंद्रः दृह्ळा चित् आऽरुजः ॥२॥ गंभीरान् उदधीनऽइव क्रतुं पुष्यसि गाःऽइव प्र सुऽगोपाः यवसं धेनवः यथा हृदं कुल्याःऽइव आशत ॥३॥ आ नः तुजं रयिं भर अंशं न प्रतिऽजानते वृक्षं पक्वं फलं अंकीऽइव धूनुहि इंद्र संऽपारणं वसु ॥४॥ स्वऽयुः इंद्र स्वऽराट् असि स्मत्ऽदिष्टिः स्वयशःऽतरः सः ववृधानः ओजसा पुरुऽस्तुत भव नः सुश्रवःऽतमः ॥ ५ ॥ ९ ॥

---

॥४६॥ युध्मस्य ते वृषभस्य स्वऽराजः उग्रस्य यूनः स्थविरस्य घृष्वेः अजूर्यतः वज्रिणः वीर्याणि इंद्र श्रुतस्य महतः महानि ॥१॥ महान् असि महिष वृष्ण्येभिः धनऽस्पृत् उग्र सहमानः अन्यान् एकः विश्वस्य भुवनस्य राजा सः योधय च क्षयय च जनान् ॥२॥ प्र मात्राभिः रिरिचे रोचमानः प्र देवेभिः विश्वतः अप्रतिऽइतः प्र मज्मना दिवः इंद्रः पृथिव्याः प्र उरोः महः अंतरिक्षात् ऋजीषी ॥३॥ उरुं गभीरं जनुषा अभि उग्रं विश्वऽव्यचसं अवतं मतीनां इंद्रं सोमासः प्रऽदिवि सुतासः समुद्रं न स्रवतः आ विशंति ॥४॥ यं सोमं इंद्र पृथिवीद्यावा गर्भं न माता बिभृतः त्वाऽया तं ते हिन्वंति तं ऊं ते मृजंति अध्वर्यवः वृषभ पातवै ऊं ॥ ५ ॥ १० ॥

---

॥४७॥ मरुत्वान् इंद्र वृषभः रणाय पिब सोमं अनुऽस्वधं मदाय आ सिंचस्व जठरे मध्वः ऊर्मिं त्वं राजा असि प्रऽदिवः सुतानां ॥१॥ सऽजोषाः इंद्र सऽगणः मरुत्ऽभिः सोमं पिब वृत्रऽहा शूर वि-

कवये ता जुषस्व उत शोचस्व कृणुहि वस्यसः नः महः रायः पुरु-
ऽवार प्र यंधि ॥ २० ॥ १९ ॥

---

॥३॥ आ वः राजानं अध्वरस्य रुद्रं होतारं सत्यऽयजं रोदस्योः
अग्निं पुरा तनयित्नोः अचित्तात् हिरण्यऽरूपं अवसे कृणुध्वं ॥१॥
अयं योनिः चकृम यं वयं ते जायाऽइव पत्ये उशती सुऽवासाः
अर्वाचीनः परिऽवीतः नि सीद इमाः ऊं इति ते सुऽअपाक प्रतीचीः
॥२॥ आऽशृण्वते अदृपिताय मन्म नृऽचक्षसे सुऽमृळीकाय वेधः
देवाय शस्तिं अमृताय शंस ग्रावाऽइव सोता मधुऽसुत् यं ईळे
॥३॥ त्वं चित् नः शम्यै अग्ने अस्याः ऋतस्य बोधि ऋतऽचित् सु-
आधीः कदा ते उक्था सधऽमाद्यानि कदा भवंति सख्या गृहे
॥४॥ कथा ह तत् वरुणाय त्वं अग्ने कथा दिवे गर्हसे कत् नः
आगः कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कत् अर्यम्णे कत् भ-
गाय ॥५॥२०॥ कत् धिष्ण्यासु वृधसानः अग्ने कत् वाताय प्र-
तवसे शुभंऽये परिऽज्मने नासत्याय क्षे ब्रवः कत् अग्ने रुद्राय
नृऽघ्ने ॥६॥ कथा महे पुष्टिंऽभराय पूष्णे कत् रुद्राय सुऽमखाय
हविःऽदे कत् विष्णवे उरुऽगायाय रेतः ब्रवः कत् अग्ने शरवे बृ-
हत्यै ॥७॥ कथा शर्धाय मरुतां ऋताय कथा सूरे बृहते पृच्छ्यमानः
प्रति ब्रवः अदितये तुराय साध दिवः जातऽवेदः चिकित्वान् ॥८॥
ऋतेन ऋतं निऽयतं ईळे आ गोः आमा सचा मधुऽमत् पक्वं अग्ने
कृष्णा सती रुशता धासिना एषा जामर्येण पयसा पीपाय ॥९॥
ऋतेन हि स्म वृषभः चित् अक्तः पुमान् अग्निः पयसा पृष्ठ्येन
अस्पंदमानः अचरत् वयःऽधाः वृषा शुक्रं दुदुहे पृश्निः ऊधः
॥१०॥२१॥ ऋतेन अद्रिं वि असन् भिदंतः सं अंगिरसः नवंत गो-

भिः। शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते अग्नौ ॥११॥
ऋतेन देवीरमृता अमृक्ता अर्णोभिरापो मधुमद्भिरग्ने। वाजी
न सर्गेषु प्रस्तुभानः प्र सदमित्स्रवितवे दधन्युः ॥१२॥ मा कस्य
यक्षं सदमिद्धुरो गा मा वेशस्य प्रमिनतो मापेः। मा भ्रातुरग्ने
अनृजोर्ऋणं वेर्मा सख्युर्दक्षं रिपोर्भुजेम ॥१३॥ रक्षा णो अग्ने
तव रक्षणेभी रारक्षाणः सुमख प्रीणानः। प्रति ष्फुर वि रुज
वीड्वंहो जहि रक्षो महि चिद्वावृधानं ॥१४॥ एभिर्भव सुमना
अग्ने अर्कैरिमान्स्पृश मन्मभिः शूर वाजान्। उत ब्रह्माण्य-
ङ्गिरो जुषस्व सं ते शस्तिर्देववाता जरेत ॥१५॥ एता विश्वा
विदुषे तुभ्यं वेधो नीथान्यग्ने निण्या वचांसि। निवचना
कवये काव्यान्यशंसिषं मतिभिर्विप्र उक्थैः ॥१६॥२२॥

---

॥ ४ ॥ १–१५ वामदेवः ॥ अग्नी रक्षोहा ॥ त्रिष्टुप् ॥

॥४॥ कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ
इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्ष-
सस्तपिष्ठैः ॥१॥ तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता
शोशुचानः। तपूंष्यग्ने जुह्वा पतंगानसंदितो वि सृज विष्व-
गुल्काः ॥२॥ प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो
अस्या अदब्धः। यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे
व्यथिरा दधर्षीत् ॥३॥ उदग्ने तिष्ठ प्रत्या तनुष्व न्य१मित्राँ
ओषतात्तिग्महेते। यो नो अरातिं समिधान चक्रे नीचा
तं धक्ष्यतसं न शुष्कं ॥४॥ ऊर्ध्वो भव प्रति विध्याध्यस्मदा-
विष्कृणुष्व दैव्यान्यग्ने। अव स्थिरा तनुहि यातुजूनां जामि-
मजामिं प्र मृणीहि शत्रून् ॥५॥२३॥ स ते जानाति सुमतिं

भिः शुनं नरः परि सदन् उषसं आविः स्वः अभवत् जाते अग्नौ ॥११॥ ऋतेन देवीः अमृताः अमृक्ताः अर्णःऽभिः आपः मधुमत्ऽभिः अग्ने वाजी न सर्गेषु प्रऽस्तुभानः प्र सदं इत् स्रवितवे दधन्युः ॥१२॥ मा कस्य यक्षं सदं इत् हुरः गाः मा वेशस्य प्रऽमिनतः मा आपेः मा भ्रातुः अग्ने अनृजोः ऋणं वेः मा सख्युः दक्षं रिपोः भुजेम ॥१३॥ रक्ष नः अग्ने तव रक्षणेभिः रक्षाणः सुऽमख प्रीणानः प्रति स्फुर वि रुज वीळु अंहः जहि रक्षः महि चित् वावृधानं ॥१४॥ एभिः भव सुऽमनाः अग्ने अर्कैः इमान् स्पृश मन्मऽभिः शूर वाजान् उत ब्रह्माणि अंगिरः जुषस्व सं ते शस्तिः देवऽवाता जरेत ॥१५॥ एता विश्वा विदुषे तुभ्यं वेधः नीथानि अग्ने निण्या वचांसि निऽवचना कवये काव्यानि अशंसिषं मतिऽभिः विप्रः उक्थैः ॥१६॥२२॥

---

॥४॥ कृणुष्व पाजः प्रऽसितिं न पृथ्वीं याहि राजाऽइव अमऽवान् इभेन तृष्वीं अनु प्रऽसितिं द्रूणानः अस्ता असि विध्य रक्षसः तपिष्ठैः ॥१॥ तव भ्रमासः आशुऽया पतंति अनु स्पृश धृषता शोशुचानः तपूंषि अग्ने जुह्वा पतंगान् असंऽदितः वि सृज विष्वक् उल्काः ॥२॥ प्रति स्पशः वि सृज तूर्णिऽतमः भव पायुः विशः अस्याः अदब्धः यः नः दूरे अघऽशंसः यः अंति अग्ने माकिः ते व्यथिः आ दधर्षीत् ॥३॥ उत् अग्ने तिष्ठ प्रति आ तनुष्व नि अमित्रान् ओषतात् तिग्मऽहेते यः नः अरातिं संऽइधान चक्रे नीचा तं धक्षि अतसं न शुष्कं ॥४॥ ऊर्ध्वः भव प्रति विध्य अधि अस्मत् विः कृणुष्व दैव्यानि अग्ने अव स्थिरा तनुहि यातुऽजूनां जा- मिं प्र मृणीहि शत्रून् ॥५॥२३॥ सः ते जानाति सुऽमतिं

यविष्ठ य ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत्॥६॥ सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः॥७॥ अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः। स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून्॥८॥ इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून्। क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानां॥९॥ यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन। तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत्॥१०॥२४॥

महो रुजामि बंधुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय। त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः॥११॥ अस्वप्नजस्तरणयः सुशेवा अतंद्रासोऽवृका अश्रमिष्ठाः। ते पायवः सध्र्यंचो निषद्याग्ने तव नः पांत्वमूर॥१२॥ ये पायवो मामतेयं ते अग्ने पश्यंतो अंधं दुरितादरक्षन्। ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः॥१३॥ त्वया वयं सधन्य१स्त्वोतास्तव प्रणीत्यश्याम वाजान्। उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण॥१४॥ अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय। दहाशसो रक्षसः पाह्य१स्मान्द्रुहो निदो मित्रमहो अवद्यात्॥१५॥२५॥४॥

---

॥ ५ ॥ १–१५ वामदेवः ॥ वैश्वानरः ॥ त्रिष्टुप् ॥

॥५॥ वैश्वानराय मीळ्हुषे सजोषाः कथा दाशेमाग्नये बृहद्भाः। अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः॥१॥

यविष्ठ यः ईवते ब्रह्मणे गातुं ऐरत् विश्वानि अस्मै सुऽदिनानि
रायः द्युम्नानि अर्यः वि दुरः अभि द्यौत् ॥६॥ सः इत् अग्ने अस्तु सु-
ऽभगः सुऽदानुः यः त्वा नित्येन हविषा यः उक्थैः पिप्रीषति स्वे
आयुषि दुरोणे विश्वा इत् अस्मै सुऽदिना सा असत् इष्टिः ॥७॥
अर्चामि ते सुऽमतिं घोषि अर्वाक् सं ते ववाता जरतां इयं गीः
सुऽअश्वाः त्वा सुऽरथाः मर्जयेम अस्मे क्षत्राणि धारयेः अनु द्यून्
॥८॥ इह त्वा भूरि आ चरेत् उप त्मन् दोषाऽवस्तः दीदिऽवांसं अनु
द्यून् क्रीळंतः त्वा सुऽमनसः सपेम अभि द्युम्ना तस्थिऽवांसः जना-
नां ॥९॥ यः त्वा सुऽअश्वः सुऽहिरण्यः अग्ने उपऽयाति वसुऽमता
रथेन तस्य त्राता भवसि तस्य सखा यः ते आतिथ्यं आनुषक् जु-
जोषत् ॥१०॥२४॥ महः रुजामि बंधुता वचःऽभिः तत् मा पितुः
गोतमात् अनु इयाय त्वं नः अस्य वचसः चिकिद्धि होतः यविष्ठ
सुऽक्रतो॰ दमूनाः ॥११॥ अस्वप्नऽजः तरणयः सुऽशेवाः अतंद्रासः
अवृकाः अश्रमिष्ठाः ते पायवः सध्र्यंचः निऽसद्य अग्ने तव नः पां-
तु अमूर ॥१२॥ ये पायवः मामतेयं ते अग्ने पश्यंतः अंधं दुःऽइतात्
अरक्षन् रक्ष तान् सुऽकृतः विश्वऽवेदाः दिप्संतः इत् रिपवः न
अह देभुः ॥१३॥ त्वया वयं सऽधन्यः त्वाऽऊताः तव प्रऽनीती अ-
श्याम वाजान् उभा शंसा सूदय सत्यऽताते अनुष्ठुया कृणुहि
अह्रयाण ॥१४॥ अया ते अग्ने संऽइधा विधेम प्रति स्तोमं शस्य-
मानं गृभाय दह अशसः रक्षसः पाहि अस्मान् द्रुहः निदः मित्र-
ऽमहः अवद्यात् ॥१५॥२५॥४॥

---

॥५॥ वैश्वानराय मीळ्हुषे सऽजोषाः कथा दाशेम अग्नये बृहत्
भाः अनूनेन बृहता वक्षथेन उप स्तभायत् उपऽमित् न रोधः ॥१॥

मा निंदत य इमां मह्यं रातिं देवो ददौ मर्त्याय स्वधावान्। पाकाय गृत्सो अमृतो विचेता वैश्वानरो नृतमो यह्वो अग्निः ॥२॥ साम द्विबर्हा महि तिग्मभृष्टिः सहस्ररेता वृषभस्तुविष्मान्। पदं न गोरपगूळ्हं विविद्वानग्निर्मह्यं प्रेदु वोचन्मनीषां ॥३॥ प्र ताँ अग्निर्बभसत्तिग्मजंभस्तपिष्ठेन शोचिषा यः सुराधाः। प्र ये मिनंति वरुणस्य धाम प्रिया मित्रस्य चेततो ध्रुवाणि ॥४॥ अभ्रातरो न योषणो व्यंतः पतिरिपो न जनयो दुरेवाः। पापासः संतो अनृता असत्या इदं पदमजनता गभीरं ॥५॥१॥ इदं मे अग्ने कियते पावकामिनते गुरुं भारं न मन्म। बृहद्दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तधातु ॥६॥ तमिन्न्वे३व समना समानमभि क्रत्वा पुनती धीतिरश्याः। ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥७॥ प्रवाच्यं वचसः किं मे अस्य गुहा हितमुप निणिग्वदंति। यदुस्रियाणामप वारिव व्रन्पाति प्रियं रुपो अग्रं पदं वेः ॥८॥ इदमु त्यन्महि महामनीकं यदुस्रिया सचत पूर्व्यं गौः। ऋतस्य पदे अधि दीद्यानं गुहा रघुष्यद्रघुयद्विवेद ॥९॥ अध द्युतानः पित्रोः सचासामनुत गुह्यं चारु पृश्नेः। मातुष्पदे परमे अंति षद्गोर्वृष्णः शोचिषः प्रयतस्य जिह्वा ॥१०॥२॥ ऋतं वोचे नमसा पृच्छ्यमानस्तवाशसा जातवेदो यदीदं। त्वमस्य क्षयसि यद्ध विश्वं दिवि यदु द्रविणं यत्पृथिव्यां ॥११॥ किं नो अस्य द्रविणं कद्ध रत्नं वि नो वोचो जातवेदश्चिकित्वान्। गुहाध्वनः परमं यन्नो अस्य रेकु पदं न निदाना अगन्म ॥१२॥ का मर्यादा वयुना कद्ध वाममच्छा गमेम रघवो न वाजं। कदा नो देवीरमृतस्य पत्नीः सूरो वर्णेन ततनन्नुषासः ॥१३॥ अनिरेण

मा निंदत यः इमां मह्यं रातिं देवः ददौ मर्त्याय स्वधाऽवान् पाकाय गृत्सः अमृतः विऽचेताः वैश्वानरः नृऽतमः यह्वः अग्निः ॥२॥ साम द्विऽबर्हाः महि तिग्मऽभृष्टिः सहस्रऽरेताः वृषभः तुविष्मान् पदं न गोः अपऽगूळ्हं विविद्वान् अग्निः मह्यं प्र इत् ऊं इति वोचत् मनीषां ॥३॥ प्र तान् अग्निः बभसत् तिग्मऽजंभः तपिष्ठेन शोचिषा यः सुऽराधाः प्र ये मिनंति वरुणस्य धाम प्रिया मित्रस्य चेततः ध्रुवाणि ॥४॥ अभ्रातरः न योषणः व्यंतः पतिऽरिपः न जनयः दुःऽएवाः पापासः संतः अनृताः असत्याः इदं पदं अजनत गभीरं ॥५॥१॥ इदं मे अग्ने कियते पावक अमिनते गुरुं भारं न मन्म बृहत् दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तऽधातु ॥६॥ तं इत् नु एव समना समानं अभि क्रत्वा पुनती धीतिः अश्याः ससस्य चर्मन् अधि चारु पृश्नेः अग्रे रुपः आरुपितं जबारु ॥७॥ प्रऽवाच्यं वचसः किं मे अस्य गुहा हितं उप निणिक् वदंति यत् उस्रियाणां अप वाःऽइव व्रन् पाति प्रियं रुपः अग्रं पदं वेः॰ ॥८॥ इदं ऊं इति त्यत् महि महां अनीकं यत् उस्रिया सचत पूर्व्यं गौः ऋतस्य पदे अधि दीद्यानं गुहा रघुऽस्यत् रघुऽयत् विवेद ॥९॥ अध द्युतानः पित्रोः सचा आसा अमनुत गुह्यं चारु पृश्नेः मातुः पदे परमे अंति सत् गोः वृष्णः शोचिषः प्रऽयतस्य जिह्वा ॥१०॥२॥ ऋतं वोचे नमसा पृच्छ्यमानः तव आऽशसा जातऽवेदः यदि इदं त्वं अस्य क्षयसि यत् ह विश्वं दिवि यत् ऊं इति द्रविणं यत् पृथिव्यां ॥११॥ किं नः अस्य द्रविणं कत् ह रत्नं वि नः वोचः जातऽवेदः चिकित्वान् गुहा अध्वनः परमं यत् नः अस्य रेकु पदं न निदानाः अगन्म ॥१२॥ का मर्यादा वयुना कत् ह वामं अच्छ गमेम रघवः न वाजं कदा नः देवीः अमृतस्य पत्नीः सूरः वर्णेन ततनन् उषसः ॥१३॥ अनिरेण

वचसा फल्ग्वेन प्रतीत्येन कृधुनातृपासः । अधा ते अग्ने किमिहा वदंत्यनायुधास आसता सचंतां ॥१४॥ अस्य श्रिये समिधानस्य वृष्णो वसोरनीकं दम आ रुरोच । रुशद्वसानः सुदृशीकरूपः क्षितिर्न राया पुरुवारो अद्यौत् ॥१५॥३॥

---

॥ ६ ॥ १-११ वामदेवः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥६॥ ऊर्ध्व ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् । त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषां ॥१॥ अमूरो होता न्यसादि विक्ष्वग्निर्मंद्रो विदथेषु प्रचेताः । ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्यां ॥२॥ यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद्देवतातिमुराणः । उदु स्वरुर्नवजा नाक्रः पश्वो अनक्ति सुधितः सुमेकः ॥३॥ स्तीर्णे बर्हिषि समिधाने अग्ना ऊर्ध्वो अध्वर्युर्जुजुषाणो अस्थात् । पर्यग्निः पशुपा न होता चिविष्ट्येति प्रदिव उराणः ॥४॥ परि त्मना मितद्रुरेति होताग्निर्मंद्रो मधुवचा ऋतावा । द्रवंत्यस्य वाजिनो न शोका भयंते विश्वा भुवना यदभ्राट् ॥५॥४॥ भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः । न यत्ते शोचिस्तमसा वरंत न ध्वस्मानस्तन्वी३ रेप आ धुः ॥६॥ न यस्य सातुर्जनितोरवारि न मातरापितरा नू चिदिष्टौ । अधा मित्रो न सुधितः पावको३ऽग्निर्दीदाय मानुषीषु विक्षु ॥७॥ द्विर्यं पंच जीजनन्त्संवसानाः स्वसारो अग्निं मानुषीषु विक्षु । उषर्बुधमथर्यो३ न दंतं शुक्रं स्वासं परशुं न तिग्मं ॥८॥ तव त्ये अग्ने हरितो घृतस्ना रोहितास ऋज्वंचः स्वंचः । अरुषासो वृषण ऋजुमुष्का आ देवतातिमह्वंत दस्माः ॥९॥ ये ह त्ये ते सहमाना अयासस्त्वेषा-

वचसा फल्ग्वेन प्रतीत्येन कृधुना अतृपासः अध ते अग्ने किं इह
वदंति अनायुधासः असता सचंतां ॥१४॥ अस्य श्रिये संऽइधा-
नस्य वृष्णः वसोः अनीकं दमे आ रुरोच रुशत् वसानः सुदृशीक-
ऽरूपः क्षितिः न राया पुरुऽवारः अद्यौत् ॥१५॥३॥

---

॥६॥ ऊर्ध्वः ऊं सु नः अध्वरस्य होतः अग्ने तिष्ठ देवऽताता यजी-
यान् त्वं हि विश्वं अभि असि मन्म प्र वेधसः चित् तिरसि मनीषां
॥१॥ अमूरः होता नि असादि विक्षु अग्निः मंद्रः विदथेषु प्रऽचेताः
ऊर्ध्वं भानुं सविताऽइव अश्रेत् मेताऽइव धूमं स्तभायत् उप द्यां
॥२॥ यता सुऽजूर्णिः रातिनी घृताची प्रऽदक्षिणित् देवऽतातिं
उराणः उत् ऊं स्वरुः नवऽजाः न अक्रः पश्वः अनक्ति सुऽधितः
सुऽमेकः ॥३॥ स्तीर्णे बर्हिषि संऽइधाने अग्नौ ऊर्ध्वः अध्वर्युः जुजु-
षाणः अस्थात् परि अग्निः पशुऽपाः न होता त्रिऽविष्टि एति प्र-
ऽदिवः उराणः ॥४॥ परि त्मना मितऽद्रुः एति होता अग्निः मंद्रः
मधुऽवचाः ऋतऽवा द्रवंति अस्य वाजिनः न शोकाः भयंते वि-
श्वा भुवना यत् अभ्राट् ॥५॥४॥ भद्रा ते अग्ने सुऽअनीक संऽदृक्
घोरस्य सतः विषुणस्य चारुः न यत् ते शोचिः तमसा वरंत न
ध्वस्मानः तन्वि रेपः आ धुः० ॥६॥ न यस्य सातुः जनितोः अवारि
न मातरापितरा नु चित् इष्टौ अध मित्रः न सुऽधितः पावकः
अग्निः दीदाय मानुषीषु विक्षु ॥७॥ द्विः यं पंच जीजनन् संऽवसा-
नाः स्वसारः अग्निं मानुषीषु विक्षु उषःऽबुधं अथर्यः न दंतं शुक्रं
सुऽआसं परशुं न तिग्मं ॥८॥ तव त्ये अग्ने हरितः घृतऽस्नाः रोहि-
तासः ऋजुऽअंचः सुऽअंचः अरुषासः वृषणः ऋजुऽमुष्काः आ
[illegible]तातिं अह्वंत दस्माः ॥९॥ ये ह त्ये ते सहमानाः अयासः त्वेषा-

सो अग्ने अर्चयश्चरंति। श्येनासो न दुवसनासो अर्थं तुविष्वणसो मारुतं न शर्धः ॥ १० ॥ अकारि ब्रह्म समिधान तुभ्यं शंसात्युक्थं यजते व्यू धाः। होतारमग्निं मनुषो नि षेदुर्नमस्यंत उशिजः शंसमायोः ॥ ११ ॥ ५ ॥

॥ ७ ॥ १–११ वामदेवः ॥ अग्निः ॥ १ जगती। २–६ अनुष्टुप्। ७–११ त्रिष्टुप् ॥

॥७॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥१॥ अग्ने कदा त आनुषग्भुवद्देवस्य चेतनं। अधा हि त्वा जगृभ्रिरे मर्तासो विक्ष्वीड्यं ॥२॥ ऋतावानं विचेतसं पश्यंतो द्यामिव स्तृभिः। विश्वेषामध्वराणां हस्कर्तारं दमेदमे ॥३॥ आशुं दूतं विवस्वतो विश्वा यश्चर्षणीरभि। आ जभ्रुः केतुमायवो भृगवाणं विशेविशे ॥४॥ तमीं होतारमानुषक्चिकित्वांसं नि षेदिरे। रण्वं पावकशोचिषं यजिष्ठं सप्त धामभिः ॥५॥६॥ तं शश्वतीषु मातृषु वन आ वीतमश्रितं। चित्रं संतं गुहा हितं सुवेदं कूचिदर्थिनं ॥६॥ ससस्य यद्वियुता सस्मिन्नूधन्नृतस्य धामन्रणयंत देवाः। महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥७॥ वेरध्वरस्य दूत्यानि विद्वानुभे अंता रोदसी संचिकित्वान्। दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥८॥ कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्व१र्चिर्वपुषामिदेकं। यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥९॥ सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः। वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जंभैः ॥१०॥ तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः। वातस्य मेळिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे [illegible]

सः अग्ने अर्चयः चरंति श्येनासः न दुवसनासः अर्थं तुविऽस्वनसः मारुतं न शर्धः ॥१०॥ अकारि ब्रह्म संऽइधान तुभ्यं शंसाति उक्थं यजते वि ऊं इति धाः होतारं अग्निं मनुषः नि सेदुः नमस्यंतः उशिजः शंसं आयोः ॥११॥५॥

---

॥७॥ अयं इह प्रथमः धायि धातृऽभिः होता यजिष्ठः अध्वरेषु ईड्यः यं अप्नवानः भृगवः विऽरुरुचुः वनेषु चित्रं विऽभ्वं विशेऽविशे ॥१॥ अग्ने कदा ते आनुषक् भुवत् देवस्य चेतनं अध हि त्वा जगृभ्रिरे मर्तासः विक्षु ईड्यं ॥२॥ ऋतऽवानं विऽचेतसं पश्यंतः द्यांऽइव स्तृऽभिः विश्वेषां अध्वराणां हस्कर्तारं दमेऽदमे ॥ ३ ॥ आशुं दूतं विवस्वतः विश्वाः यः चर्षणीः अभि आ जभ्रुः केतुं आयवः भृगवाणं विशेऽविशे ॥४॥ तं ईं होतारं आनुषक् चिकित्वांसं नि सेदिरे रण्वं पावकऽशोचिषं यजिष्ठं सप्त धामऽभिः ॥५॥६॥ तं शश्वतीषु मातृषु वने आ वीतं अश्रितं चित्रं संतं गुहा हितं सुऽवेदं कूचित्ऽअर्थिनं ॥ ६ ॥ ससस्य यत् विऽयुता सस्मिन् ऊधन् ऋतस्य धामन् रणयंत देवाः महान् अग्निः नमसा रातऽहव्यः वेः अध्वराय सदं इत् ऋतऽवा ॥७॥ वेः अध्वरस्य दूत्यानि विद्वान् उभे इति अंतः रोदसी इति संऽचिकित्वान् दूतः ईयसे प्रऽदिवः उराणः विदुःऽतरः दिवः आऽरोधनानि ॥८॥ कृष्णं ते एम रुशतः पुरः भाः चरिष्णु अर्चिः वपुषां इत् एकं यत् अप्रऽवीता दधते ह गर्भं सद्यः चित् जातः भवसि इत् ऊं इति दूतः ॥९॥ सद्यः जातस्य ददृशानं ओजः यत् अस्य वातः अनुऽवाति शोचिः वृणक्ति तिग्मां अतसेषु जिह्वां स्थिरा चित् अन्ना दयते वि जंभैः ॥१०॥ तृषु यत् अन्ना तृषुणा व-

तृषुं दूतं कृणुते यह्वः अग्निः वातस्य मेळिं सचते निऽजूर्वन् आशुं न वाजयते हिन्वे अर्वा ॥ ११ ॥ ७ ॥

॥ ८ ॥ १–८ वामदेवः ॥ अग्निः ॥ गायत्री ॥

॥८॥ दूतं वो विश्ववेदसं हव्यवाहममर्त्यं। यजिष्ठमृंजसे गिरा ॥१॥ स हि वेदा वसुधितिं महाँ आरोधनं दिवः। स देवाँ एह वक्षति ॥२॥ स वेद देव आनमं देवाँ ऋतायते दमे। दाति प्रियाणि चिद्वसु ॥३॥ स होता सेदु दूत्यं चिकित्वाँ अंतरीयते। विद्वाँ आरोधनं दिवः ॥४॥ ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः। य ईं पुष्यंत इंधते ॥५॥ ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे। ये अग्ना दधिरे दुवः ॥६॥ अस्मे रायो दिवेदिवे सं चरंतु पुरुस्पृहः। अस्मे वाजास ईरतां ॥७॥ स विप्रश्चर्षणीनां शवसा मानुषाणां। अति क्षिप्रेव विध्यति ॥८॥८॥

॥ ९ ॥ १–८ वामदेवः ॥ अग्निः ॥ गायत्री ॥

॥९॥ अग्ने मृळ महाँ असि य ईमा देवयुं जनं। इयेथ बर्हिरासदं ॥१॥ स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः। दूतो विश्वेषां भुवत् ॥२॥ स सद्म परि णीयते होता मंद्रो दिविष्टिषु। उत पोता नि षीदति ॥३॥ उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे। उत ब्रह्मा नि षीदति ॥४॥ वेषि ह्यध्वरीयतामुपवक्ता जनानां। हव्या च मानुषाणां ॥५॥ वेषीद्वस्य दूत्यं१ यस्य जुजोषो अध्वरं। हव्यं मर्तस्य वोळ्हवे ॥६॥ अस्माकं जोष्यध्वरमस्माकं यज्ञमंगिरः। अस्माकं शृणुधी हवं ॥७॥ परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः। येन रक्षसि दाशुषः ॥८॥९॥

॥ १० ॥ १–८ वामदेवः ॥ अग्निः ॥ १–३ पदपंक्तिः । ४. ६. ७ उष्णिक् पदपंक्तिर्वा । ५ महापदपंक्तिः । ८ उष्णिक् ॥

॥१०॥ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशं। ऋध्यामा त ओहैः ॥१॥ अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ ॥२॥ एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्ण

॥८॥ दूतं वः विश्वऽवेदसं हव्यऽवाहं अमर्त्यं यजिष्ठं ऋंजसे गिरा ॥१॥ सः हि वेद वसुऽधितिं महान् आऽरोधनं दिवः सः देवान् आ इह वक्षति ॥२॥ सः वेद देवः आऽनमं देवान् ऋतऽयते दमे दाति प्रियाणि चित् वसु ॥३॥ सः होता सः इत् ऊं इति दूत्यं चिकित्वान् अंतः ईयते विद्वान् आऽरोधनं दिवः ॥४॥ ते स्याम ये अग्नये ददाशुः हव्यदातिऽभिः ये ईं पुष्यंतः इंधते ॥५॥ ते राया ते सुऽवीर्यैः ससऽवांसः वि शृण्विरे ये अग्ना दधिरे दुवः ॥६॥ अस्मे इति रायः दिवेऽदिवे सं चरंतु पुरुऽस्पृहः अस्मे इति वाजासः ईरतां ॥७॥ सः विप्रः चर्षणीनां शवसा मानुषाणां अति क्षिप्राऽइव विध्यति ॥८॥८॥

---

॥९॥ अग्ने मृळ महान् असि यः ईं आ देवऽयुं जनं इयेथ बर्हिः आऽसदं ॥१॥ सः मानुषीषु दुःऽदभः विक्षु प्रऽअवीः अमर्त्यः दूतः विश्वेषां भुवत् ॥२॥ सः सद्म परि नीयते होता मंद्रः दिविष्टिषु उत पोता नि सीदति ॥३॥ उत ग्नाः अग्निः अध्वरे उतो इति गृहऽपतिः दमे उत ब्रह्मा नि सीदति ॥४॥ वेषि हि अध्वरिऽयतां उपऽवक्ता जनानां हव्या च मानुषाणां ॥५॥ वेषि इत् ऊं इति अस्य दूत्यं यस्य जुजोषः अध्वरं हव्यं मर्तस्य वोळ्हवे ॥६॥ अस्माकं जोषि अध्वरं अस्माकं यज्ञं अंगिरः अस्माकं शृणुधि हवं ॥७॥ परि ते दुःऽदभः रथः अस्मान् अश्नोतु विश्वतः येन रक्षसि दाशुषः ॥८॥९॥

---

॥१०॥ अग्ने तं अद्य अश्वं न स्तोमैः क्रतुं न भद्रं हृदिऽस्पृशं ऋध्याम ते ओहैः ॥१॥ अध हि अग्ने क्रतोः भद्रस्य दक्षस्य साधोः रथीः ऋतस्य बृहतः बभूथ ॥२॥ एभिः नः अर्कैः भव नः अर्वाङ् स्वः न

ज्योतिः। अग्ने विश्वेभिः सुमना अनीकैः ॥३॥ आभिष्टे अद्य गीर्भिर्गृणंतोऽग्ने दाशेम । प्र ते दिवो न स्तनयंति शुष्माः ॥४॥ तव स्वादिष्ठाग्ने संदृष्टिरिदा चिदह्न इदा चिदक्तोः। श्रिये रुक्मो न रोचत उपाके ॥५॥ घृतं न पूतं तनूररेपाः शुचि हिरण्यं। तत्ते रुक्मो न रोचत स्वधावः ॥६॥ कृतं चिद्धि ष्मा सनेमि द्वेषोऽग्न इनोषि मर्तात्। इत्था यजमानादृतावः ॥७॥ शिवा नः सख्या संतु भ्रात्राग्ने देवेषु युष्मे । सा नो नाभिः सदने सस्मिन्नूधन् ॥८॥१०॥१॥

॥ ११ ॥ १–६ वामदेवः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥११॥ भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य। रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नं ॥१॥ वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः। विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥२॥ त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायंते राध्यानि। त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥३॥ त्वद्वाजी वाजंभरो विहाया अभिष्टिकृज्जायते सत्यशुष्मः। त्वद्रयिर्देवजूतो मयोभुस्त्वदाशुर्जूजुवाँ अग्ने अर्वा ॥४॥ त्वामग्ने प्रथमं देवयंतो देवं मर्ता अमृत मंद्रजिह्वं। द्वेषोयुतमा विवासंति धीभिर्दमूनसं गृहपतिममूरं ॥५॥ आरे अस्मदमतिमारे अंह आरे विश्वां दुर्मतिं यन्निपासि। दोषा शिवः सहसः सूनो अग्ने यं देव आ चित्सचसे स्वस्ति ॥६॥११॥

॥ १२ ॥ १–६ वामदेवः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१२॥ यस्त्वामग्न इनधते यतस्रुक्त्रिस्ते अन्नं कृणवत्सस्मिन्नहन्। स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चि-

ज्योतिः अग्ने विश्वेभिः सुऽमनाः अनीकैः ॥३॥ आभिः ते अद्य गीःऽभिः गृणंतः अग्ने दाशेम प्र ते दिवः न स्तनयंति शुष्माः ॥४॥ तव स्वादिष्ठा अग्ने संऽदृष्टिः इदा चित् अह्नः इदा चित् अक्तोः श्रिये रुक्मः न रोचते उपाके ॥५॥ घृतं न पूतं तनूः अरेपाः शुचि हिरण्यं तत् ते रुक्मः न रोचत स्वधाऽवः ॥६॥ कृतं चित् हि स्म सनेमि द्वेषः अग्ने इनोषि मर्तात् इत्था यजमानात् ऋतऽवः ॥७॥ शिवा नः सख्या संतु भ्रात्रा अग्ने देवेषु युष्मे सा नः नाभिः सदने सस्मिन् ऊधन् ॥८॥१०॥१॥

---

॥११॥ भद्रं ते अग्ने सहसिन् अनीकं उपाके आ रोचते सूर्यस्य रुशत् दृशे ददृशे नक्तऽया चित् अरूक्षितं दृशे आ रूपे अन्नं ॥१॥ वि साहि अग्ने गृणते मनीषां खं वेपसा तुविऽजात स्तवानः विश्वेभिः यत् वावनः शुक्र देवैः तत् नः रास्व सुऽमहः भूरि मन्म ॥२॥ त्वत् अग्ने काव्या त्वत् मनीषाः त्वत् उक्था जायंते राध्यानि त्वत् एति द्रविणं वीरऽपेशाः इत्थाऽधिये दाशुषे मर्त्याय ॥३॥ त्वत् वाजी वाजंऽभरः विऽहायाः अभिष्टिऽकृत् जायते सत्यऽशुष्मः त्वत् रयिः देवऽजूतः मयःऽभुः त्वत् आशुः जूजुऽवान् अग्ने अर्वा ॥४॥ त्वां अग्ने प्रथमं देवऽयंतः देवं मर्ताः अमृत मंद्रऽजिह्वं द्वेषःऽयुतं आ विवासंति धीभिः दमूनसं गृहऽपतिं अमूरं ॥५॥ आरे अस्मत् अमतिं आरे अंहः आरे विश्वां दुःऽमतिं यत् निऽपासि दोषा शिवः सहसः सूनो अग्ने यं देवः आ चित् सचसे स्वस्ति ॥६॥११॥

---

॥१२॥ यः त्वां अग्ने इनधते यतऽस्रुक् त्रिः ते अन्नं कृणवत् सस्मिन् अहन् सः सु द्युम्नैः अभि अस्तु प्रऽसक्षत् तव क्रत्वा जातऽवेदः चि-

कित्वान् ॥ १ ॥ इ॒ध्मं यस्ते॑ ज॒भर॑च्छश्रमा॒णो म॒हो अ॑ग्ने॒ अनी॑क॒मा स॑प॒र्यन्। स इ॑धा॒नः प्रति॑ दो॒षामु॒षासं॒ पुष्य॑न्र॒यिं स॑चते॒ घ्नन्न॒मित्रा॑न् ॥ २ ॥ अ॒ग्निरी॑शे बृह॒तः क्ष॒त्रिय॑स्या॒ग्निर्वाज॑स्य पर॒मस्य॑ रा॒यः। दधा॑ति॒ रत्नं॑ विध॒ते यवि॑ष्ठो॒ व्या॑नु॒षङ्मर्त्या॑य स्व॒धावा॑न् ॥ ३ ॥ यच्चि॒द्धि ते॑ पुरुष॒त्रा य॑विष्ठा॒चित्ति॑भिश्चकृ॒मा कच्चि॒दागः॑। कृ॒धी ष्व१॒॑स्माँ अदि॑ते॒रना॑गा॒न्व्येनां॑सि शिश्रथो॒ विष्व॑गग्ने ॥ ४ ॥ म॒हश्चि॑दग्न॒ एन॑सो अ॒भीक॑ ऊ॒र्वाद्दे॒वाना॑मु॒त मर्त्या॑नाम्। मा ते॒ सखा॑यः॒ सद॒मिद्रि॑षाम॒ यच्छा॑ तो॒काय॒ तन॑याय॒ शं योः ॥ ५ ॥ यथा॑ ह॒ त्यद्व॑सवो गौ॒र्यं॑ चित्प॒दि षि॒ताममु॑ञ्चता यजत्राः। ए॒वो ष्व१॒॑स्मन्मु॑ञ्चता॒ व्यंहः॒ प्र ता॑र्यग्ने प्रत॒रं न॒ आयुः॑ ॥ ६ ॥ १२ ॥

---

॥ १३ ॥ १—५ वामदेवः ॥ अग्निर्लिंगोक्तदेवता वा ॥ त्रिष्टुप् ॥

॥ १३ ॥ प्रत्य॒ग्निरु॒षसा॒मग्र॑मख्यद्विभाती॒नां सु॒मना॑ रत्न॒धेय॑म्। या॒तम॑श्विना सु॒कृतो॑ दुरो॒णमुत्सूर्यो॒ ज्योति॑षा दे॒व ए॑ति ॥ १ ॥ ऊ॒र्ध्वं भा॒नुं स॑वि॒ता दे॒वो अ॑श्रेद्द्र॒प्सं दवि॑ध्वद्गवि॒षो न सत्वा॑। अनु॑ व्र॒तं वरु॑णो यन्ति मि॒त्रो यत्सूर्यं॑ दि॒व्या॑रो॒हय॑न्ति ॥ २ ॥ यं सी॒मकृ॑ण्व॒न्तम॑से वि॒पृचे॑ ध्रु॒वक्षे॑मा॒ अन॑वस्यन्तो॒ अर्थ॑म्। तं सूर्यं॑ ह॒रितः॑ स॒प्त य॒ह्वीः स्पशं॒ विश्व॑स्य॒ जग॑तो वहन्ति ॥ ३ ॥ वहि॑ष्ठेभिर्वि॒हर॑न्यासि॒ तन्तु॑मवव्य॒यन्नसि॑तं देव॒ वस्म॑। दवि॑ध्वतो र॒श्मयः॒ सूर्य॑स्य॒ चर्मे॒वावा॑धु॒स्तमो॑ अ॒प्स्व१॒॑न्तः ॥ ४ ॥ अना॑यतो॒ अनि॑बद्धः क॒थायं न्य॑ङ्ङुत्ता॒नोऽव॑ पद्यते॒ न। कया॑ याति स्व॒धया॒ को द॑दर्श दि॒वः स्क॒म्भः समृ॑तः पाति॒ नाक॑म् ॥ ५ ॥ १३ ॥

---

॥ १४ ॥ १—५ वामदेवः ॥ अग्निर्लिंगोक्तदेवता वा ॥ त्रिष्टुप् ॥

॥ १४ ॥ प्रत्य॒ग्निरु॒षसो॑ जा॒तवे॑दा॒ अख्य॑द्दे॒वो रोच॑माना॒

कित्वान् ॥१॥ इध्मं यः ते जभरत् शश्रमाणः महः अग्ने अनीकं आ
सपर्यन् सः इधानः प्रति दोषां उषसं पुष्यन् रयिं सचते घ्नन् अमि-
त्रान् ॥२॥ अग्निः ईशे बृहतः क्षत्रियस्य अग्निः वाजस्य परमस्य
रायः दधाति रत्नं विधते यविष्ठः वि आनुषक् मर्त्याय स्वधाऽवान्
॥३॥ यत् चित् हि ते पुरुषऽत्रा यविष्ठ अचित्तिऽभिः चकृम कत्
चित् आगः कृधि सु अस्मान् अदितेः अनागान् वि एनांसि शि-
श्रथः विष्वक् अग्ने ॥४॥ महः चित् अग्ने एनसः अभीके ऊर्वात्
देवानां उत मर्त्यानां मा ते सखायः सदं इत् रिषाम यच्छ तोकाय
तनयाय शं योः ॥५॥ यथा ह त्यत् वसवः गौर्यं चित् पदि सितां अ-
मुंचत यजत्राः एवो ‘सु अस्मत् मुंचत वि अंहः प्र तारि अग्ने प्रऽतरं
नः आयुः ॥६॥१२॥

---

॥१३॥ प्रति अग्निः उषसां अग्रं अख्यत् विऽभातीनां सुऽमनाः
रत्नऽधेयं यातं अश्विना सुऽकृतः दुरोणं उत् सूर्यः ज्योतिषा देवः
एति ॥१॥ ऊर्ध्वं भानुं सविता देवः अश्रेत् द्रप्सं दविध्वत् गोऽइषः
न सत्वा अनु व्रतं वरुणः यंति मित्रः यत् सूर्यं दिवि आऽरोहयंति
॥२॥ यं सीं अकृण्वन् तमसे विऽपृचे ध्रुवऽक्षेमाः अनवऽस्यंतः
अर्थं तं सूर्यं हरितः सप्त यह्वीः स्पशं विश्वस्य जगतः वहंति ॥३॥
वहिष्ठेभिः विऽहरन् यासि तंतुं अवऽव्ययन् असितं देव वस्म द-
विध्वतः रश्मयः सूर्यस्य चर्मऽइव अव अधुः तमः अप्ऽसु अंतः
॥४॥ अनायतः अनिऽबद्धः कथा अयं न्यङ् उत्तानः अव पद्यते न
कया याति स्वधया कः ददर्श दिवः स्कंभः संऽऋतः पाति नाकं
॥ ५ ॥ १३ ॥

---

॥१४॥ प्रति अग्निः उषसः जातऽवेदाः अख्यत् देवः रोचमानाः

महोभिः । आ नासत्योरुगाया रथेनेमं यज्ञमुप नो यातमच्छ ॥१॥ ऊर्ध्वं केतुं सविता देवो अश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन् । आप्रा द्यावापृथिवी अंतरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ॥२॥ आवहंत्यरुणीर्ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना । प्रबोधयंती सुविताय देव्यु१षा ईयते सुयुजा रथेन ॥३॥ आ वां वहिष्ठा इह ते वहंतु रथा अश्वास उषसो व्युष्टौ । इमे हि वां मधुपेयाय सोमा अस्मिन्यज्ञे वृषणा मादयेथां ॥४॥ अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न । कया याति स्वधया को ददर्श दिवः स्कंभः समृतः पाति नाकं ॥ ५ ॥ १४ ॥

---

॥ १५ ॥ १-१० वामदेवः ॥ १-६ अग्निः । ७. ८ सोमकः साहदेव्यः । ९. १० अश्विनौ ॥ गायत्री ॥

॥१५॥ अग्निर्होता नो अध्वरे वाजी सन्परि णीयते । देवो देवेषु यज्ञियः ॥१॥ परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥२॥ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥३॥ अयं यः सृंजये पुरो दैववाते समिध्यते । द्युमाँ अमित्रदंभनः ॥ ४ ॥ अस्य घा वीर ईवतोऽग्नेरीशीत मर्त्यः । तिग्मजंभस्य मीळ्हुषः ॥ ५ ॥ १५ ॥ तमर्वंतं न सानसिमरुषं न दिवः शिशुं । मर्मृज्यंते दिवेदिवे ॥ ६ ॥ बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरं ॥७॥ उत त्या यजता हरी कुमारात्साहदेव्यात् । प्रयता सद्य आ ददे ॥८॥ एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥ ९ ॥ तं युवं देवावश्विना कुमारं साहदेव्यं । दीर्घायुषं कृणोतन ॥ १० ॥ १६ ॥

हे:ऽभिः आ नासत्या उरुऽगाया रथेन इमं यज्ञं उप नः यातं
च्छ॥१॥ ऊर्ध्वं केतुं सविता देवः अश्रेत् ज्योतिः विश्वस्मै भुवनाय
ण्वन् आ अप्राः द्यावापृथिवी अंतरिक्षं वि सूर्यः रश्मिऽभिः
चितानः॥२॥ आऽवहंती अरुषीः ज्योतिषा आ अगात् मही
त्रा रश्मिऽभिः चेकितानाप्रऽबोधयंती सुविताय देवी उषाः
ते सुऽयुजा रथेन॥३॥ आ वां वहिष्ठाः इह ते वहंतु रथाः अश्वासः
षसः विऽउष्टौ इमे हि वां मधुऽपेयाय सोमाः अस्मिन् यज्ञे वृ-
णा मादयेथां॥४॥ अनायतः अनिऽबद्धः कथा अयं न्यङ् उत्तानः
व पद्यते न कया याति स्वधया कः ददर्श दिवः स्कंभः संऽऋतः
ति नाकं ॥ ५ ॥ १४ ॥

---

॥१५॥ अग्निः होता नः अध्वरे वाजी सन् परि नीयते देवः देवेषु
ज्ञियः॥१॥ परि त्रिऽविष्टि अध्वरं याति अग्निः रथीःऽइव आ दे-
षु प्रयः दधत्॥२॥ परि वाजऽपतिः कविः अग्निः हव्यानि अ-
मीत् दधत् रत्नानि दाशुषे॥३॥ अयं यः सृंजये पुरः दैवऽवाते
ऽइध्यते द्युऽमान् अमित्रऽदंभनः॥४॥ अस्य घ वीरः ईवतः अग्नेः
शीत मर्त्यः तिग्मऽजंभस्य मीळ्हुषः॥५॥१५॥ तं अर्वंतं न सानसिं
रुषं न दिवः शिशुं मर्मृज्यंते दिवेऽदिवे॥६॥ बोधत् यत् मा ह-
ऽभ्यां कुमारः साहऽदेव्यः अच्छ न हूतः उत् अरं॥७॥ उत त्या
जता हरी कुमारात् साहऽदेव्यात् प्रऽयता सद्यः आ ददे॥८॥
क वां देवौ अश्विना कुमारः साहऽदेव्यः दीर्घऽआयुः अस्तु सो-
कः॥९॥ तं युवं देवौ अश्विना कुमारं साहऽदेव्यं दीर्घऽआयुषं
कृणोतन ॥ १० ॥ १६ ॥

॥ १६ ॥ १-२१ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१६॥ आ सत्यो यातु मघवाँ ऋजीषी द्रवंत्वस्य हरय उप नः। तस्मा इदंधः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः॥१॥ अव स्य शूराध्वनो नांतेऽस्मिन्नो अद्य सवने मंदध्यै। शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म॥२॥ कविर्न निण्यं विदथानि साधन्वृषा यत्सेकं विपिपानो अर्चात्। दिव इत्था जीजनत्सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणंतः॥३॥ स्वर्यद्वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः। अंधा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो अभिष्टौ॥४॥ ववक्ष इंद्रो अमितमृजीष्युभे आ पप्रौ रोदसी महित्वा। अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव॥५॥१७॥ विश्वानि शक्रो नर्याणि विद्वानपो रिरेच सखिभिर्निकामैः। अश्मानं चिद्ये बिभिदुर्वचोभिर्व्रजं गोमंतमुशिजो वि वव्रुः॥६॥ अपो वृत्रं वव्रिवांसं पराहन्प्रावत्ते वज्रं पृथिवी सचेताः। प्रार्णांसि समुद्रियाण्यैनोः पतिर्भवञ्छवसा शूर धृष्णो॥७॥ अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते। स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नंगिरोभिर्गृणानः॥८॥ अच्छा कविं नृमणो गा अभिष्टौ स्वर्षाता मघवन्नाधमानं। ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त॥९॥ आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः। स्वे योनौ नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी॥१०॥१८॥ यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः। ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात्॥११॥ कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा। सद्यो

॥१६॥ आ सत्यः यातु मघऽवान् ऋजीषी द्रवंतु अस्य हरयः उप
नः तस्मै इत् अंधः सुसुम सुऽदक्षं इह अभिऽपित्वं करते गृणानः ॥१॥
अव स्य शूर अध्वनः न अंते अस्मिन् नः अद्य सवने मंदध्यै शंसा-
ति उक्थं उशनाऽइव वेधाः चिकितुषे असुर्याय मन्म ॥२॥ कविः
न निण्यं विदथानि साधन् वृषा यत् सेकं विऽपिपानः अर्चात्
दिवः इत्था जीजनत् सप्त कारून् अह्ना चित् चक्रुः वयुना गृणंतः
॥३॥ स्वः यत् वेदि सुऽदृशीकं अर्कैः महि ज्योतिः रुरुचुः यत् ह
वस्तोः अंधा तमांसि दुधिता विऽचक्षे नृऽभ्यः चकार नृऽतमः
अभिष्टौ ॥४॥ ववक्षे इंद्रः अमितं ऋजीषी उभे आ पप्रौ रोदसी
महिऽत्वा अतः चित् अस्य महिमा वि रेचि अभि यः विश्वा भुव-
ना बभूव ॥५॥१७॥ विश्वानि शक्रः नर्याणि विद्वान् अपः रिरेच
सखिऽभिः निऽकामैः अश्मानं चित् ये बिभिदुः वचःऽभिः व्रजं
गोऽमंतं उशिजः वि वव्रुः ॥६॥ अपः वृत्रं वव्रिऽवांसं परा अहन्
प्र आवत् ते वज्रं पृथिवी सऽचेताः प्र अर्णांसि समुद्रियाणि ऐ-
नोः पतिः भवन् शवसा शूर धृष्णो ॥७॥ अपः यत् अद्रिं पुरुऽहूत
दर्दः आविः भुवत् सरमा पूर्व्यं ते सः नः नेता वाजं आ दर्षि भूरिं
गोत्रा रुजन् अंगिरःऽभिः गृणानः ॥८॥ अच्छ कविं नृऽमनः गाः
अभिष्टौ स्वःऽसाता मघऽवन् नाधमानं ऊतिऽभिः तं इषणः द्यु-
म्नऽहूतौ नि मायाऽवान् अब्रह्मा दस्युः अर्त ॥९॥ आ दस्युऽघ्ना
मनसा याहि अस्तं भुवत् ते कुत्सः सख्ये निऽकामः स्वे योनौ नि
सदतं सऽरूपा वि वां चिकित्सत् ऋतऽचित् ह नारी ॥१०॥१८॥
यासि कुत्सेन सऽरथं अवस्युः तोदः वातस्य हर्योः ईशानः ऋज्रा
वाजं न गध्यं युयूषन् कविः यत् अहन् पार्याय भूषात् ॥११॥ कु-
त्साय शुष्णं अशुषं नि बर्हीः प्रऽपित्वे अह्नः कुयवं सहस्रा सद्यः

दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥१२॥ त्वं पिप्रुं
मृगयं शूशुवांसमृजिश्वने वैदथिनाय रंधीः । पंचाशत्कृष्णा
नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥१३॥ सूर उपाके
तन्वं१ दधानो वि यत्ते चेत्यमृतस्य वर्पः । मृगो न हस्ती तवि-
षीमुषाणः सिंहो न भीम आयुधानि बिभ्रत् ॥१४॥ इंद्रं कामा
वसूयंतो अग्मन्स्वर्मीळ्हे न सवने चकानाः । श्रवस्यवः
शशमानास उक्थैरोको न रण्वा सुदृशीव पुष्टिः ॥१५॥१९॥
तमिद्व इंद्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि । यो मावते
जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥१६॥ तिग्मा
यदंतरशनिः पताति कस्मिंश्चिच्छूर मुहुके जनानां । घोरा यदर्य
समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥१७॥ भुवोऽवि-
ता वामदेवस्य धीनां भुवः सखावृको वाजसातौ । त्वामनु प्रम-
तिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥१८॥ एभिर्नृभिरिंद्र
त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व आजौ । द्यावो न द्युम्नैरभि
संतो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥१९॥ एवेदिंद्राय वृष-
भाय वृष्णे ब्रह्माकर्म भृगवो न रथं । नू चिद्यथा नः सख्या
वियोषदसन्न उग्रोऽविता तनूपाः ॥२०॥ नू ष्टुत इंद्र नू गृणान
इषं जरित्रे नद्यो३ न पीपेः । अकारि ते हरिवो ब्रह्म नव्यं
धिया स्याम रथ्यः सदासाः ॥२१॥२०॥

---

॥१७॥ १–२१ वामदेवः ॥ इंद्रः ॥ १–१४. १६–२१ त्रिष्टुप् । १५ एकपदा ॥

॥१७॥ त्वं महाँ इंद्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः ।
त्वं वृत्रं शवसा जघन्वान्सृजः सिंधूँरहिना जग्रसानान् ॥१॥ तव
त्विषो जनिमन्रेजत द्यौ रेजद्भूमिर्भियसा स्वस्य मन्योः । ऋ-
घायंत सुभ्व१ः पर्वतास आर्दन्धन्वानि सरयंत आपः ॥२॥ भि-

दस्यून् प्र मृण कुत्सेन प्र सूरः चक्रं वृहतात् अभीके ॥१२॥ त्वं पिप्रुं
मृगयं शूशुऽवांसं ऋजिश्वने वैदथिनाय रंधीः पंचाशत् कृष्णा
नि वपः सहस्रा अत्कं न पुरः जरिमा वि दर्दः॰ ॥१३॥ सूरः उपाके
तन्वं दधानः वि यत् ते चेति अमृतस्य वर्पः मृगः न हस्ती तविषीं
उषाणः सिंहः न भीमः आयुधानि बिभ्रत् ॥१४॥ इंद्रं कामाः वसु-
ऽयंतः अग्मन् स्वःऽमीळ्हे न सवने चकानाः श्रवस्यवः शशमा-
नासः उक्थैः ओकः न रण्वा सुदृशीऽइव पुष्टिः ॥१५॥१७॥ तं इत् वः
इंद्रं सुऽहवं हुवेम यः ता चकार नर्या पुरूणि यः माऽवते जरित्रे
गध्यं चित् मक्षु वाजं भरति स्पार्हऽराधाः ॥१६॥ तिग्मा यत् अंतः
अशनिः पताति कस्मिन् चित् शूर मुहुके जनानां घोरा यत् अर्य
संऽऋतिः भवाति अध स्म नः तन्वः बोधि गोपाः ॥१७॥ भुवः अ-
विता वामऽदेवस्य धीनां भुवः सखा अवृकः वाजऽसातौ त्वां
अनु प्रऽमतिं आ जगन्म उरुऽशंसः जरित्रे विश्वध स्याः ॥१८॥ ए-
भिः नृऽभिः इंद्र त्वायुऽभिः त्वा मघवत्ऽभिः मघऽवन् विश्वे आजौ
द्यावः न द्युम्नैः अभि संतः अर्यः क्षपः मदेम शरदः च पूर्वीः ॥१९॥
एव इत् इंद्राय वृषभाय वृष्णे ब्रह्म अकर्म भृगवः न रथं नु चित्
यथा नः सख्या विऽयोषत् असत् नः उग्रः अविता तनूऽपाः ॥२०॥
नु स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न पीपेः॰ अकारि ते हरि-
ऽवः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः ॥ २१ ॥ २० ॥

---

॥१७॥ त्वं महान् इंद्र तुभ्यं ह क्षाः अनु क्षत्रं मंहना मन्यत द्यौः
त्वं वृत्रं शवसा जघन्वान् सृजः सिंधून् अहिना जग्रसानान् ॥१॥
तव त्विषः जनिमन् रेजत द्यौः रेजत् भूमिः भियसा स्वस्य मन्योः
[illegible]त सुऽभ्वः पर्वतासः आर्दन् धन्वानि सरयंते आपः ॥२॥ भि-

नग्निरिं शवसा वज्रमिष्णन्नाविष्कृण्वानः सहसान ओजः। वधींवृत्रं वज्रेण मंदसानः सरन्नापो जवसा हृतवृष्णीः ॥३॥ सुवीरस्ते जनिता मन्यत द्यौरिंद्रस्य कर्ता स्वपस्तमो भूत्। य ईं जजान स्वर्यं सुवज्रमनपच्युतं सदसो न भूमं ॥४॥ य एक इच्च्यावयति प्र भूमा राजा कृष्टीनां पुरुहूत इंद्रः। सत्यमेनमनु विश्वे मदंति रातिं देवस्य गृणतो मघोनः ॥५॥२१॥ सत्रा सोमा अभवन्नस्य विश्वे सत्रा मदासो बृहतो मदिष्ठाः। सत्राभवो वसुपतिर्वसूनां दत्रे विश्वा अधिथा इंद्र कृष्टीः ॥६॥ त्वमध प्रथमं जायमानोऽमे विश्वा अधिथा इंद्र कृष्टीः। त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवन्वि वृश्चः ॥७॥ सत्राहणं दाधृषिं तुम्रमिंद्रं महामपारं वृषभं सुवज्रं। हंता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥८॥ अयं वृतश्चातयते समीचीर्य आजिषु मघवा शृण्व एकः। अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥९॥ अयं शृण्वे अध जयन्नुत घ्नन्नयमुत प्र कृणुते युधा गाः। यदा सत्यं कृणुते मन्युमिंद्रो विश्वं दृळ्हं भयत एजदस्मात् ॥१०॥२२॥ समिंद्रो गा अजयत्सं हिरण्या समश्विया मघवा यो ह पूर्वीः। एभिर्नृभिर्नृतमो अस्य शाकै रायो विभक्ता संभरश्च वस्वः ॥११॥ कियत्स्विदिंद्रो अध्येति मातुः कियत्पितुर्जनितुर्यो जजान। यो अस्य शुष्मं मुहुकैरियर्ति वातो न जूतः स्तनयद्भिरभ्रैः ॥१२॥ क्षियंतं त्वमक्षियंतं कृणोतीयर्ति रेणुं मघवा समोहं। विभंजनुरशनिमाँ इव द्यौरुत स्तोतारं मघवा वसौ धात् ॥१३॥ अयं [illegible] स्य न्येतशं रीरमत्ससृमाणं। आ कृ[illegible] बुध्ने रजसो अस्य योनौ ॥

नत् गिरिं शवसा वज्रं इष्णान् आविःऽकृण्वानः सहसानः ओजः
वधीत् वृत्रं वज्रेण मंदसानः सरन् आपः जवसा हतऽवृष्णीः ॥३॥
सुऽवीरः ते जनिता मन्यत द्यौः इंद्रस्य कर्ता स्वपःऽतमः भूत् यः ईं
जजान स्वर्यं सुऽवज्रं अनवऽच्युतं सदसः न भूम ॥४॥ यः एकः इत्
च्यवयति प्र भूम राजा कृष्टीनां पुरुऽहूतः इंद्रः सत्यं एनं अनु विश्वे
मदंति रातिं देवस्य गृणतः मघोनः ॥५॥२१॥ सत्रा सोमाः अभवन्
अस्य विश्वे सत्रा मदासः बृहतः मदिष्ठाः सत्रा अभवः वसुऽपतिः
वसूनां दत्रे विश्वाः अधिथाः इंद्र कृष्टीः ॥६॥ त्वं अध प्रथमं जाय-
मानः अमे विश्वाः अधिथाः इंद्र कृष्टीः त्वं प्रति प्रऽवतः आऽश-
यानं अहिं वज्रेण मघऽवन् वि वृश्चः ॥७॥ सत्राऽहनं दधृषिं तुम्रं
इंद्रं महां अपारं वृषभं सुऽवज्रं हंता यः वृत्रं सनिता उत वाजं दा-
ता मघानि मघऽवा सुऽराधाः ॥८॥ अयं वृतः चातयते संऽईचीः
यः आजिषु मघऽवा शृण्वे एकः अयं वाजं भरति यं सनोति अस्य
प्रियासः सख्ये स्याम ॥९॥ अयं शृण्वे अध जयन् उत घ्नन् अयं उत
प्र कृणुते युधा गाः यदा सत्यं कृणुते मन्युं इंद्रः विश्वं दृळ्हं भयते ए-
जत् अस्मात् ॥१०॥२२॥ सं इंद्रः गाः अजयत् सं हिरण्या सं अश्वि-
या मघऽवा यः ह पूर्वीः एभिः नृऽभिः नृऽतमः अस्य शाकैः रायः
विऽभक्ता संऽभरः च वस्वः ॥११॥ कियत् स्वित् इंद्रः अधि एति
मातुः कियत् पितुः जनितुः यः जजान यः अस्य शुष्मं मुहुकैः इ-
यर्ति वातः न जूतः स्तनयत्ऽभिः अभ्रैः ॥१२॥ क्षियंतं त्वं अक्षियंतं
कृणोति इयर्ति रेणुं मघऽवा संऽओहं विऽभंजनुः अशनिमान्-
[illegible]ः उत स्तोतारं मघऽवा वसौ धात् ॥१३॥ अयं चक्रं इषणत्
[illegible]रमत् ससृमाणं आ कृष्णः ईं जुहुराणः जिघर्ति
योनौ ॥१४॥ असिक्न्यां यजमानः न होता

॥१५॥२३॥ गव्यंत इंद्रं सख्याय विप्रा अश्वायंतो वृषणं वाजयंतः। जनीयंतो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशं ॥१६॥ त्राता नो बोधि ददृशान आपिरभिख्याता मर्डिता सोम्यानां। सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः ॥१७॥ सखीयतामविता बोधि सखा गृणान इंद्र स्तुवते वयो धाः। वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयंत इंद्र ॥१८॥ स्तुत इंद्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हंति। अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयंते न मर्ताः ॥१९॥ एवा न इंद्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वा। त्वं राजा जनुषां धेह्यस्मे अधि श्रवो माहिनं यज्जरित्रे ॥२०॥ नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः। अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥२१॥२४॥

॥ १८ ॥ १–१३ संवाद इंद्रादितिवामदेवानां ॥ त्रिष्टुप् ॥

॥१८॥ अयं पंथा अनुवित्तः पुराणो यतो देवा उदजायंत विश्वे। अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥१॥ नाहमतो निरया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि। बहूनि मे अकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥२॥ परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि। त्वष्टुर्गृहे अपिबत्सोममिंद्रः शतधन्यं चम्वोः सुतस्य ॥३॥ किं स ऋधक्कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः। नही न्वस्य प्रतिमानमस्त्यंतर्जातेषूत ये जनित्वाः ॥४॥ अवद्यमिव मन्यमाना गुहाकरिंद्रं माता वीर्येणा न्यृष्टं।
अथोदस्थात्स्वयमत्कं वसान

॥१५॥२३॥ गव्यंतः इंद्रं सख्याय विप्राः अश्वऽयंतः वृषणं वाजयंतः जनिऽयंतः जनिऽदां अक्षितऽऊतिं आ च्यवयामः अवते न कोशं ॥१६॥ त्राता नः बोधि ददृशानः आपिः अभिऽख्याता मर्डिता सोम्यानां सखा पिता पितृऽतमः पितॄणां कर्ता ईं ऊं लोकं उशते वयःऽधाः ॥१७॥ सखिऽयतां अविता बोधि सखा गृणानः इंद्र स्तुवते वयः धाः वयं हि आ ते चकृम सऽबाधः आभिः शमीभिः महयंतः इंद्र ॥१८॥ स्तुतः इंद्रः मघऽवा यत् ह वृत्रा भूरीणि एकः अप्रतीनि हंति अस्य प्रियः जरिता यस्य शर्मन् नकिः देवाः वारयंते न मर्ताः ॥१९॥ एव नः इंद्रः मघऽवा विऽरप्शी करत् सत्या चर्षणिऽधृत् अनर्वा त्वं राजा जनुषां धेहि अस्मे अधि श्रवः माहिनं यत् जरित्रे ॥२०॥ नु स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न पीपेः० अकारि ते हरिऽवः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः ॥ २१ ॥ २४ ॥

---

॥१८॥ अयं पंथाः अनुऽवित्तः पुराणः यतः देवाः उतऽअजायंत विश्वे अतः चित् आ जनिषीष्ट प्रऽवृद्धः मा मातरं अमुया पत्तवे कः० ॥१॥ न अहं अतः निः अय दुःऽगहा एतत् तिरश्चता पार्श्वात् निःगमानि बहूनि मे अकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥२॥ पराऽयतीं मातरं अनु अचष्ट न न अनु गानि अनु नु गमानि त्वष्टुः गृहे अपिबत् सोमं इंद्रः शतऽधन्यं चम्वोः सुतस्य ॥३॥ किं सः ऋधक् कृणवत् यं सहस्रं मासः जभार शरदः च पूर्वीः नहि नु अस्य [illegible] प्रतिऽमानं अस्ति अंतः जातेषु उत ये जनिऽत्वाः ॥४॥ अवद्यं [illegible] इंद्रं माता वीर्येण निऽऋष्टं आस्थत् उत [illegible] रोदसी अपृणात् जायमानः

॥५॥२५॥ एता अर्षन्त्यललाभवंतीर्ऋतावरीरिव संक्रोशमानाः। एता वि पृच्छ किमिदं भनंति कमापो अद्रिं परिधिं रुजंति ॥६॥ किमु ष्विदस्मै निविदो भनंतेंद्रस्यावद्यं दिधिषंत आपः। ममैतान्पुत्रो महता वधेन वृत्रं जघन्वाँ असृजद्वि सिंधून् ॥७॥ ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार। ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिंद्रः सहसोदतिष्ठत् ॥८॥ ममच्चन ते मघवन्व्यंसो निविविध्वाँ अप हनू जघान। अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन ॥९॥ गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिंद्रं। अरीळ्हं वत्सं चरथाय माता स्वयं गातुं तन्व इच्छमानं ॥१०॥ उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः। अथाब्रवीद्वृत्रमिंद्रो हनिष्यन्सखे विष्णो वितरं वि क्रमस्व ॥११॥ कस्ते मातरं विधवामचक्रच्छयुं कस्त्वामजिघांसच्चरंतं। कस्ते देवो अधि मार्डीक आसीद्यत्प्राक्षिणाः पितरं पादगृह्य ॥१२॥ अवर्त्या शुन आंत्राणि पेचे न देवेषु विविदे मर्डितारं। अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥१३॥२६॥५॥

॥ १९ ॥ १—११ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१९॥ एवा त्वामिंद्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः। महामुभे रोदसी वृद्धमृष्वं निरेकमिद्वृणते वृत्रहत्ये ॥१॥ अवासृजंत जिव्रयो न देवा भुवः सम्राळिंद्र सत्ययोनिः। अहन्नहिं परिशयानमर्णः प्र वर्तनीरदो विश्वधेनाः ॥२॥ अतृप्णुवंतं वियतमबुध्यमबुध्यमानं सुषुपाणमिंद्र। सप्त प्रति प्रवत आशयानमहिं वज्रेण वि रिणा अपर्वन् ॥३॥ अक्षो-

॥५॥२५॥ एताः अर्षंति अललाऽभवंतीः ऋतवरीःऽइव संऽक्रो-
शमानाः एताः वि पृच्छ किं इदं भनंति कं आपः अद्रिं परिऽधिं
रुजंति ॥६॥ किं ऊं स्वित् अस्मै निऽविदः भनंत इंद्रस्य अवद्यं
दिधिषंते आपः मम एतान् पुत्रः महता वधेन वृत्रं जघन्वान् अ-
सृजत् वि सिंधून् ॥७॥ ममत् चन त्वा युवतिः पराऽआस ममत् चन
त्वा कुषवा जगार ममत् चित् आपः शिशवे ममृड्युः ममत् चित्
इंद्रः सहसा उत् अतिष्ठत् ॥८॥ ममत् चन ते मघऽवन् विऽअंसः
निऽविविध्वान् अप हनू जघान अध निऽविद्धः उतऽतरः ब-
भूवान् शिरः दासस्य सं पिणक् वधेन ॥९॥ गृष्टिः ससूव स्थविरं
तवागां अनाधृष्यं वृषभं तुम्रं इंद्रं अरीळ्हं वत्सं चरथाय माता
स्वयं गातुं तन्वे इच्छमानं ॥१०॥ उत माता महिषं अनु अवेनत्
अमी त्वा जहति पुत्र देवाः अथ अब्रवीत् वृत्रं इंद्रः हनिष्यन् सखे
विष्णो विऽतरं वि क्रमस्व ॥११॥ कः ते मातरं विधवां अचक्रत्
शयुं कः त्वां अजिघांसत् चरंतं कः ते देवः अधि मार्डीके आसीत्
यत् प्र अक्षिणाः पितरं पादऽगृह्य ॥१२॥ अवर्त्या शुनः आंत्राणि
पेचे न देवेषु विविदे मर्डितारं अपश्यं जायां अमहीयमानां अध
मे श्येनः मधु आ जभार ॥१३॥२६॥५॥

---

॥१९॥ एव त्वां इंद्र वज्रिन् अत्र विश्वे देवासः सुऽहवासः ऊमाः
महां उभे रोदसी वृद्धं ऋष्वं निः एकं इत् वृणते वृत्रऽहत्ये ॥१॥
अव असृजंत जिव्रयः न देवाः भुवः संऽराट् इंद्र सत्यऽयोनिः अ-
हन् अहिं परिऽशयानं अर्णः प्र वर्तनीः अरदः विश्वऽधेनाः ॥२॥
अतृप्णुवंतं विऽयंतं अबुध्यं अबुध्यमानं सुसुपानं इंद्र सप्त प्रति
प्रऽवतः आऽशयानं अहिं वज्रेण वि रिणाः अपर्वन् ॥३॥ अक्षो-

दयच्छवसा क्षामं बुध्नं वार्ण वातस्तविषीभिरिंद्रः । दृळ्हा न्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानां ॥४॥ अभि प्र दद्रुर्जनयो न गर्भं रथा इव प्र ययुः साकमद्रयः । अतर्पयो विसृत उब्ज ऊर्मीन्त्वं वृताँ अरिणा इंद्र सिंधून् ॥ ५ ॥ १ ॥ त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरंती । अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिंद्र सिंधून् ॥ ६ ॥ प्राग्रुवो नभन्वो३न वक्वा ध्वस्रा अपिन्वद्युवतीर्ऋतज्ञाः । धन्वान्यज्राँ अपृणक्तृषाणाँ अधोगिंद्रः स्तर्यो३दंसुपत्नीः ॥ ७ ॥ पूर्वीरुषसः शरदश्च गूर्ता वृत्रं जघन्वाँ असृजद्वि सिंधून् । परिष्ठिता अतृणद्बद्बधानाः सीरा इंद्रः स्रवितवे पृथिव्या ॥ ८ ॥ वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आ जभर्थ । व्यं१धो अख्यदहिमाददानो निर्भूदुखच्छित्समरंत पर्व ॥ ९ ॥ प्र ते पूर्वाणि करणानि विप्राविद्वाँ आह विदुषे करांसि । यथायथा वृष्ण्यानि स्वगूर्तापांसि राजन्नर्याविवेषीः ॥ १० ॥ नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः । अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥ २ ॥

---

॥ २० ॥ १–११ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२०॥ आ न इंद्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः । ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥ १ ॥ आ न इंद्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च । तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥ २ ॥ इमं यज्ञं त्वमस्माकमिंद्र पुरो दधत्सनिष्यसि क्रतुं नः । श्वघ्नीव वज्रिन्त्सनये धनानां त्वया वयमर्य आजिं

दयत् शवसा क्षाम बुध्नं वाः न वातः तविषीभिः इंद्रः दृळ्हानि
औभ्नात् उशमानः ओजः अव अभिनत् ककुभः पर्वतानां ॥४॥
अभि प्र दद्रुः जनयः न गर्भं रथाःऽइव प्र ययुः साकं अद्रयः अत-
र्पयः विऽसृतः उब्जः ऊर्मीन् त्वं वृतान् अरिणाः इंद्र सिंधून् ॥५॥१॥
त्वं महीं अवनिं विश्वऽधेनां तुर्वीतये वय्याय क्षरंतीं अरमयः न-
मसा एजत् अर्णः सुऽतरणान् अकृणोः इंद्र सिंधून् ॥६॥ प्र अग्रुवः
नभन्वः न वक्वाः ध्वस्राः अपिन्वत् युवतीः ऋतऽज्ञाः धन्वानि
अज्रान् अपृणक् तृषाणान् अधोक् इंद्रः स्तर्यः दंऽसुपत्नीः ॥७॥
पूर्वीः उषसः शरदः च गूर्ताः वृत्रं जघन्वान् असृजत् वि सिंधून्
परिऽस्थिताः अतृणत् बद्बधानाः सीराः इंद्रः स्रवितवे पृथिव्या
॥८॥ वम्रीभिः पुत्रं अग्रुवः अदानं निऽवेशनात् हरिऽवः आ ज-
भर्थ वि अंधः अख्यत् अहिं आऽददानः निः भूत् उखऽछित् सं
अरंत पर्व ॥९॥ प्र ते पूर्वाणि करणानि विप्र आऽविद्वान् आह
विदुषे करांसि यथाऽयथा वृष्ण्यानि स्वऽगूर्ता अपांसि राजन्
नर्या अविवेषीः ॥१०॥ नु स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न
पीपेः॰अकारि ते हरिऽवः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः
॥११॥२॥

---

॥२०॥ आ नः इंद्रः दूरात् आ नः आसात् अभिष्टिऽकृत् अवसे
यासत् उग्रः ओजिष्ठेभिः नृऽपतिः वज्रऽबाहुः संऽगे समत्ऽसु तु-
र्वणिः पृतन्यून् ॥१॥ आ नः इंद्रः हरिऽभिः यातु अच्छ अर्वाचीनः
अवसे राधसे च तिष्ठाति वज्री मघऽवा विऽरप्शी इमं यज्ञं अनु
नः वाजऽसातौ ॥२॥ इमं यज्ञं त्वं अस्माकं इंद्र पुरः दधत् सनिष्यसि
क्रतुं नः श्वघ्नीऽइव वज्रिन् सनये धनानां त्वया वयं अर्यः आजिं

॥३॥ उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य
वः। पा इंद्र प्रतिभृतस्य मध्वः समंधसा ममदः पृष्ठ्येन
वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता।
र्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिंद्रं
॥३॥ गिरिर्न यः स्वतवाँ ऋष्व इंद्रः सनादेव सहसे जात
ग्रः। आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टं
॥६॥ न यस्य वर्ता जनुषा न्वस्ति न राधस आमरीता मघ-
स्य। उद्वावृषाणस्तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः ॥७॥
ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनां। शि-
क्षानरः समिथेषु प्रहावान्वस्वो राशिमभिनेतासि भूरिं ॥८॥
कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु का चिदृष्वः।
पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥९॥
मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते।
नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिंद्र स्तुवंतः
॥१०॥ नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः। अ-
कारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥४॥

---

॥ २१ ॥ १–११ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२१॥ आ यात्विंद्रोऽवस उप न इह स्तुतः सधमादस्तु
शूरः। वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात्
॥१॥ तस्येदिह स्तवथ वृष्ण्यानि तुविद्युम्नस्य तुविराधसो
नॄन्। यस्य क्रतुर्विदथ्यो३ न सम्राट् साह्वान्तरुत्रो अभ्यस्ति
कृष्टीः ॥२॥ आ यात्विंद्रो दिव आ पृथिव्या मक्षू समुद्रादुत वा
पुरीषात्। स्वर्णरादवसे नो मरुत्वान्परावतो वा सदनादृतस्य
॥३॥ स्थूरस्य रायो बृहतो य ईशे तमु ष्टवाम विदथेष्विंद्रं।

स्वधाऽव
॥४॥ वि
मर्यःनय
गिरिःन
आऽदर्ते
॥६॥ न
उत

ेम॥३॥ उशन् ऊं इति सु नः सुऽमनाः उपाके सोमस्य नु सुऽसुतस्य
धाऽवः पाः इंद्र प्रतिऽभृतस्य मध्वः सं अंधसा ममदः पृष्ठ्येन
॥ वि यः ररप्शे ऋषिऽभिः नवेभिः वृक्षः न पक्वः सृण्यः न जेता
ः न योषां अभि मन्यमानः अच्छ विवक्मि पुरुऽहूतं इंद्रं॥५॥३॥
रिः न यः स्वऽतवान् ऋष्वः इंद्रः सनात् एव सहसे जातः उग्रः
ऽदर्ता वज्रं स्थविरं न भीमः उद्माऽइव कोशं वसुना निऽऋष्टं
॥ न यस्य वर्ता जनुषा नु अस्ति न राधसः आऽमरीता मघस्य
ऽववृषाणः तविषीऽवः उग्र अस्मभ्यं दद्धि पुरुऽहूत रायः॥७॥
रायः क्षयस्य चर्षणीनां उत व्रजं अपऽवर्ता असि गोनां शि-
ऽनरः संऽइथेषु प्रहाऽवान् वस्वः राशिं अभिऽनेता असि भूरिं
॥ कया तत् शृण्वे शच्या शचिष्ठः यया कृणोति मुहु का चित्
ष्वः पुरु दाशुषे विऽचयिष्ठः अंहः अथ दधाति द्रविणं जरित्रे
॥ मा नः मर्धीः आ भर दद्धि तत् नः प्र दाशुषे दातवे भूरि यत् ते
ये देष्णे शस्ते अस्मिन् ते उक्थे प्र ब्रवाम वयं इंद्र स्तुवंतः॥१०॥
स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न पीपेरिति पीपेः अकारि ते हरि-
ः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः॥ ११ ॥ ४ ॥

---

॥२१॥ आ यातु इंद्रः अवसे उप नः इह स्तुतः सधऽमात् अस्तु
ऽववृधानः तविषीः यस्य पूर्वीः द्यौः न क्षत्रं अभिऽभूति पुष्यात्
॥ तस्य इत् इह स्तवथ वृष्ण्यानि तुविऽद्युम्नस्य तुविऽराधसः
यस्य क्रतुः विदथ्यः न संऽराट् सह्वान् तरुत्रः अभि अस्ति कृ-
ः॥२॥ आ यातु इंद्रः दिवः आ पृथिव्याः मक्षु समुद्रात् उत वा
ीषात् स्वःऽनरात् अवसे नः मरुत्वान् पराऽवतः वा सदनात्
तस्य॥३॥ स्थूरस्य रायः बृहतः यः ईशे तं ऊं इति स्तवाम विदथेषु इंद्रं

यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो अच्छ ॥४॥ उप यो नमो नमसि स्तभायन्नियर्ति वाचं जनयन्यजध्यै । ऋंजसानः पुरुवार उक्थैरेंद्रं कृण्वीत सदनेषु होता ॥५॥५॥ धिषा यदि धिषण्यंतः सरण्यान्सदंतो अद्रिमौशिजस्य गोहे । आ दुरोषाः पास्त्यस्य होता यो नो महान्संवरणेषु वह्निः ॥६॥ सत्रा यदीं भार्वरस्य वृष्णः सिषक्ति शुष्मः स्तुवते भराय । गुहा यदीमौशिजस्य गोहे प्र यद्धिये प्रायसे मदाय ॥७॥ वि यद्वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे अपां जवांसि । विदद्गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो३ वहंति ॥८॥ भद्रा ते हस्ता सुकृतोत पाणी प्रयंतारा स्तुवते राध इंद्र । का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उ ॥९॥ एवा वस्व इंद्रः सत्यः सम्राड्ढंता वृत्रं वरिवः पूरवे कः । पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥१०॥ नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः । अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥६॥२॥

---

॥ २२ ॥ १–११ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२२॥ यन्न इंद्रो जुजुषे यच्च वष्टि तन्नो महान्करति शुष्म्या चित् । ब्रह्म स्तोमं मघवा सोममुक्था यो अश्मानं शवसा बिभ्रदेति ॥१॥ वृषा वृषंधिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् । श्रिये परुष्णीमुषमाण ऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥२॥ यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः । दधानो वज्रं बाह्वोरुशंतं द्याममेन रेजयत्प्र भूम ॥३॥ विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन्रेजत क्षाः । आ मातरा भरति शुष्म्या गोर्नृवत्परि-

यः वायुना जयति गोऽमतीषु प्र धृष्णुऽया नयति वस्यः अच्छ
॥४॥ उप यः नमः नमसि स्तभायन् इयर्ति वाचं जनयन् यजध्यै
ऋंजसानः पुरुऽवारः उक्थैः आ इंद्रं कृण्वीत सदनेषु होता ॥५॥५॥
धिषा यदि धिषण्यंतः सरण्यान् सदंतः अद्रिं औशिजस्य गोहे
आ दुरोषाः पास्त्यस्य होता यः नः महान् संऽवरणेषु वह्निः ॥६॥
सत्रा यत् ईं भार्वरस्य वृष्णः सिसक्ति शुष्मः स्तुवते भराय गुहा यत्
ईं औशिजस्य गोहे प्र यत् धिये प्र अयसे मदाय ॥७॥ वि यत् वरां-
सि पर्वतस्य वृण्वे पयःऽभिः जिन्वे अपां जवांसि विदत् गौरस्य
गवयस्य गोहे यदि वाजाय सुऽध्यः वहंति ॥८॥ भद्रा ते हस्ता सु-
ऽकृता उत पाणी प्रऽयंतारा स्तुवते राधः इंद्र का ते निऽसत्तिः
किं ऊं नो ममत्सि किं न उत्ऽउत् ऊं हर्षसे दातवै ऊं ॥९॥ एव
वस्वः इंद्रः सत्यः संऽराट् हंता वृत्रं वरिवः पूरवे कः॰ पुरुऽस्तुत
क्रत्वा नः शग्धि रायः भक्षीय ते अवसः दैव्यस्य ॥१०॥ नु स्तुतः इंद्र
नु गृणानः इषं जरित्रे नद्यः न पीपेः॰ अकारि ते हरिऽवः ब्रह्म नव्यं
धिया स्याम रथ्यः सदाऽसाः ॥११॥६॥२॥

---

॥२२॥ यत् नः इंद्रः जुजुषे यत् च वष्टि तत् नः महान् करति शुष्मी
आ चित् ब्रह्म स्तोमं मघऽवा सोमं उक्था यः अश्मानं शवसा बि-
भ्रत् एति ॥१॥ वृषा वृषंधिं चतुःऽअश्रिं अस्यन् उग्रः बाहुऽभ्यां
नृऽतमः शचीऽवान् श्रिये परुष्णीं उषमाणः ऊर्णां यस्याः पर्वा-
णि सख्याय विव्ये ॥२॥ यः देवः देवऽतमः जायमानः महः वाजेभिः
महत्ऽभिः च शुष्मैः दधानः वज्रं बाह्वोः उशंतं द्यां अमेन रेजयत्
प्र भूम ॥३॥ विश्वा रोधांसि प्रऽवतः च पूर्वीः द्यौः ऋष्वात् जनि-
मन् रेजत क्षाः आ मातरा भरति शुष्मी आ गोः नृऽवत् परि-

ज्मन्नोनुवंत वाताः ॥४॥ ता तू त इंद्र महतो महानि विश्वे-
ष्वित्सवनेषु प्रवाच्या । यच्छूर धृष्णो धृषता दधृष्वानहिं
वज्रेण शवसाविवेषीः ॥५॥७॥ ता तू ते सत्या तुविनृम्ण
विश्वा प्र धेनवः सिस्रते वृष्ण ऊध्नः । अधा ह त्वद्वृषमणो
भियानाः प्र सिंधवो जवसा चक्रमंत ॥६॥ अत्राह ते हरि-
वस्ता उ देवीरवोभिरिंद्र स्तवंत स्वसारः । यत्सीमनु प्र मुचो
बद्बधाना दीर्घामनु प्रसितिं स्यंदयध्यै ॥७॥ पिपीळे अंशु-
र्मद्यो न सिंधुरा त्वा शमी शशमानस्य शक्तिः । अस्मद्र्यक्छु-
शुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः ॥८॥ अस्मे
वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि । अस्मभ्यं
वृत्रा सुहनानि रंधि जहि वधर्वनुषो मर्त्यस्य ॥९॥ अस्माकमित्सु
शृणुहि त्वमिंद्रास्मभ्यं चित्राँ उप माहि वाजान् । अस्मभ्यं
विश्वा इषणः पुरंधीरस्माकं सु मघवन्बोधि गोदाः ॥१०॥ नू
ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः । अकारि ते
हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥८॥

---

॥ २३ ॥ १–११ वामदेवः ॥ १–७. ११ इंद्रः । ८–१० इंद्र ऋतदेवो वा ॥ त्रिष्टुप् ॥

॥२३॥ कथा महामवृधत्कस्य होतुर्यज्ञं जुषाणो अभि सो-
ममूधः । पिबन्नुशानो जुषमाणो अंधो ववक्ष ऋष्वः शुचते
धनाय ॥१॥ को अस्य वीरः सधमादमाप समानंश सुमतिभिः
को अस्य । कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमा-
नस्य यज्योः ॥२॥ कथा शृणोति हूयमानमिंद्रः कथा शृण्वन्न-
वसामस्य वेद । का अस्य पूर्वीरुपमातयो ह कथैनमाहुः प-
पुरिं जरित्रे ॥३॥ कथा सबाधः शशमानो अस्य नशदभि द्रविणं
दीध्यानः । देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि

ऽअ्मन् नोनुवंत वाताः ॥ ४ ॥ ता तु ते इंद्र महतः महानि विश्वेषु इत् सवनेषु प्रऽवाच्या यत् शूर धृष्णो इति धृषता दधृष्वान् अहिं व- ज्रेण शवसा अविवेषीः ॥ ५ ॥ ७ ॥ ता तु ते सत्या तुविऽनृम्ण विश्वा प्र धेनवः सिस्रते वृष्णः ऊध्नः अध ह त्वत् वृषऽमनः भियानाः प्र सिंधवः जवसा चक्रमंत ॥ ६ ॥ अत्र अह ते हरिऽवः ताः ऊं इति देवीः अवःऽभिः इंद्र स्तवंत स्वसारः यत् सीं अनु प्र मुचः बद्बधानाः दी- र्घां अनु प्रऽसितिं स्यंदयध्यै ॥ ७ ॥ पिपीळे अंशुः मद्यः न सिंधुः आ त्वा शमी शशमानस्य शक्तिः अस्मद्र्यक् शुशुचानस्य यम्याः आ- शुः न रश्मिं तुविऽओजसं गोः ॥ ८ ॥ अस्मे इति वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि अस्मभ्यं वृत्रा सुऽहनानि रंधि जहि वधः वनुषः मर्त्यस्य ॥ ९ ॥ अस्माकं इत् सु शृणुहि त्वं इंद्र अस्मभ्यं चित्रान् उप माहि वाजान् अस्मभ्यं विश्वाः इषणः पुरंऽधीः अ- स्माकं सु मघऽवन् बोधि गोऽदाः ॥ १० ॥ नु स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न पीपेरित्यपीपेः अकारि ते हरिऽवः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः ॥ ११ ॥ ८ ॥

---

॥ २३ ॥ कथा महां अवृधत् कस्य होतुः यज्ञं जुषाणः अभि सोमं ऊधः पिबन् उशानः जुषमाणः अंधः ववक्षे ऋष्वः शुचते धनाय ॥ १ ॥ कः अस्य वीरः सधऽमादं आप सं आनंश सुमतिऽभिः कः अस्य कत् अस्य चित्रं चिकिते कत् ऊती वृधे भुवत् शशमानस्य यज्योः ॥ २ ॥ कथा शृणोति हूयमानं इंद्रः कथा शृण्वन् अवसां अस्य वेद काः अस्य पूर्वीः उपऽमातयः ह कथा एनं आहुः पपुरिं जरित्रे ॥ ३ ॥ कथा सऽबाधः शशमानः अस्य नशत् अभि द्रविणं दीध्यानः देवः भुवत् नवेदाः मे ऋतानां नमः जगृभ्वान् अभि

यज्जुजोषत ॥४॥ कथा कदस्या उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष। कथा कदस्य सख्यं सखिभ्यो ये अस्मिन्कामं सुयुजं ततस्रे ॥५॥९॥ किमादमत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम। श्रिये सुदृशो वपुरस्य सर्गाः स्व१र्ण चित्रतममिष आ गोः ॥६॥ द्रुहं जिघांसन्ध्वरसमनिंद्रां तेतिक्ते तिग्मा तुजसे अनीका। ऋणा चिद्यत्र ऋणया न उग्रो दूरे अज्ञाता उषसो बबाधे ॥७॥ ऋतस्य हि शुरुधः संति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हंति। ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥८॥ ऋतस्य दृळ्हा धरुणानि संति पुरूणि चंद्रा वपुषे वपूंषि। ऋतेन दीर्घमिषणंत पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥९॥ ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः। ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥१०॥ नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः। अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥११॥१०॥

---

॥ २४ ॥ १–११ वामदेवः ॥ इंद्रः ॥ १–९. ११ त्रिष्टुप्। १० अनुष्टुप् ॥

॥२४॥ का सुष्टुतिः शवसः सूनुमिंद्रमर्वाचीनं राधस आ ववर्तत्। ददिर्हि वीरो गृणते वसूनि स गोपतिर्निष्षिधां नो जनासः ॥१॥ स वृत्रहत्ये हव्यः स ईड्यः स सुष्टुत इंद्रः सत्यराधाः। स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वये वरिवो धात् ॥२॥ तमिन्नरो वि ह्वयंते समीके रिरिक्वांसस्तन्वः कृण्वत त्राम्। मिथो यत्त्यागमुभयासो अग्मन्नरस्तोकस्य तनयस्य सातौ ॥३॥ क्रतूयंति क्षितयो योग उग्राशुषाणासो मिथो अर्णसातौ। सं यद्विशोऽववृत्रंत युध्मा आदिन्नेम इंद्रयंते अभीके ॥४॥ आदिद्ध नेम इंद्रियं यजंत आदित्पक्तिः पुरोळाशं

यत् जुजोषत् ॥४॥ कथा कत् अस्याः उषसः विऽउष्टौ देवः मर्तस्य सख्यं जुजोष कथा कत् अस्य सख्यं सखिऽभ्यः ये अस्मिन् कामं सुऽयुजं ततस्रे ॥५॥९॥ किं आत् अमत्रं सख्यं सखिऽभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम श्रिये सुऽदृशः वपुः अस्य सर्गाः स्वः न चित्रऽतमं इषे आ गोः ॥६॥ द्रुहं जिघांसन् ध्वरसं अनिंद्रां तेतिक्ते तिग्मा तुजसे अनीका ऋणा चित् यत्र ऋणऽयाः नः उग्रः दूरे अज्ञाताः उषसः बबाधे ॥७॥ ऋतस्य हि शुरुधः संति पूर्वीः ऋतस्य धीतिः वृजिनानि हंति ऋतस्य श्लोकः बधिरा ततर्द कर्णा बुधानः शुचमानः आयोः ॥८॥ ऋतस्य दृळ्हा धरुणानि संति पुरूणि चंद्रा वपुषे वपूंषि ऋतेन दीर्घं इषणंत पृक्षः ऋतेन गावः ऋतं आ विवेशुः ॥९॥ ऋतं येमानः ऋतं इत् वनोति ऋतस्य शुष्मः तुरऽयाः ऊं॰ गव्युः ऋताय पृथ्वी॰ बहुले॰ गभीरे॰ ऋताय धेनू॰ परमे॰ दुहाते॰ ॥१०॥ नु स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न पीपेः॰ अकारि ते हरिऽवः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः ॥११॥१०॥

---

॥२४॥ का सुऽस्तुतिः शवसः सूनुं इंद्रं अर्वाचीनं राधसे आ ववर्तत् ददिः हि वीरः गृणते वसूनि सः गोऽपतिः निःऽसिधां नः जनासः ॥१॥ सः वृत्रऽहत्ये हव्यः सः ईड्यः सः सुऽस्तुतः इंद्रः सत्यऽराधाः सः यामन् आ मघऽवा मर्त्याय ब्रह्मण्यते सुस्वये वरिवः धात् ॥२॥ तं इत् नरः वि ह्वयंते संऽईके रिरिक्वांसः तन्वः कृण्वत त्रां मिथः यत् त्यागं उभयासः अग्मन् नरः तोकस्य तनयस्य सातौ ॥३॥ क्रतुऽयंति क्षितयः योगे उग्र आशुषाणासः मिथः अर्णऽसातौ सं यत् विशः अववृत्रंत युध्माः आत् इत् नेमे इंद्रयंते अभीके ॥४॥ आत् इत् ह नेमे इंद्रियं यजंते आत् इत् पक्तिः पुरोळाशं

रिरिच्यात् । आदित्सोमो वि पपृच्यादसुष्वीनादिज्जुजोष वृषभं यजध्यै ॥ ५ ॥ ११ ॥ कृणोत्यस्मै वरिवो य इत्थेंद्राय सोममुशते सुनोति । सध्रीचीनेन मनसाविवेनन्तमित्सखायं कृणुते समत्सु ॥ ६ ॥ य इंद्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः । प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं शुष्ममिंद्रः ॥ ७ ॥ यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः । अचिक्रदद्वृषणं पत्न्यच्छा दुरोण आ निशितं सोमसुद्भिः ॥ ८ ॥ भूयसा वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन् । स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहंति प्र वाणं ॥ ९ ॥ क इमं दशभिर्ममेंद्रं क्रीणाति धेनुभिः । यदा वृत्राणि जंघनदथैनं मे पुनर्ददत् ॥ १० ॥ नू ष्टुत इंद्र नू गृणान इषं जरित्रे नद्यो३न पीपेः । अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥ १२ ॥

---

॥ २५ ॥ १–८ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२५॥ को अद्य नर्यो देवकाम उशन्निंद्रस्य सख्यं जुजोष । को वा महेऽवसे पार्याय समिद्धे अग्नौ सुतसोम ईट्टे ॥ १ ॥ को नानाम वचसा सोम्याय मनायुर्वा भवति वस्त उस्राः । क इंद्रस्य युज्यं कः सखित्वं को भ्रात्रं वष्टि कवये क ऊती ॥ २ ॥ को देवानामवो अद्या वृणीते क आदित्याँ अदितिं ज्योतिरीट्टे । कस्याश्विनाविंद्रो अग्निः सुतस्यांशोः पिबंति मनसाविवेनं ॥ ३ ॥ तस्मा अग्निर्भारतः शर्म यंसज्ज्योक्पश्यात्सूर्यमुच्चरंतं । य इंद्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणां ॥ ४ ॥ न तं जिनंति बहवो न दभ्रा उर्वस्मा अदितिः शर्म यंसत् । प्रियः सुकृत्प्रिय इंद्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी

रिरिच्यात् आत् इत् सोमः वि पपृच्यात् असुस्वीन् आत् इत् जु-
जोष वृषभं यजध्यै ॥५॥११॥ कृणोति अस्मै वरिवः यः इत्था इंद्राय
सोमं उशते सुनोति सध्रीचीनेन मनसा अविऽवेनन् तं इत् स-
खायं कृणुते समत्ऽसु ॥६॥ यः इंद्राय सुनवत् सोमं अद्य पचात्
पक्तीः उत भृज्जाति धानाः प्रति मनायोः उचथानि हर्यन् त-
स्मिन् दधत् वृषणं शुष्मं इंद्रः ॥७॥ यदा सऽमर्यं वि अचेत् ऋघा-
वा दीर्घं यत् आजिं अभि अख्यत् अर्यः अचिक्रदत् वृषणं पत्नी
अच्छ दुरोणे आ निऽशितं सोमसुत्ऽभिः ॥८॥ भूयसा वस्नं अचरत्
कनीयः अविऽक्रीतः अकानिषं पुनः यन् सः भूयसा कनीयः न
अरिरेचीत् दीनाः दक्षाः वि दुहंति प्र वाणं ॥९॥ कः इमं दशऽभिः
मम इंद्रं क्रीणाति धेनुऽभिः यदा वृत्राणि जंघनत् अथ एनं मे पु-
नः ददत् ॥१०॥ नु स्तुतः इंद्र नु गृणानः इषं जरित्रे नद्यः न पीपेः॰ अ-
कारि ते हरिऽवः ब्रह्म नव्यं धिया स्याम रथ्यः सदाऽसाः ॥११॥१२॥

---

॥२५॥ कः अद्य नर्यः देवऽकामः उशन् इंद्रस्य सख्यं जुजोष कः
वा महे अवसे पार्याय संऽइद्धे अग्नौ सुतऽसोमः ईट्टे ॥१॥ कः न-
नाम वचसा सोम्याय मनायुः वा भवति वस्ते उस्राः कः इंद्रस्य
युज्यं कः सखिऽत्वं कः भ्रात्रं वष्टि कवये कः ऊती ॥२॥ कः देवानां
अवः अद्य वृणीते कः आदित्यान् अदितिं ज्योतिः ईट्टे कस्य अ-
श्विनौ इंद्रः अग्निः सुतस्य अंशोः पिबंति मनसा अविऽवेनं ॥३॥
तस्मै अग्निः भारतः शर्म यंसत् ज्योक् पश्यात् सूर्यं उत्ऽचरंतं यः
इंद्राय सुनवाम इति आह नरे नर्याय नृऽतमाय नृणां ॥४॥ न तं
जिनंति बहवः न दभ्राः उरु अस्मै अदितिः शर्म यंसत् प्रियः सु-
ऽकृत् प्रियः इंद्रे मनायुः प्रियः सुप्रऽअवीः प्रियः अस्य सोमी

॥५॥१३॥ सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेंद्रः। नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्योऽवहंतेदवाचः ॥६॥ न रेवता पणिना सख्यमिंद्रोऽसुन्वता सुतपाः सं गृणीते। आस्य वेदः खिदति हंति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥७॥ इंद्रं परेऽवरे मध्यमास इंद्रं यांतोऽवसितास इंद्रं। इंद्रं क्षियंत उत युध्यमाना इंद्रं नरो वाजयंतो हवंते ॥८॥१४॥

॥ २६ ॥ १-३ वामदेव इंद्रो वा। ४-७ वामदेवः ॥ १-३ इंद्र आत्मा वा। ४-७ श्येनः ॥ त्रिष्टुप् ॥

॥२६॥ अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः। अहं कुत्समार्जुनेयं न्यृंजेऽहं कविरुशना पश्यता मा ॥१॥ अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय। अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥२॥ अहं पुरो मंदसानो व्यैरं नव साकं नवतीः शंबरस्य। शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावं ॥३॥ प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा। अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टं ॥४॥ भरद्यदि विरतो वेविजानः पथोरुणा मनोजवा असर्जि। तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो अत्र ॥५॥ ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मंद्रं मदं। सोमं भरद्दादृहाणो देवावान्दिवो अमुष्मादुत्तरादादाय ॥६॥ आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकं। अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥ ७ ॥ १५ ॥

॥ २७ ॥ १-५ वामदेवः ॥ १-४ श्येनः। ५ श्येन इंद्रो वा ॥ १-४ त्रिष्टुप्। ५ शक्वरी।

॥२७॥ गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि वि-

॥ ५ ॥ १३ ॥ सुप्रऽअव्यः प्राशुषाट् एषः वीरः सुस्वेः पक्तिं कृणुते केवला इंद्रः न असुस्वेः आपिः न सखा न जामिः दुःप्रऽअव्यः अवऽहंता इत् अवाचः ॥ ६ ॥ न रेवता पणिना सख्यं इंद्रः असुन्वता सुतऽपाः सं गृणीते आ अस्य वेदः खिदति हंति नग्नं वि सुस्वये पक्तये केवलः भूत् ॥ ७ ॥ इंद्रं परे अवरे मध्यमासः इंद्रं यांतः अवऽसितासः इंद्रं इंद्रं क्षियंतः उत युध्यमानाः इंद्रं नरः वाजऽयंतः हवंते ॥ ८ ॥ १४ ॥

---

॥ २६ ॥ अहं मनुः अभवं सूर्यः च अहं कक्षीवान् ऋषिः अस्मि विप्रः अहं कुत्सं आर्जुनेयं नि ऋंजे अहं कविः उशना पश्यत मा ॥ १ ॥ अहं भूमिं अददां आर्याय अहं वृष्टिं दाशुषे मर्त्याय अहं अपः अनयं वावशानाः मम देवासः अनु केतं आयन् ॥ २ ॥ अहं पुरः मंदसानः वि ऐरं नव साकं नवतीः शंबरस्य शतऽतमं वेश्यं सर्वऽताता दिवःऽदासं अतिथिऽग्वं यत् आवं ॥ ३ ॥ प्र सु सः विऽभ्यः मरुतः विः अस्तु प्र श्येनः श्येनेभ्यः आशुऽपत्वा अचक्रया यत् स्वधया सुऽपर्णः हव्यं भरत् मनवे देवऽजुष्टं ॥ ४ ॥ भरत् यदि विः अतः वेविजानः पथा उरुणा मनःऽजवाः असर्जि तूयं ययौ मधुना सोम्येन उत श्रवः विविदे श्येनः अत्र ॥ ५ ॥ ऋजीपी श्येनः ददमानः अंशुं पराऽवतः शकुनः मंद्रं मदं सोमं भरत् दहहाणः देवऽवान् दिवः अमुष्मात् उतऽतरात् आऽदाय ॥ ६ ॥ आऽदाय श्येनः अभरत् सोमं सहस्रं सवान् अयुतं च साकं अत्र पुरंऽधिः अजहात् अरातीः मदे सोमस्य मूराः अमूरः ॥ ७ ॥ १५ ॥

---

॥ २७ ॥ गर्भे नु सन् अनु एषां अवेदं अहं देवानां जनिमानि वि-

ष्वा । शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयं ॥१॥ न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण । ईर्मा पुरंधिरजहादरातीरुत वाताँ अतरच्छूशुवानः ॥२॥ अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिं । सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन् ॥३॥ ऋजिप्य ईमिंद्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः । अंतः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥४॥ अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमंधः । अध्वर्युभिः प्रयतं मध्वो अग्रमिंद्रो मदाय प्रति धत्पिबध्यै शूरो मदाय प्रति धत्पिबध्यै ॥ ५ ॥ १६ ॥

---

॥ २८ ॥ १–५ वामदेवः ॥ इंद्र इंद्रासोमौ वा ॥ त्रिष्टुप् ॥

॥ २८ ॥ त्वा युजा तव तत्सोम सख्य इंद्रो अपो मनवे सस्रुतस्कः । अहन्नहिमरिणात्सप्त सिंधूनपावृणोदपिहितेव खानि ॥१॥ त्वा युजा नि खिदत्सूर्यस्येंद्रश्चक्रं सहसा सद्य इंदो । अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥२॥ अहन्निंद्रो अदहदग्निरिंदो पुरा दस्यून्मध्यंदिनादभीके । दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥३॥ विश्वस्मात्सीमधमाँ इंद्र दस्यून्विशो दासीरकृणोरप्रशस्ताः । अबाधेथाममृणतं नि शत्रूनविंदेथामपचितिं वधत्रैः ॥४॥ एवा सत्यं मघवाना युवं तदिंद्रश्च सोमोर्वमश्व्यं गोः । आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥ ५ ॥ १७ ॥

---

॥ २९ ॥ १–५ वामदेवः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२९॥ आ नः स्तुत उप वाजेभिरूती इंद्र याहि हरिभिर्म-

म्या शतं मा पुरः आयसीः अरक्षन् अर्ध श्येनः जवसा निः अदीयं ॥ १ ॥ न घ सः मां अप जोषं जभार अभि ईं आस त्वक्षसा वीर्येण ई-र्मा पुरंऽधिः अजहात् अरातीः उत वातान् अतरत् शूशुवानः ॥ २ ॥ अव यत् श्येनः अस्वनीत् अध द्योः वि यत् यदि वा अतः जहुः पुरंऽधिं सृजत् यत् अस्मै अव ह क्षिपत् ज्यां कृशानुः अस्ता मन-सा भुरण्यन् ॥ ३ ॥ ऋजिप्यः ईं इंद्रऽवतः न भुज्युं श्येनः जभार बृहतः अधि स्नोः अंतः पतत् पतत्रि अस्य पर्णं अध यामनि प्रऽसितस्य तत् वेः॰ ॥ ४ ॥ अध श्वेतं कलशं गोभिः अक्तं आऽपिप्यानं मघऽवा शुक्रं अंधः अध्वर्युऽभिः प्रऽयतं मध्वः अग्रं इंद्रः मदाय प्रति धत् पिबध्यै शूरः मदाय प्रति धत् पिबध्यै ॥ ५ ॥ १६ ॥

---

॥ २८ ॥ त्वा युजा तव तत् सोम सख्ये इंद्रः अपः मनवे सऽसुतः कः॰ अहन् अहिं अरिणात् सप्त सिंधून् अप अवृणोत् अपिहि-ताऽइव खानि ॥ १ ॥ त्वा युजा नि खिदत् सूर्यस्य इंद्रः चक्रं सहसा सद्यः इंदो इति अधि स्नुना बृहता वर्तमानं महः द्रुहः अप विश्वऽआयु धायि ॥ २ ॥ अहन् इंद्रः अदहत् अग्निः इंदो इति पुरा दस्यून् मध्यंदिनात् अभीके दुःऽगे दुरोणे क्रत्वा न याताम् पुरु सहस्रा शर्वा नि बर्हीत् ॥ ३ ॥ विश्वस्मात् सीं अधमान् इंद्र दस्यून् विशः दासीः अकृणोः अप्रऽशस्ताः अबाधेथां अमृणतं नि शत्रून् अविंदेथां अपऽचि-तिं वधत्रैः ॥ ४ ॥ एव सत्यं मघऽवाना युवं तत् इंद्रः च सोम ऊर्वं अश्व्यं गोः आ अदर्दृतं अपिऽहितानि अश्ना रिरिचथुः क्षाः चित् ततृदाना ॥ ५ ॥ १७ ॥

---

॥ २९ ॥ आ नः स्तुतः उप वाजेभिः ऊती इंद्र याहि हरिऽभिः मं-

दसानः। तिरश्चिदर्यः सवना पुरूण्यांगूषेभिर्गृणानः सत्यराधाः ॥१॥ आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञं। स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥२॥ श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मंदयध्यै। उद्वावृषाणो राधसे तुविष्मान्करन्न इंद्रः सुतीर्थाभयं च ॥३॥ अच्छा यो गंता नाधमानमूती इत्था विप्रं हवमानं गृणंतं। उप त्मनि दधानो धुर्या३शून्सहस्राणि शतानि वज्रबाहुः ॥४॥ त्वोतासो मघवन्निंद्र विप्रा वयं ते स्याम सूरयो गृणंतः। भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ॥५॥१८॥

---

॥ ३० ॥ १–२४ वामदेवः ॥ १–८. १२–२४ इंद्रः । ९–११ इंद्र उषाश्च ॥
१–७. ९–२३ गायत्री । ८. २४ अनुष्टुप् ॥

॥३०॥ नकिरिंद्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्। नकिरेवा यथा त्वं ॥१॥ सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः। सत्रा महाँ असि श्रुतः ॥२॥ विश्वे चनेदना त्वा देवास इंद्र युयुधुः। यदहा नक्तमातिरः ॥३॥ यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते। मुषाय इंद्र सूर्यं ॥४॥ यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत्। त्वमिंद्र वनूँरहन् ॥५॥१९॥ यत्रोत मर्त्याय कमरिणा इंद्र सूर्यं। प्रावः शचीभिरेतशं ॥६॥ किमादुतासि वृत्रहन्मघवन्मन्युमत्तमः। अत्राह दानुमातिरः ॥७॥ एतद्घेदुत वीर्य१मिंद्र चकर्थ पौंस्यं। स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥८॥ दिवश्चिद्घा दुहितरं महान्महीयमानां। उषासमिंद्र सं पिणक् ॥९॥ अपोषा अनसः सरत्संपिष्टादह बिभ्युषी। नि यत्सीं शिश्नथद्वृषा ॥१०॥२०॥ एतदस्या अनः शये सुसंपिष्टं विपाश्या। ससार सीं परावतः ॥११॥ उत सिंधुं

दसानः तिरः चित् अर्यः सवना पुरूणि आंगूषेभिः गृणानः सत्यऽराधाः ॥१॥ आ हि स्म याति नर्यः चिकित्वान् हूयमानः सोतृऽभिः उप यज्ञं सुऽअश्वः यः अभीरुः मन्यमानः सुस्वानेभिः मदति सं ह वीरैः ॥२॥ श्रवय इत् अस्य कर्णा वाजयध्यै जुष्टां अनु प्र दिशं मंदयध्यै उतऽववृषाणः राधसे तुविष्मान् करत् नः इंद्रः सुऽतीर्था अभयं च ॥३॥ अच्छ यः गंता नाधमानं ऊती इत्था विप्रं हवमानं गृणंतं उप त्मनि दधानः धुरि आ शून् सहस्राणि शतानि वज्रऽबाहुः ॥४॥ त्वाऽऊतासः मघऽवन् इंद्र विप्राः वयं ते स्याम सूरयः गृणंतः भेजानासः बृहत्ऽदिवस्य रायः आऽकाय्यस्य दावने पुरुऽक्षोः ॥ ५ ॥ १८ ॥

---

॥३०॥ नकिः इंद्र त्वत् उत्ऽतरः न ज्यायान् अस्ति वृत्रऽहन् नकिः एव यथा त्वं ॥१॥ सत्रा ते अनु कृष्टयः विश्वा चक्राऽइव वावृतुः सत्रा महान् असि श्रुतः ॥२॥ विश्वे चन इत् अना त्वा देवासः इंद्र युयुधुः यत् अहा नक्तं आ अतिरः ॥३॥ यत्र उत बाधितेभ्यः चक्रं कुत्साय युध्यते मुषायः इंद्र सूर्यं ॥४॥ यत्र देवान् ऋघायतः विश्वान् अयुध्यः एकः इत् त्वं इंद्र वनून् अहन् ॥५॥१९॥ यत्र उत मर्त्याय कं अरिणाः इंद्र सूर्यं प्र आवः शचीभिः एतशं ॥६॥ किं आत् उत असि वृत्रऽहन् मघऽवन् मन्युमत्ऽतमः अत्र अह दानुं आ अतिरः ॥७॥ एतत् घ इत् उत वीर्यं इंद्र चकर्थ पौंस्यं स्त्रियं यत् दुःऽहनायुवं वधीः दुहितरं दिवः ॥८॥ दिवः चित् घ दुहितरं महान् महीयमानां उषसं इंद्र सं पिणक् ॥९॥ अप उषाः अनसः सरत् संऽपिष्टात् अह बिभ्युषी नि यत् सीं शिश्नथत् वृषा ॥१०॥२०॥ एतत् अस्याः अनः शये सुऽसंपिष्टं विऽपाशि आ ससार सीं पराऽवतः ॥११॥ उत सिंधुं

विबाल्यं वितस्थानामधि क्षमि। परि ष्ठा इंद्र मायया ॥१२॥ उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनं। पुरो यदस्य संपिणक् ॥१३॥ उत दासं कौलितरं बृहतः पर्वतादधि। अवाहन्निंद्र शंबरं ॥१४॥ उत दासस्य वर्चिनः सहस्राणि शतावधीः। अधि पंच प्रधीरिव ॥१५॥२१॥ उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः। उक्थेष्विंद्र आभजत् ॥१६॥ उत त्या तुर्वशायदू अस्नातारा शचीपतिः। इंद्रो विद्वाँ अपारयत् ॥१७॥ उत त्या सद्य आर्या सरयोरिंद्र पारतः। अर्णाचित्रर-थावधीः ॥१८॥ अनु द्वा जहिता नयोऽंधं श्रोणं च वृत्रहन्। न तत्ते सुम्नमष्टवे ॥१९॥ शतमश्मन्मयीनां पुरामिंद्रो व्यास्यत्। दिवोदासाय दाशुषे ॥२०॥२२॥ अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः। दासानामिंद्रो मायया ॥२१॥ स घेदुतासि वृत्रहन्त्समान इंद्र गोपतिः। यस्ता विश्वानि चिच्युषे ॥२२॥ उत नूनं यदिंद्रियं करिष्या इंद्र पौंस्यं। अद्या नकिष्टदा मिनत् ॥२३॥ वामंवामं त आदुरे देवो ददात्वर्यमा। वामं पूषा वामं भगो वामं देवः करूळती ॥२४॥२३॥

---

॥ ३१ ॥ १–१५ वामदेवः ॥ इंद्रः ॥ १. २. ४–१५ गायत्री। ३ पादनिचृत् ॥

॥३१॥ कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिं-ष्ठया वृता ॥१॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदंधसः। दृळ्हा चिदारुजे वसु ॥२॥ अभी षु णः सखीनामविता जरितॄणां। शतं भवास्यूतिभिः ॥३॥ अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः। नियुद्भिश्चर्षणीनां ॥४॥ प्रवता हि क्रतूनामा हा पदेव गच्छ-सि। अभक्षि सूर्ये सचा ॥५॥२४॥ सं यत्त इंद्र मन्यवः सं च-क्राणि दधन्विरे। अध त्वे अ

विऽबाल्यं विऽतस्थानां अधि क्षमि परिऽस्थाः इंद्र मायया ॥१२॥ उत शुष्णस्य धृष्णुऽया प्र मृक्षः अभि वेदनं पुरः यत् अस्य संऽपिणक् ॥१३॥ उत दासं कौलिऽतरं बृहतः पर्वतात् अधि अव अहन् इंद्र शंबरं ॥१४॥ उत दासस्य वर्चिनः सहस्राणि शता अवधीः अधि पंच प्रधीन्ऽइव ॥१५॥२१॥ उत त्यं पुत्रं अग्रुवः पराऽवृक्तं शतऽक्रतुः उक्थेषु इंद्रः आ अभजत् ॥१६॥ उत त्या तुर्वशायदू अस्नातारा शचीऽपतिः इंद्रः विद्वान् अपारयत् ॥१७॥ उत त्या सद्यः आर्या सरयोः इंद्र पारतः अर्णोचित्ररथा अवधीः ॥१८॥ अनु द्वा जहिता नयः अंधं श्रोणं च वृत्रऽहन् न तत् ते सुम्नं अष्टवे ॥१९॥ शतं अश्मन्ऽमयीनां पुरां इंद्रः वि आस्यत् दिवःऽदासाय दाशुषे ॥२०॥२२॥ अस्वापयत् दभीतये सहस्रा त्रिंशतं हथैः दासानां इंद्रः मायया ॥२१॥ सः घ इत् उत असि वृत्रऽहन् समानः इंद्र गोऽपतिः यः ता विश्वानि चिच्युषे ॥२२॥ उत नूनं यत् इंद्रियं करिष्याः इंद्र पौंस्यं अद्य नकिः तत् आ मिनत् ॥२३॥ वामंऽवामं ते आऽदुरे देवः ददातु अर्यमा वामं पूषा वामं भगः वामं देवः करूळती ॥२४॥२३॥

---

॥३१॥ कया नः चित्रः आ भुवत् ऊती सदाऽवृधः सखा कया शचिष्ठया वृता ॥१॥ कः त्वा सत्यः मदानां मंहिष्ठः मत्सत् अंधसः दृळ्हा चित् आऽरुजे वसु ॥२॥ अभि सु नः सखीनां अविता जरितॄणां शतं भवासि ऊतिऽभिः ॥३॥ अभि नः आ ववृत्स्व चक्रं न वृत्तं अर्वतः नियुत्ऽभिः चर्षणीनां ॥४॥ प्रऽवता हि क्रतूनां आ हु [illegible] सि अभक्षि सूर्ये सचा ॥५॥२४॥ सं यत् ते इंद्र मन्यवः [illegible] अर्षंते अर्ष सूर्ये ॥६॥ उत स्म हि त्वां आहुः

रिन्मघवानं शचीपते। दातारमविदीधयुं ॥७॥ उत स्मा सद्य इत्परि शशमानाय सुन्वते। पुरू चिन्मंहसे वसु ॥८॥ नहि ष्मा ते शतं चन राधो वरंत आमुरः। न च्यौत्नानि करिष्यतः ॥९॥ अस्माँ अवंतु ते शतमस्मान्सहस्रमूतयः। अस्मान्विश्वा अभिष्टयः ॥१०॥२५॥ अस्माँ इहा वृणीष्व सख्याय स्वस्तये। महो राये दिवित्मते ॥११॥ अस्माँ अविड्ढि विश्वहेंद्र राया परीणसा। अस्मान्विश्वाभिरूतिभिः ॥१२॥ अस्मभ्यं ताँ अपा वृधि व्रजाँ अस्तेव गोमतः। नवाभिरिंद्रोतिभिः ॥१३॥ अस्माकं धृष्णुया रथो द्युमाँ इंद्रानपच्युतः। गव्युरश्वयुरीयते ॥१४॥ अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य। वर्षिष्ठं द्यामिवोपरि ॥१५॥२६॥

---

॥३२॥ १-२४ वामदेवः ॥ १-२२ इंद्रः। २३. २४ इंद्राश्वौ ॥ गायत्री ॥

॥३२॥ आ तू न इंद्र वृत्रहन्नस्माकमर्धमा गहि। महान्महीभिरूतिभिः ॥१॥ भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा। चित्रं कृणोष्यूतये ॥२॥ दभ्रेभिश्चिच्छशीयांसं हंसि व्राधंतमोजसा। सखिभिर्ये त्वे सचा ॥३॥ वयमिंद्र त्वे सचा वयं त्वाभि नोनुमः। अस्माँअस्माँ इदुदव ॥४॥ स नश्चित्राभिरद्रिवोऽनवद्याभिरूतिभिः। अनाधृष्टाभिरा गहि ॥५॥२७॥ भूयामो षु त्वावतः सखाय इंद्र गोमतः। युजो वाजाय घृष्वये ॥६॥ त्वं ह्येक ईशिष इंद्र वाजस्य गोमतः। स नो यंधि महीमिषं ॥७॥ न त्वा वरंते अन्यथा यद्दित्ससि स्तुतो मघं। स्तोतृभ्य इंद्र गिर्वणः ॥८॥ अभि त्वा गोतमा गिरानूषत प्र दावने। इंद्र वाजाय घृष्वये ॥९॥ प्र ते वोचाम वीर्या३या मंदसान आरुजः। पुरो दासीरभीत्य ॥१०॥२८॥ ता ते गृणंति वेधसो

इत् मघऽवानं शचीऽपते दातारं अविंऽदीधयुं॥७॥ उत स्म सद्यः इत् परि शशमानाय सुन्वते पुरु चित् मंहसे वसु॥८॥ नहि स्म ते शतं चन राधः वरंते आऽमुरः न च्यौत्नानि करिष्यतः॥९॥ अस्मान् अवंतु ते शतं अस्मान् सहस्रं ऊतयः अस्मान् विश्वाः अभिष्टयः ॥१०॥२५॥ अस्मान् इह वृणीष्व सख्याय स्वस्तये महः राये दिवित्मते॥११॥ अस्मान् अविड्ढि विश्वहा इंद्र राया परीणसा अस्मान् विश्वाभिः ऊतिऽभिः॥१२॥ अस्मभ्यं तान् अप वृधि व्रजान् अस्ताऽइव गोऽमंतः नवाभिः इंद्र ऊतिऽभिः॥१३॥ अस्माकं धृष्णुऽया रथः द्युऽमान् इंद्र अनपऽच्युतः गव्युः अश्वऽयुः ईयते॥१४॥ अस्माकं उत्ऽतमं कृधि श्रवः देवेषु सूर्य वर्षिष्ठं द्यांऽइव उपरि ॥ १५ ॥ २६ ॥

---

॥३२॥ आ तु नः इंद्र वृत्रऽहन् अस्माकं अर्धं आ गहि महान् महीभिः ऊतिऽभिः॥१॥ भृमिः चित् घ असि तूतुजिः आ चित्र चित्रिणीषु आ चित्रं कृणोषि ऊतये॥२॥ दभ्रेभिः चित् शशीयांसं हंसि व्राधंतं ओजसा सखिऽभिः ये त्वे सचा॥३॥ वयं इंद्र त्वे सचा वयं त्वा अभि नोनुमः अस्मान्ऽअस्मान् इत् उत अव॥४॥ सः नः चित्राभिः अद्रिऽवः अनवद्याभिः ऊतिऽभिः अनाधृष्टाभिः आ गहि॥५॥२७॥ भूयामो सु त्वाऽवतः सखायः इंद्र गोऽमंतः युजः वाजाय घृष्वये॥६॥ त्वं हि एकः ईशिषे इंद्र वाजस्य गोऽमंतः सः नः यंधि महीं इषं॥७॥ न त्वा वरंते अन्यथा यत् दित्ससि स्तुतः मघं स्तोतृऽभ्यः इंद्र गिर्वणः॥८॥ अभि त्वा गोतमाः गिरा अनूषत प्र दावने इंद्र वाजाय घृष्वये॥९॥ प्र ते वोचाम वीर्या याः मंदसानः आ अरुजः पुरः दासीः अभिऽइत्य॥१०॥२८॥ ता ते गृणंति वेधसः

यानि चकर्थ पौंस्या । सुतेष्विंद्र गिर्वणः ॥ ११ ॥ अवीवृधंत गोतमा इंद्र त्वे स्तोमवाहसः । ऐषु धा वीरवद्यशः ॥ १२ ॥ यच्चिद्धि शश्वतामसींद्र साधारणस्त्वं । तं त्वा वयं हवामहे ॥ १३ ॥ अर्वाचीनो वसो भवास्मे सु मत्स्वांधसः । सोमानामिंद्र सोमपाः ॥ १४ ॥ अस्माकं त्वा मतीनामा स्तोम इंद्र यच्छतु । अर्वागा वर्तया हरी ॥ १५ ॥ पुरोळाशं च नो घसो जोषयासे गिरश्च नः । वधूयुरिव योषणां ॥ १६ ॥ २९ ॥ सहस्रं व्यतीनां युक्तानामिंद्रमीमहे । शतं सोमस्य खार्यः ॥ १७ ॥ सहस्रा ते शता वयं गवामा च्यावयामसि । अस्मत्रा राध एतु ते ॥ १८ ॥ दश ते कलशानां हिरण्यानामधीमहि । भूरिदा असि वृत्रहन् ॥ १९ ॥ भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर । भूरि घेदिंद्र दित्ससि ॥ २० ॥ भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन् । आ नो भजस्व राधसि ॥ २१ ॥ प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् । माभ्यां गा अनु शिश्रथः ॥ २२ ॥ कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥ २३ ॥ अरं म उस्रयाम्णेऽरमनुस्रयाम्णे । बभ्रू यामेष्वस्रिधा ॥ २४ ॥ ३० ॥ ६ ॥ ३ ॥

॥ ३३ ॥ १–११ वामदेवः ॥ ऋभवः ॥ त्रिष्टुप् ॥

॥ ३३ ॥ प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धेनुमीळे । ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥ १ ॥ यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः । आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमवहन्मनायै ॥ २ ॥ पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना । ते वाजो विभ्वाँ ऋभुरिंद्रवंतो मधुप्सरसो नोऽवंतु यज्ञं ॥ ३ ॥ यत्संवत्समृभवो गामरक्षन्यत्संवत्समृभवो मा

यानि चकर्थ पौंस्या सुतेषु इंद्र गिर्वणः ॥११॥ अवीवृधंत गोतमाः इंद्र त्वे स्तोमऽवाहसः आ एषु धाः वीरऽवत् यशः ॥१२॥ यत् चित् हि शश्वतां असि इंद्र साधारणः त्वं तं त्वा वयं हवामहे ॥१३॥ अर्वाचीनः वसो भव अस्मे सु मत्स्व अंधसः सोमानां इंद्र सोमऽपाः ॥१४॥ अस्माकं त्वा मतीनां आ स्तोमः इंद्र यच्छतु अर्वाक् आ वर्तय हरी ॥१५॥ पुरोळाशं च नः घसः जोषयासे गिरः च नः वधूयुःऽइव योषणां ॥१६॥२९॥ सहस्रं व्यतीनां युक्तानां इंद्रं ईमहे शतं सोमस्य खार्यः ॥१७॥ सहस्रा ते शता वयं गवां आ च्यावयामसि अस्मऽत्रा राधः एतु ते ॥१८॥ दश ते कलशानां हिरण्यानां अधीमहि भूरिऽदाः असि वृत्रऽहन् ॥१९॥ भूरिऽदाः भूरि देहि नः मा दभ्रं भूरि आ भर भूरि घ इत् इंद्र दित्ससि ॥२०॥ भूरिऽदाः हि असि श्रुतः पुरुऽत्रा शूर वृत्रऽहन् आ नः भजस्व राधसि ॥२१॥ प्र ते बभ्रू विऽचक्षण शंसामि गोऽसनः नपात् मा आभ्यां गाः अनु शिश्रथः ॥२२॥ कनीनकाऽइव विद्रधे नवे द्रुऽपदे अर्भके बभ्रू यामेषु शोभेते ॥२३॥ अरं मे उस्रऽयाम्ने अरं अनुस्रऽयाम्ने बभ्रू यामेषु अस्रिधा ॥ २४ ॥ ३० ॥ ६ ॥ ३ ॥

---

॥३३॥ प्र ऋभुऽभ्यः दूतंऽइव वाचं इष्ये उपऽस्तिरे श्वैतरीं धेनुं ईळे ये वातऽजूताः तरणिऽभिः एवैः परि द्यां सद्यः अपसः बभूवुः ॥१॥ यदा अरं अक्रन् ऋभवः पितृऽभ्यां परिऽविष्टी वेषणा दंसनाभिः आत् इत् देवानां उप सख्यं आयन् धीरासः पुष्टिं अवहन् मनायै ॥२॥ पुनः ये चक्रुः पितरा युवाना सना यूपाऽइव जरणा शयाना ते वाजः विऽभ्वा ऋभुः इंद्रऽवंतः मधुऽप्सरसः नः अवंतु यज्ञं ॥३॥ यत् संऽवत्सं ऋभवः गां अरक्षन् यत् संऽवत्सं ऋभवः माः

अपिंशन्। यत्संवत्सममर॑न्भासो अस्यास्ताभिः शमीभिरमृत॒त्वमा॑शुः ॥४॥ ज्येष्ठ आह चमसा द्वा करेति कनीयान्त्रीन्कृणवामेत्याह। कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत्पनयद्वचो वः ॥५॥१॥ सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम्। विभ्राजमानांश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥६॥ द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः। सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥७॥ रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपाम्। त आ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥८॥ अपो ह्येषामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः। वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा ॥९॥ ये हरी मेधयोक्था मदन्त इन्द्राय चक्रुः सुयुजा ये अश्वा। ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयन्तो न मित्रम् ॥१०॥ इदाह्नः पीतिमुत वो मदं धुर्न ऋते श्रान्तस्य सख्याय देवाः। ते नूनमस्मे ऋभवो वसूनि तृतीये अस्मिन्त्सवने दधात ॥११॥२॥

---

॥ ३४ ॥ १–११ वामदेवः ॥ ऋभवः ॥ त्रिष्टुप् ॥

॥३४॥ ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात। इदा हि वो धिषणा देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥१॥ विदानासो जन्मनो वाजरत्ना उत ऋतुभिर्ऋभवो मादयध्वम्। सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥२॥ अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे। प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥३॥ अभूदु वो विधते रत्नधेयमिदा नरो

अपिंशन् यत् सम्ऽवत्सं अभरन् भासः अस्याः ताभिः शमीभिः अमृतऽत्वं आशुः ॥४॥ ज्येष्ठः आह चमसा द्वा कर् इति कनीयान् त्रीन् कृणवाम इति आह कनिष्ठः आह चतुरः कर् इति त्वष्टा ऋभवः तत् पनयत् वचः वः ॥५॥१॥ सत्यं ऊचुः नरः एव हि चक्रुः अनु स्वधां ऋभवः जग्मुः एतां विऽभ्राजमानान् चमसान् अहाऽइव अवेनत् त्वष्टा चतुरः ददृश्वान् ॥६॥ द्वादश द्यून् यत् अगोह्यस्य आतिथ्ये रणन् ऋभवः ससंतः सुऽक्षेत्रा अकृण्वन् अनयंत सिंधून् धन्व आ अतिष्ठन् ओषधीः निम्नं आपः ॥७॥ रथं ये चक्रुः सुऽवृतं नरेऽस्थां ये धेनुं विश्वऽजुवं विश्वऽरूपां ते आ तक्षंतु ऋभवः रयिं नः सुऽअवसः सुऽअपसः सुऽहस्ताः ॥८॥ अपः हि एषां अजुषंत देवाः अभि क्रत्वा मनसा दीध्यानाः वाजः देवानां अभवत् सुऽकर्मा इंद्रस्य ऋभुक्षाः वरुणस्य विऽभ्वा ॥९॥ ये हरी' मेधया उक्था मदंतः इंद्राय चक्रुः सुऽयुजा ये अश्वा ते रायः पोषं द्रविणानि अस्मे' धत्त ऋभवः क्षेमऽयंतः न मित्रं ॥१०॥ इदा अह्नः पीतिं उत वः मदं धुः न ऋते श्रांतस्य सख्याय देवाः ते नूनं अस्मे' ऋभवः वसूनि तृतीये अस्मिन् सवने दधात ॥११॥२॥

---

॥३४॥ ऋभुः विऽभ्वा वाजः इंद्रः नः अच्छ इमं यज्ञं रत्नऽधेया उप यात इदा हि वः धिषणा देवी अह्नां अधात् पीतिं सं मदाः अग्मत वः ॥१॥ विदानासः जन्मनः वाजऽरत्नाः उत ऋतुऽभिः ऋभवः मादयध्वं सं वः मदाः अग्मंत सं पुरंऽधिः सुऽवीरां अस्मे' रयिं आ ईरयध्वं ॥२॥ अयं वः यज्ञः ऋभवः अकारि यं आ मनुष्वत् प्रऽदिवः दधिध्वे प्र वः अच्छ जुजुषाणासः अस्थुः अभूत विश्वे अग्रिया उत वाजाः ॥३॥ अभूत् ऊं' वः विधते रत्नऽधेयं इदा नरः

दाशुषे मर्त्याय । पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥४॥ आ वाजा यातोप न ऋभुक्षा महो नरो द्रविणसो गृणानाः । आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं नवस्व इव ग्मन् ॥५॥३॥ आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः । सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा इंद्रवंतः ॥६॥ सजोषा इंद्र वरुणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः । अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥७॥ सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः । सजोषसो दैव्येना सवित्रा सजोषसः सिंधुभी रत्नधेभिः ॥८॥ ये अश्विना ये पितरा य ऊती धेनुं ततक्षुर्ऋभवो ये अश्वा । ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥९॥ ये गोमंतं वाजवंतं सुवीरं रयिं धत्थ वसुमंतं पुरुक्षुं । ते अग्रेपा ऋभवो मंदसाना अस्मे धत्त ये च रातिं गृणंति ॥१०॥ नापाभूत न वोऽतीतृषामानिःशस्ता ऋभवो यज्ञे अस्मिन् । समिंद्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥११॥४॥

॥ ३५ ॥ १–९ वामदेवः ॥ ऋभवः ॥ त्रिष्टुप् ॥

॥३५॥ इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत । अस्मिन्हि वः सवने रत्नधेयं गमंत्विंद्रमनु वो मदासः ॥१॥ आगन्नृभूणामिह रत्नधेयमभूत्सोमस्य सुषुतस्य पीतिः । सुकृत्यया यत्स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा ॥२॥ व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत । अथैत वाजा अमृतस्य पंथां गणं देवानामृभवः सुहस्ताः ॥३॥ किंमयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र ।

दाशुषे मर्त्याय पिबत वाजाः ऋभवः ददे वः महि तृतीयं सवनं मदाय ॥४॥ आ वाजाः यात उप नः ऋभुक्षाः महः नरः द्रविणसः गृणानाः आ वः पीतयः अभिऽपित्वे अह्नां इमाः अस्तं नवस्वः-ऽइव ग्मन् ॥५॥३॥ आ नपातः शवसः यातन उप इमं यज्ञं नमसा हूयमानाः सऽजोषसः सूरयः यस्य च स्थ मध्वः पात रत्नऽधाः इंद्र-ऽवंतः ॥६॥ सऽजोषाः इंद्र वरुणेन सोमं सऽजोषाः पाहि गिर्वणः मरुत्ऽभिः अग्रेऽपाभिः ऋतुऽपाभिः सऽजोषाः ग्नाःपत्नीभिः रत्नऽधाभिः सऽजोषाः ॥७॥ सऽजोषसः आदित्यैः मादयध्वं स-ऽजोषसः ऋभवः पर्वतेभिः सऽजोषसः दैव्येन सवित्रा सऽजोषसः सिंधुऽभिः रत्नऽधेभिः ॥८॥ ये अश्विना ये पितरा ये ऊती धेनुं ततक्षुः ऋभवः ये अश्वा ये अंसत्रा ये ऋधक् रोदसी ये विऽभ्वः नरः सुऽअपत्यानि चक्रुः ॥९॥ ये गोऽमंतं वाजऽवंतं सुऽवीरं रयिं धत्थ वसुऽमंतं पुरुऽक्षुं ते अग्रेऽपाः ऋभवः मंदसानाः अस्मे धत्त ये च रातिं गृणंति ॥१०॥ न अप अभूत न वः अतीतृषाम अनिः-ऽशस्ताः ऋभवः यज्ञे अस्मिन् सं इंद्रेण मदथ सं मरुत्ऽभिः सं राजऽभिः रत्नऽधेयाय देवाः ॥ ११ ॥ ४ ॥

---

॥३५॥ इह उप यात शवसः नपातः सौधन्वनाः ऋभवः मा अप भूत अस्मिन् हि वः सवने रत्नऽधेयं गमंतु इंद्रं अनु वः मदासः ॥१॥ आ अगन् ऋभूणां इह रत्नऽधेयं अभूत् सोमस्य सुऽसुतस्य पीतिः सुऽकृत्यया यत् सुऽअपस्यया च एकं विऽचक्र चमसं चतुःऽधा ॥२॥ वि अकृणोत चमसं चतुःऽधा सखे वि शिक्ष इति अब्रवीत अथ ऐत वाजाः अमृतस्य पंथां गणं देवानां ऋभवः सुऽहस्ताः ॥३॥ किंऽमयः स्वित् चमसः एषः आस यं काव्येन चतुरः विऽचक्र

अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य ॥४॥ शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानं । शच्या हरी धनुतरावतष्टेंद्रवाहावृभवो वाजरत्नाः ॥५॥५॥ यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय । तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मंदसानाः ॥६॥ प्रातः सुतमपिबो हर्यश्व माध्यंदिनं सवनं केवलं ते । समृभुभिः पिबस्व रत्नधेभिः सखीँ याँ इंद्र चकृषे सुकृत्या ॥७॥ ये देवासो अभवता सुकृत्या श्येना इवेदधि दिवि निषेद । ते रत्नं धात शवसो नपातः सौधन्वना अभवतामृतासः ॥८॥ यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः । तदृभवः परिषिक्तं व एतत्सं मदेभिरिंद्रियेभिः पिबध्वं ॥९॥६॥

---

॥ ३६ ॥ १–९ वामदेवः ॥ ऋभवः ॥ १–८ जगती ॥ ९ त्रिष्टुप् ॥

॥३६॥ अनश्वो जातो अनभीशुरुक्थ्यो३ रथस्त्रिचक्रः परि वर्तते रजः । महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥१॥ रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरंतं मनसस्परि ध्यया । ताँ ऊ न्व१स्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥२॥ तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनं । जिव्री यत्संता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥३॥ एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः । अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यं ॥४॥ ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः । विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः ॥५॥७॥ स वाज्यर्वा स ऋषिर्वचस्यया स शूरो अस्ता पृतनासु दुष्टरः । स रायस्पोषं

अथ सुनुध्वं सवनं मदाय पात ऋभवः मधुनः सोम्यस्य ॥ ४ ॥ शच्या अकर्त पितरा युवाना शच्या अकर्त चमसं देवऽपानं शच्या हरी इति धनुःऽतरौ अतष्ट इंद्रऽवाहौ ऋभवः वाजऽरत्नाः ॥ ५ ॥ यः वः सुनोति अभिऽपित्वे अह्नां तीव्रं वाजासः सवनं मदाय तस्मै रयिं ऋभवः सर्वऽवीरं आ तक्षत वृषणः मंदसानाः ॥ ६ ॥ प्रातः इति सुतं अपिबः हरिऽअश्व माध्यंदिनं सवनं केवलं ते सं ऋभुऽभिः पिबस्व रत्नऽधेभिः सखीन् यान् इंद्र चकृषे सुऽकृत्या ॥ ७ ॥ ये देवासः अभवत सुऽकृत्या श्येनाःऽइव इत् अधि दिवि निऽसेद ते रत्नं धात शवसः नपातः सौधन्वनाः अभवत अमृतासः ॥ ८ ॥ यत् तृतीयं सवनं रत्नऽधेयं अकृणुध्वं सुऽअपस्या सुऽहस्ताः तत् ऋभवः परिऽसिक्तं वः एतत् सं मदेभिः इंद्रियेभिः पिबध्वं ॥ ९ ॥ ६ ॥

---

॥ ३६ ॥ अनश्वः जातः अनभीशुः उक्थ्यः रथः त्रिऽचक्रः परि वर्तते रजः महत् तत् वः देव्यस्य प्रऽवाचनं द्यां ऋभवः पृथिवीं यत् च पुष्यथ ॥ १ ॥ रथं ये चक्रुः सुऽवृतं सुऽचेतसः अविऽह्वरंतं मनसः परि ध्यया तान् ऊं इति नु अस्य सवनस्य पीतये आ वः वाजाः ऋभवः वेदयामसि ॥ २ ॥ तत् वः वाजाः ऋभवः सुऽप्रवाचनं देवेषु विऽभ्वः अभवत् महिऽत्वनं जिव्री इति यत् संता पितरा सनाऽजुरा पुनः युवाना चरथाय तक्षथ ॥ ३ ॥ एकं वि चक्र चमसं चतुःऽवयं निः चर्मणः गां अरिणीत धीतिऽभिः अथ देवेषु अमृतऽत्वं आनश श्रुष्टी वाजाः ऋभवः तत् वः उक्थ्यं ॥ ४ ॥ ऋभुतः रयिः प्रथमश्रवःऽतमः वाजऽश्रुतासः यं अजीजनन् नरः विभ्वऽतष्टः विदथेषु प्रऽवाच्यः यं देवासः अवथ सः विऽचर्षणिः ॥ ५ ॥ ७ ॥ सः वाजी अर्वा सः ऋषिः वचस्यया सः शूरः अस्ता पृतनासु दुस्तरः सः रायः पोषं

स सुवीर्यं दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥६॥ श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन। धीरासो हि ष्ठा कवयो विपश्चितस्तान्व एना ब्रह्मणा वेदयामसि ॥७॥ यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना। द्युमंतं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥८॥ इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः। येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः ॥९॥८॥

---

॥ ३७ ॥ १–८ वामदेवः ॥ ऋभवः ॥ १–४ त्रिष्टुप् । ५–८ अनुष्टुप् ॥

॥३७॥ उप नो वाजा अध्वरमृभुक्षा देवा यात पथिभिर्देवयानैः। यथा यज्ञं मनुषो विक्ष्वा३सु दधिध्वे रण्वाः सुदिनेष्वह्नां ॥१॥ ते वो हृदे मनसे संतु यज्ञा जुष्टासो अद्य घृतनिर्णिजो गुः। प्र वः सुतासो हरयंत पूर्णाः क्रत्वे दक्षाय हर्षयंत पीताः ॥२॥ त्र्युदायं देवहितं यथा वः स्तोमो वाजा ऋभुक्षणो ददे वः। जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमं ॥३॥ पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः। इंद्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥४॥ ऋभुमृभुक्षणो रयिं वाजे वाजिन्तमं युजं। इंद्रस्वंतं हवामहे सदासातममश्विनं ॥५॥९॥ सेदृभवो यमवथ यूयमिंद्रश्च मर्त्यं। स धीभिरस्तु सनिता मेधसाता सो अर्वता ॥६॥ वि नो वाजा ऋभुक्षणः पथश्चितन यष्टवे। अस्मभ्यं सूरयः स्तुता विश्वा आशास्तरीषणि ॥ ७ ॥ तं नो वाजा ऋभुक्षण इंद्र नासत्या रयिं। समश्वं चर्षणिभ्य आ पुरु शस्त मघत्तये ॥ ८ ॥ १० ॥

---

॥ ३८ ॥ १–१० वामदेवः ॥ १ द्यावापृथिव्यौ । २–१० दधिक्राः ॥ त्रिष्टुप् ॥

॥३८॥ उतो हि वां दात्रा संति पूर्वा या पूरुभ्यस्त्रसदस्युर्नि-

सः सुऽवीर्यं दधे यं वाजः विऽभ्वा ऋभवः यं आविषुः ॥६॥ श्रेष्ठं वः
पेशः अधि धायि दर्शतं स्तोमः वाजाः ऋभवः तं जुजुष्टन धीरासः
हि स्थ कवयः विपःऽचितः तान् वः एना ब्रह्मणा आ वेदयामसि
॥७॥ यूयं अस्मभ्यं धिषणाभ्यः परि विद्वांसः विश्वा नर्याणि भो-
जना द्युऽमंतं वाजं वृषऽशुष्मं उत्ऽतमं आ नः रयिं ऋभवः तक्षत
आ वयः ॥८॥ इह प्रऽजां इह रयिं रराणाः इह श्रवः वीरऽवत् तक्षत
नः येन वयं चितयेम अति अन्यान् तं वाजं चित्रं ऋभवः दद नः
॥९॥८॥

---

॥३७॥ उप नः वाजाः अध्वरं ऋभुक्षाः देवाः यात पथिऽभिः
देवऽयानैः यथा यज्ञं मनुषः विक्षु आसु दधिध्वे रण्वाः सुऽदिनेषु
अह्नां ॥१॥ ते वः हृदे मनसे संतु यज्ञाः जुष्टासः अद्य घृतऽनिर्निजः
गुः प्र वः सुतासः हरयंत पूर्णाः क्रत्वे दक्षाय हर्षयंत पीताः ॥२॥ त्रि-
ऽउदायं देवऽहितं यथा वः स्तोमः वाजाः ऋभुक्षणः ददे वः जुह्वे
मनुष्वत् उपरासु विक्षु युष्मे इति सचा बृहत्ऽदिवेषु सोमं ॥३॥ पी-
वःऽअश्वाः शुचत्ऽरथाः हि भूत अयःऽशिप्राः वाजिनः सुऽनि-
ष्काः इंद्रस्य सूनो इति शवसः नपातः अनु वः चेति अग्रियं मदाय
॥४॥ ऋभुं ऋभुक्षणः रयिं वाजे वाजिन्ऽतमं युजं इंद्रस्वंतं हवा-
महे सदाऽसातमं अश्विनं ॥५॥९॥ सः इत् ऋभवः यं अवथ यूयं
इंद्रः च मर्त्यं सः धीभिः अस्तु सनिता मेधऽसाता सः अर्वता ॥६॥
वि नः वाजाः ऋभुक्षणः पथः चितन यष्टवे अस्मभ्यं सूरयः स्तुताः
विश्वाः आशाः तरीषणि ॥७॥ तं नः वाजाः ऋभुक्षणः इंद्र नासत्या
रयिं सं अश्वं चर्षणिऽभ्यः आ पुरु शस्त मघत्तये ॥८॥१०॥

---

॥३८॥ उतो इति हि वां दात्रा संति पूर्वा या पूरुऽभ्यः त्रसदस्युः नि-

तोशे । क्षेत्रासां ददथुरुर्वरासां घनं दस्युभ्यो अभिभूतिमुग्रं
॥१॥ उत वाजिनं पुरुनिष्षिध्वानं दधिक्रामु ददथुर्विश्वकृष्टिं ।
ऋजिप्यं श्येनं प्रुषितप्सुमाशुं चर्कृत्यमर्यो नृपतिं न शूरं ॥२॥
यं सीमनु प्रवतेव द्रवंतं विश्वः पूरुर्मदति हर्षमाणः । पड्भि-
र्गृध्यंतं मेधयुं न शूरं रथतुरं वातमिव ध्रजंतं ॥३॥ यः स्मा-
रुंधानो गध्या समत्सु सनुतरश्चरति गोषु गच्छन् । आवि-
र्ऋजीको विदथा निचिक्यत्तिरो अरतिं पर्याप आयोः
॥४॥ उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशंति क्षितयो
भरेषु । नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथं
॥५॥११॥ उत स्मासु प्रथमः सरिष्यन्नि वेवेति श्रेणिभी रथा-
नां । स्रजं कृण्वानो जन्यो न शुभ्वा रेणुं रेरिहत्किरणं ददश्वान्
॥६॥ उत स्य वाजी सहुरिरृतावा शुश्रूषमाणस्तन्वा समर्ये ।
तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृंजन् ॥७॥
उत स्मास्य तन्यतोरिव द्योरृघायतो अभियुजो भयंते । यदा
सहस्रमभि षीमयोधीद्दुर्वर्तुः स्मा भवति भीम ऋंजन् ॥८॥
उत स्मास्य पनयंति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः ।
उतैनमाहुः समिथे वियंतः परा दधिक्रा असरत्सहस्रैः ॥९॥
आ दधिक्राः शवसा पंच कृष्टीः सूर्य इव ज्योतिषापस्त-
तान । सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा व-
चांसि ॥१०॥१२॥

---

॥३९॥ १–६ वामदेवः ॥ दधिक्राः ॥ १–५ त्रिष्टुप् । ६ अनुष्टुप् ॥

॥३९॥ आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत
चर्किराम । उच्छंतीर्मामुषसः सूदयंत्वति विश्वानि दुरितानि
पर्षन् ॥१॥ महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवा-

ऽतोशे क्षेत्रऽसां ददथुः उर्वराऽसां घनं दस्युऽभ्यः अभिऽभूतिं उग्रं ॥१॥ उत वाजिनं पुरुनिःऽसिध्वानं दधिऽक्रां ऊं ददथुः विश्वऽकृष्टिं ऋजिप्यं श्येनं प्रुषितऽप्सुं आशुं चर्कृत्यं अर्यः नृऽपतिं न शूरं ॥२॥ यं सीं अनु प्रवताऽइव द्रवंतं विश्वः पूरुः मदति हर्षमाणः पट्ऽभिः गृध्यंतं मेधऽयुं न शूरं रथऽतुरं वातंऽइव ध्रजंतं ॥३॥ यः स्म आऽरुंधानः गध्या समत्ऽसु सनुऽतरः चरति गोषु गच्छन् आविःऽऋजीकः विदथा निऽचिक्यत् तिरः अरतिं परि आपः आयोः ॥४॥ उत स्म एनं वस्त्रऽमथिं न तायुं अनु क्रोशंति क्षितयः भरेषु नीचा अयमानं जसुरिं न श्येनं श्रवः च अच्छ पशुऽमत् च यूथं ॥५॥११॥ उत स्म आसु प्रथमः सरिष्यन् नि वेवेति श्रेणिऽभिः रथानां स्रजं कृण्वानः जन्यः न शुभ्वा रेणुं रेरिहत् किरणं ददश्वान् ॥६॥ उत स्यः वाजी सहुरिः ऋतऽवा शुश्रूषमाणः तन्वा सऽमर्ये तुरं यतीषु तुरयन् ऋजिप्यः अधि भ्रुवोः किरते रेणुं ऋंजन् ॥७॥ उत स्म अस्य तन्यतोःऽइव द्योः ऋघायतः अभिऽयुजः भयंते यदा सहस्रं अभि सीं अयोधीत् दुःऽवर्तुः स्म भवति भीमः ऋंजन् ॥८॥ उत स्म अस्य पनयंति जनाः जूतिं कृष्टिऽप्रः अभिऽभूतिं आशोः उत एनं आहुः संऽइथे विऽयंतः परा दधिऽक्राः असरत् सहस्रैः ॥९॥ आ दधिऽक्राः शवसा पंच कृष्टीः सूर्यःऽइव ज्योतिषा अपः ततान सहस्रऽसाः शतऽसाः वाजी अर्वा पृणक्तु मध्वा सं इमा वचांसि ॥ १० ॥ १२ ॥

---

॥३९॥ आशुं दधिऽक्रां तं ऊं नु स्तवाम दिवः पृथिव्याः उत चर्किराम उच्छंतीः मां उषसः सूदयंतु अति विश्वानि दुःऽइतानि पर्षन् ॥१॥ महः चर्कर्मि अर्वतः क्रतुऽप्राः दधिऽक्राव्णः पुरुऽवा-

रस्य वृष्णः । यं पूरुभ्यो दीदिवांसं नाग्निं ददथुर्मित्रावरुणा ततुरिं ॥२॥ यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ । अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥३॥ दधिक्राव्ण इष ऊर्जो महो यदमन्महि मरुतां नाम भद्रं । स्वस्तये वरुणं मित्रमग्निं हवामह इंद्रं वज्रबाहुं ॥४॥ इंद्रमिवेदुभये वि ह्वयंत उदीराणा यज्ञमुपप्रयंतः । दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो अश्वं ॥५॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥६॥१३॥

---

॥४०॥ १-५ वामदेवः ॥ १-४ दधिक्राः । ५ सूर्यः ॥ १ त्रिष्टुप् । २-५ जगती ॥

॥४०॥ दधिक्राव्ण इदु नु चर्किराम विश्वा इन्मामुषसः सूदयंतु । अपामग्नेरुषसः सूर्यस्य बृहस्पतेरांगिरसस्य जिष्णोः ॥१॥ सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष उषसस्तुरण्यसत् । सत्यो द्रवो द्रवरः पतंगरो दधिक्रावेषमूर्जं स्वर्जनत् ॥२॥ उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः । श्येनस्येव ध्रजतो अंकसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥३॥ उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु संतवीत्वत्पथामंकांस्यन्वापनीफणत् ॥४॥ हंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं ॥५॥१४॥

---

॥४१॥ १-११ वामदेवः ॥ इंद्रावरुणौ ॥ त्रिष्टुप् ॥

॥४१॥ इंद्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो

रस्य वृष्णः यं पूरुऽभ्यः दीदिऽवांसं न अग्निं ददथुः मित्रावरुणा ततुरिं॥२॥ यः अश्वस्य दधिऽक्राव्णः अकारीत् संऽइद्धे अग्नौ उषसः विऽउष्टौ अनागसं तं अदितिः कृणोतु सः मित्रेण वरुणेन सऽजोषाः॥३॥ दधिऽक्राव्णः इषः ऊर्जः महः यत् अमन्महि मरुतां नाम भद्रं स्वस्तये वरुणं मित्रं अग्निं हवामहे इंद्रं वज्रऽबाहुं ॥४॥ इंद्रंऽइव इत् उभये वि ह्वयंते उत्ऽईराणाः यज्ञं उपऽप्रयंतः दधिऽक्रां ऊं सूदनं मर्त्याय ददथुः मित्रावरुणा नः अश्वं॥५॥ दधिऽक्राव्णः अकारिषं जिष्णोः अश्वस्य वाजिनः सुरभि नः मुखा करत् प्र नः आयूंषि तारिषत् ॥ ६ ॥ १३ ॥

---

॥४०॥ दधिऽक्राव्णः इत् ऊं नु चर्किराम विश्वाः इत् मां उषसः सूदयंतु अपां अग्नेः उषसः सूर्यस्य बृहस्पतेः आंगिरसस्य जिष्णोः ॥१॥ सत्वा भरिषः गोऽइषः दुवन्यऽसत् श्रवस्यात् इषः उषसः तुरण्यऽसत् सत्यः द्रवः द्रवरः पतंगरः दधिऽक्रावा इषं ऊर्जं स्वः जनत् ॥२॥ उत स्म अस्य द्रवतः तुरण्यतः पर्णं न वेः अनु वाति प्रऽगर्धिनः श्येनस्यऽइव ध्रजतः अंकसं परि दधिऽक्राव्णः सह ऊर्जा तरित्रतः॥३॥ उत स्यः वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धः अपिऽकक्षे आसनि क्रतुं दधिऽक्राः अनु संऽतवीत्वत् पथां अंकांसि अनु आऽपनीफणत् ॥४॥ हंसः शुचिऽसत् वसुः अंतरिक्षऽसत् होता वेदिऽसत् अतिथिः दुरोणऽसत् नृऽसत् वरऽसत् ऋतऽसत् व्योमऽसत् अप्ऽजाः गोऽजाः ऋतऽजाः अद्रिऽजाः ऋतं ॥ ५ ॥ १४ ॥

---

॥४१॥ इंद्रा कः वां वरुणा सुम्नं आप स्तोमः हविष्मान् अमृतः

न होता । यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिंद्रावरुणा नमस्वान् ॥ १ ॥ इंद्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान् । स हंति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥ २ ॥ इंद्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता । यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥ ३ ॥ इंद्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रं । यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥ ४ ॥ इंद्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः । सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ५ ॥ १५ ॥ तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये । इंद्रा नो अत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायां ॥ ६ ॥ युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी । वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शंभू ॥ ७ ॥ ता वां धियोऽवसे वाजयंतीराजिं न जग्मुर्युवयूः सुदानू । श्रिये न गाव उप सोममस्थुरिंद्रं गिरो वरुणं मे मनीषाः ॥ ८ ॥ इमा इंद्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः । उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥ ९ ॥ अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम । ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचंतां ॥ १० ॥ आ नो बृहंता बृहतीभिरूती इंद्र यातं वरुण वाजसातौ । यद्दिद्यवः पृतनासु प्रक्रीळान्तस्य वां स्याम सनितार आजेः ॥ ११ ॥ १६ ॥

---

॥ ४२ ॥ १-१० त्रसदस्युः पौरुकुत्स्यः ॥ १-६ आत्मा । ७-१० इंद्रावरुणौ ॥ त्रिष्टुप् ॥

॥ ४२ ॥ मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता

न होता यः वां हृदि क्रतुऽमान् अस्मत् उक्तः पस्पर्शत् इंद्रावरुणा नमस्वान् ॥१॥ इंद्रा ह यः वरुणा चक्रे आपी देवौ मर्तः सख्याय प्रयस्वान् सः हंति वृत्रा संऽइथेषु शत्रून् अवःऽभिः वा महत्ऽभिः सः प्र शृण्वे ॥२॥ इंद्रा ह रत्नं वरुणा धेष्ठा इत्था नृऽभ्यः शशमानेभ्यः ता यदि सखाया सख्याय सोमैः सुतेभिः सुऽप्रयसा मादयैते ॥३॥ इंद्रा युवं वरुणा दिद्युं अस्मिन् ओजिष्ठं उग्रा नि वधिष्टं वज्रं यः नः दुःऽएवः वृकतिः दभीतिः तस्मिन् मिमाथां अभिऽभूति ओजः ॥४॥ इंद्रा युवं वरुणा भूतं अस्याः धियः प्रेतारा वृषभाऽइव धेनोः सा नः दुहीयत् यवसाऽइव गत्वी सहस्रऽधारा पयसा मही गौः ॥५॥१५॥ तोके हिते तनये उर्वरासु सूरः दृशीके वृषणः च पौंस्ये इंद्रा नः अत्र वरुणा स्यातां अवःऽभिः दस्मा परिऽतक्म्यायां ॥६॥ युवां इत् हि अवसे पूर्व्याय परि प्रऽभूती॰ गोऽइषः सुऽआपी॰ वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितराऽइव शंऽभू॰ ॥७॥ ताः वां धियः अवसे वाजऽयंतीः आजिं न जग्मुः युवऽयूः सुऽदानू॰ धिये न गावः उप सोमं अस्थुः इंद्रं गिरः वरुणं मे मनीषाः ॥८॥ इमाः इंद्रं वरुणं मे मनीषाः अग्मन् उप द्रविणं इच्छमानाः उप ईं अस्थुः जोष्टारःऽइव वस्वः रघ्वीःऽइव श्रवसः भिक्षमाणाः ॥९॥ अश्व्यस्य त्मना रथ्यस्य पुष्टेः नित्यस्य रायः पतयः स्याम ता चक्राणौ ऊतिऽभिः नव्यसीभिः अस्मऽत्रा रायः निऽयुतः सचंतां ॥१०॥ आ नः बृहंता बृहतीभिः ऊती इंद्र यातं वरुण वाजऽसातौ यत् दिद्यवः पृतनासु प्रऽक्रीळान् तस्य वां स्याम सनितारः आजेः ॥११॥१६॥

---

॥४२॥ मम द्विता राष्ट्रं क्षत्रियस्य विश्वऽआयोः विश्वे अमृताः

यथा नः। क्रतुं सचंते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥१॥ अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयंत। क्रतुं सचंते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥ २ ॥ अहमिंद्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके। त्वष्टेव विश्वा भुवनानि विद्वान्समैरयं रोदसी धारयं च ॥३॥ अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य। ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥ ४ ॥ मां नरः स्वश्वा वाजयंतो मां वृताः समरणे हवंते। कृणोम्याजिं मघवाहमिंद्र इयर्मि रेणुमभिभूत्योजाः ॥५॥१७॥ अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतं। यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥ ६ ॥ विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः। त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ अरिणा इंद्र सिंधून् ॥ ७ ॥ अस्माकमत्र पितरस्त आसन्सप्त ऋषयो दौर्गहे बध्यमाने। त आयजंत त्रसदस्युमस्या इंद्रं न वृत्रतुरमर्धदेवं ॥८॥ पुरुकुत्सानी हि वामदाशद्धव्येभिरिंद्रावरुणा नमोभिः। अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवं ॥ ९ ॥ राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः। तां धेनुमिंद्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरंतीं ॥ १० ॥ १८ ॥

॥ ४३ ॥ १-७ पुरुमीळ्हाजमीळ्हौ सौहोत्रौ ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥ ४३ ॥ क उ श्रवत्कतमो यज्ञियानां वंदारु देवः कतमो जुषाते। कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्यां ॥१॥ को मृळाति कतम आगमिष्ठो देवानामु कतमः शंभविष्ठः। रथं कमाहुर्द्रवदश्वमाशुं यं सूर्यस्य दुहितावृणीत

यथा नः क्रतुं सचंते वरुणस्य देवाः राजामि कृष्टेः उपऽमस्य वव्रेः ॥१॥ अहं राजा वरुणः मह्यं तानि असुर्याणि प्रथमा धारयंत क्रतुं सचंते वरुणस्य देवाः राजामि कृष्टेः उपमस्य वव्रेः ॥२॥ अहं इंद्रः वरुणः ते महिऽत्वा उर्वी गभीरे रजसी सुमेके इति सुऽमेके त्वष्टाऽइव विश्वा भुवनानि विद्वान् सं ऐरयं रोदसी धारयं च ॥३॥ अहं अपः अपिन्वं उक्षमाणाः धारयं दिवं सदने ऋतस्य ऋतेन पुत्रः अदितेः ऋतऽवा उत त्रिऽधातु प्रथयत् विऽभूम ॥४॥ मां नरः सुऽअश्वाः वाजयंतः मां वृताः संऽअरणे हवंते कृणोमि आजिं मघऽवा अहं इंद्रः इयर्मि रेणुं अभिभूतिऽओजाः ॥५॥१७॥ अहं ता विश्वा चकरं नकिः मा दैव्यं सहः वरते अप्रतिऽइतं यत् मा सोमासः ममदन् यत् उक्था उभे भयेते रजसी अपारे इति ॥६॥ विदुः ते विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः त्वं वृत्राणि शृण्विषे जघन्वान् त्वं वृतान् अरिणाः इंद्र सिंधून् ॥७॥ अस्माकं अत्र पितरः ते आसन् सप्त ऋषयः दौःऽगहे बध्यमाने ते आ अयजंत त्रसदस्युं अस्याः इंद्रं न वृत्रऽतुरं अर्धऽदेवं ॥८॥ पुरुऽकुत्सानी हि वां अदाशत् हव्येभिः इंद्रावरुणा नमःऽभिः अथ राजानं त्रसदस्युं अस्याः वृत्रऽहनं ददथुः अर्धऽदेवं ॥९॥ राया वयं ससऽवांसः मदेम हव्येन देवाः यवसेन गावः तां धेनुं इंद्रावरुणा युवं नः विश्वाहा धत्तं अनपऽस्फुरंती ॥ १० ॥ १८ ॥

---

॥४३॥ कः ऊं इति श्रवत् कतमः यज्ञियानां वंदारु देवः कतमः जुषाते कस्य इमां देवी अमृतेषु प्रेष्ठां हृदि श्रेषाम सुऽस्तुतिं सुऽहव्यां ॥१॥ कः मृळाति कतमः आऽगमिष्ठः देवानां ऊं इति कतमः शंऽभविष्ठः रथं कं आहुः द्रवत्ऽअश्वं आशुं यं सूर्यस्य दुहिता अवृणीत

॥२॥ मक्षू हि ष्मा गच्छथ ईवतो द्यूनिंद्रो न शक्तिं परितक्म्यायां । दिव आजाता दिव्या सुपर्णा कया शचीनां भवथः शचिष्ठा ॥३॥ का वां भूदुपमातिः कया न आश्विना गमथो हूयमाना । को वां महश्चित्त्यजसो अभीक उरुष्यतं माध्वी दस्रा न ऊती ॥४॥ उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्तते वां । मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजंत पक्वाः ॥५॥ सिंधुर्ह वां रसया सिंचदश्वान्घृणा वयोऽरुषासः परि ग्मन् । तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः ॥६॥ इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना । उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥७॥१९॥

---

॥४४॥ १-७ पुरुमीळ्हाजमीळ्हौ सौहोत्रौ ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥४४॥ तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः । यः सूर्यां वहति वंधुरायुर्गिर्वाहसं पुरुतमं वसूयुं ॥१॥ युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः । युवोर्वपुरभि पृक्षः सचंते वहंति यत्ककुहासो रथे वां ॥२॥ को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः । ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥३॥ हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातं । पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥४॥ आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन । मा वामन्ये नि यमन्देवयंतः सं यद्दे नाभिः पूर्व्या वां ॥५॥ नू नो रयिं पुरुवीरं बृहंतं दस्रा मिमाथामुभयेष्वस्मे । नरो यद्वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो अग्मन् ॥६॥ इहेह यद्वां समना

॥२॥ मक्षु हि स्म गच्छ॑थः ईव॑तः द्यून् इंद्रः न श॒क्तिं परि॑ऽतक्म्याया॑ दि॒वः आऽजा॑ता दि॒व्या सु॒ऽप॒र्णा कया॑ शची॑नां भ॒व॒थः॒ शचि॑ष्ठा ॥३॥ का वां॑ भूत् उप॑ऽमातिः कया॑ नः॒ आ अ॒श्विना॒ ग॒म॒थः॒ हूय॑मा॒ना कः॑ वां॑ मह॑ः चि॒त् त्यज॑सः अ॒भीके॑ उ॒रु॒ष्य॒तं॒ मा॒ध्वी॒ द॒स्रा॒ नः॒ ऊ॒ती ॥४॥ उ॒रु वां॑ रथः॑ परि॑ न॒क्ष॒ति॒ द्यां आ यत् स॒मु॒द्रात् अ॒भि व॒र्तते॑ वां॑ मध्वा॑ मा॒ध्वी॒ मधु॑ वां॒ प्रु॒षा॒य॒न् यत् सीं॑ वां॑ पृक्षः॑ भु॒रजं॑त प॒क्वाः॑ ॥५॥ सिंधुः॑ ह॒ वां॒ र॒सया॑ सिं॒चत् अश्वा॑न् घृ॒णा वयः॑ अ॒रु॒षासः॑ परि॑ ग्म॒न् तत् ऊं॑ सु वां॑ अ॒जि॒रं चे॒ति॒ यानं॑ येन॑ पती॑ भव॑थः सू॒र्याया॑ः ॥६॥ इ॒हऽइ॑ह यत् वां॒ सम॒ना प॒पृ॒क्षे सा इ॒यं अ॒स्मे सु॒ऽम॒तिः वा॒ज॒ऽर॒त्ना उ॒रु॒ष्य॒तं ज॒रि॒तारं॑ यु॒वं ह॒ श्रि॒तः कामः॑ ना॒स॒त्या॒ यु॒व॒द्रिक् ॥७॥१९॥

---

॥४४॥ तं वां॒ रथं॑ व॒यं अ॒द्य हु॒वेम॒ पृ॒थु॒ऽज्रयं॑ अ॒श्विना॒ सं॒ऽगतिं॑ गोः यः सू॒र्यां वह॑ति वं॒धु॒र॒ऽयुः गिर्वा॑हसं पु॒रु॒ऽतमं॑ व॒सु॒ऽयुं ॥१॥ यु॒वं श्रियं॑ अ॒श्वि॒ना दे॒वता॑ तां दि॒वः न॒पा॒ता॒ व॒न॒थः॒ शची॑भिः यु॒वोः वपुः॑ अ॒भि पृक्षः॑ स॒चं॒ते॒ वहं॑ति यत् क॒कु॒हासः॑ रथे॑ वां॒ ॥२॥ कः वां॒ अ॒द्य क॒र॒ते रा॒तऽह॑व्यः ऊ॒तये॑ वा॒ सु॒त॒ऽपेया॑य वा॒ अ॒र्कैः ऋ॒तस्य॑ वा॒ व॒नु॒षे पू॒र्व्याय॑ नमः॑ ये॒मा॒नः॒ अ॒श्वि॒ना॒ आ व॒व॒र्त॒त् ॥३॥ हि॒र॒ण्ययेन पु॒रु॒ऽभू॒ रथे॑न इ॒मं य॒ज्ञं ना॒स॒त्या॒ उप॑ या॒तं॒ पिबा॑थः इत् मधु॑नः सो॒म्यस्य॑ दध॑थः रत्नं॑ वि॒ध॒ते ज॒नाय॑ ॥४॥ आ नः॑ या॒तं॒ दि॒वः अ॒च्छ॒ पृ॒थि॒व्याः हि॒र॒ण्ययेन सु॒ऽवृता॑ रथे॑न मा वां॒ अ॒न्ये नि य॒म॒न् दे॒व॒ऽयं॑तः सं यत् द॒दे नाभिः॑ पू॒र्व्या वां॒ ॥५॥ नु नः॑ र॒यिं पु॒रु॒ऽवीरं॑ बृ॒हंतं॑ दस्रा॑ मिमा॑थां उ॒भये॑षु अ॒स्मे नरः॑ यत् वां॒ अ॒श्वि॒ना॒ स्तोमं॑ आव॑न् स॒ध॒ऽस्तु॑तिं आ॒ज॒ऽमी॒ह्ळासः॑ अ॒ग्म॒न् ॥६॥ इ॒हऽइ॑ह यत् वां॒ सम॒ना

पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना। उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ ७ ॥ २० ॥

॥ ४५ ॥ १–७ वामदेवः ॥ अश्विनौ ॥ १–६ जगती । ७ त्रिष्टुप् ॥

॥ ४५ ॥ एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि। पृक्षासो अस्मिन्मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥१॥ उद्वां पृक्षासो मधुमंत ईरते रथा अश्वास उषसो व्युष्टिषु। अपोर्णुवंतस्तम आ परीवृतं स्व१र्ण शुक्रं तन्वंत आ रजः ॥२॥ मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युंजाथां रथं। आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमंतमश्विना ॥ ३ ॥ हंसासो ये वां मधुमंतो अस्रिधो हिरण्यपर्णा उहुव उषर्बुधः। उदप्रुतो मंदिनो मंदिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥ ४ ॥ स्वध्वरासो मधुमंतो अग्नय उस्रा जरंते प्रति वस्तोरश्विना। यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमंतमद्रिभिः ॥५॥ आकेनिपासो अहभिर्दविध्वतः स्व१र्ण शुक्रं तन्वंत आ रजः। सूरश्चिदश्वान्युयुजान ईयते विश्वाँ अनु स्वधया चेतथस्पथः ॥६॥ प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति। येन सद्यः परि रजांसि याथो हविष्मंतं तरणिं भोजमच्छ ॥७॥२१॥४॥

॥ ४६ ॥ १–७ वामदेवः ॥ १ वायुः । २–७ इंद्रवायू ॥ गायत्री ॥

॥४६॥ अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु। त्वं हि पूर्वपा असि ॥१॥ शतेना नो अभिष्टिभिर्नियुत्वाँ इंद्रसारथिः। वायो सुतस्य तृंपतं ॥२॥ आ वां सहस्रं हरय इंद्रवायू अभि प्रयः। वहंतु सोमपीतये ॥३॥ रथं हिरण्यवंधुरमिंद्रवायू स्वध्वरं। आ हि

पपृक्षे सा इयं अस्मे सुऽमतिः वाजऽरत्ना उरुष्यतं जरितारं युवं ह श्रितः कामः नासत्या युवद्रिक् ॥ ७ ॥ २० ॥

---

॥ ४५ ॥ एषः स्यः भानुः उत् इयर्ति युज्यते रथः परिऽज्मा दिवः अस्य सानवि पृक्षासः अस्मिन् मिथुनाः अधि त्रयः दृतिः तुरीयः मधुनः वि रप्शते ॥ १ ॥ उत् वां पृक्षासः मधुऽमंतः ईरते रथाः अश्वासः उषसः विऽउष्टिषु अपऽऊर्णुवंतः तमः आ परिऽवृतं स्वः न शुक्रं तन्वंतः आ रजः ॥ २ ॥ मध्वः पिबतं मधुऽपेभिः आसऽभिः उत प्रियं मधुने युंजाथां रथं आ वर्तनिं मधुना जिन्वथः पथः दृतिं वहेथे मधुऽमंतं अश्विना ॥ ३ ॥ हंसासः ये वां मधुऽमंतः अस्रिधः हिरण्यऽपर्णाः उहुवः उषःऽबुधः उदऽप्रुतः मंदिनः मंदिऽनिस्पृशः मध्वः न मक्षः सवनानि गच्छथः ॥ ४ ॥ सुऽअध्वरासः मधुऽमंतः अग्नयः उस्रा जरंते प्रति वस्तोः अश्विना यत् निक्तऽहस्तः तरणिः विऽचक्षणः सोमं सुसाव मधुऽमंतं अद्रिऽभिः ॥ ५ ॥ आकेऽनिपासः अहऽभिः दविध्वतः स्वः न शुक्रं तन्वंतः आ रजः सूरः चित् अश्वान् युयुजानः ईयते विश्वान् अनु स्वधया चेतथः पथः ॥ ६ ॥ प्र वां अवोचं अश्विना धियंऽधाः रथः सुऽअश्वः अजरः यः अस्ति येन सद्यः परि रजांसि याथः हविष्मंतं तरणिं भोजं अच्छ ॥ ७ ॥ २१ ॥ ४ ॥

---

॥ ४६ ॥ अग्रं पिब मधूनां सुतं वायो दिविष्टिषु त्वं हि पूर्वऽपाः असि ॥ १ ॥ शतेन नः अभिष्टिऽभिः नियुत्वान् इंद्रऽसारथिः वायो सुतस्य तृंपतं ॥ २ ॥ आ वां सहस्रं हरयः इंद्रवायू अभि प्रयः वहंतु सोमऽपीतये ॥ ३ ॥ रथं हिरण्यऽवंधुरं इंद्रवायू सुऽअध्वरं आ हि

स्थावा॑नो दिवि॒स्पृशं॑ ॥४॥ रथे॑न पृ॒थुपाज॑सा दा॒श्वांस॒मुप॑ गच्छतं । इंद्र॑वायू इ॒हा ग॑तं ॥५॥ इंद्र॑वायू अ॒यं सु॒तस्तं दे॒वेभिः॑ स॒जोष॑सा । पिब॑तं दा॒शुषो॑ गृ॒हे ॥६॥ इ॒ह प्र॒याण॑मस्तु वा॒मिंद्र॑वायू वि॒मोच॑नं । इ॒ह वां॒ सोम॑पीतये ॥७॥२२॥

---

॥४७॥ १-४ वामदेवः । १ वायुः । २-४ इंद्रवायू । अनुष्टुप् ।

॥४७॥ वायो॑ शु॒क्रो अ॑यामि ते॒ मध्वो॒ अग्रं॒ दिवि॑ष्टिषु । आ या॑हि॒ सोम॑पीतये स्पा॒र्हो दे॑व नि॒युत्व॑ता ॥१॥ इंद्र॑श्च वायवेषां॒ सोमा॑नां पी॒तिम॑र्हथः । यु॒वां हि यंतींद॑वो नि॒म्नमापो॒ न स॒ध्र्य॑क् ॥२॥ वाय॒विंद्र॑श्च शु॒ष्मिणा॑ स॒रथं॑ शवसस्पती । नि॒युत्व॑ता न ऊ॒तय॒ आ या॑तं॒ सोम॑पीतये ॥३॥ या वां॒ संति॑ पुरु॒स्पृहो॑ नि॒युतो॑ दा॒शुषे॑ नरा । अ॒स्मे ता य॑ज्ञवाहसेंद्र॑वायू॒ नि य॑च्छतं ॥४॥२३॥

---

॥४८॥ १-५ वामदेवः । वायुः । अनुष्टुप् ।

॥४८॥ वि॒हि होत्रा॒ अवी॑ता॒ विपो॒ न रायो॑ अ॒र्यः । वाय॒वा चं॒द्रेण॒ रथे॑न या॒हि सु॒तस्य॑ पी॒तये॑ ॥१॥ नि॒र्यु॒वा॒णो अश॑स्तीर्नि॒युत्वाँ॒ इंद्र॑सारथिः । वाय॒वा चं॒द्रेण॒ रथे॑न या॒हि सु॒तस्य॑ पी॒तये॑ ॥२॥ अनु॑ कृ॒ष्णे वसु॑धिती येमा॒ते वि॒श्वपे॑शसा । वाय॒वा चं॒द्रेण॒ रथे॑न या॒हि सु॒तस्य॑ पी॒तये॑ ॥३॥ वहं॑तु त्वा मनो॒युजो॑ यु॒क्तासो॑ नव॒तिर्नव॑ । वाय॒वा चं॒द्रेण॒ रथे॑न या॒हि सु॒तस्य॑ पी॒तये॑ ॥४॥ वायो॑ श॒तं हरी॑णां यु॒वस्व॒ पोष्या॑णां । उ॒त वा॑ ते सह॒स्रिणो॒ रथ॒ आ या॑तु॒ पाज॑सा ॥५॥२४॥

---

॥४९॥ १-६ वामदेवः । इंद्राबृहस्पती । गायत्री ।

॥४९॥ इ॒दं वा॑मा॒स्ये॑ ह॒विः प्रि॒यमिं॑द्राबृहस्पती । उ॒क्थं मद॑श्च शस्यते ॥१॥ अ॒यं वां॒ परि॑ षिच्यते॒ सोम॑ इंद्राबृहस्पती । चारु॒र्मदा॑य पी॒तये॑ ॥२॥ आ न॑ इंद्राबृहस्पती गृ॒हमिंद्र॑श्च गच्छतं । सो॒म-

स्वार्थः दिविऽस्पृशं ॥४॥ रथेन पृथुऽपाजसा दाश्वांसं उप गच्छतं इंद्रवायू इह आ गतं ॥५॥ इंद्रवायू अयं सुतः तं देवेभिः सऽजोषसा पिबतं दाशुषः गृहे ॥६॥ इह प्रऽयानं अस्तु वां इंद्रवायू विऽमोचनं इह वां सोमऽपीतये ॥ ७ ॥ २२ ॥

---

॥४७॥ वायो शुक्रः अयामि ते मध्वः अग्रं दिविष्टिषु आ याहि सोमऽपीतये स्पार्हः देव नियुत्वता ॥१॥ इंद्रः च वायो एषां सोमानां पीतिं अर्हथः युवां हि यंति इंदवः निम्नं आपः न सध्र्यक् ॥२॥ वायो इंद्रः च शुष्मिणा सऽरथं शवसः पती नियुत्वंता नः ऊतये आ यातं सोमऽपीतये ॥३॥ याः वां संति पुरुऽस्पृहः निऽयुतः दाशुषे नरा अस्मे ताः यज्ञऽवाहसा इंद्रवायू नि यच्छतं ॥४॥२३॥

---

॥४८॥ विहि होत्राः अवीताः विपः न रायः अर्यः वायो आ चंद्रेण रथेन याहि सुतस्य पीतये ॥१॥ निःऽयुवानः अशस्तीः नि-युत्वान् इंद्रऽसारथिः वायो आ चंद्रेण रथेन याहि सुतस्य पीतये ॥२॥ अनु कृष्णे वसुऽधिती॰ येमाते विश्वऽपेशसा वायो आ चंद्रेण रथेन याहि सुतस्य पीतये ॥३॥ वहंतु त्वा मनःऽयुजः युक्तासः नवतिः नव वायो आ चंद्रेण रथेन याहि सुतस्य पीतये ॥४॥ वायो शतं हरीणां युवस्व पोष्याणां उत वा ते सहस्रिणः रथः आ यातु पाजसा ॥ ५ ॥ २४ ॥

---

॥४९॥ इदं वां आस्ये हविः प्रियं इंद्राबृहस्पती उक्थं मदः च शस्यते ॥ १ ॥ अयं वां परि सिच्यते सोमः इंद्राबृहस्पती चारुः मदाय पीतये ॥२॥ आ नः इंद्राबृहस्पती गृहं इंद्रः च गच्छतं सोम-

पा सोमपीतये ॥३॥ अस्मे इंद्राबृहस्पती रयिं धत्तं शतग्विनं। अश्वावंतं सहस्रिणं ॥४॥ इंद्राबृहस्पती वयं सुते गीर्भिर्हवामहे। अस्य सोमस्य पीतये ॥५॥ सोममिंद्राबृहस्पती पिबतं दाशुषो गृहे। मादयेथां तदोकसा ॥६॥२५॥

---

॥५०॥ १–११ वामदेवः ॥ १–९ बृहस्पतिः। १०.११ इंद्राबृहस्पती ॥ १–९. ११ त्रिष्टुप्। १० जगती ॥

॥५०॥ यस्तस्तंभ सहसा वि ज्मो अंतान्बृहस्पतिस्त्रिषधस्थो रवेण। तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मंद्रजिह्वं ॥१॥ धुनेतयः सुप्रकेतं मदंतो बृहस्पते अभि ये नस्ततस्रे। पृषंतं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिं ॥२॥ बृहस्पते या परमा परावदत आ त ऋतस्पृशो नि षेदुः। तुभ्यं खाता अवता अद्रिदुग्धा मध्वः श्चोतंत्यभितो विरप्शं ॥३॥ बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन्। सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥४॥ स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण। बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥५॥२६॥ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः। बृहस्पते सुप्रजा वीरवंतो वयं स्याम पतयो रयीणां ॥६॥ स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण। बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वंदते पूर्वभाजं ॥७॥ स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीं। तस्मै विशः स्वयमेवा नमंते यस्मिन्ब्रह्मा राजनि पूर्व एति ॥८॥ अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या। अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवंति देवाः ॥९॥ इंद्रश्च सोमं पिबतं बृहस्पतेऽस्मिन्यज्ञे मंदसाना वृषण्वसू।

ऽपा सोमंऽपीतये ॥३॥ अस्मे इंद्राबृहस्पती रयिं धत्तं शतऽग्विनं अश्वऽवंतं सहस्रिणं ॥४॥ इंद्राबृहस्पती वयं सुते गीःऽभिः हवामहे अस्य सोमस्य पीतये ॥५॥ सोमं इंद्राबृहस्पती पिबतं दाशुषः गृहे मादयेथां तत्ऽओकसा ॥ ६ ॥ २५ ॥

---

॥५०॥ यः तस्तंभ सहसा वि ज्मः अंतान् बृहस्पतिः त्रिऽसधस्थः रवेण तं प्रत्नासः ऋषयः दीध्यानाः पुरः विप्राः दधिरे मंद्रऽजिह्वं ॥१॥ धुनऽइतयः सुऽप्रकेतं मदंतः बृहस्पते अभि ये नः ततस्रे पृषंतं सृप्रं अदब्धं ऊर्वं बृहस्पते रक्षतात् अस्य योनिं ॥२॥ बृहस्पते या परमा पराऽवत् अतः आ ते ऋतऽस्पृशः नि सेदुः तुभ्यं खाताः अवताः अद्रिऽदुग्धाः मध्वः श्चोतंति अभितः विऽरप्शं ॥३॥ बृहस्पतिः प्रथमं जायमानः महः ज्योतिषः परमे विऽओमन् सप्तऽआस्यः तुविऽजातः रवेण वि सप्तऽरश्मिः अधमत् तमांसि ॥४॥ सः सुऽस्तुभा सः ऋक्वता गणेन वलं रुरोज फलिऽगं रवेण बृहस्पतिः उस्रियाः हव्यऽसूदः कनिक्रदत् वावशतीः उत् आजत् ॥५॥२६॥ एव पित्रे विश्वऽदेवाय वृष्णे यज्ञैः विधेम नमसा हविःऽभिः बृहस्पते सुऽप्रजाः वीरऽवंतः वयं स्याम पतयः रयीणां ॥६॥ सः इत् राजा प्रतिऽजन्यानि विश्वा शुष्मेण तस्थौ अभि वीर्येण बृहस्पतिं यः सुऽभृतं बिभर्ति वल्गुऽयति वंदते पूर्वऽभाजं ॥७॥ सः इत् क्षेति सुऽधितः ओकसि स्वे तस्मै इळा पिन्वते विश्वऽदानीं तस्मै विशः स्वयं एव नमंते यस्मिन् ब्रह्मा राजनि पूर्वः एति ॥८॥ अप्रतिऽइतः जयति सं धनानि प्रतिऽजन्यानि उत या सऽजन्या अवस्यवे यः वरिवः कृणोति ब्रह्मणे राजा तं अवंति देवाः ॥९॥ इंद्रः च सोमं पिबतं बृहस्पते अस्मिन् यज्ञे मंदसाना वृषण्ऽवसू॰

आ वां विशंत्विंदवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतं ॥१०॥ बृहस्पत इंद्र वर्धतं नः सचा सा वां सुमतिर्भूत्वस्मे । अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥११॥२७॥७॥

---

॥५१॥ १-११ वामदेवः ॥ उषाः ॥ त्रिष्टुप् ॥

॥५१॥ इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् । नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥१॥ अस्थुरु चित्रा उषसः पुरस्तान्मिता इव स्वरवोऽध्वरेषु । व्यू व्रजस्य तमसो द्वारोच्छंतीरव्रञ्छुचयः पावकाः ॥२॥ उच्छंतीरद्य चितयंत भोजान्राधोदेयायोषसो मघोनीः । अचित्रे अंतः पणयः ससंत्वबुध्यमानास्तमसो विमध्ये ॥३॥ कुविद्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य । येना नवग्वे अंगिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥४॥ यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः । प्रबोधयंतीरुषसः ससंतं द्विपाच्चतुष्पाच्चरथाय जीवं ॥५॥१॥ क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणां । शुभं यच्छुभ्रा उषसश्चरंति न वि ज्ञायंते सदृशीरजुर्याः ॥६॥ ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः । यास्वीजानः शशमान उक्थैः स्तुवञ्छंसन्द्रविणं सद्य आप ॥७॥ ता आ चरंति समना पुरस्तात्समानतः समना पप्रथानाः । ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरंते ॥८॥ ता इन्न्वे३व समना समानीरमीतवर्णा उषसश्चरंति । गूहंतीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥९॥ रयिं दिवो दुहितरो विभा-

आ वां विशंतु इंद्रवः सुऽआभुवः अस्मे रयिं सर्वऽवीरं नि यच्छतं ॥१०॥ बृहस्पते इंद्र वर्धतं नः सचा सा वां सुऽमतिः भूतु अस्मे अविष्टं धियः जिगृतं पुरंऽधीः जजस्तं अर्यः वनुषां अरातीः ॥११॥२७॥७॥

---

॥५१॥ इदं ऊं त्यत् पुरुऽतमं पुरस्तात् ज्योतिः तमसः वयुनऽवत् अस्थात् नूनं दिवः दुहितरः विऽभातीः गातुं कृणवन् उषसः जनाय ॥१॥ अस्थुः ऊं चित्राः उषसः पुरस्तात् मिताःऽइव स्वरवः अध्वरेषु वि ऊं व्रजस्य तमसः द्वारा उच्छंतीः अव्रन् शुचयः पावकाः ॥२॥ उच्छंतीः अद्य चितयंत भोजान् राधःऽदेयाय उषसः मघोनीः अचित्रे अंतः पणयः ससंतु अबुध्यमानाः तमसः विऽमध्ये ॥३॥ कुवित् सः देवीः सनयः नवः वा यामः बभूयात् उषसः वः अद्य येन नवऽग्वे अंगिरे दशऽग्वे सप्तऽआस्ये रेवतीः रेवत् ऊष ॥४॥ यूयं हि देवीः ऋतयुक्ऽभिः अश्वैः परिऽप्रयाथ भुवनानि सद्यः प्रऽबोधयंतीः उषसः ससंतं द्विऽपात् चतुःऽपात् चरथाय जीवं ॥५॥१॥ क्व स्वित् आसां कतमा पुराणी यया विऽधाना विऽदधुः ऋभूणां शुभं यत् शुभ्राः उषसः चरंति न वि ज्ञायंते सऽदृशीः अजुर्याः ॥६॥ ताः घ ताः भद्राः उषसः पुरा आसुः अभिष्टिऽद्युम्नाः ऋतजातऽसत्याः यासु ईजानः शशमानः उक्थैः स्तुवन् शंसन् द्रविणं सद्यः आप ॥७॥ ताः आ चरंति समना पुरस्तात् समानतः समना पप्रथानाः ऋतस्य देवीः सदसः बुधानाः गवां न सर्गाः उषसः जरंते ॥८॥ ताः इत् नु एव समना समानीः अमीतऽवर्णाः उषसः चरंति गूहंतीः अभ्वं असितं रुशत्ऽभिः शुक्राः तनूभिः शुचयः रुचानाः ॥९॥ रयिं दिवः दुहितरः विऽभा-

तीः प्रजावंतं यच्छतास्मासु देवीः। स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥ १० ॥ तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः। वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥ ११ ॥ २ ॥

॥ ५२ ॥ १–७ वामदेवः ॥ उषाः ॥ गायत्री ॥

॥५२॥ प्रति ष्या सूनरी जनी व्युच्छंती परि स्वसुः। दिवो अदर्शि दुहिता ॥१॥ अश्वेव चित्रारुषी माता गवामृतावरी। सखाभूदश्विनोरुषाः ॥२॥ उत सखास्यश्विनोरुत माता गवामसि। उतोषो वस्व ईशिषे ॥३॥ यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि। प्रति स्तोमैरभुत्स्महि ॥४॥ प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः। ओषा अप्रा उरु ज्रयः ॥५॥ आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः। उषो अनु स्वधामव ॥६॥ आ द्यां तनोषि रश्मिभिरांतरिक्षमुरु प्रियं। उषः शुक्रेण शोचिषा ॥७॥३॥

॥ ५३ ॥ १–७ वामदेवः ॥ सविता ॥ जगती ॥

॥ ५३ ॥ तद्देवस्य सवितुर्वार्यं महद्वृणीमहे असुरस्य प्रचेतसः। छर्दिर्येन दाशुषे यच्छति त्मना तन्नो महाँ उदयान्देवो अक्तुभिः ॥ १ ॥ दिवो धर्ता भुवनस्य प्रजापतिः पिशंगं द्रापिं प्रति मुंचते कविः। विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत्सविता सुम्नमुक्थ्यं ॥२॥ आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे। प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥३॥ अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताभि रक्षते। प्रास्राग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजति ॥ ४ ॥

तीः प्रजाऽवंतं यच्छत अस्मासु देवीः स्योनात् आ वः प्रतिऽबुध्यमानाः सुऽवीर्यस्य पतयः स्याम ॥१०॥ तत् वः दिवः दुहितरः विऽभातीः उप ब्रुवे उषसः यज्ञऽकेतुः वयं स्याम यशसः जनेषु तत् द्यौः च धत्तां पृथिवी च देवी ॥ ११ ॥ २ ॥

---

॥५२॥ प्रति स्या सूनरी जनी विऽउच्छंती परि स्वसुः दिवः अदर्शि दुहिता ॥१॥ अश्वाऽइव चित्रा अरुषी माता गवां ऋतऽवरी सखा अभूत् अश्विनोः उषाः ॥२॥ उत सखा असि अश्विनोः उत माता गवां असि उत उषः वस्वः ईशिषे ॥३॥ यवयत्ऽद्वेषसं त्वा चिकित्वित् सूनृताऽवरि प्रति स्तोमैः अभुत्स्महि ॥४॥ प्रति भद्राः अदृक्षत गवां सर्गाः न रश्मयः आ उषाः अप्राः उरु ज्रयः ॥५॥ आऽपप्रुषी विभाऽवरि वि आवः ज्योतिषा तमः उषः अनु स्वधां अव ॥६॥ आ द्यां तनोषि रश्मिऽभिः आ अंतरिक्षं उरु प्रियं उषः शुक्रेण शोचिषा ॥ ७ ॥ ३ ॥

---

॥५३॥ तत् देवस्य सवितुः वार्यं महत् वृणीमहे असुरस्य प्रऽचेतसः छर्दिः येन दाशुषे यच्छति त्मना तत् नः महान् उत अयान् देवः अक्तुऽभिः ॥१॥ दिवः धर्ता भुवनस्य प्रजाऽपतिः पिशंगं द्रापिं प्रति मुंचते कविः विऽचक्षणः प्रथयन् आऽपृणन् उरु अजीजनत् सविता सुम्नं उक्थ्यं ॥२॥ आ अप्राः रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे प्र बाहू अस्राक् सविता सवीमनि निऽवेशयन् प्रऽसुवन् अक्तुऽभिः जगत् ॥३॥ अदाभ्यः भुवनानि प्रऽचाकशत् व्रतानि देवः सविता अभि रक्षते प्र अस्राक् बाहू भुवनस्य प्रऽजाभ्यः धृतऽव्रतः महः अज्मस्य राजति ॥४॥

त्रिर॒न्तरि॑क्षं सवि॒ता म॑हित्व॒ना त्री रजां॑सि परि॒भूस्त्रीणि॑ रो॒च॒ना । ति॒स्रो दिवः॑ पृथि॒वीस्ति॒स्र इ॑न्वति त्रि॒भिर्व्र॒तैर॒भि नो॑ रक्षति॒ त्मना॑ ॥५॥ बृ॒हत्सु॑म्नः प्रसवी॒ता नि॒वेश॑नो॒ जग॑तः स्था॒तुरु॒भय॑स्य॒ यो व॒शी । स नो॑ दे॒वः स॑वि॒ता शर्म॑ यच्छत्व॒स्मे क्षया॑य त्रि॒वरू॑थ॒मंह॑सः ॥६॥ आग॑न्दे॒व ऋ॒तुभि॒र्वर्ध॑तु॒ क्षयं॑ दधा॑तु नः सवि॒ता सु॑प्र॒जामिष॑म् । स नः॑ क्ष॒पाभि॒रह॑भिश्च जिन्वतु प्र॒जाव॑न्तं र॒यिम॒स्मे समि॑न्वतु ॥७॥४॥

॥ ५४ ॥ १-६ वामदेवः ॥ सविता ॥ १-५ जगती । ६ त्रिष्टुप् ॥

॥५४॥ अभू॑द्दे॒वः स॑वि॒ता वन्द्यो॒ नु न॑ इ॒दानी॒मह्न॑ उप॒वाच्यो॒ नृभिः॑ । वि यो रत्ना॒ भज॑ति मान॒वेभ्यः॒ श्रेष्ठं॑ नो॒ अत्र॒ द्रवि॑णं॒ यथा॒ दध॑त् ॥१॥ दे॒वेभ्यो॒ हि प्र॑थ॒मं य॒ज्ञिये॒भ्योऽमृ॑त॒त्वं सु॒वसि॑ भा॒गमु॑त्त॒मम् । आदिद्दा॒मानं॑ सवित॒र्व्यू॑र्णुषेऽनूची॒ना जी॑वि॒ता मानु॑षेभ्यः ॥२॥ अचि॑त्ती॒ यच्च॑कृ॒मा दैव्ये॒ जने॑ दी॒नैर्दक्षैः॒ प्रभू॑ती पूरुष॒त्वता॑ । दे॒वेषु॑ च सवित॒र्मानु॑षेषु च॒ त्वं नो॒ अत्र॑ सुवता॒दना॑गसः ॥३॥ न प्र॒मिये॑ सवि॒तुर्दैव्य॑स्य॒ तद्यथा॒ विश्वं॒ भुव॑नं धारयि॒ष्यति॑ । यत्पृ॑थि॒व्या वरि॑म॒न्ना स्व॑ङ्गु॒रिर्वर्ष्म॑न्दि॒वः सु॒वति॑ स॒त्यम॑स्य॒ तत् ॥४॥ इन्द्र॑ज्येष्ठान्बृ॒हद्भ्यः॒ पर्व॑तेभ्यः॒ क्षयाँ॑ एभ्यः सुवसि प॒स्त्याव॑तः । यथा॑यथा प॒तय॑न्तो वियेमि॒र ए॒वैव त॑स्थुः सवितः स॒वाय॑ ते ॥५॥ ये ते॒ त्रिरह॑न्त्सवितः स॒वासो॑ दि॒वेदि॑वे॒ सौभ॑गमासु॒वन्ति॑ । इन्द्रो॒ द्यावा॑पृथि॒वी सिन्धु॑र॒द्भिरा॑दि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ॥६॥५॥

॥ ५५ ॥ १-१० वामदेवः ॥ विश्वे देवाः ॥ १-७ त्रिष्टुप् । ८-१० गायत्री ॥

॥५५॥ को व॑स्त्रा॒ता व॑सवः॒ को व॑रू॒ता द्यावा॑भूमी अदिते॒ त्रासी॑थां नः । सही॑यसो वरुण मित्र॒ मर्ता॒त्को वो॑ऽध्व॒रे वरि॑वो धाति

त्रिः अंतरिक्षं सविता महिऽत्वना त्री रजांसि परिऽभूः त्रीणि रोचना तिस्रः दिवः पृथिवीः तिस्रः इन्वति त्रिऽभिः व्रतैः अभि नः रक्षति त्मना ॥५॥ बृहत्ऽसुम्नः प्रऽसविता निऽवेशनः जगतः स्थातुः उभयस्य यः वशी सः नः देवः सविता शर्म यच्छतु अस्मे क्षयाय त्रिऽवरूथं अंहसः ॥६॥ आ अगन् देवः ऋतुऽभिः वर्धतु क्षयं दधातु नः सविता सुऽप्रजां इषं सः नः क्षपाभिः अहऽभिः च जिन्वतु प्रजाऽवंतं रयिं अस्मे सं इन्वतु ॥ ७ ॥ ४ ॥

---

॥५४॥ अभूत् देवः सविता वंद्यः नु नः इदानीं अह्नः उपऽवाच्यः नृऽभिः वि यः रत्ना भजति मानवेभ्यः श्रेष्ठं नः अत्र द्रविणं यथा दधत् ॥१॥ देवेभ्यः हि प्रथमं यज्ञियेभ्यः अमृतऽत्वं सुवसि भागं उत्ऽतमं आत् इत् दामानं सवितः वि ऊर्णुषे अनूचीना जीविता मानुषेभ्यः ॥२॥ अचित्ती यत् चकृम दैव्ये जने दीनैः दक्षैः प्रऽभूती पुरुषत्वता देवेषु च सवितः मानुषेषु च त्वं नः अत्र सुवतात् अनागसः ॥३॥ न प्रऽमिये सवितुः दैव्यस्य तत् यथा विश्वं भुवनं धारयिष्यति यत् पृथिव्याः वरिमन् आ सुऽअंगुरिः वर्ष्मन् दिवः सुवति सत्यं अस्य तत् ॥४॥ इंद्रऽज्येष्ठान् बृहत्ऽभ्यः पर्वतेभ्यः क्षयान् एभ्यः सुवसि पस्त्यऽवतः यथाऽयथा पतयंतः विऽयेमिरे एव एव तस्थुः सवितः सवाय ते ॥५॥ ये ते त्रिः अहन् सवितः सवासः दिवेऽदिवे सौभगं आऽसुवंति इंद्रः द्यावापृथिवी सिंधुः अत्ऽभिः आदित्यैः नः अदितिः शर्म यंसत् ॥ ६ ॥ ५ ॥

---

॥५५॥ कः वः त्राता वसवः कः वरूता द्यावाभूमी अदिते त्रासीथां नः सहीयसः वरुण मित्र मर्तात् कः वः अध्वरे वरिवः धाति

देवाः ॥१॥ प्र ये धामानि पूर्व्याण्यर्चान्वि यदुच्छान्वियोतारो अमूराः। विधातारो वि ते दधुरजस्रा ऋतधीतयो रुरुचंत दस्माः ॥२॥ प्र पस्त्या३मदितिं सिंधुमर्कैः स्वस्तिमीळे सख्याय देवीं। उभे यथा नो अहनी निपात उषासानक्ता करतामदब्धे ॥३॥ व्यर्यमा वरुणश्चेति पंथामिषस्पतिः सुवितं गातुमग्निः। इंद्राविष्णू नृवदु षु स्तवाना शर्म नो यंतममवद्वरूथं ॥४॥ आ पर्वतस्य मरुतामवांसि देवस्य त्रातुरव्रि भगस्य। पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न उरुष्येत् ॥५॥६॥ नू रोदसी अहिना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः। समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो३ अप व्रन् ॥६॥ देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन्। नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥७॥ अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य। तान्यस्मभ्यं रासते ॥८॥ उषो मघोन्या वह सूनृते वार्या पुरु। अस्मभ्यं वाजिनीवति ॥९॥ तत्सु नः सविता भगो वरुणो मित्रो अर्यमा। इंद्रो नो राधसा गमत् ॥ १० ॥ ७ ॥

---

॥ ५६ ॥ १–७ वामदेवः ॥ द्यावापृथिव्यौ ॥ १–४ त्रिष्टुप्। ५–७ गायत्री ॥

॥ ५६ ॥ मही द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः। यत्सीं वरिष्ठे बृहती विमिन्वन्रुवद्धोक्षा पप्रथानेभिरेवैः ॥ १ ॥ देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे। ऋतावरी अद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः ॥२॥ स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान। उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥३॥ नू रोदसी बृहद्भिर्नो वरूथैः पत्नीवद्भि-

देवाः ॥१॥ प्र ये धामानि पूर्व्याणि अर्चान् वि यत् उच्छान् वि-
ऽयोतारः अमूराः विऽधातारः वि ते दधुः अजस्राः ऋतऽधीतयः
रुरुचंत दस्माः ॥२॥ प्र पस्त्यां अदितिं सिंधुं अर्कैः स्वस्तिं ईळे स-
ख्याय देवी उभे इति यथा नः अहनी इति निऽपातः उषसानक्ता करतां
अदब्धे इति ॥३॥ वि अर्यमा वरुणः चेति पंथां इषः पतिः सुवितं गातुं
अग्निः इंद्राविष्णू इति नृऽवत् ऊं इति सु स्तवाना शर्म नः यंत अमऽवत्
वरूथं ॥४॥ आ पर्वतस्य मरुतां अवांसि देवस्य त्रातुः अव्रि भगस्य
पात् पतिः जन्यात् अंहसः नः मित्रः मित्रियात् उत नः उरुष्येत्
॥५॥ नु रोदसी इति अहिना बुध्न्येन स्तुवीत देवी इति अप्येभिः इष्टैः स-
मुद्रं न संऽचरणे सनिष्यवः घर्मऽस्वरसः नद्यः अप व्रन् ॥६॥ देवैः
नः देवी अदितिः नि पातु देवः त्राता त्रायतां अप्रऽयुच्छन् नहि
मित्रस्य वरुणस्य धासिं अर्हामसि प्रऽमियं सानु अग्नेः ॥७॥ अ-
ग्निः ईशे वसव्यस्य अग्निः महः सौभगस्य तानि अस्मभ्यं रासते
॥८॥ उषः मघोनि आ वह सूनृते वार्या पुरु अस्मभ्यं वाजिनीऽव-
ति ॥९॥ तत् सु नः सविता भगः वरुणः मित्रः अर्यमा इंद्रः नः राध-
सा आ गमत् ॥१०॥ ७ ॥

---

॥५६॥ मही इति द्यावापृथिवी इति इह ज्येष्ठे इति रुचा भवतां शुचयत्-
ऽभिः अर्कैः यत् सीं वरिष्ठे इति बृहती इति विऽमिन्वन् रुवत् ह उक्षा
पप्रथानेभिः एवैः ॥१॥ देवी इति देवेभिः यजते इति यजत्रैः अमिनती इति
तस्थतुः उक्षमाणे इति ऋतऽवरी इत्यृतऽवरी अद्रुहा देवऽपुत्रे इति देवऽपुत्रे यज्ञस्य नेत्री इति
शुचयत्ऽभिः अर्कैः ॥२॥ सः इत् सुऽअपाः भुवनेषु आस यः इमे इति
द्यावापृथिवी इति जजान उर्वी इति गभीरे इति रजसी इति सुमेके इति सुऽमेके अवंशे धीरः
शच्या सं ऐरत् ॥३॥ नु रोदसी इति बृहत्ऽभिः नः वरूथैः पत्नीवत्ऽभिः

रिषयंती सजोषाः। उरूची विश्वे यजते नि पातं धिया स्याम रथ्यः सदासाः॥४॥ प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे। शुची उप प्रशस्तये॥५॥ पुनाने तन्वा मिथः स्वेन दक्षेण राजथः। ऊह्याथे सनादृतं॥६॥ मही मित्रस्य साधथस्तरंती पिप्रती ऋतं। परि यज्ञं नि षेदथुः॥७॥८॥

॥५७॥१-८ वामदेवः॥१-३ क्षेत्रपतिः। ४ शुनः। ५.८ शुनासीरौ। ६.७ सीता॥ १.४.६.७ अनुष्टुप्। २.३.८ त्रिष्टुप्। ५ पुरउष्णिक्॥

॥५७॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृळातीदृशे॥१॥ क्षेत्रस्य पते मधुमंतमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व। मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयंतु॥२॥ मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वंतरिक्षं। क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यंतो अन्वेनं चरेम॥३॥ शुनं वाहाः शुनं नरः शुनं कृषतु लांगलं। शुनं वरत्रा बध्यंतां शुनमष्ट्रामुदिंगय॥४॥ शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः। तेनेमामुप सिंचतं॥५॥ अर्वाची सुभगे भव सीते वंदामहे त्वा। यथा नः सुभगाससि यथा नः सुफलाससि॥६॥ इंद्रः सीतां नि गृह्णातु तां पूषानु यच्छतु। सा नः पयस्वती दुहामुत्तरामुत्तरां समां॥७॥ शुनं नः फाला वि कृषंतु भूमिं शुनं कीनाशा अभि यंतु वाहैः। शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तं॥८॥९॥

॥५८॥१-११ वामदेवः॥ अग्निः सूर्यो वापो वा गावो वा घृतं वा॥१-१० त्रिष्टुप्। ११ जगती॥

॥५८॥ समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः॥१॥ वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे

इषयंती' सऽजोषाः उरूची' विश्वे' यजते' नि पातं धिया स्याम रथ्यः सदाऽसाः ॥४॥ प्र वां महि द्यवी' अभि उपऽस्तुतिं भरामहे शुची' उप प्रऽशस्तये ॥५॥ पुनाने' तन्वा मिथः स्वेन दक्षेण राजथः ऊह्याथे' सनात् ऋतं ॥६॥ मही' मित्रस्य साधथः तरंती' पिप्रती' ऋतं परि यज्ञं नि सेदथुः ॥७॥८॥

---

॥५७॥ क्षेत्रस्य पतिना वयं हितेनऽइव जयामसि गां अश्वं पोषयित्नु आ सः नः मृळाति ईदृशे ॥१॥ क्षेत्रस्य पते मधुऽमंतं ऊर्मिं धेनुःऽइव पयः अस्मासु धुक्ष्व मधुऽश्चुतं घृतंऽइव सुऽपूतं ऋतस्य नः पतयः मृळयंतु ॥२॥ मधुऽमतीः ओषधीः द्यावः आपः मधुऽमत् नः भवतु अंतरिक्षं क्षेत्रस्य पतिः मधुऽमान् नः अस्तु अरिष्यंतः अनु एनं चरेम ॥३॥ शुनं वाहाः शुनं नरः शुनं कृषतु लांगलं शुनं वरत्राः बध्यंतां शुनं अष्ट्रां उत् इंगय ॥४॥ शुनासीरौ इमां वाचं जुषेथां यत् दिवि चक्रथुः पयः तेन इमां उप सिंचतं ॥५॥ अर्वाचीं सुऽभगे भव सीते वंदामहे त्वा यथा नः सुऽभगा असंसि यथा नः सुऽफला असंसि ॥६॥ इंद्रः सीतां नि गृह्णातु तां पूषा अनु यच्छतु सा नः पयस्वती दुहां उत्तरांऽउत्तरां समां ॥७॥ शुनं नः फालाः वि कृषंतु भूमिं शुनं कीनाशाः अभि यंतु वाहैः शुनं पर्जन्यः मधुना पयःऽभिः शुनासीरा शुनं अस्मासु धत्तं ॥८॥९॥

---

॥५८॥ समुद्रात् ऊर्मिः मधुऽमान् उत् आरत् उप अंशुना सं अमृतऽत्वं आनट् घृतस्य नाम गुह्यं यत् अस्ति जिह्वा देवानां अमृतस्य नाभिः ॥१॥ वयं नाम प्र ब्रवाम घृतस्य अस्मिन् यज्ञे

धारयामा नमोभिः। उप ब्रह्मा शृणवच्छस्यमानं चतुःशृंगोऽवमीद्गौर एतत् ॥२॥ चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥३॥ त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविंदन्। इंद्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ ४ ॥ एता अर्षंति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्ये आसां ॥५॥१०॥ सम्यक्स्रवंति सरितो न धेना अंतर्हृदा मनसा पूयमानाः। एते अर्षंत्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥६॥ सिंधोरिव प्राध्वने शूघनासो वातप्रमियः पतयंति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिंदन्नूर्मिभिः पिन्वमानः ॥ ७ ॥ अभि प्रवंत समनेव योषाः कल्याण्य१ः स्मयमानासो अग्निं। घृतस्य धाराः समिधो नसंत ता जुषाणो हर्यति जातवेदाः ॥ ८ ॥ कन्या इव वहतुमेतवा उ अंज्यंजाना अभि चाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवंते ॥ ९ ॥ अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवंते ॥ १० ॥ धामंते विश्वं भुवनमधि श्रितमंतः समुद्रे हृद्य१ंतरायुषि। अपामनीके समिथे य आभृतस्तमश्याम मधुमंतं त ऊर्मिं ॥ ११ ॥ ११ ॥ ५ ॥ ४ ॥

॥ इति चतुर्थं मंडलं समाप्तं ॥

---

धारयाम नमःऽभिः उप ब्रह्मा शृणवत् शस्यमानं चतुःऽशृंगः अ-
वमीत् गौरः एतत् ॥२॥ चत्वारि शृंगा त्रयः अस्य पादाः द्वे शीर्षे
सप्त हस्तासः अस्य त्रिधा बद्धः वृषभः रोरवीति महः देवः मर्त्यान्
आ विवेश ॥३॥ त्रिधा हितं पणिऽभिः गुह्यमानं गवि देवासः घृतं
अनु अविंदन् इंद्रः एकं सूर्यः एकं जजान वेनात् एकं स्वधया निः
ततक्षुः ॥४॥ एताः अर्षंति हृद्यात् समुद्रात् शतऽव्रजाः रिपुणा न
अवऽचक्षे घृतस्य धाराः अभि चाकशीमि हिरण्ययः वेतसः मध्ये
आसां ॥५॥१०॥ सम्यक् स्रवंति सरितः न धेनाः अंतः हृदा मनसा
पूयमानाः एते अर्षंति ऊर्मयः घृतस्य मृगाःऽइव क्षिपणोः ईष-
माणाः ॥६॥ सिंधोःऽइव प्रऽअध्वने शूघनासः वातऽप्रमियः
पतयंति यह्वाः घृतस्य धाराः अरुषः न वाजी काष्ठाः भिंदन् ऊ-
र्मिऽभिः पिन्वमानः ॥७॥ अभि प्रवंत समनाःऽइव योषाः कल्या-
ण्यः स्मयमानासः अग्निं घृतस्य धाराः संऽइधः नसंत ताः जुषाणः
हर्यति जातऽवेदाः ॥८॥ कन्याःऽइव वहतुं एतवै ऊं अंजि अंजा-
नाः अभि चाकशीमि यत्र सोमः सूयते यत्र यज्ञः घृतस्य धाराः
अभि तत् पवंते ॥९॥ अभि अर्षत सुऽस्तुतिं गव्यं आजिं अस्मासु
भद्रा द्रविणानि धत्त इमं यज्ञं नयत देवता नः घृतस्य धाराः मधु-
ऽमत् पवंते ॥१०॥ धामन् ते विश्वं भुवनं अधि श्रितं अंतः समुद्रे
हृदि अंतः आयुषि अपां अनीके संऽइथे यः आऽभृतः तं अश्याम
मधुऽमंतं ते ऊर्मिं ॥११॥११॥५॥४॥

॥ इति चतुर्थं मंडलं समाप्तं ॥

---

॥ १ ॥ १–१२ बुधगविष्ठिरावात्रेयौ ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१॥ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासं। यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥१॥ अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात्। समिद्धस्य रुशदद‌र्शि पाजो महान्देवस्तमसो निरमोचि ॥ २॥ यदीं गणस्य रशनामजीगः शुचिरंक्ते शुचिभिर्गोभिरग्निः। आद्दक्षिणा युज्यते वाजयंत्युत्तानामूर्ध्वो अधयज्जुहूभिः॥३॥ अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरंति। यदीं सुवाते उषसा विरूपे श्वेतो वाजी जायते अग्रे अह्नां ॥ ४॥ जनिष्ट हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु। दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान्॥ ५॥ अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उ लोके। युवा कविः पुरुनिःष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः॥६॥१२॥ प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः। आ यस्ततान रोदसी ऋतेन नित्यं मृजंति वाजिनं घृतेन ॥७॥ मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः। सहस्रशृंगो वृषभस्तदोजा विश्वाँ अग्ने सहसा प्रास्यन्यान्॥८॥ प्र सद्यो अग्ने अत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ। ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणां ॥ ९॥ तुभ्यं भरंति क्षितयो यविष्ठ बलिमग्ने अंतित ओत दूरात्। आ भंदिष्ठस्य सुमतिं चिकिद्धि बृहत्ते अग्ने महि शर्म भद्रं॥१०॥ आद्य रथं भानुमो भानुमंतमग्ने तिष्ठ यजतेभिः समंतं। विद्वान्पथीनामुर्व१ंतरिक्षमेह देवान्हविरद्याय वक्षि ॥११॥ अवोचाम कवये मेध्याय वचो वंदारु वृषभाय वृष्णे।

॥१॥ अबोधि अग्निः संऽइधा जनानां प्रति धेनुंऽइव आऽयतीं
उषसं यह्वाःऽइव प्र वयां उत्ऽजिहानाः प्र भानवः सिस्रते नाकं
अच्छ ॥१॥ अबोधि होता यजथाय देवान् ऊर्ध्वः अग्निः सुऽमनाः
प्रातः अस्थात् संऽइद्धस्य रुशत् अदर्शि पाजः महान् देवः तमसः
निः अमोचि ॥२॥ यत् ईं गणस्य रशनां अजीगरिति शुचिः अंक्ते शु-
चिऽभिः गोभिः अग्निः आत् दक्षिणा युज्यते वाजऽयंती उत्ता-
नां ऊर्ध्वः अधयत् जुहूभिः ॥३॥ अग्निं अच्छ देवऽयतां मनांसि
चक्षूंषिऽइव सूर्ये सं चरंति यत् ईं सुवाते उषसा विरूपे श्वेतः
वाजी जायते अग्रे अह्नां ॥४॥ जनिष्ट हि जेन्यः अग्रे अह्नां हितः
हितेषु अरुषः वनेषु दमेऽदमे सप्त रत्ना दधानः अग्निः होता नि
ससाद यजीयान् ॥५॥ अग्निः होता नि असीदत् यजीयान् उप-
ऽस्थे मातुः सुरभौ ऊं लोके युवा कविः पुरुनिःऽस्थः ऋतऽवा
धर्ता कृष्टीनां उत मध्ये इद्धः ॥६॥१२॥ प्र नु त्यं विप्रं अध्वरेषु साधुं
अग्निं होतारं ईळते नमःऽभिः आ यः ततान रोदसी ऋतेन नित्यं
मृजंति वाजिनं घृतेन ॥७॥ मार्जाल्यः मृज्यते स्वे दमूनाः कवि-
ऽप्रशस्तः अतिथिः शिवः नः सहस्रऽशृंगः वृषभः तत्ऽओजाः
विश्वान् अग्ने सहसा प्र असि अन्यान् ॥८॥ प्र सद्यः अग्ने अति एषि
अन्यान् आविः यस्मै चारुऽतमः बभूथ ईळेन्यः वपुषः विभाऽवा
प्रियः विशां अतिथिः मानुषीणां ॥९॥ तुभ्यं भरंति क्षितयः
यविष्ठ बलिं अग्ने अंतितः आ उत दूरात् आ भंदिष्ठस्य सु-
ऽमतिं चिकिद्धि बृहत् ते अग्ने महि शर्म भद्रं ॥१०॥ आ अद्य
रथं भानुऽमः भानुऽमंतं अग्ने तिष्ठ यजतेभिः संऽअंतं विद्वान्
पथीनां उरु अंतरिक्षं आ इह देवान् हविःऽअद्याय वक्षि
॥११॥ अवोचाम कवये मेध्याय वचः वंदारु वृषभाय वृष्णे

गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यंचमश्रेत्
॥ १२ ॥ १३ ॥

---

॥ २ ॥ १.३–८.१०–१२ कुमार आत्रेयो वृशो वा जार उभौ वा । २.९ वृशो जारः ॥ अग्निः ॥ १–११ त्रिष्टुप् । १२ शक्वरी ॥

॥२॥ कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य न मिनज्जनासः पुरः पश्यंति निहितमरतौ ॥१॥ कमेतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान । पूर्वीर्हि गर्भः शरदो ववर्धापश्यं जातं यदसूत माता ॥२॥ हिरण्यदंतं शुचिवर्णमारात्क्षेत्रादपश्यमायुधा मिमानं । ददानो अस्मा अमृतं विपृक्वत्किं मामनिंद्राः कृणवन्ननुक्थाः ॥ ३ ॥ क्षेत्रादपश्यं सनुतश्चरंतं सुमद्यूथं न पुरु शोभमानं । न ता अगृभ्रन्नजनिष्ट हि षः पलिक्नीरिद्युवतयो भवंति ॥ ४ ॥ के मे मर्यकं वि यवंत गोभिर्न येषां गोपा अरणश्चिदास । य ईं जगृभुरव ते सृजंत्वाजाति पश्व उप नश्चिकित्वान् ॥ ५ ॥ वसां राजानं वसतिं जनानामरातयो नि दधुर्मर्त्येषु । ब्रह्माण्यत्रेरव तं सृजंतु निंदितारो निंद्यासो भवंतु ॥६॥१४॥ शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुंचो अशमिष्ट हि षः । एवास्मदग्ने वि मुमुग्धि पाशान्होतश्चिकित्व इह तू निषद्य ॥७॥ हृणीयमानो अप हि मदैयेः प्र मे देवानां व्रतपा उवाच । इंद्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगां ॥८॥ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृंगे रक्षसे विनिक्षे ॥९॥ उत स्वानासो दिवि षंत्वग्नेस्तिग्मायुधा रक्षसे हंतवा उ । मदे चिदस्य प्र रुजंति भामा न वरंते परिबाधो अदेवीः ॥१०॥ एतं ते स्तोमं तु-

गविष्ठिरः नमसा स्तोमं अग्नौ दिविऽइव रुक्मं उरुऽव्यंचं अश्वेत् ॥ १२ ॥ १३ ॥

---

॥२॥ कुमारं माता युवतिः संऽउब्धं गुहा बिभर्ति न ददाति पित्रे अनीकं अस्य न मिनत् जनासः पुरः पश्यंति निऽहितं अरतौ ॥१॥ कं एतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान पूर्वीः हि गर्भः शरदः ववर्ध अपश्यं जातं यत् असूत माता ॥२॥ हिरण्यऽदंतं शुचिऽवर्णं आरात् क्षेत्रात् अपश्यं आयुधा मिमानं ददानः अस्मै अमृतं विपृक्वत् किं मां अनिंद्राः कृणवन् अनुक्थाः ॥३॥ क्षेत्रात् अपश्यं सनुतः चरंतं सुऽमत् यूथं न पुरु शोभमानं न ताः अगृभ्रन् अजनिष्ट हि सः पलिक्नीः इत् युवतयः भवंति ॥४॥ के मे मर्यकं वि यवंत गोभिः न येषां गोपाः अरणः चित् आस ये ईं जगृभुः अव ते सृजंतु आ अजाति पश्वः उप नः चिकित्वान् ॥५॥ वसां राजानं वसतिं जनानां अरातयः नि दधुः मर्त्येषु ब्रह्माणि अत्रेः अव तं सृजंतु निंदितारः निंद्यासः भवंतु ॥६॥१४॥ शुनःऽशेपं चित् निऽदितं सहस्रात् यूपात् अमुंचः अशमिष्ट हि सः एव अस्मत् अग्ने वि मुमुग्धि पाशान् होतः चिकित्वः इह तु निऽसद्य ॥७॥ हृणीयमानः अप हि मत् ऐयेः प्र मे देवानां व्रतऽपाः उवाच इंद्रः विद्वान् अनु हि त्वा चचक्ष तेन अहं अग्ने अनुऽशिष्टः आ अगां ॥८॥ वि ज्योतिषा बृहता भाति अग्निः आविः विश्वानि कृणुते महिऽत्वा प्र अदेवीः मायाः सहते दुःऽएवाः शिशीते शृंगे रक्षसे विऽनिक्षे ॥९॥ उत स्वानासः दिवि संतु अग्नेः तिग्मऽआयुधाः रक्षसे हंतवै ऊं इति मदे चित् अस्य प्र रुजंति भामाः न वरंते परिऽबाधः अदेवीः ॥१०॥ एतं ते स्तोमं तु-

विजात विप्रो रथं न धीरः स्वपा अतक्षं। यदीदग्ने प्रति त्वं देव हर्याः स्वर्वतीरप एना जयेम ॥११॥ तुविग्रीवो वृषभो वावृधानोऽशत्र्वर्यः समजाति वेदः। इतीममग्निममृता अवोचन्बर्हिष्मते मनवे शर्म यंसद्धविष्मते मनवे शर्म यंसत् ॥१२॥१५॥

---

॥३॥ १-१२ वसुश्रुत आत्रेयः ॥ अग्निः। ३ मरुतो रुद्रो विष्णुः ॥ त्रिष्टुप् ॥

॥३॥ त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः। त्वे विश्वे सहसस्पुत्र देवास्त्वमिंद्रो दाशुषे मर्त्याय ॥१॥ त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि। अंजंति मित्रं सुधितं न गोभिर्यद्दंपती समनसा कृणोषि ॥२॥ तव श्रिये मरुतो मर्जयंत रुद्र यत्ते जनिम चारु चित्रं। पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनां ॥३॥ तव श्रिया सुदृशो देव देवाः पुरू दधाना अमृतं सपंत। होतारमग्निं मनुषो नि षेदुर्दशस्यंत उशिजः शंसमायोः ॥४॥ न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः। विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान् ॥५॥ वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः। वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्तान् ॥६॥१६॥ यो न आगो अभ्येनो भरात्यधीदघमघशंसे दधात। जही चिकित्वो अभिशस्तिमेतामग्ने यो नो मर्चयति द्वयेन ॥७॥ त्वामस्या व्युषि देव पूर्वे दूतं कृण्वाना अयजंत हव्यैः। संस्थे यदग्न ईयसे रयीणां देवो मर्तैर्वसुभिरिध्यमानः ॥८॥ अव स्पृधि पितरं योधि विद्वान्पुत्रो यस्ते सहसः सून ऊहे। कदा चिकित्वो अभि चक्षसे नोऽग्ने कदाँ ऋतचिद्यातयासे ॥९॥ भूरि नाम वंदमानो द-

विऽजात विप्रः रथं न धीरः सुऽअपाः अतक्षं यदि इत् अग्ने प्रति त्वं देव हर्यः स्वःऽवतीः अपः एन जयेम ॥११॥ तुविऽग्रीवः वृषभः ववृधानः अशत्रु अर्यः सं अजाति वेदः इति इमं अग्निं अमृताः अवोचन् बर्हिष्मते मनवे शर्म यंसत् हविष्मते मनवे शर्म यंसत् ॥ १२ ॥ १५ ॥

---

॥३॥ त्वं अग्ने वरुणः जायसे यत् त्वं मित्रः भवसि यत् संऽइद्धः त्वे विश्वे सहसः पुत्र देवाः त्वं इंद्रः दाशुषे मर्त्याय ॥१॥ त्वं अर्यमा भवसि यत् कनीनां नाम स्वधाऽवन् गुह्यं बिभर्षि अंजंति मित्रं सुऽधितं न गोभिः यत् दंऽपती॰ सऽमनसा कृणोषि ॥२॥ तव श्रिये मरुतः मर्जयंत रुद्र यत् ते जनिम चारु चित्रं पदं यत् विष्णोः उपऽमं निऽधायि तेन पासि गुह्यं नाम गोनां ॥३॥ तव श्रिया सुऽदृशः देव देवाः पुरु दधानाः अमृतं सपंत होतारं अग्निं मनुषः नि सेदुः दशस्यंतः उशिजः शंसं आयोः ॥४॥ न त्वत् होता पूर्वः अग्ने यजीयान् न काव्यैः परः अस्ति स्वधाऽवः विशः च यस्याः अतिथिः भवासि सः यज्ञेन वनवत् देव मर्तान् ॥५॥ वयं अग्ने वनुयाम त्वाऽऊताः वसुऽयवः हविषा बुध्यमानाः वयं सऽमर्ये विदथेषु अह्नां वयं राया सहसः पुत्र मर्तान् ॥ ६ ॥ १६ ॥ यः नः आगः अभि एनः भराति अधि इत् अघं अघऽशंसे दधात जहि चिकित्वः अभिऽशस्तिं एतां अग्ने यः नः मर्चयति द्वयेन ॥ ७ ॥ त्वां अस्याः विऽउषि देव पूर्वे दूतं कृण्वानाः अयजंत हव्यैः संऽस्थे यत् अग्ने ईयसे रयीणां देवः मर्तैः वसुऽभिः इध्यमानः ॥८॥ अव स्पृधि पितरं योधि विद्वान् पुत्रः यः ते सहसः सूनो ऊहे कदा चिकित्वः अभि चक्षसे नः अग्ने कदा ऋतऽचित् यातयासे ॥ ९ ॥ भूरि नाम वंदमानः द-

धाति पिता वसो यदि तज्जोषयासे। कुविद्देवस्य सहसा चकानः सुम्नमग्निर्वनते वावृधानः ॥१०॥ त्वमंग जरितारं यविष्ठ विश्वान्यग्ने दुरिताति पर्षि। स्तेना अदृश्रन्रिपवो जनासोऽज्ञातकेता वृजिना अभूवन् ॥११॥ इमे यामासस्त्वद्रिगभूवन्वसवे वा तदिदागो अवाचि। नाहायमग्निरभिशस्तये नो न रीषते वावृधानः परा दात् ॥ १२ ॥ १७ ॥

---

॥ ४ ॥ १–११ वसुश्रुत आत्रेयः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥४॥ त्वामग्ने वसुपतिं वसूनामभि प्र मंदे अध्वरेषु राजन्। त्वया वाजं वाजयंतो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानां ॥१॥ हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिषो दिदीह्यस्मद्र्य१क्सं मिमीहि श्रवांसि ॥२॥ विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निं। नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥३॥ जुषस्वाग्न इळया सजोषा यतमानो रश्मिभिः सूर्यस्य। जुषस्व नः समिधं जातवेद आ च देवान्हविरद्याय वक्षि ॥४॥ जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥५॥१८॥ वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै। पिपर्षि यत्सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥६॥ वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे। अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥७॥ अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यं। वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥८॥ विश्वानि नो दुर्गहा जातवेदः सिंधुं न नावा दुरिताति पर्षि। अग्ने

धाति पिता वसो यदि तत् जोषयासे कुवित् देवस्य सहसा चकानः सुम्नं अग्निः वनते ववृधानः ॥१०॥ त्वं अंग जरितारं यविष्ठ विश्वानि अग्ने दुःऽइता अति पर्षि स्तेनाः अदृश्रन् रिपवः जनासः अज्ञातऽकेताः वृजिनाः अभूवन् ॥११॥ इमे यामासः त्वद्रिक् अभूवन् वसवे वा तत् इत् आगः अवाचि न अह अयं अग्निः अभिऽशस्तये नः न रिषते ववृधानः परा दात् ॥ १२ ॥ १७ ॥

---

॥४॥ त्वां अग्ने वसुऽपतिं वसूनां अभि प्र मंदे अध्वरेषु राजन् त्वया वाजं वाजऽयंतः जयेम अभि स्याम पृत्सुतीः मर्त्यानां ॥१॥ हव्यऽवाट् अग्निः अजरः पिता नः विऽभुः विभाऽवा सुऽदृशीकः अस्मे सुऽगार्हपत्याः सं इषः दिदीहि अस्मद्र्यक् सं मिमीहि श्रवांसि ॥२॥ विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतऽपृष्ठं अग्निं नि होतारं विश्वऽविदं दधिध्वे सः देवेषु वनते वार्याणि ॥३॥ जुषस्व अग्ने इळया सऽजोषाः यतमानः रश्मिऽभिः सूर्यस्य जुषस्व नः संऽइधं जातऽवेदः आ च देवान् हविःऽअद्याय वक्षि ॥४॥ जुष्टः दमूनाः अतिथिः दुरोणे इमं नः यज्ञं उप याहि विद्वान् विश्वाः अग्ने अभिऽयुजः विऽहत्य शत्रुऽयतां आ भर भोजनानि ॥५॥१८॥ वधेन दस्युं प्र हि चातयस्व वयः कृण्वानः तन्वे स्वायै पिपर्षि यत् सहसः पुत्र देवान् सः अग्ने पाहि नृऽतम वाजे अस्मान् ॥६॥ वयं ते अग्ने उक्थैः विधेम वयं हव्यैः पावक भद्रऽशोचे अस्मे रयिं विश्वऽवारं सं इन्व अस्मे विश्वानि द्रविणानि धेहि ॥७॥ अस्माकं अग्ने अध्वरं जुषस्व सहसः सूनो त्रिऽसधस्थ हव्यं वयं देवेषु सुऽकृतः स्याम शर्मणा नः त्रिऽवरूथेन पाहि ॥८॥ विश्वानि नः दुःऽगहा जातऽवेदः सिंधुं न नावा दुःऽइता अति पर्षि अग्ने

अपि॒वन्नम॑सा गृणा॒नो३॒ स्माकं॑ बोध्यवि॒ता त॒नूना॑म् ॥९॥ य॒स्त्वा॑ हृ॒दा की॒रिणा॒ मन्य॑मा॒नोऽम॑र्त्यं॒ मर्त्यो॒ जोह॑वीमि। जात॑वेदो॒ यशो॑ अ॒स्मासु॑ धेहि प्र॒जाभि॑रग्ने अमृत॒त्वम॑श्याम् ॥१०॥ यस्मै॒ त्वं सु॒कृते॑ जातवेद उ लो॒कम॑ग्ने कृ॒णव॑: स्यो॒नम्। अ॒श्विनं॒ स पु॒त्रिणं॑ वी॒रव॑न्तं॒ गोम॑न्तं र॒यिं न॑शते स्व॒स्ति ॥११॥१९॥

॥५॥ १-११ वसुश्रुत आत्रेयः॥ आप्रं॥ गायत्री॥

॥५॥ सुस॑मिद्धाय शो॒चिषे॑ घृ॒तं ती॒व्रं जु॑होतन। अ॒ग्नये॑ जा॒तवे॑दसे ॥१॥ नरा॒शंस॑: सुषूदती॒मं य॒ज्ञमदा॑भ्यः। क॒विर्हि मधु॑हस्त्यः ॥२॥ ई॒ळि॒तो अ॑ग्न॒ आ व॒हेन्द्रं॑ चि॒त्रमि॒ह प्रि॒यम्। सु॒खै रथे॑भिरू॒तये॑ ॥३॥ ऊर्ण॑म्रदा॒ वि प्र॑थस्वा॒भ्य१॒र्का अ॑नूषत। भवा॑ नः शुभ्र सा॒तये॑ ॥४॥ दे॒वीर्द्वा॑रो॒ वि श्र॑यध्वं सुप्राय॒णा न॑ ऊ॒तये॑। प्रप्र॑ य॒ज्ञं पृ॑णीतन ॥५॥२०॥ सु॒प्रती॑के वयो॒वृधा॑ य॒ह्वी ऋ॒तस्य॑ मा॒तरा॑। दो॒षामु॒षास॑मीमहे ॥६॥ वात॑स्य॒ पत्म॑न्नीळि॒ता दैव्या॒ होता॑रा॒ मनु॑षः। इ॒मं नो॑ य॒ज्ञमा ग॑तम् ॥७॥ इळा॒ सर॑स्वती म॒ही ति॒स्रो दे॒वीर्म॑यो॒भुव॑:। ब॒र्हिः सी॑दन्त्व॒स्रिध॑: ॥८॥ शि॒वस्त्व॑ष्टरि॒हा ग॑हि वि॒भुः पोष॑ उ॒त त्मना॑। य॒ज्ञेय॑ज्ञे न॒ उद॑व ॥९॥ यत्र॒ वेत्थ॑ वनस्पते दे॒वानां॒ गुह्या॒ नामा॑नि। तत्र॑ ह॒व्यानि॑ गामय ॥१०॥ स्वाहा॒ग्नये॒ वरु॑णाय॒ स्वाहेन्द्रा॑य म॒रुद्भ्य॑:। स्वाहा॑ दे॒वेभ्यो॑ ह॒विः ॥११॥२१॥

॥६॥ १-१० वसुश्रुत आत्रेयः॥ अग्निः॥ पंक्तिः॥

॥६॥ अ॒ग्निं तं म॑न्ये॒ यो वसु॒रस्तं॒ यं यन्ति॑ धे॒नव॑:। अस्त॒मर्व॑न्त आ॒शवोऽस्तं॒ नित्या॑सो वा॒जिन॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥१॥ सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नव॑:। समर्व॑न्तो रघु॒द्रुव॒: सं सु॑जा॒तास॑: सू॒रय॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥२॥ अ॒ग्निर्हि वा॒जिनं॑

अत्रिऽवत् नमसा गृणानः अस्माकं बोधि अविता तनूनां ॥९॥
यः त्वा हृदा कीरिणा मन्यमानः अमर्त्यं मर्त्यः जोहवीमि जात-
ऽवेदः यशः अस्मासु धेहि प्रऽजाभिः अग्ने अमृतऽत्वं अश्यां ॥१०॥
यस्मै त्वं सुऽकृते जातऽवेदः ऊं लोकं अग्ने कृणवः स्योनं अश्विनं
सः पुत्रिणं वीरऽवंतं गोऽमंतं रयिं नशते स्वस्ति ॥११॥१९॥

---

॥५॥ सुऽसंमिद्धाय शोचिषे घृतं तीव्रं जुहोतन अग्नये जातऽवे-
दसे ॥१॥ नराशंसः सुसूदति इमं यज्ञं अदाभ्यः कविः हि मधुऽह-
स्त्यः ॥२॥ ईळितः अग्ने आ वह इंद्रं चित्रं इह प्रियं सुऽखैः रथेभिः
ऊतये ॥३॥ ऊर्णऽम्रदाः वि प्रथस्व अभि अर्काः अनूषत भव नः
शुभ्र सातये ॥४॥ देवीः द्वारः वि श्रयध्वं सुप्रऽअयनाः नः ऊतये
प्रऽप्र यज्ञं पृणीतन ॥ ५ ॥ २० ॥ सुऽप्रतीके॰ वयःऽवृधा यह्वी॰
ऋतस्य मातरा दोषां उषसं ईमहे ॥६॥ वातस्य पत्मन् ईळिता
दैव्या होतारा मनुषः इमं नः यज्ञं आ गतं ॥७॥ इळा सरस्वती म-
ही तिस्रः देवीः मयःऽभुवः बर्हिः सीदंतु अस्रिधः ॥८॥ शिवः त्वष्टः
इह आ गहि विऽभुः पोषे उत त्मना यज्ञेऽयज्ञे नः उत् अव ॥९॥
यत्र वेत्थ वनस्पते देवानां गुह्या नामानि तत्र हव्यानि गमय
॥१०॥ स्वाहा अग्नये वरुणाय स्वाहा इंद्राय मरुतऽभ्यः स्वाहा
देवेभ्यः हविः ॥ ११ ॥ २१ ॥

---

॥६॥ अग्निं तं मन्ये यः वसुः अस्तं यं यंति धेनवः अस्तं अर्वंतः
आशवः अस्तं नित्यासः वाजिनः इषं स्तोतृऽभ्यः आ भर ॥१॥ सः
अग्निः यः वसुः गृणे सं यं आऽयंति धेनवः सं अर्वंतः रघुऽद्रुवः सं
सुऽजातासः सूरयः इषं स्तोतृऽभ्यः आ भर ॥२॥ अग्निः हि वाजिनं

विशे ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥३॥ आ ते अग्न इधीमहि द्युमंतं देवाजरं । यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥४॥ आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते । सुश्चंद्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥५॥२२॥ प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यंति वार्यं । ते हिन्विरे त इन्विरे त इषण्यंत्यानुषगिषं स्तोतृभ्य आ भर ॥ ६ ॥ तव त्ये अग्ने अर्चयो महि व्राधंत वाजिनः । ये पत्वभिः शफानां व्रजा भुरंत गोनामिषं स्तोतृभ्य आ भर ॥७॥ नवा नो अग्न आ भर स्तोतृभ्यः सुक्षितीरिषः । ते स्याम य आनृचुस्त्वादूतासो दमेदम इषं स्तोतृभ्य आ भर ॥ ८ ॥ उभे सुश्चंद्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥९॥ एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् । दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भर ॥ १० ॥ २३ ॥

---

॥ ७ ॥ १–१० इष आत्रेयः ॥ अग्निः ॥ १–९ अनुष्टुप् । १० पंक्तिः ॥

॥७॥ सखायः सं वः सम्यंचमिषं स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥१॥ कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने । अर्हंतश्चिद्यमिंधते संजनयंति जंतवः ॥२॥ सं यदिषो वनामहे सं हव्या मानुषाणां । उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥३॥ स स्मा कृणोति केतुमा नक्तं चिद्दूर आ सते । पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥४॥ अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति । अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥ ५ ॥ २४ ॥ यं मर्त्यः पुरुस्पृहं विदद्विश्वस्य धायसे । प्र स्वा-

विशे ददाति विश्वऽचर्षणिः अग्निः राये सुऽआभुवं सः प्रीतः या-
ति वार्यं इषं स्तोतृऽभ्यः आ भर ॥३॥ आ ते अग्ने इधीमहि द्युऽमंतं
देव अजरं यत् ह स्या ते पनीयसी संऽइत् दीदयति द्यवि इषं स्तो-
तृऽभ्यः आ भर ॥४॥ आ ते अग्ने ऋचा हविः शुक्रस्य शोचिषः पते
सुऽचंद्र दस्म विश्पते हव्यऽवाट् तुभ्यं हूयते इषं स्तोतृऽभ्यः आ भर
॥५॥२२॥ प्रो त्ये अग्नयः अग्निषु विश्वं पुष्यंति वार्यं ते हिन्विरे ते इ-
न्विरे ते इषयंति आनुषक् इषं स्तोतृऽभ्यः आ भर ॥६॥ तव त्ये
अग्ने अर्चयः महि व्राधंत वाजिनः ये पत्वऽभिः शफानां व्रजा भु-
रंत गोनां इषं स्तोतृऽभ्यः आ भर ॥७॥ नवाः नः अग्ने आ भर स्तोतृ-
ऽभ्यः सुऽक्षितीः इषः ते स्याम ये आनृचुः त्वाऽदूतासः दमेऽदमे
इषं स्तोतृऽभ्यः आ भर ॥८॥ उभे सुऽचंद्र सर्पिषः दर्वी श्रीणीषे
आसनि उतो नः उत् पुपूर्याः उक्थेषु शवसः पते इषं स्तोतृऽभ्यः
आ भर ॥९॥ एव अग्निं अजुर्यमुः गीःऽभिः यज्ञेभिः आनुषक् दधत्
अस्मे सुऽवीर्यं उत त्यत् आशुऽअश्व्यं इषं स्तोतृऽभ्यः आ भर
॥ १० ॥ २३ ॥

---

॥७॥ सखायः सं वः सम्यंचं इषं स्तोमं च अग्नये वर्षिष्ठाय क्षि-
तीनां ऊर्जः नप्त्रे सहस्वते ॥१॥ कुत्र चित् यस्य संऽऋतौ रण्वाः नरः
नृऽसदने अर्हंतः चित् यं इंधते संऽजनयंति जंतवः ॥२॥ सं यत्
इषः वनामहे सं हव्या मानुषाणां उत द्युम्नस्य शवसा ऋतस्य
रश्मिं आ ददे ॥३॥ सः स्म कृणोति केतुं आ नक्तं चित् दूरे आ सते
पावकः यत् वनस्पतीन् प्र स्म मिनाति अजरः ॥४॥ अव स्म यस्य
वेषणे स्वेदं पथिषु जुह्वति अभि ईं अह स्वऽजेन्यं भूम पृष्ठाऽइव
रुरुहुः ॥५॥२४॥ यं मर्त्यः पुरुऽस्पृहं विदत् विश्वस्य धायसे प्र स्वा-

प्र स्वादनं पितूनामस्ततातिं चिदायवे ॥६॥ स हि ष्मा धन्वाक्षितं
दाता न दात्या पशुः । हिरिश्मश्रुः शुचिदन्नृभुरनिभृष्टतवि-
षिः ॥७॥ शुचिः ष्म यस्मा अत्रिवत्प्र स्वधितीव रीयते । सु-
षूरसूत माता क्राणा यदानशे भगं ॥८॥ आ यस्ते सर्पिरासु-
तेऽग्ने शमस्ति धायसे । ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु
धाः ॥९॥ इति चिन्मन्युमध्रिजस्त्वादातमा पशुं ददे । आदग्ने
अपृणतोऽत्रिः सासह्याद्दस्यूनिषः सासह्यान्नॄन् ॥ १० ॥ २५ ॥

---

॥ ८ ॥ १–७ इष आत्रेयः ॥ अग्निः ॥ जगती ॥

॥८॥ त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये स-
हस्कृत । पुरुश्चंद्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यं
॥ १ ॥ त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि
षेदिरे । बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषं
॥२॥ त्वामग्ने मानुषीरीळते विशो होत्राविदं विविचिं रत्न-
धातमं । गुहा संतं सुभग विश्वदर्शतं तुविष्वणसं सुयजं
घृतश्रियं ॥ ३ ॥ त्वामग्ने धर्णसिं विश्वधा वयं गीर्भिर्गृणंतो
नमसोप सेदिम । स नो जुषस्व समिधानो अंगिरो देवो
मर्तस्य यशसा सुदीतिभिः ॥ ४ ॥ त्वमग्ने पुरुरूपो विशेविशे
वयो दधासि प्रत्नथा पुरुष्टुत । पुरूण्यन्ना सहसा वि राजसि
त्विषिः सा ते तित्विषाणस्य नाधृषे ॥ ५ ॥ त्वामग्ने समिधानं
यविष्ठ्य देवा दूतं चक्रिरे हव्यवाहनं । उरुज्रयसं घृतयोनि-
माहुतं त्वेषं चक्षुर्दधिरे चोदयन्मति ॥६॥ त्वामग्ने प्रदिव आहुतं
घृतैः सुम्नायवः सुषमिधा समीधिरे । स वावृधान ओषधीभि-
रुक्षितोऽभि ज्रयांसि पार्थिवा वि तिष्ठसे ॥७॥२६॥८॥३॥

दनं पितॄणां अस्तऽतातिं चित् आयवे ॥६॥ सः हि स्म धन्व आऽक्षितं दाता न दाति आ पशुः हिरिऽश्मश्रुः शुचिऽदन् ऋभुः अनिभृष्टऽतविषिः ॥७॥ शुचिः स्म यस्मै अत्रिऽवत् प्र स्वधितिःऽइव रीयते सुऽसूः असूत माता क्राणा यत् आनशे भगं ॥८॥ आ यः ते सर्पिःऽआसुते अग्ने शं अस्ति धायसे आ एषु द्युम्नं उत श्रवः आ चित्तं मर्त्येषु धाः ॥९॥ इति चित् मन्युं अध्रिजः त्वाऽदातं आ पशुं ददे आत् अग्ने अपृणतः अत्रिः ससह्यात् दस्यून् इषः ससह्यात् नॄन् ॥ १० ॥ २५ ॥

---

॥८॥ त्वां अग्ने ऋतऽयवः सं ईधिरे प्रत्नं प्रत्नासः ऊतये सहःऽकृत पुरुऽचंद्रं यजतं विश्वऽधायसं दमूनसं गृहऽपतिं वरेण्यं ॥१॥ त्वां अग्ने अतिथिं पूर्व्यं विशः शोचिःऽकेशं गृहऽपतिं नि सेदिरे बृहत्ऽकेतुं पुरुऽरूपं धनऽस्पृतं सुऽशर्माणं सुऽअवसं जरत्ऽविषं ॥ २ ॥ त्वां अग्ने मानुषीः ईळते विशः होत्राऽविदं विविचिं रत्नऽधातमं गुहा संतं सुऽभग विश्वऽदर्शतं तुविऽस्वनसं सुऽयजं घृतऽश्रियं ॥३॥ त्वां अग्ने धर्णसिं विश्वधा वयं गीःऽभिः गृणंतः नमसा उप सेदिम सः नः जुषस्व संऽइधानः अंगिरः देवः मर्तस्य यशसा सुदीतिऽभिः ॥ ४ ॥ त्वं अग्ने पुरुऽरूपः विशेऽविशे वयः दधासि प्रत्नऽथा पुरुऽस्तुत पुरूणि अन्ना सहसा वि राजसि त्विषिः सा ते तित्विषाणस्य न आऽधृषे ॥५॥ त्वां अग्ने संऽइधानं यविष्ठ्य देवाः दूतं चक्रिरे हव्यऽवाहनं उरुऽज्रयसं घृतऽयोनिं आऽहुतं त्वेषं चक्षुः दधिरे चोदयत्ऽमति ॥६॥ त्वां अग्ने प्रऽदिवः आऽहुतं घृतैः सुम्नऽयवः सुऽसमिधा सं ईधिरे सः ववृधानः ओषधीभिः उक्षितः अभि ज्रयांसि पार्थिवा वि तिष्ठसे ॥७॥२६॥८॥३॥

॥ ९ ॥ १-७ गय आत्रेयः ॥ अग्निः ॥ १-४. ६ अनुष्टुप् । ५. ७ पंक्तिः ॥

॥ ९ ॥ त्वामग्ने हविष्मंतो देवं मर्तास ईळते । मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥ १ ॥ अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः । सं यज्ञासश्चरंति यं सं वाजासः श्रवस्यवः ॥२॥ उत स्म यं शिशुं यथा नवं जनिष्टारणी । धर्तारं मानुषीणां विशामग्निं स्वध्वरं ॥३॥ उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणां । पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥ ४॥ अध स्म यस्यार्चयः सम्यक्संयंति धूमिनः । यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥ ५ ॥ तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः। द्वेषोयुतो न दुरिता तुर्याम मर्त्यानां ॥६॥ तं नो अग्ने अभी नरो रयिं सहस्व आ भर । स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु नो वृधे ॥ ७ ॥ १ ॥

---

॥ १० ॥ १-७ गय आत्रेयः ॥ अग्निः ॥ १-३. ५. ६ अनुष्टुप् । ४. ७ पंक्तिः ॥

॥१०॥ अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो। प्र नो राया परीणसा रत्सि वाजाय पंथां ॥१॥ त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना। त्वे असुर्य१मारुहत्क्राणा मित्रो न यज्ञियः ॥२॥ त्वं नो अग्न एषां गयं पुष्टिं च वर्धय। ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः॥३॥ ये अग्ने चंद्र ते गिरः शुंभंत्यश्वराधसः। शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिर्बोधति त्मना ॥४॥ तव त्ये अग्ने अर्चयो भ्राजंतो यंति धृष्णुया । परिज्मानो न विद्युतः स्वानो रथो न वाजयुः ॥५॥ नू नो अग्न ऊतये सबाधसश्च रातये। अस्माकासश्च सूरयो विश्वा आशास्तरीषणि ॥६॥ त्वं नो अग्ने अंगिरः स्तुतः स्तवान आ भर। होतर्विभ्वासहं रयिं स्तोतृभ्यः स्तवसे च न उतैधि पृत्सु नो वृधे ॥७॥२॥

॥९॥ त्वां अग्ने हविष्मंतः देवं मर्तासः ईळते मन्ये त्वा जातऽवे-
दसं सः हव्या वक्षि आनुषक् ॥१॥ अग्निः होता दास्वतः क्षयस्य
वृक्तऽबर्हिषः सं यज्ञासः चरंति यं सं वाजासः श्रवस्यवः ॥२॥ उत
स्म यं शिशुं यथा नवं जनिष्ट अरणी इति धर्तारं मानुषीणां विशां
अग्निं सुऽअध्वरं ॥३॥ उत स्म दुःऽगृभीयसे पुत्रः न ह्वार्याणां पुरु
यः दग्धा असि वना अग्ने पशुः न यवसे ॥४॥ अध स्म यस्य अर्चयः
सम्यक् संऽयंति धूमिनः यत् ईं अह त्रितः दिवि उप ध्माताऽइव
धमति शिशीते ध्मातरि यथा ॥५॥ तव अहं अग्ने ऊतिऽभिः मि-
त्रस्य च प्रशस्तिऽभिः द्वेषःऽयुतः न दुःऽइता तुर्याम मर्त्यानां ॥६॥
तं नः अग्ने अभि नरः रयिं सहस्वः आ भर सः क्षेपयत् सः पोषयत्
भुवत् वाजस्य सातये उत एधि पृत्ऽसु नः वृधे ॥७॥१॥

---

॥१०॥ अग्ने ओजिष्ठं आ भर द्युम्नं अस्मभ्यं अध्रिऽगो इति प्र नः राया
परीणसा रत्सि वाजाय पंथां ॥१॥ त्वं नः अग्ने अद्भुत क्रत्वा दक्षस्य
मंहना त्वे इति असुर्यं आ अरुहत् क्राणा मित्रः न यज्ञियः ॥२॥ त्वं नः
अग्ने एषां गयं पुष्टिं च वर्धय ये स्तोमेभिः प्र सूरयः नरः मघानि
आनशुः ॥३॥ ये अग्ने चंद्र ते गिरः शुंभंति अश्वऽराधसः शुष्मेभिः
शुष्मिणः नरः दिवः चित् येषां बृहत् सुऽकीर्तिः बोधति त्मना
॥४॥ तव त्ये अग्ने अर्चयः भ्राजंतः यंति धृष्णुऽया परिऽज्मानः न
विऽद्युतः स्वानः रथः न वाजऽयुः ॥५॥ नु नः अग्ने ऊतये सऽबा-
धसः च रातये अस्माकासः च सूरयः विश्वाः आशाः तरीषणि ॥६॥
त्वं नः अग्ने अंगिरः स्तुतः स्तवानः आ भर होतः विभ्वऽसहं रयिं
स्तोतृऽभ्यः स्तवसे च नः उत एधि पृत्ऽसु नः वृधे ॥७॥२॥

॥ ११ ॥ १–६ सुतंभर आत्रेयः ॥ अग्निः ॥ जगती ॥

॥११॥ जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे। घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥१॥ यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे। इंद्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥२॥ असंमृष्टो जायसे मात्रोः शुचिर्मंद्रः कविरुदतिष्ठो विवस्वतः। घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः ॥३॥ अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरंते गृहेगृहे। अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुं ॥४॥ तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे। त्वां गिरः सिंधुमिवावनीर्महीरा पृणंति शवसा वर्धयंति च ॥ ५ ॥ त्वामग्ने अंगिरसो गुहा हितमन्वविंदञ्छिश्रियाणं वनेवने। स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमंगिरः॥६॥३॥

---

॥ १२ ॥ १–६ सुतंभर आत्रेयः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१२॥ प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म। घृतं न यज्ञ आस्ये३ सुपूतं गिरं भरे वृषभाय प्रतीची ॥१॥ ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृंधि पूर्वीः। नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥२॥ कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः। वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः॥३॥ के ते अग्ने रिपवे बंधनासः के पायवः सनिषंत द्युमंतः। के धासिमग्ने अनृतस्य पांति क आसतो वचसः संति गोपाः ॥४॥ सखायस्ते विषुणा अग्न एते शिवासः संतो अशिवा अभूवन्। अधूर्षत स्वयमेते वचोभिरृजूयते वृजिनानि ब्रुवंतः ॥ ५ ॥ यस्ते अग्ने नमसा

॥११॥ जनस्य गोपाः अजनिष्ट जागृविः अग्निः सुऽदक्षः सुवि-
ताय नव्यसे घृतऽप्रतीकः बृहता दिविऽस्पृशा द्युऽमत् वि भाति
भरतेभ्यः शुचिः ॥१॥ यज्ञस्य केतुं प्रथमं पुरःऽहितं अग्निं नरः त्रि-
ऽसधस्थे सं ईधिरे इंद्रेण देवैः सऽरथं सः बर्हिषि सीदत् नि होता
यजथाय सुऽक्रतुः ॥२॥ असंऽमृष्टः जायसे मात्रोः शुचिः मंद्रः कविः
उत् अतिष्ठः विवस्वतः घृतेन त्वा अवर्धयन् अग्ने आऽहुत धूमः ते
केतुः अभवत् दिवि श्रितः ॥३॥ अग्निः नः यज्ञं उप वेतु साधुऽया
अग्निं नरः वि भरंते गृहेऽगृहे अग्निः दूतः अभवत् हव्यऽवाहनः
अग्निं वृणानाः वृणते कविऽक्रतुं ॥४॥ तुभ्य इदं अग्ने मधुमत्ऽतमं
वचः तुभ्यं मनीषा इयं अस्तु शं हृदे त्वां गिरः सिंधुंऽइव अवनीः म-
हीः आ पृणंति शवसा वर्धयंति च ॥५॥ त्वां अग्ने अंगिरसः गुहा
हितं अनु अविंदन् शिश्रियाणं वनेऽवने सः जायसे मथ्यमानः
सहः महत् त्वां आहुः सहसः पुत्रं अंगिरः ॥६॥३॥

---

॥१२॥ प्र अग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म
घृतं न यज्ञे आस्ये सुऽपूतं गिरं भरे वृषभाय प्रतीची ॥१॥ ऋतं चि-
कित्वः ऋतं इत् चिकिद्धि ऋतस्य धाराः अनु तृंधि पूर्वीः न अहं
यातुं सहसा न द्वयेन ऋतं सपामि अरुषस्य वृष्णः ॥२॥ कया नः
अग्ने ऋतयन् ऋतेन भुवः नवेदाः उचथस्य नव्यः वेद मे देवः ऋ-
तुऽपाः ऋतूनां न अहं पतिं सनितुः अस्य रायः ॥३॥ के ते अग्ने
रिपवे बंधनासः के पायवः सनिषंत द्युऽमंतः के धासिं अग्ने अनृ-
तस्य पांति के असतः वचसः संति गोपाः ॥४॥ सखायः ते विषु-
णाः अग्ने एते शिवासः संतः अशिवाः अभूवन् अधूर्षत स्वयं एते
वचःऽभिः ऋजुऽयते वृजिनानि ब्रुवंतः ॥५॥ यः ते अग्ने नमसा

यज्ञमीट्टं ऋतं स पात्यरुषस्य वृष्णः। तस्य क्षयः पृथुरा साधुरेतु प्रसर्स्राणस्य नहुषस्य शेषः ॥ ६ ॥ ४ ॥

॥ १३ ॥ १-६ सुतंभर आत्रेयः ॥ अग्निः ॥ गायत्री ॥

॥१३॥ अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि। अग्ने अर्चन्त ऊतये ॥१॥ अग्नेः स्तोमं मनामहे सिध्रमद्य दिविस्पृशः। देवस्य द्रविणस्यवः ॥२॥ अग्निर्जुषत नो गिरो होता यो मानुषेष्वा। स यक्षद्दैव्यं जनम् ॥३॥ त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वि तन्वते ॥ ४ ॥ त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम्। स नो रास्व सुवीर्यम् ॥ ५ ॥ अग्ने नेमिरराँ इव देवांस्त्वं परिभूरसि। आ राधश्चित्रमृञ्जसे ॥ ६ ॥ ५ ॥

॥ १४ ॥ १-६ सुतंभर आत्रेयः ॥ अग्निः ॥ गायत्री ॥

॥१४॥ अग्निं स्तोमेन बोधय समिधानो अमर्त्यम्। हव्या देवेषु नो दधत् ॥१॥ तमध्वरेष्वीळते देवं मर्ता अमर्त्यम्। यजिष्ठं मानुषे जने ॥ २ ॥ तं हि शश्वन्त ईळते स्रुचा देवं घृतश्चुता। अग्निं हव्याय वोळ्हवे ॥३॥ अग्निर्जातो अरोचत घ्नन्दस्यूञ्ज्योतिषा तमः। अविन्दद्गा अपः स्वः ॥ ४ ॥ अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत। वेतु मे शृणवद्धवम् ॥५॥ अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिम्। स्वाधीभिर्वचस्युभिः ॥ ६ ॥ ६ ॥ १ ॥

॥ १५ ॥ १-५ धरुण आङ्गिरसः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१५॥ प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय। घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥१॥ ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन्। दिवो धर्मन्धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः ॥२॥ अंहोयुवस्तन्वस्तन्वते वि वयो महद्दुष्टरं पूर्व्याय। स संवतो नवजातस्तुतु-

यज्ञं इष्टं ऋतं सः पाति अरुषस्य वृष्णः तस्य क्षयः पृथुः आ साधुः एतु प्रऽसर्स्राणस्य नहुषस्य शेषः ॥ ६ ॥ ४ ॥

---

॥१३॥ अर्चंतः त्वा हवामहे अर्चंतः सं इधीमहि अग्ने अर्चंतः ऊतये ॥१॥ अग्नेः स्तोमं मनामहे सिध्रं अद्य दिविऽस्पृशः देवस्य द्रविणस्यवः ॥२॥ अग्निः जुषत नः गिरः होता यः मानुषेषु आ सः यक्षत् दैव्यं जनं ॥३॥ त्वं अग्ने सऽप्रथाः असि जुष्टः होता वरेण्यः त्वया यज्ञं वि तन्वते ॥४॥ त्वां अग्ने वाजऽसातमं विप्राः वर्धंति सुऽस्तुतं सः नः रास्व सुऽवीर्यं ॥५॥ अग्ने नेमिः अरान्ऽइव देवान् त्वं परिऽभूः असि आ राधः चित्रं ऋंजसे ॥ ६ ॥ ५ ॥

---

॥१४॥ अग्निं स्तोमेन बोधय संऽइधानः अमर्त्यः हव्या देवेषु नः दधत् ॥१॥ तं अध्वरेषु ईळते देवं मर्ताः अमर्त्यं यजिष्ठं मानुषे जने ॥२॥ तं हि शश्वंतः ईळते स्रुचा देवं घृतऽश्चुता अग्निं हव्याय वोळ्हवे ॥३॥ अग्निः जातः अरोचत घ्नन् दस्यून् ज्योतिषा तमः अविंदत् गाः अपः स्वः॰ ॥४॥ अग्निं ईळेन्यं कविं घृतऽपृष्ठं सपर्यत वेतु मे शृणवत् हवं ॥५॥ अग्निं घृतेन ववृधुः स्तोमेभिः विश्वऽचर्षणिं सुऽआधीभिः वचस्युऽभिः ॥ ६ ॥ ६ ॥ १ ॥

---

॥१५॥ प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय घृतऽप्रसत्तः असुरः सुऽशेवः रायः धर्ता धरुणः वस्वः अग्निः ॥१॥ ऋतेन ऋतं धरुणं धारयंत यज्ञस्य शाके परमे विऽओमन् दिवः धर्मन् धरुणे सेदुषः नॄन् जातैः अजातान् अभि ये ननक्षुः ॥२॥ अंहःऽयुवः तन्वः तन्वते वि वयः महत् दुस्तरं पूर्व्याय सः संऽवतः नवऽजातः तुतु-

र्यात्सिंहं न क्रुद्धमभितः परि ष्ठुः ॥३॥ मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च । वयोवयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥४॥ वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः । पदं न तायुर्गुहा दधानो महो राये चितयन्नत्रिमस्पः ॥ ५ ॥ ७ ॥

---

॥ १६ ॥ १–५ पूरुरात्रेयः ॥ अग्निः ॥ १–४ अनुष्टुप् । ५ पंक्तिः ॥

॥१६॥ बृहद्वयो हि भानवेऽर्चा देवायाग्नये । यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥१॥ स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः । वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥२॥ अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः । विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः ॥३॥ अधा ह्यग्न एषां सुवीर्यस्य मंहना । तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥४॥ नू न एहि वार्यमग्ने गृणान आ भर । ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥५॥८॥

---

॥ १७ ॥ १–५ पूरुरात्रेयः ॥ अग्निः ॥ १–४ अनुष्टुप् । ५ पंक्तिः ॥

॥ १७ ॥ आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये । अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥ १ ॥ अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे । तं नाकं चित्रशोचिषं मन्द्रं परो मनीषया ॥२॥ अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा । दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥ ३ ॥ अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ । अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥४॥ नू न इद्धि वार्यमासा सचन्त सूरयः । ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥ ५ ॥ ९ ॥

---

॥ १८ ॥ १–५ द्वितो मृक्तवाहा आत्रेयः ॥ अग्निः ॥ १–४ अनुष्टुप् । ५ पंक्तिः ॥

॥१८॥ प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः । विश्वा-

योत् सिंहं न क्रुद्धं अभितः परि स्थुः ॥३॥ माताऽइव यत् भरसे प्रथानः जनंऽजनं धायसे चक्षसे च वयःऽवयः जरसे यत् दधानः परि त्मना विषुऽरूपः जिगासि ॥४॥ वाजः नु ते शवसः पातु अंतं उरुं दोघं धरुणं देव रायः पदं न तायुः गुहा दधानः महः राये चितयन् अत्रिं अस्पः० ॥ ५ ॥ ७ ॥

॥१६॥ बृहत् वयः हि भानवे अर्च देवाय अग्नये यं मित्रं न प्रशस्तिऽभिः मर्तासः दधिरे पुरः ॥१॥ सः हि द्युऽभिः जनानां होता दक्षस्य बाह्वोः वि हव्यं अग्निः आनुषक् भगः न वारं ऋण्वति ॥२॥ अस्य स्तोमे मघोनः सख्ये वृद्धऽशोचिषः विश्वा यस्मिन् तुविऽस्वनि सं अर्ये शुष्मं आऽदधुः ॥३॥ अध हि अग्ने एषां सुऽवीर्यस्य मंहना तं इत् यह्वं न रोदसी परि श्रवः बभूवतुः ॥४॥ नु नः आ इहि वार्यं अग्ने गृणानः आ भर ये वयं ये च सूरयः स्वस्ति धामहे सचा उत एधि पृत्ऽसु नः वृधे ॥ ५ ॥ ८ ॥

॥१७॥ आ यज्ञैः देव मर्त्यः इत्था तव्यांसं ऊतये अग्निं कृते सुऽअध्वरे पूरुः ईळीत अवसे ॥१॥ अस्य हि स्वयशःऽतरः आसा विऽधर्मन् मन्यसे तं नाकं चित्रऽशोचिषं मंद्रं परः मनीषया ॥२॥ अस्य वै असौ ऊं अर्चिषा यः अयुक्त तुजा गिरा दिवः न यस्य रेतसा बृहत् शोचंति अर्चयः ॥३॥ अस्य क्रत्वा विऽचेतसः दस्मस्य वसु रथे आ अध विश्वासु हव्यः अग्निः विक्षु प्र शस्यते ॥४॥ नु नः इत् हि वार्यं आसा सचंत सूरयः ऊर्जः नपात् अभिष्टये पाहि शग्धि स्वस्तये उत एधि पृत्ऽसु नः वृधे ॥ ५ ॥ ९ ॥

॥१८॥ प्रातः अग्निः पुरुऽप्रियः विशः स्तवेत अतिथिः विश्वा-

नि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥१॥ द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना । इंदुं स धत्त आनुषक्स्तोता चित्ते अमर्त्य ॥२॥ तं वो दीर्घायुशोचिषं गिरा हुवे मघोनां । अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥३॥ चित्रा वा येषु दीधितिरासन्नुक्था पांति ये । स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥४॥ ये मे पंचाशतं ददुरश्वानां सधस्तुति । द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणां ॥५॥१०॥

---

॥१९॥ १-५ वव्रिरात्रेयः ॥ अग्निः ॥ १.२ गायत्री । ३.४ अनुष्टुप् । ५ विराड्रूपा ॥

॥१९॥ अभ्यवस्थाः प्र जायंते प्र वव्रेर्वव्रिश्चिकेत । उपस्थे मातुर्वि चष्टे ॥१॥ जुहुरे वि चितयंतोऽनिमिषं नृम्णं पांति । आ दृळ्हां पुरं विविशुः ॥२॥ आ श्वैत्रेयस्य जंतवो द्युमद्वर्धंत कृष्टयः । निष्कग्रीवो बृहदुक्थ एना मध्वा न वाजयुः ॥३॥ प्रियं दुग्धं न काम्यमजामि जाम्योः सचा । घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥४॥ क्रीळन्नो रश्म आ भुवः सं भस्मना वायुना वेविदानः । ता अस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्थाः ॥५॥११॥

---

॥२०॥ १-४ प्रयस्वंत आत्रेयाः ॥ अग्निः ॥ १-३ अनुष्टुप् । ४ पंक्तिः ॥

॥२०॥ यमग्ने वाजसातम त्वं चिन्मन्यसे रयिं । तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजं ॥१॥ ये अग्ने नेरयंति ते वृद्धा उग्रस्य शवसः । अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥२॥ होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनं । यज्ञेषु पूर्व्यं गिरा प्रयस्वंतो हवामहे ॥३॥ इत्था यथा त ऊतये सहसावन्दिवेदिवे । राय ऋताय सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥४॥१२॥

नि यः अमर्त्यः हव्या मर्तेषु रण्यति ॥ १ ॥ द्विताय मृक्तऽवाहसे स्वस्य दक्षस्य मंहना इंदुं सः धत्ते आनुषक् स्तोता चित् ते अमर्त्य ॥२॥ तं वः दीर्घायुऽशोचिषं गिरा हुवे मघोनां अरिष्टः येषां रथः विअश्वऽदावन् ईयते ॥३॥ चित्रा वा येषु दीधितिः आसन् उक्था पांति ये स्तीर्णं बर्हिः स्वःऽनरे श्रवांसि दधिरे परि ॥४॥ ये मे पंचाशतं ददुः अश्वानां सधऽस्तुति द्युऽमत् अग्ने महि श्रवः बृहत् कृधि मघोनां नृऽवत् अमृत नृणां ॥ ५ ॥ १० ॥

---

॥१९॥ अभि अवऽस्थाः प्र जायंते प्र वव्रेः वव्रिः चिकेत उपऽस्थे मातुः वि चष्टे ॥१॥ जुहुरे वि चितयंतः अनिऽमिषं नृम्णं पांति आ दृळ्हां पुरं विविशुः ॥२॥ आ श्वैत्रेयस्य जंतवः द्युऽमत् वर्धंत कृष्टयः निष्कऽग्रीवः बृहत्ऽउक्थः एना मध्वा न वाजऽयुः ॥३॥ प्रियं दुग्धं न काम्यं अजामि जाम्योः सचा घर्मः न वाजऽजठरः अदब्धः शश्वतः दभः ॥४॥ क्रीळन् नः रश्मे आ भुवः सं भस्मना वायुना वेविदानः ताः अस्य सन् धृषजः न तिग्माः सुऽसंशिताः वक्ष्यः वक्षणेऽस्थाः ॥ ५ ॥ ११ ॥

---

॥२०॥ यं अग्ने वाजऽसातम त्वं चित् मन्यसे रयिं तं नः गीःऽभिः श्रवाय्यं देवऽत्रा पनय युजं ॥१॥ ये अग्ने न ईरयंति ते वृद्धाः उग्रस्य शवसः अप द्वेषः अप ह्वरः अन्यऽव्रतस्य सश्चिरे ॥२॥ होतारं त्वा वृणीमहे अग्ने दक्षस्य साधनं यज्ञेषु पूर्व्यं गिरा प्रयस्वंतः हवामहे ॥३॥ इत्था यथा ते ऊतये सहसाऽवन् दिवेऽदिवे राये ऋताय सुऽक्रतो॰ गोभिः स्याम सधऽमादः वीरैः स्याम सधऽमादः ॥ ४ ॥ १२ ॥

॥ २१ ॥ १-४ सस आत्रेयः ॥ अग्निः ॥ १-३ अनुष्टुप् । ४ पंक्तिः ॥

॥२१॥ मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि । अग्ने मनु-
ष्वदंगिरो देवान्देवयते यज ॥१॥ त्वं हि मानुषे जनेऽग्ने सुप्रीत
इध्यसे । स्रुचस्त्वा यंत्यानुषक्सुजात सर्पिरासुते ॥२॥ त्वां विश्वे
सजोषसो देवासो दूतमक्रत । सपर्यंतस्त्वा कवे यज्ञेषु देवमी-
ळते ॥३॥ देवं वो देवयज्ययाग्निमीळीत मर्त्यः । समिद्धः शुक्र
दीदिहृतस्य योनिमासदः ससस्य योनिमासदः ॥ ४ ॥ १३ ॥

---

॥ २२ ॥ १-४ विश्वसामात्रेयः ॥ अग्निः ॥ १-३ अनुष्टुप् । ४ पंक्तिः ॥

॥२२॥ प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे । यो अध्वरे-
ष्वीड्यो होता मंद्रतमो विशि ॥१॥ न्य१ग्निं जातवेदसं दधाता
देवमृत्विजं । प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः ॥२॥ चिकित्वि-
न्मनसं त्वा देवं मर्तास ऊतये । वरेण्यस्य तेऽवस इयानासो अम-
न्महि ॥३॥ अग्ने चिकिद्ध्य१स्य न इदं वचः सहस्य । तं त्वा सुशिप्र
दंपते स्तोमैर्वर्धंत्यत्रयो गीर्भिः शुंभंत्यत्रयः ॥ ४ ॥ १४ ॥

---

॥ २३ ॥ १-४ द्युम्नो विश्वचर्षणिः ॥ अग्निः ॥ १-३ अनुष्टुप् । ४ पंक्तिः ॥

॥ २३ ॥ अग्ने सहंतमा भर द्युम्नस्य प्रासहा रयिं । विश्वा य-
श्चर्षणीरभ्या३सा वाजेषु सासहत् ॥१॥ तमग्ने पृतनाषहं रयिं
सहस्व आ भर । त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः
॥२॥ विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः । होतारं स-
द्मसु प्रियं व्यंति वार्या पुरु ॥३॥ स हि ष्मा विश्वचर्षणिरभि-
माति सहो दधे । अग्न एषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युम-
त्पावक दीदिहि ॥ ४ ॥ १५ ॥

---

॥ २४ ॥ १.२.३.४ बंधुः सुबंधुः श्रुतबंधुर्विप्रबंधुश्च गौपायना लौपायना वा ॥
अग्निः ॥ द्विपदा ॥

॥२४॥ अग्ने त्वं नो अंतम उत त्राता शिवो भवा वरूथ्यः । वसु-

॥२१॥ मनुष्वत् त्वा नि धीमहि मनुष्वत् सं इधीमहि अग्ने मनुष्वत् अंगिरः देवान् देवऽयते यज ॥१॥ त्वं हि मानुषे जने अग्ने सुऽप्रीतः इध्यसे स्रुचः त्वा यंति आनुषक् सुऽजात सर्पिःऽआसुते ॥२॥ त्वां विश्वे सऽजोषसः देवासः दूतं अक्रत सपर्यंतः त्वा कवे यज्ञेषु देवं ईळते ॥३॥ देवं वः देवऽयज्यया अग्निं ईळीत मर्त्यः संऽइद्धः शुक्र दीदिहि ऋतस्य योनिं आ असदः ससस्य योनिं आ असदः ॥ ४ ॥ १३ ॥

---

॥२२॥ प्र विश्वऽसामन् अत्रिऽवत् अर्च पावकऽशोचिषे यः अध्वरेषु ईड्यः होता मंद्रऽतमः विशि ॥१॥ नि अग्निं जातऽवेदसं दधात देवं ऋत्विजं प्र यज्ञः एतु आनुषक् अद्य देवव्यचःऽतमः ॥२॥ चिकित्वत्ऽमनसं त्वा देवं मर्तासः ऊतये वरेण्यस्य ते अवसः इयानासः अमन्महि ॥३॥ अग्ने चिकिद्धि अस्य नः इदं वचः सहस्य तं त्वा सुऽशिप्र दंऽपते स्तोमैः वर्धंति अत्रयः गीःऽभिः शुंभंति अत्रयः ॥ ४ ॥ १४ ॥

---

॥२३॥ अग्ने सहंतं आ भर द्युम्नस्य प्रऽसहा रयिं विश्वाः यः चर्षणीः अभि आसा वाजेषु ससहत् ॥१॥ तं अग्ने पृतनाऽसहं रयिं सहस्वः आ भर त्वं हि सत्यः अद्भुतः दाता वाजस्य गोऽमतः ॥२॥ विश्वे हि त्वा सऽजोषसः जनासः वृक्तऽबर्हिषः होतारं सद्मऽसु प्रियं व्यंति वार्या पुरु ॥३॥ सः हि स्म विश्वऽचर्षणिः अभिऽमाति सहः दधे अग्ने एषु क्षयेषु आ रेवत् नः शुक्र दीदिहि द्युऽमत् पावक दीदिहि ॥ ४ ॥ १५ ॥

---

॥२४॥ अग्ने त्वं नः अंतमः उत त्राता शिवः भव वरूथ्यः वसुः

रग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥१॥२॥ स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात्। तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३॥४॥१६॥

---

॥ २५ ॥ १–९ वसूयव आत्रेयाः ॥ अग्निः ॥ अनुष्टुप् ॥

॥२५॥ अच्छा वो अग्निमवसे देवं गासि स नो वसुः। रासत्पुत्र ऋषूणामृतावा पर्षति द्विषः ॥१॥ स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे। होतारं मंद्रजिह्वमित्सुदीतिभिर्विभावसुं ॥२॥ स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या। अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥३॥ अग्निर्देवेषु राजत्यग्निर्मर्तेष्वाविशन्। अग्निर्नो हव्यवाहनोऽग्निं धीभिः सपर्यत ॥४॥ अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमं। अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥५॥१७॥ अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः। अग्निरत्यं रघुष्यदं जेतारमपराजितं ॥६॥ यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो। महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥७॥ तव द्युमंतो अर्चयो ग्रावेवोच्यते बृहत्। उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥८॥ एवाँ अग्निं वसूयवः सहसानं ववंदिम। स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥९॥१८॥

---

॥ २६ ॥ १–९ वसूयव आत्रेयाः ॥ अग्निः । ९ विश्वे देवाः ॥ गायत्री ॥

॥२६॥ अग्ने पावक रोचिषा मंद्रया देव जिह्वया। आ देवान्वक्षि यक्षि च ॥१॥ तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशं देवाँ आ वीतये वह ॥२॥ वीतिहोत्रं त्वा कवे द्युमंतं समिधीमहि। अग्ने बृहंतमध्वरे ॥३॥ अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये। होतारं त्वा वृणीमहे ॥४॥ यजमानाय सुन्वत आग्ने

अग्निः वसुऽश्रवाः अच्छ नक्षि द्युमतऽतमं रयिं दाः ॥१॥२॥ सः नः बोधि श्रुधि हवं उरुष्य नः अघऽयतः समस्मात् तं त्वा शोचिष्ठ दीदिऽवः सुम्नाय नूनं ईमहे सखिऽभ्यः ॥ ३ ॥ ४ ॥ १६ ॥

---

॥२५॥ अच्छ वः अग्निं अवसे देवं गासि सः नः वसुः रासत् पुत्रः ऋषूणां ऋतऽवा पर्षति द्विषः ॥१॥ सः हि सत्यः यं पूर्वे चित् देवासः चित् यं ईधिरे होतारं मंद्रऽजिह्वं इत् सुदीतिऽभिः विभाऽवसुं ॥२॥ सः नः धीती वरिष्ठया श्रेष्ठया च सुऽमत्या अग्ने रायः दिदीहि नः सुवृक्तिऽभिः वरेण्य ॥३॥ अग्निः देवेषु राजति अग्निः मर्तेषु आऽविशन् अग्निः नः हव्यऽवाहनः अग्निं धीभिः सपर्यत ॥४॥ अग्निः तुविश्रवःऽतमं तुविऽब्रह्माणं उतऽतमं अतूर्तं श्रवयत्ऽपतिं पुत्रं ददाति दाशुषे ॥५॥१७॥ अग्निः ददाति सत्ऽपतिं ससाह यः युधा नृऽभिः अग्निः अत्यं रघुऽस्यदं जेतारं अपराऽजितं ॥६॥ यत् वाहिष्ठं तत् अग्नये बृहत् अर्च विभाऽवसो॰ महिषीऽइव त्वत् रयिः त्वत् वाजाः उत् ईरते ॥७॥ तव द्युऽमंतः अर्चयः ग्रावाऽइव उच्यते बृहत् उतो॰ ते तन्यतुः यथा स्वानः अर्त त्मना दिवः ॥८॥ एव अग्निं वसुऽयवः सहसानं ववंदिम सः नः विश्वाः अति द्विषः पर्षत् नावाऽइव सुऽक्रतुः ॥ ९ ॥ १८ ॥

---

॥२६॥ अग्ने पावक रोचिषा मंद्रया देव जिह्वया आ देवान् वक्षि यक्षि च ॥१॥ तं त्वा घृतस्नो॰ ईमहे चित्रऽभानो॰ स्वःऽदृशं देवान् आ वीतये वह ॥२॥ वीतिऽहोत्रं त्वा कवे द्युऽमंतं सं इधीमहि अग्ने बृहंतं अध्वरे ॥३॥ अग्ने विश्वेभिः आ गहि देवेभिः हव्यऽदातये होतारं त्वा वृणीमहे ॥४॥ यजमानाय सुन्वते आ अग्ने

सुवीर्यं वह। देवैरा सत्सि बर्हिषि ॥५॥१९॥ समिधानः सहस्रजि-
दग्ने धर्माणि पुष्यसि। देवानां दूत उक्थ्यः ॥६॥ न्य१ग्निं जातवेदसं
होत्रवाहं यविष्ठ्यं। दधाता देवमृत्विजं ॥७॥ प्र यज्ञ एत्वानुषग-
द्या देवव्यचस्तमः। स्तृणीत बर्हिरासदे ॥८॥ एदं मरुतो अश्विना
मित्रः सीदंतु वरुणः। देवासः सर्वया विशा ॥ ९ ॥ २० ॥

---

॥ २७ ॥ १-६ त्र्यरुणस्त्रैवृष्णस्त्रसदस्युश्च पौरुकुत्स्य अश्वमेधश्च भारत ऋषिर्वा ॥
१-५ अग्निः । ६ इंद्राग्नी ॥ १-३ त्रिष्टुप् । ४-६ अनुष्टुप् ॥

॥२७॥ अनस्वंता सत्पतिर्मामहे मे गावा चेतिष्ठो असुरो म-
घोनः। त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत ॥१॥
यो मे शता च विंशतिं च गोनां हरी च युक्ता सुधुरा ददाति। वै-
श्वानर सुष्टुतो वावृधानोऽग्ने यच्छ त्र्यरुणाय शर्म ॥२॥ एवा ते
अग्ने सुमतिं चकानो नविष्ठाय नवमं त्रसदस्युः। यो मे गिरस्तुवि-
जातस्य पूर्वीर्युक्तेनाभि त्र्यरुणो गृणाति ॥३॥ यो म इति प्रवोच-
त्यश्वमेधाय सूरये। दददृचा सनिं यते ददन्मेधामृतायते ॥४॥ यस्य
मा परुषाः शतमुद्धर्षयंत्युक्षणः। अश्वमेधस्य दानाः सोमा इव
त्र्याशिरः ॥५॥ इंद्राग्नी शतदाव्न्यश्वमेधे सुवीर्यं। क्षत्रं धारयतं बृह-
द्दिवि सूर्यमिवाजरं ॥ ६ ॥ २१ ॥

---

॥ २८ ॥ १-६ विश्ववारात्रेयी ॥ अग्निः ॥ १. ३ त्रिष्टुप् । २ जगती । ४ अनुष्टुप् ।
५. ६ गायत्री ॥

॥२८॥ समिद्धो अग्निर्दिवि शोचिरश्रेत्प्रत्यङ्ङुषसमुर्विया वि
भाति। एति प्राची विश्ववारा नमोभिर्देवाँ ईळाना हविषा
घृताची ॥ १ ॥ समिध्यमानो अमृतस्य राजसि हविष्कृण्वंतं
सचसे स्वस्तये। विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने
नि च धत्त इत्पुरः ॥२॥ अग्ने शर्ध महते सौभगाय तव द्युम्ना-

सुऽवीर्यं वह देवैः आ सत्सि बर्हिषि ॥५॥१९॥ संऽइधानः सहस्रऽजित् अग्ने धर्माणि पुष्यसि देवानां दूतः उक्थ्यः ॥६॥ नि अग्निं जातऽवेदसं होत्रऽवाहं यविष्ठ्यं दधात देवं ऋत्विजं ॥७॥ प्र यज्ञः एतु आनुषक् अद्य देवव्यचःऽतमः स्तृणीत बर्हिः आऽसदे ॥८॥ आ इदं मरुतः अश्विना मित्रः सीदंतु वरुणः देवासः सर्वया विशा ॥ ९ ॥ २० ॥

---

॥२७॥ अनस्वंता सत्ऽपतिः ममहे मे गावा चेतिष्ठः असुरः मघोनः त्रैवृष्णः अग्ने दशऽभिः सहस्रैः वैश्वानर त्रिऽअरुणः चिकेत ॥१॥ यः मे शता च विंशतिं च गोनां हरी च युक्ता सुऽधुरा ददाति वैश्वानर सुऽस्तुतः ववृधानः अग्ने यच्छ त्रिऽअरुणाय शर्म ॥२॥ एव ते अग्ने सुऽमतिं चकानः नविष्ठाय नवमं त्रसदस्युः यः मे गिरः तुविऽजातस्य पूर्वीः युक्तेन अभि त्रिऽअरुणः गृणाति ॥३॥ यः मे इति प्रऽवोचति अश्वऽमेधाय सूरये ददत् ऋचा सनिं यते ददत् मेधां ऋतऽयते ॥४॥ यस्य मा परुषाः शतं उत्ऽहर्षयंति उक्षणः अश्वऽमेधस्य दानाः सोमाःऽइव त्रिऽआशिरः ॥५॥ इंद्राग्नी शतदाव्नि अश्वऽमेधे सुऽवीर्यं क्षत्रं धारयतं बृहत् दिवि सूर्यंऽइव अजरं ॥ ६ ॥ २१ ॥

---

॥२८॥ संऽइद्धः अग्निः दिवि शोचिः अश्रेत् प्रत्यङ् उषसं उर्विया वि भाति एति प्राची विश्वऽवारा नमःऽभिः देवान् ईळाना हविषा घृताची ॥१॥ संऽइध्यमानः अमृतस्य राजसि हविः कृण्वंतं सचसे स्वस्तये विश्वं सः धत्ते द्रविणं यं इन्वसि आतिथ्यं अग्ने नि च धत्ते इत् पुरः ॥२॥ अग्ने शर्ध महते सौभगाय तव द्युम्ना-

न्युत्तमानि संतु। सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥ ३ ॥ समिद्धस्य प्रमहसोऽग्ने वंदे तव श्रियं। वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे ॥ ४ ॥ समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर। त्वं हि हव्यवाळसि ॥ ५ ॥ आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे। वृणीध्वं हव्यवाहनं ॥ ६ ॥ २२ ॥

---

॥ २९ ॥ १–१५ गौरिवीतिः शाक्त्यः ॥ १–८. ९[२]–१५ इंद्रः। ९[१] इंद्र उशना वा ॥ त्रिष्टुप् ॥

॥ २९ ॥ त्र्यर्यमा मनुषो देवताता त्री रोचना दिव्या धारयंत। अर्चंति त्वा मरुतः पूतदक्षास्त्वमेषामृषिरिंद्रासि धीरः ॥ १ ॥ अनु यदीं मरुतो मंदसानमार्चन्निंद्रं पपिवांसं सुतस्य। आदत्त वज्रमभि यदहिं हन्नपो यह्वीरसृजत्सर्तवा उ ॥ २ ॥ उत ब्रह्माणो मरुतो मे अस्येंद्रः सोमस्य सुषुतस्य पेयाः। तद्धि हव्यं मनुषे गा अविंददहन्नहिं पपिवाँ इंद्रो अस्य ॥ ३ ॥ आद्रोदसी वितरं वि ष्कभायत्संविव्यानश्चिद्भियसे मृगं कः। जिगर्तिमिंद्रो अपजर्गुराणः प्रति श्वसंतमव दानवं हन् ॥ ४ ॥ अध क्रत्वा मघवन्तुभ्यं देवा अनु विश्वे अददुः सोमपेयं। यत्सूर्यस्य हरितः पतंतीः पुरः सतीरुपरा एतशे कः ॥ ५ ॥ २३ ॥ नव यदस्य नवतिं च भोगान्त्साकं वज्रेण मघवा विवृश्चत्। अर्चंतींद्रं मरुतः सधस्थे त्रैष्टुभेन वचसा बाधत द्यां ॥ ६ ॥ सखा सख्ये अपचत्तूयमग्निरस्य क्रत्वा महिषा त्री शतानि। त्री साकमिंद्रो मनुषः सरांसि सुतं पिबद्वृत्रहत्याय सोमं ॥ ७ ॥ त्री यच्छता महिषाणामघो मास्त्री सरांसि मघवा सोम्यापाः। कारं न विश्वे अह्वंत देवा भरमिंद्राय यदहिं जघान ॥ ८ ॥ उशना यत्सहस्यै३रयातं गृहमिंद्र जूजुवानेभिरश्वैः। वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णं

नि उत्ऽतमानि संतु सं जाःऽपत्यं सुऽयमं आ कृणुष्व शत्रुऽयतां अभि तिष्ठ महांसि ॥३॥ संऽइद्धस्य प्रऽमहसः अग्ने वंदे तव श्रियं वृषभः द्युम्नऽवान् असि सं अध्वरेषु इध्यसे ॥४॥ संऽइद्धः अग्ने आऽहुत देवान् यक्षि सुऽअध्वर त्वं हि हव्यऽवाट् असि ॥५॥ आ जुहोत दुवस्यत अग्निं प्रऽयति अध्वरे वृणीध्वं हव्यऽवाहनं ॥६॥ २२॥

---

॥२९॥ त्री अर्यमा मनुषः देवऽताता त्री रोचना दिव्या धारयंत अर्चंति त्वा मरुतः पूतऽदक्षाः त्वं एषां ऋषिः इंद्र असि धीरः ॥१॥ अनु यत् ईं मरुतः मंदसानं आर्चन् इंद्रं पपिऽवांसं सुतस्य आ अदत्त वज्रं अभि यत् अहिं हन् अपः यह्वीः असृजत् सर्तवै ऊं ॥२॥ उत ब्रह्माणः मरुतः मे अस्य इंद्रः सोमस्य सुऽसुतस्य पेयाः तत् हि हव्यं मनुषे गाः अविंदत् अहन् अहिं पपिऽवान् इंद्रः अस्य ॥३॥ आत् रोदसी इति विऽतरं वि स्कभायत् संऽविव्यानः चित् भियसे मृगं करिति जिगर्ति इंद्रः अपऽजर्गुराणः प्रति श्वसंतं अव दानवं हन्निति ॥४॥ अध क्रत्वा मघऽवन् तुभ्यं देवाः अनु विश्वे अददुः सोमऽपेयं यत् सूर्यस्य हरितः पतंतीः पुरः सतीः उपराः एतशे करिति ॥५॥ २३॥ नव यत् अस्य नवतिं च भोगान् साकं वज्रेण मघऽवा विऽवृश्चत् अर्चंति इंद्रं मरुतः सधऽस्थे त्रैस्तुभेन वचसा बाधत द्यां ॥६॥ सखा सख्ये अपचत् तूयं अग्निः अस्य क्रत्वा महिषा त्री शतानि त्री साकं इंद्रः मनुषः सरांसि सुतं पिबत् वृत्रऽहत्याय सोमं ॥७॥ त्री यत् शता महिषाणां अघः माः त्री सरांसि मघऽवा सोम्या अपाः कारं न विश्वे अह्वंत देवाः भरं इंद्राय यत् अहिं जघान ॥८॥ उशना यत् सहस्यैः अयातं गृहं इंद्र जूजुवानेभिः अश्वैः वन्वानः अत्र सऽरथं ययाथ कुत्सेन देवैः अवनोः ह शुष्णं

॥ ९ ॥ प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद्वरिवो यातवेऽकः । अनासो दस्यूँरमृणो वधेन नि दुर्योण आवृणङ्मृध्रवाचः ॥ १० ॥ २४ ॥ स्तोमासस्त्वा गौरिवीतेरवर्धन्नरंधयो वैदथिनाय पिप्रुं । आ त्वामृजिश्वा सख्याय चक्रे पचन्पक्तीरपिबः सोममस्य ॥ ११ ॥ नवग्वासः सुतसोमास इंद्रं दशग्वासो अभ्यर्चंत्यर्कैः । गव्यं चिदूर्वमपिधानवंतं तं चिन्नरः शशमाना अप व्रन् ॥१२॥ कथो नु ते परि चराणि विद्वान्वीर्या मघवन्या चकर्थ । या चो नु नव्या कृणवः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥१३॥ एता विश्वा चकृवाँ इंद्र भूर्यपरीतो जनुषा वीर्येण । या चिन्नु वज्रिन्कृणवो दधृष्वान्न ते वर्ता तविष्या अस्ति तस्याः ॥१४॥ इंद्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या अकर्म । वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षं ॥ १५ ॥ २५ ॥

---

॥ ३० ॥ १-१५ बभ्रुरात्रेयः ॥ इंद्र ऋणंचयश्च ॥ त्रिष्टुप् ॥

॥३०॥ क्व स्य वीरः को अपश्यदिंद्रं सुखरथमीयमानं हरिभ्यां । यो राया वज्री सुतसोममिच्छन्तदोको गंता पुरुहूत ऊती ॥ १ ॥ अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् । अपृच्छमन्याँ उत ते म आहुरिंद्रं नरो बुबुधाना अशेम ॥२॥ प्र नु वयं सुते या ते कृतानींद्र ब्रवाम यानि नो जुजोषः । वेददविद्वाञ्छृणवच्च विद्वान्वहतेऽयं मघवा सर्वसेनः ॥ ३ ॥ स्थिरं मनश्चकृषे जात इंद्र वेषीदेको युधये भूयसश्चित् । अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणां ॥ ४ ॥ परो यत्त्वं परम आजनिष्ठाः परावति श्रुत्यं नाम बिभ्रत् । अतश्चिदिंद्रादभयंत देवा विश्वा अपो अजयद्दासप-

॥९॥ प्र अन्यत् चक्रं अवृहः सूर्यस्य कुत्साय अन्यत् वरिवः यातवे
अकः॰ अनासः दस्यून् अमृणः वधेन नि दुर्योणे अवृणक् मृध्र-
ऽवाचः ॥१०॥२४॥ स्तोमासः त्वा गौरिऽवीतेः अवर्धन् अरंधयः
वैदथिनाय पिप्रुं आ त्वां ऋजिश्वा सख्याय चक्रे पचन् पक्तीः
अपिबः सोमं अस्य ॥११॥ नवऽग्वासः सुतऽसोमासः इंद्रं दश-
ऽग्वासः अभि अर्चंति अर्कैः गव्यं चित् ऊर्वं अपिधानऽवंतं तं
चित् नरः शशमानाः अप व्रन् ॥१२॥ कथो॰ नु ते परि चराणि वि-
द्वान् वीर्या मघऽवन् या चकर्थ या चो॰ नु नव्या कृणवः शविष्ठ प्र
इत् ऊं॰ ता ते विदथेषु ब्रवाम ॥१३॥ एता विश्वा चकृऽवान् इंद्र
भूरि अपरिऽइतः जनुषा वीर्येण या चित् नु वज्रिन् कृणवः दधृ-
ष्वान् न ते वर्ता तविष्याः अस्ति तस्याः ॥१४॥ इंद्र ब्रह्म क्रियमा-
णा जुषस्व या ते शविष्ठ नव्याः अकर्म वस्त्राऽइव भद्रा सुऽकृता
वसुऽयुः रथं न धीरः सुऽअपाः अतक्षं ॥ १५ ॥ २५ ॥

---

॥३०॥ क्व स्यः वीरः कः अपश्यत् इंद्रं सुखऽरथं ईयमानं हरिऽभ्यां
यः राया वज्री सुतऽसोमं इच्छन् तत् ओकः गंता पुरुऽहूतः ऊती
॥१॥ अव अचचक्षं पदं अस्य सस्वः उग्रं निऽधातुः अनु आयं इ-
च्छन् अपृच्छं अन्यान् उत ते मे आहुः इंद्रं नरः बुबुधानाः अशेम
॥२॥ प्र नु वयं सुते या ते कृतानि इंद्र ब्रवाम यानि नः जुजोषः वे-
दत् अविद्वान् शृणवत् च विद्वान् वहते अयं मघऽवा सर्वऽसेनः
॥३॥ स्थिरं मनः चकृषे जातः इंद्र वेषि इत् एकः युधये भूयसः चित्
अश्मानं चित् शवसा दिद्युतः वि विदः गवां ऊर्वं उस्रियाणां
॥४॥ परः यत् त्वं परमः आऽजनिष्ठाः पराऽवति श्रुत्यं नाम बिभ्रत्
अतः चित् इंद्रात् अभयंत देवाः विश्वाः अपः अजयत् दासऽप-

ग्नीः ॥५॥२६॥ तुभ्येदेते मरुतः सुशेवा अर्चंत्यर्कं सुन्वंत्यंधः ।
अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिंद्रः
॥६॥ वि षू मृधो जनुषा दानमिन्वन्नहन्गवा मघवन्त्संचका-
नः । अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन्
॥७॥ युजं हि मामकृथा आदिदिंद्र शिरो दासस्य नमुचेर्मथा-
यन् । अश्मानं चित्स्वर्यं१ वर्तमानं प्र चक्रियेव रोदसी मरु-
द्भ्यः ॥८॥ स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला
अस्य सेनाः । अंतर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिंद्रः
॥९॥ समत्र गावोऽभितोऽनवंतेहेह वत्सैर्वियुता यदासन् ।
सं ता इंद्रो असृजदस्य शाकैर्यदीं सोमासः सुषुता अमंदन्
॥१०॥२७॥ यदीं सोमा बभ्रुधूता अमंदन्नरोरवीद्वृषभः सादनेषु ।
पुरंदरः पपिवाँ इंद्रो अस्य पुनर्गवामददादुस्रियाणां ॥११॥
भद्रमिदं रुशमा अग्ने अक्रन्गवां चत्वारि ददतः सहस्रा । ऋ-
णंचयस्य प्रयता मघानि प्रत्यग्रभीष्म नृतमस्य नृणां ॥१२॥
सुपेशसं माव सृजंत्यस्तं गवां सहस्रै रुशमासो अग्ने । तीव्रा
इंद्रममंदुः सुतासोऽक्तोर्व्युष्टौ परितक्म्यायाः ॥१३॥ औच्छ-
त्सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानां । अत्यो
न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत्सहस्रा ॥१४॥ चतुःस-
हस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने । घर्मश्चित्तप्तः प्रवृजे
य आसीदयस्मयस्तम्वादाम विप्राः ॥१५॥२८॥

---

॥३१॥ १-१३ अवस्युरात्रेयः ॥ १-८[२]. १०-१३ इंद्रः । ८[३] इंद्रः कुत्सो वा ।
८[४] इंद्र उशना वा । ९ इंद्रः कुत्सश्च ॥ त्रिष्टुप् ॥

॥३१॥ इंद्रो रथाय प्रवतं कृणोति यमध्यस्थान्मघवा

त्नीः ॥५॥२६॥ तुभ्यं इत् एते मरुतः सुऽशेवाः अर्चंति अर्कं सुन्वंति अंधः अहिं ओहानं अपः आऽशयानं प्र मायाभिः मायिनं सक्षत् इंद्रः ॥६॥ वि सु मृधः जनुषा दानं इन्वन् अहन् गवा मघऽवन् संऽचकानः अत्र दासस्य नमुचेः शिरः यत् अवर्तयः मनवे गातुं इच्छन् ॥७॥ युजं हि मां अकृथाः आत् इत् इंद्र शिरः दासस्य नमुचेः मथायन् अश्मानं चित् स्वर्यं वर्तमानं प्र चक्रियाऽइव रोदसी इति मरुत्ऽभ्यः ॥८॥ स्त्रियः हि दासः आयुधानि चक्रे किं मा करन् अबलाः अस्य सेनाः अंतः हि अख्यत् उभे इति अस्य धेने इति अथ उप प्र ऐत् युधये दस्युं इंद्रः ॥९॥ सं अत्र गावः अभितः अनवंत इहऽइह वत्सैः विऽयुताः यत् आसन् सं ताः इंद्रः असृजत् अस्य शाकैः यत् ईं सोमासः सुऽसुताः अमंदन् ॥१०॥२७॥ यत् ईं सोमाः बभ्रुऽधूताः अमंदन् अरोरवीत् वृषभः सदनेषु पुरंऽदरः पपिऽवान् इंद्रः अस्य पुनः गवां अददात् उस्रियाणां ॥११॥ भद्रं इदं रुशमाः अग्ने अक्रन् गवां चत्वारि ददतः सहस्रा ऋणंऽचयस्य प्रऽयता मघानि प्रति अग्रभीष्म नृऽतमस्य नृणां ॥१२॥ सुऽपेशसं मा अव सृजंति अस्तं गवां सहस्रैः रुशमासः अग्ने तीव्राः इंद्रं अममंदुः सुतासः अक्तोः विऽउष्टौ परिऽतक्म्यायाः ॥१३॥ औच्छत् सा रात्री परिऽतक्म्या या ऋणंऽचये राजनि रुशमानां अत्यः न वाजी रघुः अज्यमानः बभ्रुः चत्वारि असनत् सहस्रा ॥१४॥ चतुःऽसहस्रं गव्यस्य पश्वः प्रति अग्रभीष्म रुशमेषु अग्ने घर्मः चित् तप्तः प्रऽवृजे यः आसीत् अयस्मयः तं ऊं इति आदाम विप्राः ॥१५॥२८॥

---

॥३१॥ इंद्रः रथाय प्रऽवतं कृणोति यं अधिऽअस्थात् मघऽवा

वाजयंतं । यूथेव पश्वो व्युनोति गोपा अरिष्टो याति प्र-
थमः सिषासन् ॥१॥ आ प्र द्रव हरिवो मा वि वेनः पिशं-
गराते अभि नः सचस्व । नहि त्वदिंद्र वस्यो अन्यदस्त्यमेनां-
श्चिज्जनिवतश्चकर्थ ॥२॥ उद्यत्सहः सहस आजनिष्ट देदिष्ट
इंद्र इंद्रियाणि विश्वा । प्राचोदयत्सुदुघा वव्रे अंतर्वि ज्यो-
तिषा संववृत्वत्तमोऽवः ॥३॥ अनवस्ते रथमश्वाय तक्षन्त्वष्टा
वज्रं पुरुहूत द्युमंतं । ब्रह्माण इंद्रं महयंतो अर्कैरवर्धयन्नहये
हंतवा उ ॥४॥ वृष्णे यत्ते वृषणो अर्कमर्चानिंद्र ग्रावाणो
अदितिः सजोषाः । अनश्वासो ये पवयोऽरथा इंद्रेषिता
अभ्यवर्तंत दस्यून् ॥५॥२९॥ प्र ते पूर्वाणि करणानि वोचं
प्र नूतना मघवन्या चकर्थ । शक्तीवो यद्विभरा रोदसी उभे
जयन्नपो मनवे दानुचित्राः ॥६॥ तदिन्नु ते करणं दस्म वि-
प्राहिं यद्घ्नन्नोजो अत्रामिमीथाः । शुष्णस्य चित्परि माया
अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥७॥ त्वमपो यदवे तु-
र्वशायारमयः सुदुघाः पार इंद्र । उग्रमयातमवहो ह कुत्सं सं
ह यद्वामुशनारंत देवाः ॥८॥ इंद्राकुत्सा वहमाना रथेना
वामत्या अपि कर्णे वहंतु । निः षीमद्भ्यो धमथो निः षध-
स्थान्मघोनो हृदो वरथस्तमांसि ॥९॥ वातस्य युक्तान्सुयुज-
श्चिदश्वान्कविश्चिदेषो अजगन्नवस्युः । विश्वे ते अत्र मरुतः
सखाय इंद्र ब्रह्माणि तविषीमवर्धन् ॥१०॥३०॥ सूरश्चिद्रथं
परितक्म्यायां पूर्वं करदुपरं जूजुवांसं । भरच्चक्रमेतशः सं रि-
णाति पुरो दधत्सनिष्यति क्रतुं नः ॥११॥ आयं जना अभि-
चक्षे जगामेंद्रः सखायं सुतसोममिच्छन् । वदन्ग्रावाव वेदिं
भ्रियाते यस्य जीरमध्वर्यवश्चरंति ॥१२॥ ये चाकनंत चा-

वाजऽयंतं यूथाऽइव पश्वः वि उनोति गोपाः अरिष्टः याति प्र-
थमः सिसासन् ॥१॥ आ प्र द्रव हरिऽवः मा वि वेनः पिशंगऽराते
अभि नः सचस्व नहि त्वत् इंद्र वस्यः अन्यत् अस्ति अमेनान् चित्
जनिऽवतः चकर्थ ॥२॥ उत् यत् सहः सहसः आ अजनिष्ट देदिष्टे
इंद्रः इंद्रियाणि विश्वा प्र अचोदयत् सुऽदुघाः वव्रे अंतः वि ज्यो-
तिषा संऽववृत्वत् तमः अवः० ॥३॥ अनवः ते रथं अश्वाय तक्षन्
त्वष्टा वज्रं पुरुऽहूत द्युऽमंतं ब्रह्माणः इंद्रं महयंतः अर्कैः अवर्धयन्
अहये हंतवै ऊं ॥४॥ वृष्णे यत् ते वृषणः अर्कं अर्चान् इंद्र ग्रावा-
णः अदितिः सऽजोषाः अनश्वासः ये पवयः अरथाः इंद्रऽइषिताः
अभि अवर्तंत दस्यून् ॥५॥२९॥ प्र ते पूर्वाणि करणानि वोचं प्र
नूतना मघऽवन् या चकर्थ शक्तिऽवः यत् विऽभराः रोदसी उभे
जयन् अपः मनवे दानुऽचित्राः ॥६॥ तत् इत् नु ते करणं दस्म विप्र
अहिं यत् घ्नन् ओजः अत्र अमिमीथाः शुष्णस्य चित् परि मायाः
अगृभ्णाः प्रऽपित्वं यन् अप दस्यून् असेधः ॥७॥ त्वं अपः यदवे
तुर्वशाय अरमयः सुऽदुघाः पारः इंद्र उग्रं अयातं अवहः ह कुत्सं
सं ह यत् वां उशना अरंत देवाः ॥८॥ इंद्राकुत्सा वहमाना रथेन
आ वां अत्याः अपि कर्णे वहंतु निः सीं अत्ऽभ्यः धमथः निः स-
धऽस्थात् मघोनः हृदः वरथः तमांसि ॥९॥ वातस्य युक्तान् सुऽयुजः
चित् अश्वान् कविः चित् एषः अजगन् अवस्युः विश्वे ते अत्र
मरुतः सखायः इंद्र ब्रह्माणि तविषीं अवर्धन् ॥१०॥३०॥ सूरः चित्
रथं परिऽतक्म्यायां पूर्वं करत् उपरं जूजुऽवांसं भरत् चक्रं एतशः
सं रिणाति पुरः दधत् सनिष्यति क्रतुं नः ॥११॥ आ अयं जनाः अ-
भिऽचक्षे जगाम इंद्रः सखायं सुतऽसोमं इच्छन् वदन् ग्रावा अव
वेदिं भ्रियाते यस्य जीरं अध्वर्यवः चरंति ॥१२॥ ये चाकनंत चा-

कनैंत नू ते मर्ता अमृत मो ते अंह आरन्। वावंधि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥ १३ ॥ ३१ ॥

---

॥ ३२ ॥ १–१२ गातुरात्रेयः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३२ ॥ अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः। महांतमिंद्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥१॥ त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंह ऊधः पर्वतस्य वज्रिन्। अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इंद्र तविषीमधत्थाः ॥ २॥ त्यस्य चिन्महतो निर्मृगस्य वधर्जघान तविषीभिरिंद्रः। य एक इदप्रतिर्मन्यमान आदस्मादन्यो अजनिष्ट तव्यान् ॥३॥ त्यं चिदेषां स्वधया मदंतं मिहो नपातं सुवृधं तमोगां। वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णं ॥ ४ ॥ त्यं चिदस्य क्रतुभिर्निषत्तममर्मणो विददिदस्य मर्म। यदीं सुक्षत्र प्रभृता मदस्य युयुत्संतं तमसि हर्म्ये धाः ॥५॥ त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानं। तं चिन्मंदानो वृषभः सुतस्योच्चैरिंद्रो अपगूर्या जघान ॥६॥३२॥ उद्यदिंद्रो महते दानवाय वधर्यमिष्ट सहो अप्रतीतं। यदीं वज्रस्य प्रभृतौ ददाभ विश्वस्य जंतोरधमं चकार ॥ ७ ॥ त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्याददुग्रः। अपादमत्रं महता वधेन नि दुर्योण आवृणङ्मृध्रवाचं ॥ ८ ॥ को अस्य शुष्मं तविषीं वरात एको धना भरते अप्रतीतः। इमे चिदस्य ज्रयसो नु देवी इंद्रस्यौजसो भियसा जिहाते ॥ ९ ॥ न्यस्मै देवी स्वधितिर्जिहीत इंद्राय गातुरुशतीव येमे। सं यदोजो युवते विश्वमाभिरनु स्वधाव्ने क्षितयो नमंत ॥१०॥ एकं नु त्वा सत्पतिं पांचजन्यं जातं शृणोमि यशसं जनेषु। तं मे जगृभ्र आ-

कनीत नु ते मर्ताः अमृत मो ते अंहः आ अरन् ववधि यज्यून् उत तेषु धेहि ओजः जनेषु येषु ते स्याम ॥ १३ ॥ ३१ ॥

---

॥३२॥ अर्दर्दः उत्सं असृजः वि खानि त्वं अर्णवान् बद्बधानान् अरम्णाः महांतं इंद्र पर्वतं वि यत् वः॰ सृजः वि धाराः अव दानवं हन्॰॥१॥ त्वं उत्सान् ऋतुऽभिः बद्बधानान् अरंहः ऊधः पर्वतस्य वज्रिन् अहिं चित् उग्र प्रऽयुतं शयानं जघन्वान् इंद्र तविषीं अधत्थाः॥२॥ त्यस्य चित् महतः निः मृगस्य वधः जघान तविषीभिः इंद्रः यः एकः इत् अप्रतिः मन्यमानः आत् अस्मात् अन्यः अजनिष्ट तव्यान्॥३॥ त्यं चित् एषां स्वधया मदंतं मिहः नपातं सुऽवृधं तमःऽगां वृषऽप्रभर्मा दानवस्य भामं वज्रेण वज्री नि जघान शुष्णं॥४॥ त्यं चित् अस्य क्रतुऽभिः निऽसत्तं अमर्मणः विदत् इत् अस्य मर्म यत् ईं सुऽक्षत्र प्रऽभृता मदस्य युयुत्संतं तमसि हर्म्ये धाः॥५॥ त्यं चित् इत्था कत्पयं शयानं असूर्ये तमसि ववृधानं तं चित् मंदानः वृषभः सुतस्य उच्चैः इंद्रः अपऽगूर्य जघान॥६॥३२॥ उत यत् इंद्रः महते दानवाय वधः यमिष्ट सहः अप्रतिऽइतं यत् ईं वज्रस्य प्रऽभृतौ ददाभ विश्वस्य जंतोः अधमं चकार॥७॥ त्यं चित् अर्णं मधुऽपं शयानं असिन्वं वव्रं महि आदत् उग्रः अपादं अत्रं महता वधेन नि दुर्योणे अवृणक् मृध्रऽवाचं॥८॥ कः अस्य शुष्मं तविषीं वराते एकः धना भरते अप्रतिऽइतः इमे चित् अस्य ज्रयसः नु देवी इंद्रस्य ओजसः भियसा जिहाते॥९॥ नि अस्मै देवी स्वधितिः जिहीते इंद्राय गातुः उशतीऽइव येमे सं यत् ओजः युवते विश्वं आभिः अनु स्वधाऽव्ने क्षितयः नमंत॥१०॥ एकं नु त्वा सत्ऽपतिं पांचऽजन्यं जातं शृणोमि यशसं जनेषु तं मे जगृभ्रे आ-

शसो नविष्ठं दोषा वस्तोर्हवमानास इंद्रं ॥११॥ एवा हि त्वामृतुथा यातयंतं मघा विप्रेभ्यो ददतं शृणोमि । किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिंद्र ॥१२॥३३॥१॥२॥

---

॥ ३३ ॥ १–१० संवरणः प्राजापत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३३ ॥ महि महे तवसे दीध्ये नॄनिंद्रायेत्था तवसे अतव्यान् । यो अस्मै सुमतिं वाजसातौ स्तुतो जने समर्यश्चिकेत ॥१॥ स त्वं न इंद्र धियसानो अर्कैर्हरीणां वृषन्योक्त्रमश्रेः । या इत्था मघवन्ननु जोषं वक्षो अभि प्रार्यः सक्षि जनान् ॥२॥ न ते त इंद्राभ्य१स्मदृष्वायुक्तासो अब्रह्मता यदसन् । तिष्ठा रथमधि तं वज्रहस्ता रश्मिं देव यमसे स्वश्वः ॥३॥ पुरू यत्त इंद्र संत्युक्था गवे चकर्थोर्वरासु युध्यन् । ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित् ॥४॥ वयं ते त इंद्र ये च नरः शर्धो जज्ञाना याताश्च रथाः । आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥५॥१॥ पपृक्षेण्यमिंद्र त्वे ह्योजो नृम्णानि च नृतमानो अमर्तः । स न एनीं वसवानो रयिं दाः प्रार्यः स्तुषे तुविमघस्य दानं ॥६॥ एवा न इंद्रोतिभिरव पाहि गृणतः शूर कारून् । उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥७॥ उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः । वहंतु मा दश श्येतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥८॥ उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ । सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत् ॥९॥ उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः । मह्ना रायः संवरणस्य ऋषेर्व्रजं न गावः प्रयता अपि ग्मन् ॥१०॥२॥

ऽशसः नविष्ठं दोषा वस्तोः हवमानासः इंद्रं ॥११॥ एव हि त्वां ऋतुऽथा यातयंतं मघा विप्रेभ्यः ददतं शृणोमि किं ते ब्रह्माणः गृहते सखायः ये त्वाऽया निऽदधुः कामं इंद्र ॥१२॥ ३३ ॥ १ ॥ २ ॥

---

॥३३॥ महि महे तवसे दीध्ये नॄन् इंद्राय इत्था तवसे अतव्यान् यः अस्मै सुऽमतिं वाजऽसातौ स्तुतः जने सऽमर्यः चिकेत ॥१॥ सः त्वं नः इंद्र धियसानः अर्कैः हरीणां वृषन् योक्त्रं अश्रेः याः इत्था मघऽवन् अनु जोषं वक्षः अभि प्र अर्यः सक्षि जनान् ॥२॥ न ते ते इंद्र अभि अस्मत् ऋष्व अयुक्तासः अब्रह्मता यत् असन् तिष्ठ रथं अधि तं वज्रऽहस्त आ रश्मिं देव यमसे सुऽअश्वः ॥३॥ पुरु यत् ते इंद्र संति उक्था गवे चकर्थ उर्वरासु युध्यन् ततक्षे सूर्याय चित् ओकसि स्वे वृषा समत्ऽसु दासस्य नाम चित् ॥४॥ वयं ते ते इंद्र ये च नरः शर्धः जज्ञानाः याताः च रथाः आ अस्मान् जगम्यात् अहिऽशुष्म सत्वा भगः न हव्यः प्रऽभृथेषु चारुः ॥५॥१॥ पपृक्षेण्यं इंद्र त्वे हि ओजः नृम्णानि च नृतमानः अमर्तः सः नः एनीं वसवानः रयिं दाः प्र अर्यः स्तुषे तुविऽमघस्य दानं ॥६॥ एव नः इंद्र ऊतिऽभिः अव पाहि गृणतः शूर कारून् उत त्वचं ददतः वाजऽसातौ पिप्रीहि मध्वः सुऽसुतस्य चारोः ॥७॥ उत त्ये मा पौरुऽकुत्स्यस्य सूरेः त्रसदस्योः हिरणिनः रराणाः वहंतु मा दश श्येतासः अस्य गैरिऽक्षितस्य क्रतुऽभिः नु सश्चे ॥८॥ उत त्ये मा मारुतऽअश्वस्य शोणाः क्रत्वाऽमघासः विदथस्य रातौ सहस्रा मे च्यवतानः ददानः आनूकं अर्यः वपुषे न आर्चत् ॥९॥ उत त्ये मा ध्वन्यस्य जुष्टाः लक्ष्मण्यस्य सुऽरुचः यतानाः मह्ना रायः संऽवरणस्य ऋषेः व्रजं न गावः प्रऽयताः अपि ग्मन् ॥१०॥ २ ॥

॥ ३४ ॥ १-९ संवरणः प्राजापत्यः ॥ इंद्रः ॥ १-८ जगती । ९ त्रिष्टुप् ॥

॥३४॥ अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते। सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन ॥ १ ॥ आ यः सोमेन जठरमपिप्रतामंदत मघवा मध्वो अंधसः। यदीं मृगाय हंतवे महावधः सहस्रभृष्टिमुशना वधं यमत् ॥२॥ यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह। अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥ ३ ॥ यस्यावधीत्पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ईषते। वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व आकरः ॥४॥ न पंचभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन। जिनाति वेदमुया हंति वा धुनिरा देवयुं भजति गोमति व्रजे ॥५॥३॥ वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः। इंद्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः ॥ ६ ॥ समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु। दुर्गे चन ध्रियते विश्व आ पुरु जनो यो अस्य तविषीमचुक्रुधत् ॥७॥ सं यज्जनौ सुधनौ विश्वशर्धसाववेदिंद्रो मघवा गोषु शुभ्रिषु। युजं ह्य१न्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः ॥ ८ ॥ सहस्रसामाग्निवेशिं गृणीषे शत्रिमग्न उपमां केतुमर्यः। तस्मा आपः संयतः पीपयंत तस्मिन्क्षत्रममवत्त्वेषमस्तु ॥ ९ ॥ ४ ॥

---

॥ ३५ ॥ १-८ प्रभूवसुरांगिरसः ॥ इंद्रः ॥ १-७ अनुष्टुप् । ८ पंक्तिः ॥

॥३५॥ यस्ते साधिष्ठोऽवस इंद्र क्रतुष्टमा भर। अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरं ॥१॥ यदिंद्र ते चतस्रो यच्छूर संति तिस्रः। यद्वा पंच क्षितीनामवस्तत्सु न आ भर ॥२॥ आ तेऽवो

॥३४॥ अजातऽशत्रुं अजरा स्वःऽवती अनु स्वधा अमिता दस्मं ईयते सुनोतन पचत ब्रह्मऽवाहसे पुरुऽस्तुताय प्रऽतरं दधातन ॥१॥ आ यः सोमेन जठरं अपिप्रत अमंदत मघऽवा मध्वः अंधसः यत् ईं मृगाय हंतवे महाऽवधः सहस्रऽभृष्टिं उशना वधं यमत् ॥२॥ यः अस्मै घ्रंसे उत वा यः ऊधनि सोमं सुनोति भवति द्युऽमान् अह अपऽअप शक्रः ततनुष्टिं ऊहति तनूऽशुभ्रं मघऽवा यः कवऽसखः ॥३॥ यस्य अवधीत् पितरं यस्य मातरं यस्य शक्रः भ्रातरं न अतः ईषते वेति इत् ऊं अस्य प्रऽयता यतंऽकरः न किल्बिषात् ईषते वस्वः आऽकरः ॥४॥ न पंचऽभिः दशऽभिः वष्टि आऽरभं न असुन्वता सचते पुष्यता चन जिनाति वा इत् अमुया हंति वा धुनिः आ देवऽयुं भजति गोऽमति व्रजे ॥५॥३॥ विऽत्वक्षणः संऽऋतौ चक्रऽआसजः असुन्वतः विषुणः सुन्वतः वृधः इंद्रः विश्वस्य दमिता विऽभीषणः यथाऽवशं नयति दासं आर्यः ॥६॥ सं ईं पणेः अजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु दुःऽगे चन ध्रियते विश्वः आ पुरुजनः यः अस्य तविषीं अचुक्रुधत् ॥७॥ सं यत् जनौ सुऽधनौ विश्वऽशर्धसौ अवेत् इंद्रः मघऽवा गोषु शुभ्रिषु युजं हि अन्यं अकृत प्रऽवेपनी उत् ईं गव्यं सृजते सत्वऽभिः धुनिः ॥८॥ सहस्रऽसां आग्निऽवेशिं गृणीषे शत्रिं अग्ने उपऽमां केतुं अर्यः तस्मै आपः संऽयतः पीपयंत तस्मिन् क्षत्रं अमऽवत् त्वेषं अस्तु ॥९॥४॥

---

॥३५॥ यः ते साधिष्ठः अवसे इंद्र क्रतुः तं आ भर अस्मभ्यं चर्षणिऽसहं सस्निं वाजेषु दुस्तरं ॥१॥ यत् इंद्र ते चतस्रः यत् शूर संति तिस्रः यत् वा पंच क्षितीनां अवः तत् सु नः आ भर ॥२॥ आ ते अवः

वरेण्यं वृषंतमस्य हूमहे। वृषजूतिर्हि जज्ञिष आभूभिरिंद्र तुर्वणिः ॥३॥ वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः। स्वक्षत्रं ते धृषन्मनः सत्राहमिंद्र पौंस्यं ॥४॥ त्वं तमिंद्र मर्त्यममित्रयंतमद्रिवः। सर्वरथा शतक्रतो नि याहि शवसस्पते ॥५॥५॥ त्वामिद्वृत्रहंतम जनासो वृक्तबर्हिषः। उग्रं पूर्वीषु पूर्व्यं हवंते वाजसातये ॥६॥ अस्माकमिंद्र दुष्टरं पुरोयावानमाजिषु। सयावानं धनेधने वाजयंतमवा रथं ॥७॥ अस्माकमिंद्रेहि नो रथमवा पुरंध्या। वयं शविष्ठ वार्यं दिवि श्रवो दधीमहि दिवि स्तोमं मनामहे ॥८॥६॥

---

॥ ३६ ॥ १-६ प्रभूवसुरांगिरसः ॥ इंद्रः ॥ १. २. ४-६ त्रिष्टुप्। ३ जगती ॥

॥३६॥ स आ गमदिंद्रो यो वसूनां चिकेतद्दातुं दामनो रयीणां। धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुं ॥१॥ आ ते हनू हरिवः शूर शिप्रे रुहत्सोमो न पर्वतस्य पृष्ठे। अनु त्वा राजन्नर्वतो न हिन्वन् गीर्भिर्मदेम पुरुहूत विश्वे ॥२॥ चक्रं न वृत्तं पुरुहूत वेपते मनो भिया मे अमतेरिदद्रिवः। रथादधि त्वा जरिता सदावृध कुविन्नु स्तोषन्मघवन्पुरूवसुः ॥३॥ एष ग्रावेव जरिता त इंद्रेयर्ति वाचं बृहदाशुषाणः। प्र सव्येन मघवन्यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥४॥ वृषा त्वा वृषणं वर्धतु द्यौर्वृषा वृषभ्यां वहसे हरिभ्यां। स नो वृषा वृषरथः सुशिप्र वृषक्रतो वृषा वज्रिन्भरे धाः ॥५॥ यो रोहितौ वाजिनौ वाजिनीवान्त्रिभिः शतैः सचमानावदिष्ट। यूने समस्मै क्षितयो नमंतां श्रुतरथाय मरुतो दुवोया ॥६॥७॥

---

॥ ३७ ॥ १-५ अत्रिः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३७॥ सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वं-

वरेण्यं वृषन्ऽतमस्य हूमहे वृषऽजूतिः हि जज्ञिषे आऽभूभिः इंद्र तुर्वणिः ॥३॥ वृषा हि असि राधसे जज्ञिषे वृष्णि ते शवः स्वऽक्षत्रं ते धृषत् मनः सत्राऽहं इंद्र पौंस्यं ॥४॥ त्वं तं इंद्र मर्त्यं अमित्रऽयंतं अद्रिऽवः सर्वऽरथा शतऽक्रतो॰ नि याहि शवसः पते ॥५॥५॥ त्वां इत् वृत्रहन्ऽतम जनासः वृक्तऽबर्हिषः उग्रं पूर्वीषु पूर्व्यं हवंते वाजऽसातये ॥६॥ अस्माकं इंद्र दुःऽतरं पुरःऽयावानं आजिषु सऽयावानं धनेऽधने वाजऽयंतं अव रथं ॥७॥ अस्माकं इंद्र आ इहि नः रथं अव पुरंऽध्या वयं शविष्ठ वार्यं दिवि श्रवः दधीमहि दिवि स्तोमं मनामहे ॥८॥६॥

---

॥३६॥ सः आ गमत् इंद्रः यः वसूनां चिकेतत् दातुं दामनः रयीणां धन्वऽचरः न वंसगः तृषाणः चकमानः पिबतु दुग्धं अंशुं ॥१॥ आ ते हनू इति हरिऽवः शूर शिप्रे इति रुहत् सोमः न पर्वतस्य पृष्ठे अनु त्वा राजन् अर्वतः न हिन्वन् गीःऽभिः मदेम पुरुऽहूत विश्वे ॥२॥ चक्रं न वृत्तं पुरुऽहूत वेपते मनः भिया मे अमतेः इत् अद्रिऽवः रथात् अधि त्वा जरिता सदाऽवृध कुवित् नु स्तोषत् मघऽवन् पुरुऽवसुः ॥३॥ एषः ग्रावाऽइव जरिता ते इंद्र इयर्ति वाचं बृहत् आशुषाणः प्र सव्येन मघऽवन् यंसि रायः प्र दक्षिणित् हरिऽवः मा वि वेनः ॥४॥ वृषा त्वा वृषणं वर्धतु द्यौः वृषा वृषऽभ्यां वहसे हरिऽभ्यां सः नः वृषा वृषऽरथः सुऽशिप्र वृषऽक्रतो॰ वृषा वज्रिन् भरे धाः ॥५॥ यः रोहितौ वाजिनौ वाजिनीऽवान् त्रिऽभिः शतैः सचमानौ अदिष्ट यूने सं अस्मै क्षितयः नमंतां श्रुतऽरथाय मरुतः दुवःऽया ॥६॥७॥

---

॥३७॥ सं भानुना यतते सूर्यस्य आऽजुह्वानः घृतऽपृष्ठः सुऽअं-

चाः । तस्मा अमृध्रा उषसो व्युच्छान्य इंद्राय सुनवामेत्याह ॥१॥ समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावा सुतसोमो जराते । ग्रावाणो यस्येषिरं वदंत्ययदध्वर्युर्हविषाव सिंधुं ॥ २ ॥ वधूरियं पतिमिच्छंत्येति य ईं वहाते महिषीमिषिरां । आस्य श्रवस्याद्रथ आ च घोषात्पुरू सहस्रा परि वर्तयाते ॥ ३ ॥ न स राजा व्यथते यस्मिन्निंद्रस्तीव्रं सोमं पिबति गोसखायं । आ सत्वनैरजति हंति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन् ॥ ४ ॥ पुष्यात्क्षेमे अभि योगे भवात्युभे वृतौ संयती सं जयाति । प्रियः सूर्ये प्रियो अग्ना भवाति य इंद्राय सुतसोमो ददाशत् ॥ ५ ॥ ८ ॥

॥ ३८ ॥ १–५ अत्रिः ॥ इंद्रः ॥ अनुष्टुप् ॥

॥३८॥ उरोष्ट इंद्र राधसो विभ्वी रातिः शतक्रतो । अधा नो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥ १ ॥ यदीमिंद्र श्रवाय्यमिषं शविष्ठ दधिषे । पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरं ॥ २ ॥ शुष्मासो ये ते अद्रिवो मेहना केतसापः । उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥ ३ ॥ उतो नो अस्य कस्य चिद्दक्षस्य तव वृत्रहन् । अस्मभ्यं नृम्णमा भरास्मभ्यं नृमणस्यसे ॥ ४ ॥ नू त आभिरभिष्टिभिस्तव शर्मञ्छतक्रतो । इंद्र स्याम सुगोपाः शूर स्याम सुगोपाः ॥ ५ ॥ ९ ॥

॥ ३९ ॥ १–५ अत्रिः ॥ इंद्रः ॥ १–४ अनुष्टुप् ॥ ५ पंक्तिः ॥

॥ ३९ ॥ यदिंद्र चित्र मेहनास्ति त्वादातमद्रिवः । राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ १ ॥ यन्मन्यसे वरेण्यमिंद्र द्युक्षं तदा भर । विद्याम तस्य ते वयमकूपारस्य दावने ॥ २ ॥ यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत् । तेन दृळ्हा चिदद्रिव

चाः तस्मै अमृध्राः उषसः वि उच्छान् यः इंद्राय सुनवाम इति आह ॥१॥ समिंद्धऽअग्निः वनवत् स्तीर्णऽबर्हिः युक्तऽग्रावा सुतऽसोमः जराते ग्रावाणः यस्य इषिरं वदंति अयंत् अध्वर्युः हविषा अव सिंधुं ॥२॥ वधूः इयं पतिं इच्छंती एति यः ईं वहाते महिषीं इषिरां आ अस्य श्रवस्यात् रथः आ च घोषात् पुरु सहस्रा परि वर्तयाते ॥३॥ न सः राजा व्यथते यस्मिन् इंद्रः तीव्रं सोमं पिबति गोऽसखायं आ सत्वनैः अजति हंति वृत्रं क्षेति क्षितीः सुऽभगः नाम पुष्यन् ॥४॥ पुष्यात् क्षेमे अभि योगे भवाति उभे वृतौ संऽयती॰ सं जयाति प्रियः सूर्ये प्रियः अग्ना भवाति यः इंद्राय सुतऽसोमः ददाशत् ॥ ५ ॥ ८ ॥

---

॥३८॥ उरोः ते इंद्र राधसः विऽभ्वी रातिः शतऽक्रतो॰ अध नः विश्वऽचर्षणे द्युम्ना सुऽक्षत्र मंहय ॥१॥ यत् ईं इंद्र श्रवाय्यं इषं शविष्ठ दधिषे पप्रथे दीर्घश्रुत्ऽतमं हिरण्यऽवर्ण दुस्तरं ॥२॥ शुष्मासः ये ते अद्रिऽवः मेहना केतऽसापः उभा देवौ अभिष्टये दिवः च ग्मः च राजथः ॥३॥ उतो॰ नः अस्य कस्य चित् दक्षस्य तव वृत्रऽहन् अस्मभ्यं नृम्णं आ भर अस्मभ्यं नृऽमनस्यसे ॥४॥ नु ते आभिः अभिष्टिऽभिः तव शर्मन् शतऽक्रतो॰ इंद्र स्याम सुऽगोपाः शूर स्याम सुऽगोपाः ॥ ५ ॥ ९ ॥

---

॥३९॥ यत् इंद्र चित्र मेहना अस्ति त्वाऽदातं अद्रिऽवः राधः तत् नः विदत्ऽवसो॰ उभयाहस्ति आ भर ॥१॥ यत् मन्यसे वरेण्यं इंद्र द्युक्षं तत् आ भर विद्याम तस्य ते वयं अकूपारस्य दावने ॥२॥ यत् ते दित्सु प्रऽराध्यं मनः अस्ति श्रुतं बृहत् तेन दृळ्हा चित् अद्रिऽवः

आ वाजं दर्षि सातये ॥३॥ मंहिष्ठं वो मघोनां राजानं चर्षणीनां । इंद्रमुप प्रशस्तये पूर्वीभिर्जुजुषे गिरः ॥ ४ ॥ अस्मा इत्काव्यं वच उक्थमिंद्राय शंस्यं । तस्मा उ ब्रह्मवाहसे गिरो वर्धंत्यत्रयो गिरः शुंभंत्यत्रयः ॥ ५ ॥ १० ॥

---

॥ ४० ॥ १–९ अत्रिः ॥ १–४ इंद्रः । ५ सूर्यः । ६–९ अत्रिः ॥ १–३ उष्णिक् । ४. ६–८ त्रिष्टुप् । ५. ९ अनुष्टुप् ॥

॥ ४० ॥ आ याह्यद्रिभिः सुतं सोमं सोमपते पिब । वृषन्निंद्र वृषभिर्वृत्रहंतम ॥१॥ वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः । वृषन्निंद्र वृषभिर्वृत्रहंतम ॥२॥ वृषा त्वा वृषणं हुवे वज्रिंचित्राभिरूतिभिः । वृषन्निंद्र वृषभिर्वृत्रहंतम ॥३॥ ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा । युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यंदिने सवने मत्सदिंद्रः ॥४॥ यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः । अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥ ५ ॥ ११ ॥ स्वर्भानोरध यदिंद्र माया अवो दिवो वर्तमाना अवाहन् । गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविंददत्रिः ॥६॥ मा मामिमं तव संतमत्र इरस्या द्रुग्धो भियसा नि गारीत् । त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥ ७ ॥ ग्राव्णो ब्रह्मा युयुजानः सपर्यन्कीरिणा देवान्नमसोपशिक्षन् । अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरप माया अघुक्षत् ॥८॥ यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः । अत्रयस्तमन्वविंदन्नह्य१न्ये अशक्नुवन् ॥ ९ ॥ १२ ॥

---

॥ ४१ ॥ १–२० अत्रिः ॥ विश्वे देवाः ॥ १–१५. १८. १९ त्रिष्टुप् । १६. १७ अतिजगती । २० एकपदा ॥

॥४१॥ को नु वां मित्रावरुणावृतायन्दिवो वा महः पार्थि-

आ वाजं दर्षि सातये ॥३॥ मंहिष्ठं वः मघोनां राजानं चर्षणीनां इंद्रं उप प्रऽशस्तये पूर्वीभिः जुजुषे गिरः ॥४॥ अस्मै इत् काव्यं वचः उक्थं इंद्राय शंस्यं तस्मै ऊं इति ब्रह्मऽवाहसे गिरः वर्धंति अत्रयः गिरः शुंभंति अत्रयः ॥ ५ ॥ १० ॥

---

॥४०॥ आ याहि अद्रिऽभिः सुतं सोमं सोमऽपते पिब वृषन् इंद्र वृषऽभिः वृत्रहन्ऽतम ॥१॥ वृषा ग्रावा वृषा मदः वृषा सोमः अयं सुतः वृषन् इंद्र वृषऽभिः वृत्रहन्ऽतम ॥२॥ वृषा त्वा वृषणं हुवे वज्रिन् चित्राभिः ऊतिऽभिः वृषन् इंद्र वृषऽभिः वृत्रहन्ऽतम ॥३॥ ऋजीषी वज्री वृषभः तुराषाट् शुष्मी राजा वृत्रऽहा सोमऽपावा युक्त्वा हरिऽभ्यां उप यासत् अर्वाङ् माध्यंदिने सवने मत्सत् इंद्रः ॥४॥ यत् त्वा सूर्य स्वःऽभानुः तमसा अविध्यत् आसुरः अक्षेत्रऽवित् यथा मुग्धः भुवनानि अदीधयुः ॥५॥११॥ स्वःऽभानोः अध यत् इंद्र मायाः अवः दिवः वर्तमानाः अवऽअहन् गूळ्हं सूर्यं तमसा अपऽव्रतेन तुरीयेण ब्रह्मणा अविंदत् अत्रिः ॥६॥ मा मां इमं तव संतं अत्रे इरस्या द्रुग्धः भियसा नि गारीत् त्वं मित्रः असि सत्यऽराधाः तौ मा इह अवतं वरुणः च राजा ॥७॥ ग्राव्णः ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान् नमसा उपऽशिक्षन् अत्रिः सूर्यस्य दिवि चक्षुः आ अधात् स्वःऽभानोः अप मायाः अघुक्षत् ॥८॥ यं वै सूर्यं स्वःऽभानुः तमसा अविध्यत् आसुरः अत्रयः तं अनु अविंदन् नहि अन्ये अशक्नुवन् ॥ ९ ॥ १२ ॥

---

॥४१॥ कः नु वां मित्रावरुणौ ऋतऽयन् दिवः वा महः पार्थि-

वस्य वा दे। ऋतस्य वा सदसि त्रासीथां नो यज्ञायते वा पशुषो न वाजान् ॥१॥ ते नो मित्रो वरुणो अर्यमायुरिंद्र ऋभुक्षा मरुतो जुषंत। नमोभिर्वा ये दधते सुवृक्तिं स्तोमं रुद्राय मीळ्हुषे सजोषाः ॥ २ ॥ आ वां येष्ठाश्विना हुवध्यै वातस्य पत्मन्रथ्यस्य पुष्टौ। उत वा दिवो असुराय मन्म प्रांधांसीव यज्यवे भरध्वं ॥ ३ ॥ प्र सक्षणो दिव्यः कण्वहोता त्रितो दिवः सजोषा वातो अग्निः। पूषा भगः प्रभृथे विश्वभोजा आजिं न जग्मुराश्वश्वतमाः ॥४॥ प्र वो रयिं युक्ताश्वं भरध्वं राय एषेऽवसे दधीत धीः। सुशेव एवैरौशिजस्य होता ये व एवा मरुतस्तुराणां ॥५॥१३॥ प्र वो वायुं रथयुजं कृणुध्वं प्र देवं विप्रं पनितारमर्कैः। इषुध्यव ऋतसापः पुरंधीर्वस्वीर्नो अत्र पत्नीरा धिये धुः ॥६॥ उप व एषे वंद्येभिः शूषैः प्र यह्वी दिवश्चितयद्भिरर्कैः। उषासानक्ता विदुषीव विश्वमा हा वहतो मर्त्याय यज्ञं ॥ ७ ॥ अभि वो अर्चे पोष्यावतो नृन्वास्तोष्पतिं त्वष्टारं रराणः। धन्या सजोषा धिषणा नमोभिर्वनस्पतीरोषधी राय एषे ॥ ८ ॥ तुजे नस्तने पर्वताः संतु स्वैतवो ये वसवो न वीराः। पनित आप्त्यो यजतः सदा नो वर्धान्नः शंसं नर्यो अभिष्टौ ॥९॥ वृष्णो अस्तोषि भूम्यस्य गर्भं त्रितो नपातमपां सुवृक्ति। गृणीते अग्निरेतरी न शूषैः शोचिष्केशो नि रिणाति वना ॥ १० ॥ १४ ॥ कथा महे रुद्रियाय ब्रवाम कद्राये चिकितुषे भगाय। आप ओषधीरुत नोऽवंतु द्यौर्वना गिरयो वृक्षकेशाः ॥११॥ शृणोतु न ऊर्जां पतिर्गिरः स नभस्तरीयाँ इषिरः परिज्मा। शृण्वंत्वापः पुरो न शुभ्राः परि स्रुचो बबृहाणस्याद्रेः ॥१२॥ विदा चिन्नु महांतो ये व एवा ब्रवाम दस्मा वार्यं दधानाः। वयश्चन सुभ्व१

वस्य वा दे ऋतस्य वा सदसि त्रासीथां नः यज्ञऽयते वा पशुऽसः
न वाजान् ॥१॥ ते नः मित्रः वरुणः अर्यमा आयुः इंद्रः ऋभुक्षाः
मरुतः जुषंत नमःऽभिः वा ये दधते सुऽवृक्तिं स्तोमं रुद्राय मीळ्हुषे
सऽजोषाः ॥२॥ आ वां येष्ठा अश्विना हुवध्यै वातस्य पत्मन् रथ्यस्य
पुष्टौ उत वा दिवः असुराय मन्म प्र अंधांसिऽइव यज्यवे भरध्वं
॥३॥ प्र सक्षणः दिव्यः कण्वऽहोता त्रितः दिवः सऽजोषाः वातः अ-
ग्निः पूषा भगः प्रऽभृथे विश्वऽभोजाः आजिं न जग्मुः आश्वश्व-
ऽतमाः ॥४॥ प्र वः रयिं युक्तऽअश्वं भरध्वं रायः एषे अवसे दधीत
धीः सुऽशेवः एवैः औशिजस्य होता ये वः एवाः मरुतः तुराणां
॥५॥१३॥ प्र वः वायुं रथऽयुजं कृणुध्वं प्र देवं विप्रं पनितारं अर्कैः
इषुध्यवः ऋतऽसापः पुरंऽधीः वस्वीः नः अत्र पत्नीः आ धिये धुः०
॥६॥ उप वः एषे वंद्येभिः शूषैः प्र यह्वी दिवः चितयत्ऽभिः अर्कैः
उषसानक्ता विदुषीऽइव० विश्वं आ ह वहतः मर्त्याय यज्ञं ॥७॥
अभि वः अर्चे पोष्याऽवतः नॄन् वास्तोः पतिं त्वष्टारं रराणः धन्या
सऽजोषाः धिषणा नमःऽभिः वनस्पतीन् ओषधीः रायः एषे ॥८॥
तुजे नः तने पर्वताः संतु स्वऽएतवः ये वसवः न वीराः पनितः
आप्त्यः यजतः सदा नः वर्धात् नः शंसं नर्यः अभिष्टौ ॥९॥ वृष्णः अ-
स्तोषि भूम्यस्य गर्भं त्रितः नपातं अपां सुऽवृक्ति गृणीते अग्निः
एतरि न शूषैः शोचिःऽकेशः नि रिणाति वना ॥१०॥१४॥ कथा
महे रुद्रियाय ब्रवाम कत् राये चिकितुषे भगाय आपः ओषधीः
उत नः अवंतु द्यौः वना गिरयः वृक्षऽकेशाः ॥११॥ शृणोतु नः ऊ-
र्जां पतिः गिरः सः नभः तरीयान् इषिरः परिऽज्मा शृण्वंतु आपः
पुरः न शुभ्राः परि स्रुचः बबृहाणस्य अद्रेः ॥१२॥ विद् चित् नु
महांतः ये वः एवाः ब्रवाम दस्माः वार्यं दधानाः वयः चन सुऽभ्वः

आवं यंति क्षुभा मर्तमनुयतं वधस्नैः ॥ १३ ॥ आ दैव्यानि पार्थि-
वानि जन्मापश्चाच्छा सुमखाय वोचं। वर्धंतां द्यावो गिरश्चंद्रा-
ग्रा उदा वर्धंतामभिषाता अर्णाः ॥ १४ ॥ पदेपदे मे जरिमा नि
धायि वरूत्री वा शक्रा या पायुभिश्च। सिषक्तु माता मही रसा
नः स्मत्सूरिभिरृजुहस्त ऋजुवनिः ॥ १५ ॥ १५ ॥ कथा दाशेम
नमसा सुदानूनेवया मरुतो अच्छोक्तौ प्रश्रवसो मरुतो अच्छो-
क्तौ। मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः ॥ १६ ॥
इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व आ देवासो
वनते मर्त्यो वः। अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे
निर्ऋतिर्जग्रसीत ॥ १७ ॥ तां वो देवाः सुमतिमूर्जयंतीमिषम-
श्याम वसवः शसा गोः। सा नः सुदानुर्मृळयंती देवी प्रति
द्रवंती सुविताय गम्याः ॥ १८ ॥ अभि न इळा यूथस्य माता
स्मन्नदीभिरुर्वशी वा गृणातु। उर्वशी वा बृहद्दिवा गृणानाभ्यू-
र्ण्वाना प्रभृथस्यायोः ॥ १९ ॥ सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥ २० ॥ १६ ॥

---

॥ ४२ ॥ १–१८ अत्रिः ॥ १–१०. १२–१८ विश्वे देवाः । ११ रुद्रः ॥ १–१६. १८ त्रिष्टुप् ।
१७ एकपदा ॥

॥ ४२ ॥ प्र शंतमा वरुणं दीधिती गीर्मित्रं भगमदितिं
नूनमश्याः। पृषद्योनिः पंचहोता शृणोत्वतूर्तपंथा असुरो म-
योभुः ॥ १ ॥ प्रति मे स्तोममदितिर्जगृभ्यात्सूनुं न माता हृद्यं
सुशेवं। ब्रह्म प्रियं देवहितं यदस्त्यहं मित्रे वरुणे यन्मयोभु
॥ २ ॥ उदीरय कवितमं कवीनामुनत्तैनमभि मध्वा घृतेन।
स नो वसूनि प्रयता हितानि चंद्राणि देवः सविता सु-
वाति ॥ ३ ॥ समिंद्र णो मनसा नेषि गोभिः सं सूरिभिर्हरिवः
सं स्वस्ति। सं ब्रह्मणा देवहितं यदस्ति सं देवानां सुमत्या य-

आ अव यंति क्षुभा मर्तं अनुऽयतं वधऽस्नैः ॥१३॥ आ दैव्यानि पा-
र्थिवानि जन्म अपः च अच्छ सुऽमखाय वोचं वर्धतां द्यावः गिरः
चंद्रऽअग्राः उदा वर्धतां अभिऽसाताः अर्णाः ॥१४॥ पदेऽपदे मे
जरिमा नि धायि वरूत्री वा शक्रा या पायुऽभिः च सिसक्तु माता
मही रसा नः स्मत् सूरिऽभिः ऋजुऽहस्ता ऋजुऽवनिः ॥१५॥१५॥
कथा दाशेम नमसा सुऽदानून् एवऽया मरुतः अच्छऽउक्तौ प्र-
ऽश्रवसः मरुतः अच्छऽउक्तौ मा नः अहिः बुध्न्यः रिषे धात् अ-
स्माकं भूत् उपमातिऽवनिः ॥१६॥ इति चित् नु प्रऽजायै पशु-
ऽमत्यै देवासः वनते मर्त्यः वः आ देवासः वनते मर्त्यः वः अत्र
शिवां तन्वः धासिं अस्याः जरां चित् मे निःऽऋतिः जग्रसीत
॥१७॥ तां वः देवाः सुऽमतिं ऊर्जयंती इषं अश्याम वसवः शसा
गोः सा नः सुऽदानुः मृळयंती देवी प्रति द्रवंती सुविताय गम्याः
॥१८॥ अभि नः इळा यूथस्य माता स्मत् नदीभिः उर्वशी वा गृ-
णातु उर्वशी वा बृहत्ऽदिवा गृणाना अभिऽऊर्ण्वाना प्रऽभृ-
थस्य आयोः ॥१९॥ सिसक्तु नः ऊर्जव्यस्य पुष्टेः ॥२०॥१६॥

---

॥४२॥ प्र शंऽतमा वरुणं दीधिती गीः मित्रं भगं अदितिं नूनं
अश्याः पृषत्ऽयोनिः पंचऽहोता शृणोतु अतूर्तऽपंथाः असुरः
मयःऽभुः ॥१॥ प्रति मे स्तोमं अदितिः जगृभ्यात् सूनुं न माता हृद्यं
सुऽशेवं ब्रह्म प्रियं देवऽहितं यत् अस्ति अहं मित्रे वरुणे यत् म-
यःऽभु ॥२॥ उत् ईरय कविऽतमं कवीनां उनत्त एनं अभि मध्वा
घृतेन सः नः वसूनि प्रऽयता हितानि चंद्राणि देवः सविता सु-
वाति ॥३॥ सं इंद्र नः मनसा नेषि गोभिः सं सूरिऽभिः हरिऽवः सं
स्वस्ति सं ब्रह्मणा देवऽहितं यत् अस्ति सं देवानां सुऽमत्या य-

ज्ञियानां ॥ ४ ॥ देवो भगः सविता रायो अंश इंद्रो वृत्रस्य सं-
जितो धनानां। ऋभुक्षा वाज उत वा पुरंधिरवंतु नो अमृ-
तासस्तुरासः ॥ ५ ॥ १७ ॥ मरुत्वतो अप्रतीतस्य जिष्णोरजूर्यतः
प्र ब्रवामा कृतानि। न ते पूर्वे मघवन्नापरासो न वीर्यं१-
नूतनः कश्चनाप ॥ ६ ॥ उप स्तुहि प्रथमं रत्नधेयं बृहस्पतिं
सनितारं धनानां। यः शंसते स्तुवते शंभविष्ठः पुरूवसुरागम-
ज्जोहुवानं ॥ ७ ॥ तवोतिभिः सचमाना अरिष्टा बृहस्पते मघ-
वानः सुवीराः। ये अश्वदा उत वा संति गोदा ये वस्त्रदाः सु-
भगास्तेषु रायः ॥ ८ ॥ विसर्माणं कृणुहि वित्तमेषां ये भुंजते
अपृणंतो न उक्थैः। अपव्रतान्प्रसवे वावृधानान्ब्रह्मद्विषः
सूर्याद्यावयस्व ॥ ९ ॥ य ओहते रक्षसो देववीतावचक्रेभिस्तं
मरुतो नि यात। यो वः शमीं शशमानस्य निंदात्तुच्छ्या-
न्कामान्करते सिष्विदानः ॥ १० ॥ १८ ॥ तमु ष्टुहि यः स्विषुः
सुधन्वा यो विश्वस्य क्षयति भेषजस्य। यक्ष्वा महे सौमनसाय
रुद्रं नमोभिर्देवमसुरं दुवस्य ॥ ११ ॥ दमूनसो अपसो ये सुहस्ता
वृष्णः पत्नीर्नद्यो विभ्वतष्टाः। सरस्वती बृहद्दिवोत राका द-
शस्यंतीर्वरिवस्यंतु शुभ्राः ॥ १२ ॥ प्र सू महे सुशरणाय मेधां
गिरं भरे नव्यसीं जायमानां। य आहना दुहितुर्वक्षणासु रूपा
मिनानो अकृणोदिदं नः ॥ १३ ॥ प्र सुष्टुतिः स्तनयंतं रुवंतमि-
ळस्पतिं जरितर्नूनमश्याः। यो अब्दिमाँ उदनिमाँ इयर्ति प्र वि-
द्युता रोदसी उक्षमाणः ॥ १४ ॥ एष स्तोमो मारुतं शर्धो अच्छा
रुद्रस्य सूनूँर्युवन्यूँरुदश्याः। कामो राये हवते मा स्वस्त्युप स्तुहि
पृषदश्वाँ अयासः ॥ १५ ॥ प्रैष स्तोमः पृथिवीमंतरिक्षं वनस्पतीँ-
रोषधी राये अश्याः। देवोदेवः सुहवो भूतु मह्यं मा नो माता पृ-

ङ्गियानां ॥४॥ देवः भगः सविता रायः अंशः इंद्रः वृत्रस्य संऽजितः धनानां ऋभुक्षाः वाजः उत वा पुरंऽधिः अवंतु नः अमृतासः तुरासः ॥५॥१७॥ मरुत्वतः अप्रतिऽइतस्य जिष्णोः अजूर्यतः प्र ब्रवाम कृतानि न ते पूर्वे मघऽवन् न अपरासः न वीर्यं नूतनः कः चन आप ॥६॥ उप स्तुहि प्रथमं रत्नऽधेयं बृहस्पतिं सनितारं धनानां यः शंसते स्तुवते शंऽभविष्ठः पुरुऽवसुः आऽगमत् जोहुवानं ॥७॥ तव ऊतिऽभिः सचमानाः अरिष्टाः बृहस्पते मघऽवानः सुऽवीराः ये अश्वऽदाः उत वा संति गोऽदाः ये वस्त्रऽदाः सुऽभगाः तेषु रायः ॥८॥ विऽसर्माणं कृणुहि वित्तं एषां ये भुंजते अपृणंतः नः उक्थैः अपऽव्रतान् प्रऽसवे ववृधानान् ब्रह्मऽद्विषः सूर्यात् यवयस्व ॥९॥ यः ओहते रक्षसः देवऽवीतौ अचक्रेभिः तं मरुतः नि यात यः वः शमीं शशमानस्य निंदात् तुच्छ्यान् कामान् करते सिस्विदानः ॥१०॥१८॥ तं ऊं स्तुहि यः सुऽइषुः सुऽधन्वा यः विश्वस्य क्षयति भेषजस्य यक्ष्व महे सौमनसाय रुद्रं नमःऽभिः देवं असुरं दुवस्य ॥११॥ दमूनसः अपसः ये सुऽहस्ताः वृष्णः पत्नीः नद्यः विभ्वऽतष्टाः सरस्वती बृहत्ऽदिवा उत राका दशस्यंतीः वरिवस्यंतु शुभ्राः ॥१२॥ प्र सु महे सुऽशरणाय मेधां गिरं भरे नव्यसीं जायमानां यः आहनाः दुहितुः वक्षणासु रूपा मिनानः अकृणोत् इदं नः ॥१३॥ प्र सुऽस्तुतिः स्तनयंतं रुवंतं इळः पतिं जरितः नूनं अश्याः यः अब्दिऽमान् उदनिऽमान् इयर्ति प्र विऽद्युता रोदसी उक्षमाणः ॥१४॥ एषः स्तोमः मारुतं शर्धः अच्छ रुद्रस्य सूनून् युवन्यून् उत् अश्याः कामः राये हवते मा स्वस्ति उप स्तुहि पृषत्ऽअश्वान् अयासः ॥१५॥ प्र एषः स्तोमः पृथिवीं अंतरिक्षं वनस्पतीन् ओषधीः राये अश्याः देवःऽदेवः सुऽहवः भूतु मह्यं मा नः माता पृ-

थिवी दुर्मतौ धांत् ॥१६॥ उरौ देवा अनिबाधे स्याम ॥१७॥ समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम। आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१८॥१९॥

॥ ४३ ॥ १–१७ अत्रिः। विश्वे देवाः। १–१५. १७ त्रिष्टुप्। १६ एकपदा॥

॥४३॥ आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यंतु मध्वा। महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥१॥ आ सुष्टुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे। पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टां ॥२॥ अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रं। होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥३॥ दश क्षिपो युंजते बाहू अद्रिं सोमस्य या शमितारा सुहस्ता। मध्वो रसं सुगभस्तिर्गिरिष्ठां चनिश्चदद्दुदुहे शुक्रमंशुः ॥४॥ असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय। हरी रथे सुधुरा योगे अर्वागिंद्र प्रिया कृणुहि हूयमानः ॥५॥२०॥ आ नो महीमरमतिं सजोषा ग्नां देवीं नमसा रातहव्यां। मधोर्मदाय बृहतीमृतज्ञामाग्ने वह पथिभिर्देवयानैः ॥६॥ अंजंति यं प्रथयंतो न विप्रा वपावंतं नाग्निना तपंतः। पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादि ॥७॥ अच्छा मही बृहती शंतमा गीर्दूतो न गंत्वश्विना हुवध्यै। मयोभुवा सरथा यातमर्वाग्गंतं निधिं धुरमाणिर्न नाभिं ॥८॥ प्र तव्यसो नमउक्तिं तुरस्याहं पूष्ण उत वायोरदिक्षि। या राधसा चोदितारा मतीनां या वाजस्य द्रविणोदा उत त्मन् ॥९॥ आ नामभिर्मरुतो वक्षि विश्वाना रूपेभिर्जातवेदो हुवानः।

थिवी दुःऽमतीं धात् ॥ १६ ॥ उरौ देवाः अनिऽबाधे स्याम ॥ १७ ॥ सं अश्विनोः अवसा नूतनेन मयःऽभुवा सुऽप्रनीती गमेम आ नः रयिं वहतं आ उत वीरान् आ विश्वानि अमृता सौभगानि ॥ १८ ॥ १९ ॥

---

॥ ४३ ॥ आ धेनवः पयसा तूर्णिऽअर्थाः अमर्धन्तीः उप नः यंतु मध्वा मद्रः राये बृहतीः सप्त विप्रः मयःऽभुवः जरिता जोहवीति ॥ १ ॥ आ सुऽस्तुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे पिता माता मधुऽवचाः सुऽहस्ता भरेऽभरे नः यशसौ अविष्टां ॥ २ ॥ अध्वर्यवः चकृऽवांसः मधूनि प्र वायवे भरत चारु शुक्रं होताऽइव नः प्रथमः पाहि अस्य देव मध्वः ररिम ते मदाय ॥ ३ ॥ दश क्षिपः युंजते बाहू अद्रिं सोमस्य या शमितारा सुऽहस्ता मध्वः रसं सुऽगभस्तिः गिरिऽस्थां चनिश्चदत् दुदुहे शुक्रं अंशुः ॥ ४ ॥ असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय हरी रथे सुऽधुरा योगे अर्वाक् इंद्र प्रिया कृणुहि हूयमानः ॥ ५ ॥ २० ॥ आ नः महीं अरमतिं सऽजोषाः ग्नां देवीं नमसा रातऽहव्यां मधोः मदाय बृहतीं ऋतऽज्ञां आ अग्ने वह पथिऽभिः देवऽयानैः ॥ ६ ॥ अंजंति यं प्रथयंतः न विप्राः वपाऽवंतं न अग्निना तपंतः पितुः न पुत्रः उपसि प्रेष्ठः आ घर्मः अग्निं ऋतयन् असादि ॥ ७ ॥ अच्छ मही बृहती शंऽतमा गीः दूतः न गंतु अश्विना हुवध्यै मयःऽभुवा सऽरथा आ यातं अर्वाक् गंतं निऽधिं धुरं आणिः न नाभिं ॥ ८ ॥ प्र तव्यसः नमःऽउक्तिं तुरस्य अहं पूष्णः उत वायोः अदिक्षि या राधसा चोदितारा मतीनां या वाजस्य द्रविणःऽदी उत त्मन् ॥ ९ ॥ आ नामऽभिः मरुतः वक्षि विश्वान् आ रूपेभिः जातऽवेदः हुवानः

यज्ञं गिरो जरितुः सुष्टुतिं च विश्वे गंत मरुतो विश्व ऊती ॥१०॥२१॥ आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गंतु यज्ञं। हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥११॥ आ वेधसं नीलपृष्ठं बृहंतं बृहस्पतिं सदने सादयध्वं। सादद्योनिं दम आ दीदिवांसं हिरण्यवर्णमरुषं सपेम ॥१२॥ आ धर्णसिर्बृहद्दिवो रराणो विश्वेभिर्गंत्वोमभिर्हुवानः। ग्ना वसान ओषधीरमृध्रस्त्रिधातुशृंगो वृषभो वयोधाः ॥१३॥ मातुष्पदे परमे शुक्र आयोर्विपन्यवो रास्पिरासो अग्मन्। सुशेव्यं नमसा रातहव्याः शिशुं मृजंत्यायवो न वासे ॥१४॥ बृहद्वयो बृहते तुभ्यमग्ने धियाजुरो मिथुनासः सचंत। देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात ॥१५॥ उरौ देवा अनिबाधे स्याम ॥१६॥ समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम। आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥१७॥२२॥

---

॥ ४४ ॥ १-१५ अवत्सारः काश्यप अन्ये च ऋषयो दृष्टलिंगाः ॥ विश्वे देवाः ॥ १-१३ जगती । १४. १५. त्रिष्टुप् ॥

॥४४॥ तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदं। प्रतीचीनं वृजनं दोहसे गिराशुं जयंतमनु यासु वर्धसे ॥१॥ श्रिये सुदृशीरुपरस्य याः स्वर्विरोचमानः ककुभामचोदते। सुगोपा असि न दभाय सुक्रतो परो मायाभिर्ऋत आस नाम ते ॥२॥ अत्यं हविः सचते सच्च धातु चारिष्टगातुः स होता सहोभरिः। प्रसर्स्राणो अनु बर्हिर्वृषा शिशुर्मध्ये युवाजरो विस्रुहा हितः ॥३॥ प्र व एते सुयुजो यामन्निष्टये नीचीरमुष्मै यम्य ऋतावृधः। सुयंतुभिः सर्वशासैरभीशुभिः क्रिविर्नामानि प्रवणे मुषायति ॥४॥ सं-

यज्ञं गिरः जरितुः सुऽस्तुतिं च विश्वे गंत मरुतः विश्वे ऊती ॥१०॥२१॥
आ नः दिवः बृहतः पर्वतात् आ सरस्वती यजता गंतु यज्ञं हवं
देवी जुजुषाणा घृताची शग्मां नः वाचं उशती शृणोतु ॥११॥ आ
वेधसं नीलऽपृष्ठं बृहंतं बृहस्पतिं सदने सादयध्वं सादतऽयोनिं
दमे आ दीदिऽवांसं हिरण्यऽवर्णं अरुषं सपेम ॥१२॥ आ धर्णसिः
बृहत्ऽदिवः रराणः विश्वेभिः गंतु ओमऽभिः हुवानः ग्नाः वसानः
ओषधीः अमृध्रः त्रिधातुऽशृंगः वृषभः वयःऽधाः ॥१३॥ मातुः पदे
परमे शुक्रे आयोः विपन्यवः रास्पिरासः अग्मन् सुऽशेव्यं नमसा
रातऽहव्याः शिशुं मृजंति आयवः न वासे ॥१४॥ बृहत् वयः बृहते
तुभ्यं अग्ने धियाऽजुरः मिथुनासः सचंत देवःऽदेवः सुऽहवः भूतु
मह्यं मा नः माता पृथिवी दुःऽमतौ धात् ॥१५॥ उरौ देवाः अनि-
ऽबाधे स्याम ॥१६॥ सं अश्विनोः अवसा नूतनेन मयःऽभुवा सु-
ऽप्रनीती गमेम आ नः रयिं वहतं आ उत वीरान् आ विश्वानि
अमृता सौभगानि ॥१७॥२२॥

---

॥४४॥ तं प्रत्नऽथा पूर्वऽथा विश्वऽथा इमऽथा ज्येष्ठऽतातिं ब-
र्हिऽसदं स्वःऽविदं प्रतीचीनं वृजनं दोहसे गिरा आशुं जयंतं अनु
यासु वर्धसे ॥१॥ श्रिये सुऽदृशीः उपरस्य याः स्वः विऽरोचमानः
ककुभां अचोदते सुऽगोपाः असि न दभाय सुऽक्रतो॰ परः माया-
भिः ऋते आस नाम ते ॥२॥ अत्यं हविः सचते सत् च धातु च
अरिष्टऽगातुः सः होता सहःऽभरिः प्रऽसर्स्राणः अनु बर्हिः वृषा
शिशुः मध्ये युवा अजरः विऽस्रुहा हितः ॥३॥ प्र वः एते सुऽयुजः
यामन् इष्टये नीचीः अमुष्मै यम्यः ऋतऽवृधः सुयंतुऽभिः सर्व-
ऽशासैः अभीशुऽभिः क्रिविः नामानि प्रवणे मुषायति ॥४॥ सं-

जभ्रुराणस्तरुभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुः । धारवाकेष्वृजुगाथ शोभसे वर्धस्व पत्नीरभि जीवो अध्वरे ॥५॥२३॥ यादृगेव ददृशे तादृगुच्यते सं छायया दधिरे सिध्रयाप्स्वा । महीमस्मभ्यमुरुषामुरु ज्रयो बृहत्सुवीरमनपच्युतं सहः ॥६॥ वेत्यग्रुर्जनिवान्वा अति स्पृधः समर्यता मनसा सूर्यः कविः । घ्रंसं रक्षंतं परि विश्वतो गयमस्माकं शर्म वनवत्स्वावसुः ॥७॥ ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते । यादृश्मिन्धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥८॥ समुद्रमासामव तस्थे अग्रिमा न रिष्यति सवनं यस्मिन्नायता । अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबंधनी ॥९॥ स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः । अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यं ॥१०॥२४॥ श्येन आसामदितिः कक्ष्यो३ मदो विश्ववारस्य यजतस्य मायिनः । समन्यमन्यमर्थयंत्येतवे विदुर्विषाणं परिपानमंति ते ॥११॥ सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्यो वः सचा । उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥१२॥ सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदंचनः । भरद्धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन् ॥१३॥ यो जागार तमृचः कामयंते यो जागार तमु सामानि यंति । यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥१४॥ अग्निर्जागार तमृचः कामयंतेऽग्निर्जागार तमु सामानि यंति । अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥१५॥२५॥३॥

ऽजभुँराणः तरुऽभिः सुतेऽगृभं वयाकिनं चित्तऽगर्भासु सुऽस्वरुः
धारऽवाकेषु ऋजुऽगाथ शोभसे वर्धस्व पत्नीः अभि जीवः अ-
ध्वरे ॥५॥२३॥ यादृक् एव ददृशे तादृक् उच्यते सं छायया दधिरे
सिध्रया अप्ऽसु आ मही अस्मभ्यं उरुऽसां उरु जयः बृहत सु-
ऽवीरं अनपऽच्युतं सहः ॥६॥ वेति अग्रुः जनिऽवान् वै अति स्पृधः
सऽमर्यता मनसा सूर्यः कविः घ्रंसं रक्षंतं परि विश्वतः गयं अस्मा-
कं शर्म वनवत् स्वऽवसुः ॥७॥ ज्यायांसं अस्य यतुनस्य केतुना
ऋषिऽस्वरं चरति यासु नाम ते यादृश्मिन् धायि तं अपस्यया
विदत् यः ऊं स्वयं वहते सः अरं करत् ॥८॥ समुद्रं आसां अव तस्थे
अग्रिमा न रिष्यति सवनं यस्मिन् आऽयता अत्र न हार्दि क्रव-
णस्य रेजते यत्र मतिः विद्यते पूतऽबंधनी ॥९॥ सः हि क्षत्रस्य
मनसस्य चित्तिऽभिः एवऽवदस्य यजतस्य सध्रेः अवऽत्सारस्य
स्पृणवाम रण्वऽभिः शविष्ठं वाजं विदुषा चित् अर्ध्यं ॥१०॥२४॥
श्येनः आसां अदितिः कक्ष्यः मदः विश्वऽवारस्य यजतस्य मा-
यिनः सं अन्यंऽअन्यं अर्थयंति एतवे विदुः विऽसानं परिऽपानं
अंति ते ॥११॥ सदाऽपृणः यजतः वि द्विषः वधीत् बाहुऽवृक्तः
श्रुतऽवित् तर्यः वः सचा उभा सः वरा प्रति एति भाति च यत् ईं
गणं भजते सुप्रयावऽभिः ॥१२॥ सुतंऽभरः यजमानस्य सत्ऽपतिः
विश्वासां ऊधः सः धियां उत्ऽअंचनः भरत् धेनुः रसऽवत् शिश्रिये
पयः अनुऽब्रुवाणः अधि एति न स्वपन् ॥१३॥ यः जागार तं ऋचः
कामयंते यः जागार तं ऊं सामानि यंति यः जागार तं अयं सोमः
आह तव अहं अस्मि सख्ये निऽओकाः ॥१४॥ अग्निः जागार तं
ऋचः कामयंते अग्निः जागार तं ऊं सामानि यंति अग्निः जागार
तं अयं सोमः आह तव अहं अस्मि सख्ये निऽओकाः ॥१५॥२५॥३॥

॥ ४५ ॥ १–११ सदापृण आत्रेयः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥४५॥ विदा दिवो विष्यन्नद्रिमुक्थैरायत्या उषसो अर्चिनो गुः। अपावृत व्रजिनीरुत्स्वर्गाद्वि दुरो मानुषीर्देव आवः ॥१॥ वि सूर्यो अमतिं न श्रियं सादोर्वाद्गवां माता जानती गात्। धन्वर्णसो नद्य१ः खादोअर्णाः स्थूणेव सुमिता दृंहत द्यौः ॥२॥ अस्मा उक्थाय पर्वतस्य गर्भो महीनां जनुषे पूर्व्याय। वि पर्वतो जिहीत साधत द्यौराविवासंतो दसयंत भूम ॥३॥ सूक्तेभिर्वो वचोभिर्देवजुष्टैरिंद्रा न्व१ग्नी अवसे हुवध्यै। उक्थेभिर्हि ष्मा कवयः सुयज्ञा आविवासंतो मरुतो यजंति ॥४॥ एतो न्व१द्य सुध्यो३भवाम प्र दुच्छुना मिनवामा वरीयः। आरे द्वेषांसि सनुतर्दधामायाम प्रांचो यजमानमच्छ ॥५॥२६॥ एता धियं कृणवामा सखायोऽप या माताँ ऋणुत व्रजं गोः। यया मनुर्विशिशिप्रं जिगाय यया वणिग्वंकुरापा पुरीषं ॥६॥ अनूनोदत्र हस्तयतो अद्रिरार्चन्येन दश मासो नवग्वाः। ऋतं यती सरमा गा अविंदद्विश्वानि सत्यांगिराश्चकार ॥७॥ विश्वे अस्या व्युषि माहिनायाः सं यद्गोभिरंगिरसो नवंत। उत्स आसां परमे सधस्थ ऋतस्य पथा सरमा विदद्गाः ॥८॥ आ सूर्यो यातु सप्ताश्वः क्षेत्रं यदस्योर्विया दीर्घयाथे। रघुः श्येनः पतयदंधो अच्छा युवा कविर्दीदयद्गोषु गच्छन् ॥९॥ आ सूर्यो अरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः। उद्ना न नावमनयंत धीरा आशृण्वतीरापो अर्वागतिष्ठन् ॥१०॥ धियं वो अप्सु दधिषे स्वर्षां ययातरन्दश मासो नवग्वाः। अया धिया स्याम देवगोपा अया धिया तुतुर्यामात्यंहः ॥११॥२७॥

॥४५॥ विदाः दिवः विऽस्यन् अद्रिं उक्थैः आऽयत्याः उषसः अर्चिनः गुः अप अवृत व्रजिनीः उत् स्वः गात् वि दुरः मानुषीः देवः आवः० ॥१॥ वि सूर्यः अमतिं न श्रियं सात् आ ऊर्वात् गवां माता जानती गात् धन्वऽअर्णसः नद्यः खादःऽअर्णाः स्थूणाऽइव सुऽमिता दृंहत द्यौः ॥२॥ अस्मै उक्थाय पर्वतस्य गर्भः महीनां जनुषे पूर्व्याय वि पर्वतः जिहीत साधत द्यौः आऽविवासंतः दसयंत भूम ॥३॥ सुऽउक्तेभिः वः वचःऽभिः देवऽजुष्टैः इंद्रा नु अग्नी अवसे हुवध्यै उक्थेभिः हि स्म कवयः सुऽयज्ञाः आऽविवासंतः मरुतः यजंति ॥४॥ एतो नु अद्य सुऽध्यः भवाम प्र दुच्छुनाः मिनवाम वरीयः आरे द्वेषांसि सनुतः दधाम अयाम प्रांचः यजमानं अच्छ ॥५॥२६॥ आ इत धियं कृणवाम सखायः अप या माता ऋणुत व्रजं गोः यया मनुः विशिऽशिप्रं जिगाय यया वणिक् वंकुः आप पुरीषं ॥६॥ अनूनोत् अत्र हस्तऽयतः अद्रिः आर्चन् येन दश मासः नवऽग्वाः ऋतं यती सरमा गाः अविंदत् विश्वानि सत्या अंगिराः चकार ॥७॥ विश्वे अस्याः विऽउषि माहिनायाः सं यत् गोभिः अंगिरसः नवंत उत्सः आसां परमे सधऽस्थे ऋतस्य पथा सरमा विदत् गाः ॥८॥ आ सूर्यः यातु सप्तऽअश्वः क्षेत्रं यत् अस्य उर्विया दीर्घऽयाथे रघुः श्येनः पतयत् अंधः अच्छ युवा कविः दीदयत् गोषु गच्छन् ॥९॥ आ सूर्यः अरुहत् शुक्रं अर्णः अयुक्त यत् हरितः वीतऽपृष्ठाः उद्ना न नावं अनयंत धीराः आऽशृण्वतीः आपः अर्वाक् अतिष्ठन् ॥१०॥ धियं वः अप्ऽसु दधिषे स्वःऽसां यया अतरन् दश मासः नवऽग्वाः अया धिया स्याम देवऽगोपाः अया धिया तुतुर्याम अति अंहः ॥११॥२७॥

॥ ४६ ॥ १–८ प्रतिक्षत्र आत्रेयः ॥ १–६ विश्वे देवाः । ७. ८ देवपत्न्यः ॥ १. ३–७ जगती । २. ८ त्रिष्टुप् ॥

॥४६॥ हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवं। नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुरएत ऋजु नेषति॥१॥ अग्न इंद्र वरुण मित्र देवाः शर्धः प्र यंत मारुतोत विष्णो। उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषंत ॥२॥ इंद्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः। हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥३॥ उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत्। उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वानु मंसते॥४॥ उत त्यन्नो मारुतं शर्ध आ गमद्दिविक्षयं यजतं बर्हिरासदे। बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं१ वरुणो मित्रो अर्यमा॥५॥ उत त्ये नः पर्वतासः सुशस्तयः सुदीतयो नद्य१स्त्रामणे भुवन्। भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवं॥६॥ देवानां पत्नीरुशतीरवंतु नः प्रावंतु नस्तुजये वाजसातये। याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत॥७॥ उत ग्ना व्यंतु देवपत्नीरिंद्राण्य१ग्नाय्यश्विनी राट्। आ रोदसी वरुणानी शृणोतु व्यंतु देवीर्य ऋतुर्जनीनां॥८॥२८॥२॥

---

॥ ४७ ॥ १–७ प्रतिरथ आत्रेयः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥४७॥ प्रयुंजती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयंती। आविवासंती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना॥१॥ अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिं। अनंतास उरवो विश्वतः सीं परि द्यावापृथिवी यंति पंथाः॥२॥ उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश। मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रज-

॥४६॥ हयः न विद्वान् अयुजि स्वयं धुरि तां वहामि प्रऽतरणीं अवस्युवं न अस्याः वश्मि विऽमुचं न आऽवृतं पुनः विद्वान् पथः पुरःऽएता ऋजु नेषति ॥१॥ अग्ने इंद्र वरुण मित्र देवाः शर्धः प्र यंत मारुत उत विष्णो उभा नासत्या रुद्रः अध ग्नाः पूषा भगः सरस्वती जुषंत ॥२॥ इंद्राग्नी मित्रावरुणा अदितिं स्वः० पृथिवीं द्यां मरुतः पर्वतान् अपः हुवे विष्णुं पूषणं ब्रह्मणः पतिं भगं नु शंसं सवितारं ऊतये ॥३॥ उत नः विष्णुः उत वातः अस्रिधः द्रविणःऽदाः उत सोमः मयः करत् उत ऋभवः उत राये नः अश्विना उत त्वष्टा उत विऽभ्वा अनु मंसते ॥४॥ उत त्यत् नः मारुतं शर्धः आ गमत् दिविऽक्षयं यजतं बर्हिः आऽसदे बृहस्पतिः शर्म पूषा उत नः यमत् वरूथ्यं वरुणः मित्रः अर्यमा ॥५॥ उत त्ये नः पर्वतासः सुऽशस्तयः सुऽदीतयः नद्यः त्रामणे भुवन् भगः विऽभक्ता शवसा अवसा आ गमत् उरुऽव्यचाः अदितिः श्रोतु मे हवं ॥६॥ देवानां पत्नीः उशतीः अवंतु नः प्र अवंतु नः तुजये वाजऽसातये याः पार्थिवासः याः अपां अपि व्रते ताः नः देवीः सुऽहवाः शर्म यच्छत ॥७॥ उत ग्नाः व्यंतु देवऽपत्नीः इंद्राणी अग्नायी अश्विनी राट् आ रोदसी वरुणानी शृणोतु व्यंतु देवीः यः ऋतुः जनीनां ॥८॥२८॥२॥

---

॥४७॥ प्रऽयुंजती दिवः एति ब्रुवाणा मही माता दुहितुः बोधयंती आऽविवासंती युवतिः मनीषा पितृऽभ्यः आ सदने जोहुवाना ॥१॥ अजिरासः तत्ऽअपः ईयमानाः आतस्थिऽवांसः अमृतस्य नाभिं अनंतासः उरवः विश्वतः सीं परि द्यावापृथिवी यंति पंथाः ॥२॥ उक्षा समुद्रः अरुषः सुऽपर्णः पूर्वस्य योनिं पितुः आ विवेश मध्ये दिवः निऽहितः पृश्निः अश्मा वि चक्रमे रज-

सस्मात्यंतौं ॥३॥ चत्वारं ईं बिभ्रति क्षेमयंतो दश गर्भं चरसें धापयंते । त्रिधातंवः परमा अस्य गावो दिवश्चरंति परिं सद्यो अंतान् ॥४॥ इदं वपुर्निवचनं जनासश्चरंति यन्नद्यस्तस्थुरापः । द्वे यदीं बिभृतो मातुरन्ये इहेह जाते यम्या३ सबंधू ॥५॥ वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयंति । उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यंत्यच्छं ॥६॥ तदंस्तु मित्रावरुणा तदंग्ने शं योरस्मभ्यमिदमस्तु शस्तं । अशीमहिं गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥७॥१॥

॥ ४८ ॥ १-५ प्रतिभानुरात्रेयः ॥ विश्वे देवाः ॥ जगती ॥

॥४८॥ कदु प्रियाय धाम्ने मनामहे स्वक्षत्राय स्वयशसे महे वयं । आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनीं ॥१॥ ता अंत्नत वयुनं वीरवक्षणं समान्या वृतया विश्वमा रजः । अपो अपाचीरपरा अपेजते प्र पूर्वाभिस्तिरते देवयुर्जनः ॥२॥ आ ग्रावभिरहन्येभिरक्तुभिर्वरिष्ठं वज्रमा जिघर्ति मायिनिं । शतं वा यस्य प्रचरन्त्स्वे दमें संवर्तयंतो वि च वर्तयन्नहा ॥३॥ तामस्य रीतिं परशोरिव प्रत्यनीकमख्यं भुजे अस्य वर्पसः । सचा यदि पितुमंतमिव क्षयं रत्नं दधाति भरहूतये विशे ॥४॥ स जिह्वया चतुरनीक ऋंजते चारु वसानो वरुणो यतन्नरिं । न तस्य विद्म पुरुषत्वता वयं यतो भगः सविता दाति वार्यं ॥५॥२॥

॥ ४९ ॥ १-५ प्रतिप्रभ आत्रेयः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥४९॥ देवं वो अद्य सवितारमेषे भगं च रत्नं विभजंतमायोः । आ वां नरा पुरुभुजा ववृत्यां दिवेदिवे चिदश्विना सखीयन् ॥१॥ प्रति प्रयाणमसुरस्य विद्वान्त्सूक्तैर्देवं सं-

सः पाति अंतौ ॥३॥ चत्वारः ईं बिभ्रति क्षेमऽयंतः दश गर्भं चरसे धापयंते त्रिऽधातवः परमाः अस्य गावः दिवः चरंति परि सद्यः अंतान् ॥४॥ इदं वपुः निऽवचनं जनासः चरंति यत् नद्यः तस्थुः आपः द्वे यत् ईं बिभृतः मातुः अन्ये इहऽइह जाते यम्या सऽबंधू ॥५॥ वि तन्वते धियः अस्मै अपांसि वस्त्रा पुत्राय मातरः वयंति उपऽप्रक्षे वृषणः मोदमानाः दिवः पथा वध्वः यंति अच्छ ॥६॥ तत् अस्तु मित्रावरुणा तत् अग्ने शं योः अस्मभ्यं इदं अस्तु शस्तं अशीमहि गाधं उत प्रतिऽस्थां नमः दिवे बृहते सदनाय ॥७॥१॥

---

॥४८॥ कत् ऊं प्रियाय धाम्ने मनामहे स्वऽक्षत्राय स्वऽयशसे महे वयं आऽमेन्यस्य रजसः यत् अभ्रे आ अपः वृणाना विऽतनोति मायिनी ॥१॥ ताः अत्नत वयुनं वीरऽवक्षणं समान्या वृतया विश्वं आ रजः अपो अपाचीः अपराः अप ईजते प्र पूर्वाभिः तिरते देवऽयुः जनः ॥२॥ आ ग्रावऽभिः अहन्येभिः अक्तुऽभिः वरिष्ठं वज्रं आ जिघर्ति मायिनि शतं वा यस्य प्रऽचरन् स्वे दमे संऽवर्तयंतः वि च वर्तयन् अहा ॥३॥ तां अस्य रीतिं परशोःऽइव प्रति अनीकं अख्यं भुजे अस्य वर्पसः सचा यदि पितुमंतंऽइव क्षयं रत्नं दधाति भरऽहूतये विशे ॥४॥ सः जिह्वया चतुःऽअनीकः ऋंजते चारु वसानः वरुणः यतन् अरिं न तस्य विद्म पुरुषत्वता वयं यतः भगः सविता दाति वार्यं ॥५॥२॥

---

॥४९॥ देवं वः अद्य सवितारं आ ईषे भगं च रत्नं विऽभजंतं आयोः आ वां नरा पुरुऽभुजा ववृत्यां दिवेऽदिवे चित् अश्विना सखिऽयन् ॥१॥ प्रति प्रऽयानं असुरस्य विद्वान् सुऽउक्तैः देवं स-

वितारं दुवस्य । उप ब्रुवीत नमसा विजानञ्ज्येष्ठं च रत्नं विभजंतमायोः ॥२॥ अदत्रया दयते वार्याणि पूषा भगो अदितिर्वस्त उस्रः । इंद्रो विष्णुर्वरुणो मित्रो अग्निरहानि भद्रा जनयंत दस्माः ॥३॥ तन्नो अनर्वा सविता वरूथं तत्सिंधव इषयंतो अनु ग्मन् । उप यद्वोचे अध्वरस्य होता रायः स्याम पतयो वाजरत्नाः ॥४॥ प्र ये वसुभ्य ईवदा नमो दुर्ये मित्रे वरुणे सूक्तवाचः । अवैत्वभ्वं कृणुता वरीयो दिवस्पृथिव्योरवसा मदेम ॥५॥३॥

॥ ५० ॥ १–५ स्वस्त्यात्रेयः ॥ विश्वे देवाः ॥ १–४ अनुष्टुप् । ५ पंक्तिः ॥

॥५०॥ विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यं । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे ॥१॥ ते ते देव नेतर्ये चेमाँ अनुशसे । ते राया ते ह्या३ पृचे सचेमहि सचथ्यैः ॥२॥ अतो न आ नॄनतिथीनतः पत्नीर्दशस्यत । आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः ॥३॥ यत्र वह्निरभिहितो दुद्रवद्द्रोण्यः पशुः । नृमणा वीरपस्त्योऽर्णा धीरेव सनिता ॥४॥ एष ते देव नेता रथस्पतिः शं रयिः । शं राये शं स्वस्तय इषःस्तुतो मनामहे देवस्तुतो मनामहे ॥५॥४॥

॥ ५१ ॥ १–१५ स्वस्त्यात्रेयः ॥ विश्वे देवाः ॥ १–४ गायत्री । ५–१० उष्णिक् । ११–१३ त्रिष्टुब्जगती वा । १४. १५ अनुष्टुप् ॥

॥५१॥ अग्ने सुतस्य पीतये विश्वैरूमेभिरा गहि । देवेभिर्हव्यदातये ॥१॥ ऋतधीतय आ गत सत्यधर्माणो अध्वरं । अग्नेः पिबत जिह्वया ॥२॥ विप्रेभिर्विप्र संत्य प्रातर्यावभिरा गहि । देवेभिः सोमपीतये ॥३॥ अयं सोमश्चमू सुतोऽमत्रे परि षिच्यते । प्रिय इंद्राय वायवे ॥४॥ वायवा याहि वीतये जुषाणो हव्यदातये । पिबा सुतस्यांधसो अभि प्रयः ॥५॥५॥ इंद्रश्च वायवेषां

वितारं दुवस्य उप ब्रुवीत नमसा विऽजानन् ज्येष्ठं च रत्नं विऽभजंतं आयोः ॥२॥ अदत्रऽया दयते वार्याणि पूषा भगः अदितिः वस्ते उस्रः इंद्रः विष्णुः वरुणः मित्रः अग्निः अहानि भद्रा जनयंत दस्माः ॥३॥ तत् नः अनर्वा सविता वरूथं तत् सिंधवः इषयंतः अनु ग्मन् उप यत् वोचे अध्वरस्य होता रायः स्याम पतयः वाजऽरत्नाः ॥४॥ प्र ये वसुऽभ्यः ईवत् आ नमः दुः ये मित्रे वरुणे सूक्तऽवाचः अव एतु अभ्वं कृणुत वरीयः दिवः पृथिव्योः अवसा मदेम ॥५॥३॥

॥५०॥ विश्वः देवस्य नेतुः मर्तः वुरीत सख्यं विश्वः राये इषुध्यति द्युम्नं वृणीत पुष्यसे ॥१॥ ते ते देव नेतः ये च इमान् अनुऽशसे ते राया ते हि आऽपृचे सचेमहि सचथ्यैः ॥२॥ अतः नः आ नॄन् अतिथीन् अतः पत्नीः दशस्यत आरे विश्वं पथेऽस्थां द्विषः युयोतु युयुविः ॥३॥ यत्र वह्निः अभिऽहितः दुद्रवत् द्रोण्यः पशुः नृऽमनाः वीरऽपस्त्यः अर्णा धीराऽइव सनिता ॥४॥ एषः ते देव नेतः रथःऽपतिः शं रयिः शं राये शं स्वस्तये इषःऽस्तुतः मनामहे देवऽस्तुतः मनामहे ॥५॥४॥

॥५१॥ अग्ने सुतस्य पीतये विश्वैः ऊमेभिः आ गहि देवेभिः हव्यऽदातये ॥१॥ ऋतऽधीतयः आ गत सत्यऽधर्माणः अध्वरं अग्नेः पिबत जिह्वया ॥२॥ विप्रेभिः विप्र संत्य प्रातर्यावऽभिः आ गहि देवेभिः सोमऽपीतये ॥३॥ अयं सोमः चमू सुतः अमत्रे परि सिच्यते प्रियः इंद्राय वायवे ॥४॥ वायो आ याहि वीतये जुषाणः हव्यऽदातये पिब सुतस्य अंधसः अभि प्रयः ॥५॥५॥ इंद्रः च वायो एषां

सुतानां पीतिमर्हथः । ताञ्जुषेथामरेपसावभि प्रयः ॥ ६ ॥ सुता इंद्राय वायवे सोमासो दध्याशिरः । निम्नं न यंति सिंधवोऽभि प्रयः ॥७॥ सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसा सजूः । आ याह्यग्ने अत्रिवत्सुते रण ॥८॥ सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना । आ याह्यग्ने अत्रिवत्सुते रण ॥९॥ सजूरादित्यैर्वसुभिः सजूरिंद्रेण वायुना । आ याह्यग्ने अत्रिवत्सुते रण ॥१०॥६॥ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥११॥ स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवंतु नः ॥१२॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवंत्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥१३॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इंद्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥१४॥ स्वस्ति पंथामनु चरेम सूर्याचंद्रमसाविव । पुनर्ददताघ्नता जानता सं गमेमहि ॥१५॥७॥

---

॥ ५२ ॥ १–१७ श्यावाश्व आत्रेयः ॥ मरुतः ॥ १–५. ७–१६ अनुष्टुप् । ६. १७ पंक्तिः ॥

॥५२॥ प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः । ये अद्रोघमनुष्वधं श्रवो मदंति यज्ञियाः ॥१॥ ते हि स्थिरस्य शवसः सखायः संति धृष्णुया । ते यामन्ना धृषद्विनस्त्मना पांति शश्वतः ॥२॥ ते स्पंद्रासो नोक्षणोऽति ष्कंदंति शर्वरीः । मरुतामधा महो दिवि क्षमा च मन्महे ॥३॥ मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया । विश्वे ये मानुषा युगा पांति मर्त्यं रिषः ॥४॥ अर्हंतो ये सुदानवो नरो असामिशवसः । प्र यज्ञं यज्ञियेभ्यो दिवो अर्चा

सुतानां पीतिं अर्हथः तान् जुषेथां अरेपसौ अभि प्रयः ॥६॥ सुताः इंद्राय वायवे सोमासः दधिऽआशिरः निम्नं न यंति सिंधवः अभि प्रयः ॥७॥ सऽजूः विश्वेभिः देवेभिः अश्विऽभ्यां उषसा सऽजूः आ याहि अग्ने अत्रिऽवत् सुते रण ॥८॥ सऽजूः मित्रावरुणाभ्यां सऽजूः सोमेन विष्णुना आ याहि अग्ने अत्रिऽवत् सुते रण ॥९॥ सऽजूः आदित्यैः वसुऽभिः सऽजूः इंद्रेण वायुना आ याहि अग्ने अत्रिऽवत् सुते रण ॥१०॥६॥ स्वस्ति नः मिमीतां अश्विना भगः स्वस्ति देवी अदितिः अनर्वणः स्वस्ति पूषा असुरः दधातु नः स्वस्ति द्यावापृथिवी इति सुऽचेतुना ॥११॥ स्वस्तये वायुं उप ब्रवामहै सोमं स्वस्ति भुवनस्य यः पतिः बृहस्पतिं सर्वऽगणं स्वस्तये स्वस्तये आदित्यासः भवंतु नः ॥१२॥ विश्वे देवाः नः अद्य स्वस्तये वैश्वानरः वसुः अग्निः स्वस्तये देवाः अवंतु ऋभवः स्वस्तये स्वस्ति नः रुद्रः पातु अंहसः ॥१३॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति स्वस्ति नः इंद्रः च अग्निः च स्वस्ति नः अदिते कृधि ॥१४॥ स्वस्ति पंथां अनु चरेम सूर्याचंद्रमसौऽइव पुनः ददता अघ्नता जानता सं गमेमहि ॥१५॥७॥

---

॥५२॥ प्र श्यावऽअश्व धृष्णुऽया अर्च मरुत्ऽभिः ऋक्वऽभिः ये अद्रोघं अनुऽस्वधं श्रवः मदंति यज्ञियाः ॥१॥ ते हि स्थिरस्य शवसः सखायः संति धृष्णुऽया ते यामन् आ धृषत्ऽविनः त्मना पांति शश्वतः ॥२॥ ते स्यंद्रासः न उक्षणः अति स्कंदंति शर्वरीः मरुतां अध महः दिवि क्षमा च मन्महे ॥३॥ मरुत्ऽसु वः दधीमहि स्तोमं यज्ञं च धृष्णुऽया विश्वे ये मानुषा युगा पांति मर्त्यं रिषः ॥४॥ अर्हंतः ये सुऽदानवः नरः असामिऽशवसः प्र यज्ञं यज्ञियेभ्यः दिवः अर्च

मरुद्भ्यः ॥५॥८॥ आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत। अन्वेनाँ अह विद्युतो मरुतो जझ्झतीरिव भानुरर्त त्मना दिवः ॥६॥ ये वावृधंत पार्थिवा य उरावंतरिक्ष आ। वृजने वा नदीनां सधस्थे वा महो दिवः ॥७॥ शर्धो मारुतमुच्छंस सत्यशवसमृभ्वसं। उत स्म ते शुभे नरः प्र स्यंद्रा युंजत त्मना ॥८॥ उत स्म ते परुष्ण्यामूर्णा वसत शुंध्यवः। उत पव्या रथानामद्रिं भिंदंत्योजसा ॥९॥ आपथयो विपथयोऽन्तस्पथा अनुपथाः। एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ओहते ॥१०॥९॥ अधा नरो न्योहतेऽधा नियुत ओहते। अधा पारावता इति चित्रा रूपाणि दर्श्या ॥११॥ छंदःस्तुभः कुभन्यव उत्समा कीरिणो नृतुः। ते मे के चिन्न तायव ऊमा आसन्दृशि त्विषे ॥१२॥ य ऋष्वा ऋष्टिविद्युतः कवयः संति वेधसः। तमृषे मारुतं गणं नमस्या रमया गिरा ॥१३॥ अच्छ ऋषे मारुतं गणं दाना मित्रं न योषणा। दिवो वा धृष्णव ओजसा स्तुता धीभिरिषण्यत ॥१४॥ नू मन्वान एषां देवाँ अच्छा न वक्षणा। दाना सचेत सूरिभिर्यामश्रुतेभिरंजिभिः ॥१५॥ प्र ये मे बंध्वेषे गां वोचंत सूरयः पृश्निं वोचंत मातरं। अधा पितरमिष्मिणं रुद्रं वोचंत शिक्वसः ॥१६॥ सप्त मे सप्त शाकिन एकमेका शता ददुः। यमुनायामधि श्रुतमुद्राधो गव्यं मृजे नि राधो अश्व्यं मृजे ॥१७॥१०॥

---

॥ ५३ ॥ १–१६ श्यावाश्व आत्रेयः ॥ मरुतः ॥ १. ५. १०. ११. १५ ककुप्। २ बृहती। ३ अनुष्टुप्। ४ पुरउष्णिक्। ६. ७. ९. १३. १४. १६ सतोबृहती। ८. १२ गायत्री ॥

॥५३॥ को वेद जानमेषां को वा पुरा सुम्नेष्वास मरुतां। यद्युयुज्रे किलास्यः ॥१॥ ऐतान्रथेषु तस्थुषः कः शुश्राव कथा ययुः। कस्मै सस्रुः सुदासे अन्वापय इळाभिर्वृष्टयः सह ॥२॥ ते म आहुर्य आययुरुप द्युभिर्विभिर्मदे। नरो मर्या अरे-

मरुत्ऽभ्यः ॥५॥८॥ आ रुक्मैः आ युधा नरः ऋष्वाः ऋष्टीः असृक्षत
अनु एनान् अह विऽद्युतः मरुतः जझ्झतीःऽइव भानुः अर्त त्मना
दिवः ॥६॥ ये ववृधंत पार्थिवाः ये उरौ अंतरिक्षे आ वृजने वा न-
दीनां सधऽस्थे वा महः दिवः ॥७॥ शर्धः मारुतं उत् शंस सत्यऽशव-
सं ऋभ्वसं उत स्म ते शुभे नरः प्र स्पंद्राः युजत त्मना ॥८॥ उत स्म ते
परुष्ण्यां ऊर्णाः वसत शुंध्यवः उत पव्या रथानां अद्रिं भिंदंति
ओजसा ॥९॥ आऽपथयः विऽपथयः अंतःऽपथाः अनुऽपथाः ए-
तेभिः मह्यं नामऽभिः यज्ञं विऽस्तारः ओहते ॥१०॥९॥ अध नरः नि
ओहते अध निऽयुतः ओहते अध पारावताः इति चित्रा रूपाणि
दर्श्या ॥११॥ छंदःऽस्तुभः कुभन्यवः उत्सं आ कीरिणः नृतुः ते मे के
चित् न तायवः ऊमाः आसन् दृशि त्विषे ॥१२॥ ये ऋष्वाः ऋष्टि-
ऽविद्युतः कवयः संति वेधसः तं ऋषे मारुतं गणं नमस्य रमय
गिरा ॥१३॥ अच्छ ऋषे मारुतं गणं दाना मित्रं न योषणा दिवः
वा धृष्णवः ओजसा स्तुताः धीभिः इषण्यत ॥१४॥ नु मन्वानः एषां
देवान् अच्छ न वक्षणा दाना सचेत सूरिऽभिः यामऽश्रुतेभिः
अंजिऽभिः ॥१५॥ प्र ये मे बंधुऽएषे गां वोचंत सूरयः पृश्निं वोचंत
मातरं अध पितरं इष्मिणं रुद्रं वोचंत शिक्वसः ॥१६॥ सप्त मे सप्त
शाकिनः एकंऽएका शता ददुः यमुनायां अधि श्रुतं उत् राधः
गव्यं मृजे नि राधः अश्व्यं मृजे ॥ १७ ॥ १० ॥

---

॥५३॥ कः वेद जानं एषां कः वा पुरा सुम्नेषु आस मरुतां यत्
युयुज्रे किलास्यः ॥१॥ आ एतान् रथेषु तस्थुषः कः शुश्राव कथा
ययुः कस्मै सस्रुः सुऽदासे अनु आपयः इळाभिः वृष्टयः सह ॥२॥
ते मे आहुः ये आऽययुः उप द्युऽभिः विऽभिः मदे नरः मर्याः अरे-

पस इमान्पश्यन्निति ष्टुहि ॥३॥ ये अंजिषु ये वाशीषु स्वभा-
नवः स्रक्षु रुक्मेषु खादिषु । श्राया रथेषु धन्वसु ॥४॥ युष्माकं
स्मा रथाँ अनु मुदे दधे मरुतो जीरदानवः । वृष्टी द्यावो यती-
रिव ॥५॥११॥ आ यं नरः सुदानवो ददाशुषे दिवः कोशमचु-
च्यवुः । वि पर्जन्यं सृजंति रोदसी अनु धन्वना यंति वृष्टयः ॥६॥
ततृदानाः सिंधवः क्षोदसा रजः प्र सस्रुर्धेनवो यथा । स्यन्ना
अश्वा इवाध्वनो विमोचने वि यद्वर्तंत एन्यः ॥७॥ आ यात
मरुतो दिव आंतरिक्षादमादुत । माव स्थात परावतः ॥ ८ ॥
मा वो रसानितभा कुभा क्रुमुर्मा वः सिंधुर्नि रीरमत् । मा वः
परि ष्ठात्सरयुः पुरीषिण्यस्मे इत्सुम्नमस्तु वः ॥ ९ ॥ तं वः शर्धं
रथानां त्वेषं गणं मारुतं नव्यसीनां । अनु प्र यंति वृष्टयः
॥१०॥१२॥ शर्धंशर्धं व एषां व्रातंव्रातं गणंगणं सुशस्तिभिः ।
अनु क्रामेम धीतिभिः ॥११॥ कस्मा अद्य सुजाताय रातहव्याय
प्र ययुः । एना यामेन मरुतः ॥१२॥ येन तोकाय तनयाय धा-
न्यं१ बीजं वहध्वे अक्षितं । अस्मभ्यं तद्धत्तन यद्व ईमहे राधो
विश्वायु सौभगं ॥१३॥ अतीयाम निदस्तिरः स्वस्तिभिर्हित्वा-
वद्यमरातीः । वृष्ट्वी शं योराप उस्रि भेषजं स्याम मरुतः सह
॥१४॥ सुदेवः समहासति सुवीरो नरो मरुतः स मर्त्यः । यं त्रा-
यध्वे स्याम ते ॥ १५ ॥ स्तुहि भोजान्त्स्तुवतो अस्य यामनि
रणन्गावो न यवसे । यतः पूर्वाँ इव सखीँरनु ह्वय गिरा गृणी-
हि कामिनः ॥ १६ ॥ १३ ॥

॥ ५४ ॥ १–१५ श्यावाश्व आत्रेयः ॥ मरुतः ॥ १–१३. १५ जगती । १४ त्रिष्टुप् ॥

॥५४॥ प्र शर्धाय मारुताय स्वभानव इमां वाचमनजा प-
र्वतच्युते । घर्मस्तुभे दिव आ पृष्ठयज्वने द्युम्नश्रवसे महि नृम्ण-

पर्सः इमान् पश्यन् इति स्तुहि ॥३॥ ये अंजिषु ये वाशीषु स्वऽभा-
नवः स्रक्षु रुक्मेषु खादिषु श्रायाः रथेषु धन्वऽसु ॥४॥ युष्माकं स्म
रथान् अनु मुदे दधे मरुतः जीरऽदानवः वृष्टी द्यावः यतीःऽइव
॥५॥११॥ आ यं नरः सुऽदानवः ददाशुषे दिवः कोशं अचुच्यवुः वि
पर्जन्यं सृजंति रोदसी इति अनु धन्वना यंति वृष्टयः ॥६॥ ततृदानाः
सिंधवः क्षोदसा रजः प्र सस्रुः धेनवः यथा स्यन्नाः अश्वाःऽइव अ-
ध्वनः विऽमोचने वि यत् वर्तंते एन्यः ॥७॥ आ यात मरुतः दिवः
आ अंतरिक्षात् अमात् उत मा अव स्थात परावतः ॥८॥ मा वः
रसा अनितभा कुभा क्रुमुः मा वः सिंधुः नि रीरमत् मा वः परि
स्थात् सरयुः पुरीषिणी अस्मे इति इत् सुम्नं अस्तु वः ॥९॥ तं वः शर्धं
रथानां त्वेषं गणं मारुतं नव्यसीनां अनु प्र यंति वृष्टयः ॥१०॥१२॥
शर्धंऽशर्धं वः एषां व्रातंऽव्रातं गणंऽगणं सुशस्तिऽभिः अनु क्रा-
मेम धीतिऽभिः ॥११॥ कस्मै अद्य सुऽजाताय रातऽहव्याय प्र ययुः
एना यामेन मरुतः ॥१२॥ येन तोकाय तनयाय धान्यं बीजं वहध्वे
अक्षितं अस्मभ्यं तत् धत्तन यत् वः ईमहे राधः विश्वऽआयु सौभगं
॥१३॥ अति इयाम निदः तिरः स्वस्तिऽभिः हित्वा अवद्यं अरातीः
वृष्ट्वी शं योः आपः उस्रि भेषजं स्याम मरुतः सह ॥१४॥ सुऽदेवः
समह असति सुऽवीरः नरः मरुतः सः मर्त्यः यं त्रायध्वे स्याम ते
॥१५॥ स्तुहि भोजान् स्तुवतः अस्य यामनि रणन् गावः न यवसे
यतः पूर्वान्ऽइव सखीन् अनु ह्वय गिरा गृणीहि कामिनः
॥ १६ ॥ १३ ॥

---

॥५४॥ प्र शर्धाय मारुताय स्वऽभानवे इमां वाचं अनज पर्व-
तऽच्युते घर्मऽस्तुभे दिवः आ पृष्ठऽयज्वने द्युम्नऽश्रवसे महि नृम्णं

मंर्चत ॥१॥ प्र वो मरुतस्तविषा उदन्यवो वयोवृधो अश्व-
युजः परिज्रयः । सं विद्युता दधति वाशति त्रितः स्वरंत्या-
पोऽवना परिज्रयः ॥२॥ विद्युन्महसो नरो अश्मदिद्यवो
वातत्विषो मरुतः पर्वतच्युतः । अब्दया चिन्मुहुरा ह्रादुनीवृतः
स्तनयदमा रभसा उदोजसः ॥३॥ व्य१क्तून्रुद्रा व्यहानि शिक्वसो
व्य१न्तरिक्षं वि रजांसि धूतयः । वि यदज्राँ अजथ नाव ईं
यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥४॥ तद्वीर्यं वो मरुतो
महित्वनं दीर्घं ततान सूर्यो न योजनं । एता न यामे अगृ-
भीतशोचिषोऽनश्वदां यन्न्ययातना गिरिं ॥५॥१४॥ अभ्राजि
शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः । अध
स्मा नो अरमतिं सजोषसश्चक्षुरिव यंतमनु नेषथा सुगं ॥६॥
न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति ।
नास्य राय उप दस्यंति नोतय ऋषिं वा यं राजानं वा सु-
षूदथ ॥७॥ नियुत्वंतो ग्रामजितो यथा नरोऽर्यमणो न मरुतः
कबंधिनः । पिन्वंत्युत्सं यदिनासो अस्वरन्व्युंदंति पृथिवीं
मध्वो अंधसा ॥८॥ प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौ-
र्भवति प्रयद्भ्यः । प्रवत्वतीः पथ्या अंतरिक्ष्याः प्रवत्वंतः पर्वता
जीरदानवः ॥९॥ यन्मरुतः सभरसः स्वर्णरः सूर्य उदिते मदथा
दिवो नरः । न वोऽश्वाः श्रथयंताह सिस्रतः सद्यो अस्याध्वनः
पारमश्नुथ ॥१०॥१५॥ अंसेषु व ऋष्टयः पत्सु खादयो वक्षःसु
रुक्मा मरुतो रथे शुभः । अग्निभ्राजसो विद्युतो गभस्त्योः
शिप्राः शीर्षसु वितता हिरण्ययीः ॥११॥ तं नाकमर्यो अगृ-
भीतशोचिषं रुशत्पिप्पलं मरुतो वि धूनुथ । समच्यंत वृज-
नातित्विषंत यत्स्वरंति घोषं विततमृतायवः ॥१२॥ युष्मादत्तस्य

अर्चत ॥ १ ॥ प्र वः मरुतः तविषाः उदन्यवः वयःऽवृधः अश्वऽयुजः परिऽज्रयः सं विऽद्युता दधति वाशति त्रितः स्वरंति आपः अवना परिऽज्रयः ॥ २ ॥ विद्युत्ऽमहसः नरः अश्मऽदिद्यवः वातऽत्विषः मरुतः पर्वतऽच्युतः अब्दऽया चित् मुहुः आ ह्रादुनिऽवृतः स्तनयत्ऽअमाः रभसाः उतऽओजसः ॥ ३ ॥ वि अक्तून् रुद्राः वि अहानि शिक्वसः वि अंतरिक्षं वि रजांसि धूतयः वि यत् अज्रान् अजथ नावः ईं यथा वि दुःऽगानि मरुतः न अह रिष्यथ ॥ ४ ॥ तत् वीर्यं वः मरुतः महिऽत्वनं दीर्घं ततान सूर्यः न योजनं एताः न यामे अगृभीतऽशोचिषः अनश्वऽदां यत् नि अयातन गिरिं ॥ ५ ॥ १४ ॥
अभ्राजि शर्धः मरुतः यत् अर्णसं मोषथ वृक्षं कपनाऽइव वेधसः अध स्म नः अरमतिं सऽजोषसः चक्षुःऽइव यंतं अनु नेषथ सुऽगं ॥ ६ ॥ न सः जीयते मरुतः न हन्यते न स्रेधति न व्यथते न रिष्यति न अस्य रायः उप दस्यंति न ऊतयः ऋषिं वा यं राजानं वा सुसूदथ ॥ ७ ॥ नियुत्वंतः ग्रामऽजितः यथा नरः अर्यमणः न मरुतः कबंधिनः पिन्वंति उत्सं यत् इनासः अस्वरन् वि उंदंति पृथिवीं मध्वः अंधसा ॥ ८ ॥ प्रवत्वंती इयं पृथिवी मरुत्ऽभ्यः प्रवत्वंती द्यौः भवति प्रयत्ऽभ्यः प्रवत्वंतीः पथ्याः अंतरिक्ष्याः प्रवत्वंतः पर्वताः जीरऽदानवः ॥ ९ ॥ यत् मरुतः सऽभरसः स्वःऽनरः सूर्ये उतऽइते मदथ दिवः नरः न वः अश्वाः श्रथयंत अह सिस्रतः सद्यः अस्य अध्वनः पारं अश्नुथ ॥ १० ॥ १५ ॥ अंसेषु वः ऋष्टयः पत्ऽसु खादयः वक्षःऽसु रुक्माः मरुतः रथे शुभः अग्निऽभ्राजसः विऽद्युतः गभस्त्योः शिप्राः शीर्षऽसु विऽतताः हिरण्ययीः ॥ ११ ॥ तं नाकं अर्यः अगृभीतऽशोचिषं रुशत् पिप्पलं मरुतः वि धूनुथ सं अच्यंत वृजना अतित्विषंत यत् स्वरंति घोषं विऽततं ऋतऽयवः ॥ १२ ॥ युष्माऽदत्तस्य

मरुतो विचेतसो रायः स्याम रथ्यो॒३ वयस्वतः। न यो यु॒च्छति ति॒ष्यो॒३ यथा दि॒वो॒३ऽस्मे रारंत मरुतः सह॒स्रिणं ॥१३॥ यूयं र॒यिं मरुतः स्पार्हवीरं यूयमृषिमवथ सामविप्रं। यूयमर्वंतं भरताय वाजं यूयं धत्थ राजानं श्रुष्टिमंतं ॥१४॥ तद्वो यामि द्रविणं सद्यऊतयो येना स्व१र्ण ततनाम नॄँरभि। इ॒दं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः॥१५॥१८॥

॥ ५५ ॥ १–१० श्यावाश्व आत्रेयः ॥ मरुतः ॥ १–९ जगती । १० त्रिष्टुप् ॥

॥५५॥ प्रयज्यवो मरुतो भ्राजदृष्टयो बृहद्वयो दधिरे रुक्मवक्षसः। ईयंते अश्वैः सुयमेभिराशुभिः शुभं यातामनु रथा अवृत्सत ॥१॥ स्वयं दधिध्वे तविषीं यथा विद बृहन्महांत उर्विया वि राजथ। उतांतरिक्षं ममिरे व्योजसा शुभं यातामनु रथा अवृत्सत ॥२॥ साकं जाताः सुभ्वः साकमुक्षिताः श्रिये चिदा प्रतरं वावृधुर्नरः। विरोकिणः सूर्यस्येव रश्मयः शुभं यातामनु रथा अवृत्सत ॥३॥ आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणं। उतो अस्माँ अमृतत्वे दधातन शुभं यातामनु रथा अवृत्सत ॥४॥ उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः। न वो दस्रा उप दस्यंति धेनवः शुभं यातामनु रथा अवृत्सत ॥५॥१९॥ यदश्वान्धूर्षु पृषतीरयुग्ध्वं हिरण्ययान्प्रत्यत्काँ अमुग्ध्वं। विश्वा इत्स्पृधो मरुतो व्यस्यथ शुभं यातामनु रथा अवृत्सत ॥६॥ न पर्वता न नद्यो वरंत वो यत्राचिध्वं मरुतो गच्छथेदु तत्। उत द्यावापृथिवी याथना परि शुभं यातामनु रथा अवृत्सत ॥७॥ यत्पूर्व्यं मरुतो यच्च नूतनं यदुद्यते वसवो यच्च शस्यते। विश्वस्य तस्य भवथा नवेदसः शुभं यातामनु रथा अवृत्सत ॥८॥ मृळत

मरुतः विऽचेतसः रायः स्याम रथ्यः वयस्वतः न यः युच्छति तिष्यः
यथा दिवः अस्मे रंत मरुतः सहस्रिणं ॥१३॥ यूयं रयिं मरुतः
स्पार्हऽवीरं यूयं ऋषिं अवथ सामऽविप्रं यूयं अर्वंतं भरताय
वाजं यूयं धत्थ राजानं श्रुष्टिऽमंतं ॥१४॥ तत् वः यामि द्रविणं
सद्यःऽऊतयः येन स्वः न ततनाम नॄन् अभि इदं सु मे मरुतः हर्यत
वचः यस्य तरेम तरसा शतं हिमाः ॥१५॥१६॥

---

॥५५॥ प्रऽयज्यवः मरुतः भ्राजत्ऽऋष्टयः बृहत् वयः दधिरे
रुक्मऽवक्षसः ईयंते अश्वैः सुऽयमेभिः आशुऽभिः शुभं यातां अनु
रथाः अवृत्सत ॥१॥ स्वयं दधिध्वे तविषीं यथा विद बृहत् महांतः
उर्विया वि राजथ उत अंतरिक्षं ममिरे वि ओजसा शुभं यातां
अनु रथाः अवृत्सत ॥२॥ साकं जाताः सुऽभ्वः साकं उक्षिताः श्रिये
चित् आ प्रऽतरं ववृधुः नरः विऽरोकिणः सूर्यस्यऽइव रश्मयः शुभं
यातां अनु रथाः अवृत्सत ॥३॥ आऽभूषेण्यं वः मरुतः महिऽत्वनं
दिदृक्षेण्यं सूर्यस्यऽइव चक्षणं उतो अस्मान् अमृतऽत्वे दधातन
शुभं यातां अनु रथाः अवृत्सत ॥४॥ उत् ईरयथ मरुतः समुद्रतः
यूयं वृष्टिं वर्षयथ पुरीषिणः न वः दस्राः उप दस्यंति धेनवः शुभं
यातां अनु रथाः अवृत्सत ॥५॥१७॥ यत् अश्वान् धूःऽसु पृषतीः
अयुंग्ध्वं हिरण्ययान् प्रति अत्कान् अमुंग्ध्वं विश्वाः इत् स्पृधः
मरुतः वि अस्यथ शुभं यातां अनु रथाः अवृत्सत ॥६॥ न पर्वताः
न नद्यः वरंत वः यत्र अचिध्वं मरुतः गच्छथ इत् ऊं तत् उत द्या-
वापृथिवी याथन परि शुभं यातां अनु रथाः अवृत्सत ॥७॥ यत्
पूर्व्यं मरुतः यत् च नूतनं यत् उद्यते वसवः यत् च शस्यते विश्वस्य
तस्य भवथ नवेदसः शुभं यातां अनु रथाः अवृत्सत ॥८॥ मृळत

नो मरुतो मा वधिष्टनास्मभ्यं शर्मं बहुलं वि यंतन। अधि स्तोत्रस्य सख्यस्य गातन शुभं यातामनु रथा अवृत्सत ॥९॥ यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः। जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणां ॥१०॥१८॥

॥५६॥१-९ श्यावाश्व आत्रेयः॥मरुतः॥१.२.४-६.८.९ बृहती।३.७ सतोबृहती॥

॥५६॥ अग्ने शर्धंतमा गणं पिष्टं रुक्मेभिरंजिभिः। विशो अद्य मरुतामव ह्वये दिवश्चिद्रोचनादधि ॥१॥ यथा चिन्मन्यसे हृदा तदिन्मे जग्मुराशसः। ये ते नेदिष्ठं हवनान्यागमन्तान्वर्ध भीमसंदृशः ॥२॥ मीळ्हुष्मतीव पृथिवी पराहता मदंत्येत्यस्मदा। ऋक्षो न वो मरुतः शिमीवाँ अमो दुध्रो गौरिव भीमयुः ॥३॥ नि ये रिणंत्योजसा वृथा गावो न दुर्धुरः। अश्मानं चित्स्वर्यं१ पर्वतं गिरिं प्र च्यावयंति यामभिः ॥४॥ उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानां। मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥५॥१९॥ युंग्ध्वं ह्यरुषी रथे युंग्ध्वं रथेषु रोहितः। युंग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥६॥ उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः। मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥७॥ रथं नु मारुतं वयं श्रवस्युमा हुवामहे। आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥८॥ तं वः शर्धं रथेशुभं त्वेषं पनस्युमा हुवे। यस्मिन्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥९॥२०॥४॥

॥ ५७ ॥ १-८ श्यावाश्व आत्रेयः ॥ मरुतः ॥ १-६ जगती। ७. ८ त्रिष्टुप् ॥

॥५७॥ आ रुद्रास इंद्रवंतः सजोषसो हिरण्यरथाः सुविताय गंतन। इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव

नः मरुतः मा वधिष्टन अस्मभ्यं शर्म बहुलं वि यंतन अधि स्तो-
त्रस्य सख्यस्य गातन शुभं याता अनु रथाः अवृत्सत ॥९॥ यूयं
अस्मान् नयत वस्यः अच्छ निः अंहतिऽभ्यः मरुतः गृणानाः जुष-
ध्वं नः हव्यऽदातिं यजत्राः वयं स्याम पतयः रयीणां ॥१०॥१८॥

---

॥५६॥ अग्ने शर्धंतं आ गणं पिष्टं रुक्मेभिः अंजिऽभिः विशः अद्य
मरुतां अव ह्वये दिवः चित् रोचनात् अधि ॥१॥ यथा चित् मन्यसे
हृदा तत् इत् मे जग्मुः आऽशसः ये ते नेदिष्ठं हवनानि आऽगमन्
तान् वर्ध भीमऽसंदृशः ॥२॥ मीळ्हुष्मतीऽइव पृथिवी पराऽहता
मदंती एति अस्मत् आ ऋक्षः न वः मरुतः शिमीऽवान् अमः
दुध्रः गौःऽइव भीमऽयुः ॥३॥ नि ये रिणंति ओजसा वृथा गावः न
दुःऽधुरः अश्मानं चित् स्वर्यं पर्वतं गिरिं प्र च्यवयंति यामऽभिः
॥४॥ उत् तिष्ठ नूनं एषां स्तोमैः संऽउक्षितानां मरुतां पुरुऽतमं
अपूर्व्यं गवां सर्गंऽइव ह्वये ॥५॥१९॥ युंग्ध्वं हि अरुषीः रथे युंग्ध्वं
रथेषु रोहितः युंग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वो-
ळ्हवे ॥६॥ उत स्यः वाजी अरुषः तुविऽस्वनिः इह स्म धायि
दर्शतः मा वः यामेषु मरुतः चिरं करत् प्र तं रथेषु चोदत ॥७॥ रथं
नु मारुतं वयं श्रवस्युं आ हुवामहे आ यस्मिन् तस्थौ सुऽरणानि
बिभ्रती सचा मरुत्ऽसु रोदसी ॥८॥ तं वः शर्धं रथेऽशुभं त्वेषं पन-
स्युं आ हुवे यस्मिन् सुऽजाता सुऽभगा महीयते सचा मरुत्ऽसु
मीळ्हुषी ॥९॥२०॥४॥

---

॥५७॥ आ रुद्रासः इंद्रऽवंतः सऽजोषसः हिरण्यऽरथाः सुवि-
ताय गंतन इयं वः अस्मत् प्रति हर्यते मतिः तृष्णऽजे न दिवः

उत्सा उदन्यवे ॥१॥ वाशीमंत ऋष्टिमंतो मनीषिणः सुधन्वान इषुमंतो निषंगिणः। स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभं ॥२॥ धूनुथ द्यां पर्वतान्दाशुषे वसु नि वो वना जिहते यामनो भिया। कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वं ॥३॥ वातत्विषो मरुतो वर्षनिर्णिजो यमा इव सुसदृशः सुपेशसः। पिशंगाश्वा अरुणाश्वा अरेपसः प्रत्वक्षसो महिना द्यौरिवोरवः ॥४॥ पुरुद्रप्सा अंजिमंतः सुदानवस्त्वेषसंदृशो अनवभ्रराधसः। सुजातासो जनुषा रुक्मवक्षसो दिवो अर्का अमृतं नाम भेजिरे ॥५॥२१॥ ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितं। नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे ॥६॥ गोमदश्वावद्रथवत्सुवीरं चंद्रवद्राधो मरुतो ददा नः। प्रशस्तिं नः कृणुत रुद्रियासो भक्षीय वोऽवसो दैव्यस्य ॥७॥ हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः। सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥८॥२२॥

---

॥ ५८ ॥ १–८ श्यावाश्व आत्रेयः ॥ मरुतः ॥ त्रिष्टुप् ॥

॥५८॥ तमु नूनं तविषीमंतमेषां स्तुषे गणं मारुतं नव्यसीनां। य आश्वश्वा अमवद्वहंत उतेशिरे अमृतस्य स्वराजः ॥१॥ त्वेषं गणं तवसं खादिहस्तं धुनिव्रतं मायिनं दातिवारं। मयोभुवो ये अमिता महित्वा वंदस्व विप्र तुविराधसो नॄन् ॥२॥ आ वो यंतूदवाहासो अद्य वृष्टिं ये विश्वे मरुतो जुनंति। अयं यो अग्निर्मरुतः समिद्ध एतं जुषध्वं कवयो युवानः ॥३॥ यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः। युष्मदेति मु-

उत्साः उदन्यवे ॥१॥ वाशीऽमंतः ऋष्टिऽमंतः मनीषिणः सुऽधन्वानः इषुऽमंतः निषंगिणः सुऽअश्वाः स्थ सुऽरथाः पृश्निऽमातरः सुऽआयुधाः मरुतः याथन शुभं ॥२॥ धूनुथ द्यां पर्वतान् दाशुषे वसु नि वः वना जिहते यामनः भिया कोपयथ पृथिवीं पृश्निऽमातरः शुभे यत् उग्राः पृषतीः अयुग्ध्वं ॥३॥ वातऽत्विषः मरुतः वर्षऽनिर्निजः यमाःऽइव सुऽसदृशः सुऽपेशसः पिशंगऽअश्वाः अरुणऽअश्वाः अरेपसः प्रऽत्वक्षसः महिना द्यौःऽइव उरवः ॥४॥ पुरुऽद्रप्साः अंजिऽमंतः सुऽदानवः त्वेषऽसंदृशः अनवभ्रऽराधसः सुऽजातासः जनुषा रुक्मऽवक्षसः दिवः अर्काः अमृतं नाम भेजिरे ॥५॥२१॥ ऋष्टयः वः मरुतः अंसयोः अधि सहः ओजः बाह्वोः वः बलं हितं नृम्णा शीर्षऽसु आयुधा रथेषु वः विश्वा वः श्रीः अधि तनूषु पिपिशे ॥६॥ गोऽमत् अश्वऽवत् रथऽवत् सुऽवीरं चंद्रऽवत् राधः मरुतः दद नः प्रऽशस्तिं नः कृणुत रुद्रियासः भक्षीय वः अवसः दैव्यस्य ॥७॥ हये नरः मरुतः मृळत नः तुविऽमघासः अमृताः ऋतऽज्ञाः सत्यऽश्रुतः कवयः युवानः बृहत्ऽगिरयः बृहत् उक्षमाणाः ॥८॥२२॥

---

॥५८॥ तं ऊं नूनं तविषीऽमंतं एषां स्तुषे गणं मारुतं नव्यसीनां ये आशुऽअश्वाः अमऽवत् वहंते उत ईशिरे अमृतस्य स्वऽराजः ॥१॥ त्वेषं गणं तवसं खादिऽहस्तं धुनिऽव्रतं मायिनं दातिऽवारं मयःऽभुवः ये अमिताः महिऽत्वा वंदस्व विप्र तुविऽराधसः नृन् ॥२॥ आ वः यंतु उदऽवाहासः अद्य वृष्टिं ये विश्वे मरुतः जुनंति अयं यः अग्निः मरुतः संऽइद्धः एतं जुषध्वं कवयः युवानः ॥३॥ यूयं राजानं इर्यं जनाय विभ्वऽतष्टं जनयथ यजत्राः युष्मत् एति मु-

इहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः ॥४॥ अरा इवेदचरमा अहेव प्रप्र जायन्ते अकवा महोभिः। पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः ॥५॥ यत्प्रायासिष्ट पृषतीभिरश्वैर्वीळुपविभिर्मरुतो रथेभिः। क्षोदन्त आपो रिणते वनान्यवोस्रियो वृषभः क्रन्दतु द्यौः ॥६॥ प्रथिष्ट यामन्पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः। वातान्ह्यश्वान्धुर्यायुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥७॥ हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः। सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥८॥२३॥

---

॥ ५९ ॥ १-८ श्यावाश्व आत्रेयः ॥ मरुतः ॥ १-७ जगती । ८ त्रिष्टुप् ॥

॥५९॥ प्र वः स्पळक्रन्सुविताय दावनेऽर्चा दिवे प्र पृथिव्या ऋतं भरे। उक्षन्ते अश्वान्तरुषन्त आ रजोऽनु स्वं भानुं श्रथयन्ते अर्णवैः ॥१॥ अमादेषां भियसा भूमिरेजति नौर्न पूर्णा क्षरति व्यथिर्यती। दूरेदृशो ये चितयन्त एमभिरन्तर्महे विदथे येतिरे नरः ॥२॥ गवामिव श्रियसे शृङ्गमुत्तमं सूर्यो न चक्षू रजसो विसर्जने। अत्या इव सुभ्व१श्चारवः स्थन मर्या इव श्रियसे चेतथा नरः ॥३॥ को वो महान्ति महतामुदश्नवत्कस्काव्या मरुतः को ह पौंस्या। यूयं ह भूमिं किरणं न रेजथ प्र यद्भरध्वे सुविताय दावने ॥४॥ अश्वा इवेदरुषासः सबन्धवः शूरा इव प्रयुधः प्रोत युयुधुः। मर्या इव सुवृधो वावृधुर्नरः सूर्यस्य चक्षुः प्र मिनन्ति वृष्टिभिः ॥५॥ ते अज्येष्ठा अकनिष्ठास उद्भिदोऽमध्यमासो महसा वि वावृधुः। सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन ॥६॥ वयो न ये श्रेणीः पप्तुरोजसान्तान्दिवो बृहतः सानुनस्परि। अश्वास

ष्टिऽहा बाहुऽजूतः युष्मत् सतऽअश्वः मरुतः सुऽवीरः ॥४॥ अराःऽइव इत् अचरमाः अहाऽइव प्रऽप्र जायंते अकवाः महःऽभिः पृश्नेः पुत्राः उपऽमासः रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः ॥५॥ यत् प्र अयासिष्ट पृषतीभिः अश्वैः वीळुपविऽभिः मरुतः रथेभिः क्षोदंते आपः रिणते वनानि अव उस्रियः वृषभः क्रंदतु द्यौः ॥६॥ प्रथिष्ट यामन् पृथिवी चित् एषां भर्ताऽइव गर्भं स्वं इत् शवः धुः वातान् हि अश्वान् धुरि आऽयुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥७॥ हये नरः मरुतः मृळत नः तुविऽमघासः अमृताः ऋतऽज्ञाः सत्यऽश्रुतः कवयः युवानः बृहत्ऽगिरयः बृहत् उक्षमाणाः ॥ ८ ॥ २३ ॥

---

॥५९॥ प्र वः स्पट् अक्रन् सुविताय दावने अर्च दिवे प्र पृथिव्यै ऋतं भरे उक्षंते अश्वान् तरुषंते आ रजः अनु स्वं भानुं श्रथयंते अर्णवैः ॥१॥ अमात् एषां भियसा भूमिः एजति नौः न पूर्णा क्षरति व्यथिः यती दूरेऽदृशः ये चितयंत एमऽभिः अंतः महे विदथे येतिरे नरः ॥२॥ गवांऽइव श्रियसे शृंगं उत्ऽतमं सूर्यः न चक्षुः रजसः विऽसर्जने अत्याःऽइव सुऽभ्वः चारवः स्थन मर्याःऽइव श्रियसे चेतथ नरः ॥३॥ कः वः महांति महतां उत् अश्नवत् कः काव्या मरुतः कः ह पौंस्या यूयं ह भूमिं किरणं न रेजथ प्र यत् भरध्वे सुविताय दावने ॥४॥ अश्वाःऽइव इत् अरुषासः सऽबंधवः शूराःऽइव प्रऽयुधः प्र उत युयुधुः मर्याःऽइव सुऽवृधः ववृधुः नरः सूर्यस्य चक्षुः प्र मिनंति वृष्टिऽभिः ॥५॥ ते अज्येष्ठाः अकनिष्ठासः उत्ऽभिदः अमध्यमासः महसा वि ववृधुः सुऽजातासः जनुषा पृश्निऽमातरः दिवः मर्याः आ नः अच्छ जिगातन ॥६॥ वयः न ये श्रेणीः पप्तुः ओजसा अंतान् दिवः बृहतः सानुनः परि अश्वासः

एषामुभये यथा विदुः प्र पर्वतस्य नभनूँरचुच्यवुः ॥ ७ ॥ मिमातु द्यौरदितिर्वीतये नः सं दानुचित्रा उषसो यतंतां। आचुच्यवुर्दिव्यं कोशमेत ऋषे रुद्रस्य मरुतो गृणानाः ॥ ८ ॥ २४ ॥

॥ ६० ॥ १-८ श्यावाश्व आत्रेयः॥ मरुतो मरुतोवाग्निश्च॥ १-६ त्रिष्टुप्। ७.८ जगती॥

॥ ६० ॥ ईळे अग्निं स्ववसं नमोभिरिह प्रसत्तो वि चयत्कृतं नः। रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणिन्मरुतां स्तोममृध्यां ॥ १ ॥ आ ये तस्थुः पृषतीषु श्रुतासु सुखेषु रुद्रा मरुतो रथेषु। वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद्रेजते पर्वतश्चित् ॥ २ ॥ पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः। यत्क्रीळथ मरुत ऋष्टिमंत आप इव सध्र्यंचो धवध्वे ॥ ३ ॥ वरा इवेद्रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे। श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ॥ ४ ॥ अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय। युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥ ५ ॥ यदुत्तमे मरुतो मध्यमे वा यद्वावमे सुभगासो दिवि ष्ठ। अतो नो रुद्रा उत वा न्व१स्याग्ने वित्ताद्धविषो यद्यजाम ॥ ६ ॥ अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः। ते मंदसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥ ७ ॥ अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मंदसानो गणश्रिभिः। पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ ८ ॥ २५ ॥

॥ ६१ ॥ १-१९ श्यावाश्व आत्रेयः ॥ १-४ ११-१६. मरुतः। ५-८ शशीयसी तरंतमहिषी। ९ पुरुमीळ्हो वैददश्विः। १० तरंतो वैददश्विः। १७-१९ रथवीतिर्दार्भ्यः ॥ १-४. ६-८. १०-१९ गायत्री। ५ अनुष्टुप्। ९ सतोबृहती ॥

॥ ६१ ॥ के ष्ठा नरः श्रेष्ठतमा य एकएक आयय। परमस्याः

एषां उभये यथा विदुः प्र पर्वतस्य नभनून् अचुच्यवुः ॥ ७ ॥ मिमातु द्यौः अदितिः वीतये नः सं दानुऽचित्राः उषसः यतन्तां आ अचुच्यवुः दिव्यं कोशं एते ऋषे रुद्रस्य मरुतः गृणानाः ॥ ८ ॥ २४ ॥

---

॥ ६० ॥ ईळे अग्निं सुऽअवसं नमःऽभिः इह प्रऽसत्तः वि चयत् कृतं नः रथैःऽइव प्र भरे वाजयत्ऽभिः प्रऽदक्षिणित् मरुतां स्तोमं ऋध्यां ॥ १ ॥ आ ये तस्थुः पृषतीषु श्रुतासु सुऽखेषु रुद्राः मरुतः रथेषु वना चित् उग्राः जिहते नि वः भिया पृथिवी चित् रेजते पर्वतः चित् ॥ २ ॥ पर्वतः चित् महि वृद्धः बिभाय दिवः चित् सानु रेजत स्वने वः यत् क्रीळथ मरुतः ऋष्टिऽमन्तः आपःऽइव सध्र्यंचः धवध्वे ॥ ३ ॥ वराःऽइव इत् रैवतासः हिरण्यैः अभि स्वधाभिः तन्वः पिपिश्रे श्रिये श्रेयांसः तवसः रथेषु सत्रा महांसि चक्रिरे तनूषु ॥ ४ ॥ अज्येष्ठासः अकनिष्ठासः एते सं भ्रातरः ववृधुः सौभगाय युवा पिता सुऽअपाः रुद्रः एषां सुऽदुघा पृश्निः सुऽदिना मरुत्ऽभ्यः ॥ ५ ॥ यत् उत्ऽतमे मरुतः मध्यमे वा यत् वा अवमे सुऽभगासः दिवि स्थ अतः नः रुद्राः उत वा नु अस्य अग्ने वित्तात् हविषः यत् यजाम ॥ ६ ॥ अग्निः च यत् मरुतः विश्वऽवेदसः दिवः वहध्वे उत्ऽतरात् अधि स्नुऽभिः ते मन्दसानाः धुनयः रिशादसः वामं धत्त यजमानाय सुन्वते ॥ ७ ॥ अग्ने मरुत्ऽभिः शुभयत्ऽभिः ऋक्वऽभिः सोमं पिब मन्दसानः गणश्रिऽभिः पावकेभिः विश्वंऽइन्वेभिः आयुऽभिः वैश्वानर प्रऽदिवा केतुना सऽजूः ॥ ८ ॥ २५ ॥

---

॥ ६१ ॥ के स्थ नरः श्रेष्ठऽतमाः ये एकःऽएकः आऽयय परमस्याः

परावतः॥१॥ क्व वोऽश्वाः क्वाभीशवः कथं शेक कथा यय। पृष्ठे
सदो नसोर्यमः॥२॥ जघने चोद एषां वि सक्थानि नरो यमुः। पु-
त्रकृथे न जनयः॥३॥ परा वीरास एतन मर्यासो भद्रजानयः।
अग्नितपो यथासथ॥४॥ सनत्साश्व्यं पशुमुत गव्यं शतावयं। श्यावा-
श्वस्तुताय या दोर्वीरायोपबर्बृहत्॥५॥२६॥ उत त्वा स्त्री शशी-
यसी पुंसो भवति वस्यसी। अदेवत्रादराधसः॥६॥ वि या जानाति
जसुरिं वि तृष्यंतं वि कामिनं। देवत्रा कृणुते मनः॥७॥ उत घा ने-
मो अस्तुतः पुमाँ इति ब्रुवे पणिः। स वैरदेय इत्समः॥८॥ उत मेऽर-
पद्युवतिर्ममंदुषी प्रति श्यावाय वर्तनिं। वि रोहिता पुरुमीळ्हा-
य येमतुर्विप्राय दीर्घयशसे॥९॥ यो मे धेनूनां शतं वैददश्विर्यथा द-
दत्। तरंत इव मंहना॥१०॥२७॥ य ईं वहंत आशुभिः पिबंतो मदिरं
मधु। अत्र श्रवांसि दधिरे॥११॥ येषां श्रियाधि रोदसी विभ्राजंते
रथेष्वा। दिवि रुक्म इवोपरि॥१२॥ युवा स मारुतो गणस्त्वेषरथो
अनेद्यः। शुभंयावाप्रतिष्कुतः॥१३॥ को वेद नूनमेषां यत्रा
मदंति धूतयः। ऋतजाता अरेपसः॥१४॥ यूयं मर्तं विपन्यवः
प्रणेतार इत्था धिया। श्रोतारो यामहूतिषु॥१५॥२८॥ ते नो वसूनि
काम्या पुरुश्चंद्रा रिशादसः। आ यज्ञियासो ववृत्तन॥१६॥ एतं
मे स्तोममूर्म्ये दार्भ्याय परा वह। गिरो देवि रथीरिव॥१७॥ उत मे
वोचतादिति सुतसोमे रथवीतौ। न कामो अप वेति मे॥१८॥ एष
क्षेति रथवीतिर्मघवा गोमतीरनु। पर्वतेष्वपश्रितः॥१९॥२९॥

---

॥ ६२ ॥ १-९ श्रुतविदात्रेयः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६२॥ ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचंत्य-
श्वान्। दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यं

पराऽवतः ॥१॥ क्व॑ वः अश्वाः क्व॑ अभीशवः कथं शेक कथा यय पृष्ठे
सदः नसोः यमः ॥२॥ जघने चोदः एषां वि सक्थानि नरः यमुः पु-
त्रऽकृथे न जनयः ॥३॥ परा वीरासः इतन मर्यासः भद्रऽजानयः
अग्निऽतपः यथा असथ ॥४॥ सनत् सा अश्व्यं पशुं उत गव्यं शत-
ऽअवयं श्यावाश्वऽस्तुताय या दोः वीराय उपऽबर्बृहत् ॥५॥२६॥
उत त्वा स्त्री शशीयसी पुंसः भवति वस्यसी अदेवऽत्रात् अराधसः
॥६॥ वि या जानाति जसुरिं वि तृष्यंतं वि कामिनं देवऽत्रा कृणुते
मनः ॥७॥ उत घ नेमः अस्तुतः पुमान् इति ब्रुवे पणिः सः वैरऽदेये
इत् समः ॥८॥ उत मे अरपत् युवतिः ममंदुषी प्रति श्यावाय वर्त-
निं वि रोहिता पुरुऽमीळ्हाय येमतुः विप्राय दीर्घऽयशसे ॥९॥ यः
मे धेनूनां शतं वैदत्ऽअश्विः यथा ददत् तरंतःऽइव मंहना
॥१०॥२७॥ ये ईं वहंते आशुऽभिः पिबंतः मदिरं मधु अत्र श्रवांसि
दधिरे ॥११॥ येषां श्रिया अधि रोदसी॰ विऽभ्राजंते रथेषु आ दिवि
रुक्मःऽइव उपरि ॥१२॥ युवा सः मारुतः गणः त्वेषऽरथः अनेद्यः शु-
भंऽयावा अप्रतिऽस्कुतः ॥१३॥ कः वेद नूनं एषां यत्र मदंति धूतयः
ऋतऽजाताः अरेपसः ॥१४॥ यूयं मर्तं विपन्यवः प्रऽनेतारः इत्था
धिया श्रोतारः यामऽहूतिषु ॥१५॥२८॥ ते नः वसूनि काम्या पुरु-
चंद्राः रिशादसः आ यज्ञियासः ववृत्तन ॥१६॥ एतं मे स्तोमं ऊर्म्ये
दार्भ्याय परा वह गिरः देवि रथीःऽइव ॥१७॥ उत मे वोचतात् इति
सुतऽसोमे रथऽवीतौ न कामः अप वेति मे ॥१८॥ एषः क्षेति रथ-
ऽवीतिः मघऽवा गोऽमतीः अनु पर्वतेषु अपऽश्रितः ॥१९॥२९॥

---

॥६२॥ ऋतेन ऋतं अपिऽहितं ध्रुवं वां सूर्यस्य यत्र विऽमुचंति
अश्वान् दश शता सह तस्थुः तत् एकं देवानां श्रेष्ठं वपुषां अपश्यं

॥१॥ तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहंभिर्दुदुह्रे। विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥२॥ अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः। वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥३॥ आ वामश्वासः सुयुजो वहंतु यतरश्मय उप यंत्वर्वाक्। घृतस्य निर्णिगनु वर्तते वामुप सिंधवः प्रदिवि क्षरंति ॥४॥ अनु श्रुताममतिं वर्धदुर्वी बर्हिरिव यजुषा रक्षमाणा। नमस्वंता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वंतः ॥५॥३०॥ अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वंतः। राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥६॥ हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य१श्वाजनीव। भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य ॥७॥ हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य। आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥८॥ यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा। तेन नो मित्रावरुणावविष्टं सिषासंतो जिगीवांसः स्याम ॥९॥३१॥३॥

---

॥ ६३ ॥ १-७ अर्चनाना आत्रेयः ॥ मित्रावरुणौ ॥ जगती ॥

॥६३॥ ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि। यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥१॥ सम्राजावस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा। वृष्टिं वां राधो अमृतत्वमीमहे द्यावापृथिवी वि चरंति तन्यवः ॥२॥ सम्राजा उग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी। चित्रेभिरभ्रैरुप तिष्ठथो

॥१॥ तत् सु वां मित्रावरुणा महिऽत्वं ईर्मा तस्थुषीः अहऽभिः दुदुह्रे विश्वाः पिन्वथः स्वसरस्य धेनाः अनु वां एकः पविः आ ववर्त ॥२॥ अधारयतं पृथिवीं उत द्यां मित्रऽराजाना वरुणा महःऽभिः वर्धयतं ओषधीः पिन्वतं गाः अव वृष्टिं सृजतं जीरऽदानू॰ ॥३॥ आ वां अश्वासः सुऽयुजः वहंतु यतऽरश्मयः उप यंतु अर्वाक् घृतस्य निःऽनिक् अनु वर्तते वां उप सिंधवः प्रऽदिवि क्षरंति ॥४॥ अनु श्रुतां अमतिं वर्धत् उर्वीं बर्हिःऽइव यजुषा रक्षमाणा नमस्वंता धृतऽदक्षा अधि गर्ते मित्र आसाथे वरुण इळासु अंतः॰ ॥५॥३०॥ अक्रविऽहस्ता सुऽकृते परःऽपा यं त्रासाथे वरुणा इळासु अंतः॰ राजाना क्षत्रं अहृणीयमाना सहस्रऽस्थूणं बिभृथः सह द्वौ ॥६॥ हिरण्यऽनिर्निक् अयः अस्य स्थूणा वि भ्राजते दिवि अश्वाजनीऽइव भद्रे क्षेत्रे निऽमिता तिल्विले वा सनेम मध्वः अधिऽगर्त्यस्य ॥७॥ हिरण्यऽरूपं उषसः विऽउष्टौ अयःऽस्थूणं उतऽइता सूर्यस्य आ रोहथः वरुण मित्र गर्तं अतः चक्षाथे अदितिं दितिं च ॥८॥ यत् बंहिष्ठं न अतिऽविधे सुदानू॰ अच्छिद्रं शर्म भुवनस्य गोपा तेन नः मित्रावरुणौ अविष्टं सिसासंतः जिगीवांसः स्याम ॥९॥३१॥३॥

---

॥६३॥ ऋतस्य गोपौ अधि तिष्ठथः रथं सत्यऽधर्माणा परमे विऽओमनि यं अत्र मित्रावरुणा अवथः युवं तस्मै वृष्टिः मधुऽमत् पिन्वते दिवः ॥१॥ संऽराजौ अस्य भुवनस्य राजथः मित्रावरुणा विदथे स्वःऽदृशा वृष्टिं वां राधः अमृतऽत्वं ईमहे द्यावापृथिवी वि चरंति तन्यवः ॥२॥ संऽराजौ उग्रा वृषभा दिवः पती पृथिव्याः मित्रावरुणा विऽचर्षणी॰ चित्रेभिः अभ्रैः उप तिष्ठथः

रथं द्यां वर्षयथो असुरस्य मायया ॥३॥ माया वां मित्रावरुणा
दिवि श्रिता सूर्यो ज्योतिश्चरति चित्रमायुधं । तमभ्रेण वृष्ट्या
गूहथो दिवि पर्जन्य द्रप्सा मधुमंत ईरते ॥४॥ रथं युंजते मरुतः
शुभे सुखं शूरो न मित्रावरुणा गविष्टिषु । रजांसि चित्रा वि चरं-
ति तन्यवो दिवः सम्राजा पयसा न उक्षतं ॥५॥ वाचं सु मित्रा-
वरुणाविरावतीं पर्जन्यश्चित्रां वदति त्विषीमतीं । अभ्रा वसत
मरुतः सु मायया द्यां वर्षयतमरुणामरेपसं ॥६॥ धर्मणा मित्रा-
वरुणा विपश्चिता व्रता रक्षेथे असुरस्य मायया । ऋतेन विश्वं
भुवनं वि राजथः सूर्यमा धत्थो दिवि चित्र्यं रथं ॥ ७ ॥ १ ॥

---

॥ ६४ ॥ १–७ अर्चनाना आत्रेयः ॥ मित्रावरुणौ ॥ १–६ अनुष्टुप् । ७ पंक्तिः ॥

॥६४॥ वरुणं वो रिशादसमृचा मित्रं हवामहे । परि व्र-
जेव बाह्वोर्जगन्वांसा स्वर्णरं ॥१॥ ता बाहवा सुचेतुना प्र
यंतमस्मा अर्चते । शेवं हि जार्यं वां विश्वासु क्षासु जोगुवे
॥२॥ यन्नूनमश्यां गतिं मित्रस्य यायां पथा । अस्य प्रियस्य
शर्मण्यहिंसानस्य सश्चिरे ॥३॥ युवाभ्यां मित्रावरुणोपमं धे-
यामृचा । यद्ध क्षये मघोनां स्तोतॄणां च स्पूर्धसे ॥ ४ ॥ आ नो
मित्र सुदीतिभिर्वरुणश्च सधस्थ आ । स्वे क्षये मघोनां सखी-
नां च वृधसे ॥ ५ ॥ युवं नो येषु वरुण क्षत्रं बृहच्च बिभृथः ।
उरु णो वाजसातये कृतं राये स्वस्तये ॥६॥ उच्छंत्यां मे य-
जता देवक्षत्रे रुशद्गवि । सुतं सोमं न हस्तिभिरा पड्भिर्धावतं
नरा बिभ्रतावर्चनानसं ॥ ७ ॥ २ ॥

---

॥ ६५ ॥ १–६ रातहव्य आत्रेयः ॥ मित्रावरुणौ ॥ १–५ अनुष्टुप् । ६ पंक्तिः ॥

॥६५॥ यश्चिकेत स सुक्रतुर्देवत्रा स ब्रवीतु नः । वरुणो यस्य द-
र्शतो मित्रो वा वनते गिरः ॥१॥ ता हि श्रेष्ठवर्चसा राजाना

रथं द्यां वर्षयथः असुरस्य मायया ॥३॥ माया वां मित्रावरुणा दिवि श्रिता सूर्यः ज्योतिः चरति चित्रं आयुधं तं अभ्रेण वृष्ट्या गूहथः दिवि पर्जन्य द्रप्साः मधुऽमंतः ईरते ॥४॥ रथं युंजते मरुतः शुभे सुऽखं शूरः न मित्रावरुणा गोऽइष्टिषु रजांसि चित्रा वि चरंति तन्यवः दिवः संऽराजा पयसा नः उक्षतं ॥५॥ वाचं सु मित्रावरुणौ इराऽवतीं पर्जन्यः चित्रां वदति त्विषिऽमतीं अभ्रा वसत मरुतः सु मायया द्यां वर्षयतं अरुणां अरेपसं ॥६॥ धर्मणा मित्रावरुणा विपःऽचिता व्रता रक्षेथे असुरस्य मायया ऋतेन विश्वं भुवनं वि राजथः सूर्यं आ धत्थः दिवि चित्र्यं रथं ॥७॥१॥

---

॥६४॥ वरुणं वः रिशादसं ऋचा मित्रं हवामहे परि व्रजाऽइव बाह्वोः जगन्वांसा स्वःऽनरं ॥१॥ ता बाहवा सुऽचेतुना प्र यंतं अस्मै अर्चते शेवं हि जार्यं वां विश्वासु क्षासु जोगुवे ॥२॥ यत् नूनं अश्यां गतिं मित्रस्य यायां पथा अस्य प्रियस्य शर्मणि अहिंसानस्य सश्चिरे ॥३॥ युवाभ्यां मित्रावरुणा उपऽमं धेयां ऋचा यत् ह क्षये मघोनां स्तोतॄणां च स्पूर्धसे ॥४॥ आ नः मित्र सुदीतिऽभिः वरुणः च सधऽस्थे आ स्वे क्षये मघोनां सखीनां च वृधसे ॥५॥ युवं नः येषु वरुणा क्षत्रं बृहत् च बिभृथः उरु नः वाजऽसातये कृतं राये स्वस्तये ॥६॥ उच्छंत्यां मे यजता देवऽक्षत्रे रुशत्ऽगवि सुतं सोमं न हस्तिऽभिः आ पट्ऽभिः धावतं नरा बिभ्रतौ अर्चनानसं ॥७॥२॥

---

॥६५॥ यः चिकेत सः सुऽक्रतुः देवऽत्रा सः ब्रवीतु नः वरुणः यस्य दर्शतः मित्रः वा वनंते गिरः ॥१॥ ता हि श्रेष्ठऽवर्चसा राजाना

दीर्घश्रुत्तमा। ता सत्यंती ऋतावृध ऋतावाना जनेंजने ॥२॥ ता वामियानोऽवसे पूर्वा उप ब्रुवे सचा। स्वश्वासः सु चेतुना वाजाँ अभि प्र दावने ॥३॥ मित्रो अंहोश्चिदादुरु क्षयाय गातुं वनते। मित्रस्य हि प्रतूर्वतः सुमतिरस्ति विधतः ॥४॥ वयं मित्रस्यावसि स्याम सप्रथस्तमे। अनेहसस्त्वोतयः सत्रा वरुणशेषसः ॥५॥ युवं मित्रेमं जनं यतथः सं च नयथः। मा मघोनः परि ख्यतं मो अस्माकमृषीणां गोपीथे न उरुष्यतं ॥६॥३॥

॥६६॥१–६ रातहव्य आत्रेयः॥ मित्रावरुणौ॥ अनुष्टुप्॥

॥६६॥ आ चिकितान सुक्रतू देवौ मर्त रिशादसा। वरुणाय ऋतपेशसे दधीत प्रयसे महे ॥१॥ ता हि क्षत्रमविह्रुतं सम्यगसुर्य१माशाते। अध व्रतेव मानुषं स्व१र्ण धायि दर्शतं ॥२॥ ता वामेषे रथानामुर्वीं गव्यूतिमेषां। रातहव्यस्य सुष्टुतिं दधृक्स्तोमैर्मनामहे ॥३॥ अधा हि काव्या युवं दक्षस्य पूर्भिरद्भुता। नि केतुना जनानां चिकेथे पूतदक्षसा ॥४॥ तदृतं पृथिवि बृहच्छ्रवएष ऋषीणां। जयसानावरं पृथ्वति क्षरंति यामभिः॥५॥ आ यद्वामीयचक्षसा मित्र वयं च सूरयः। व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥६॥४॥

॥६७॥१–५ यजत आत्रेयः॥ मित्रावरुणौ॥ अनुष्टुप्॥

॥६७॥ बळित्था देव निष्कृतमादित्या यजतं बृहत्। वरुण मित्रार्यमन्वर्षिष्ठं क्षत्रमाशाथे॥१॥ आ यद्योनिं हिरण्ययं वरुण मित्र सदथः। धर्तारा चर्षणीनां यंतं सुम्नं रिशादसा॥२॥ विश्वे हि विश्ववेदसो वरुणो मित्रो अर्यमा। व्रता पदेव सश्चिरे पांति मर्त्यं रिषः ॥३॥ ते हि सत्या ऋतस्पृश ऋतावानो

दीर्घश्रुत्ऽतमा ता सत्ऽपती॰ ऋतऽवृधा ऋतऽवाना जनेऽजने ॥२॥ ता वां इयानः अवसे पूर्वौ उप ब्रुवे सचा सुऽअश्वासः सु चेतुना वाजान् अभि प्र दावने ॥३॥ मित्रः अंहोः चित् आत् उरु क्षयाय गातुं वनते मित्रस्य हि प्रऽतूर्वतः सुऽमतिः अस्ति विधतः ॥४॥ वयं मित्रस्य अवसि स्याम सप्रथःऽतमे अनेहसः त्वाऽऊतयः सत्रा वरुणऽशेषसः ॥५॥ युवं मित्रा इमं जनं यतथः सं च नयथः मा मघोनः परि ख्यतं मो॰ अस्माकं ऋषीणां गोऽपीथे नः उरुष्यतं ॥ ६ ॥ ३ ॥

---

॥६६॥ आ चिकितान सुऽक्रतू॰ देवौ मर्त रिशादसा वरुणाय ऋतऽपेशसे दधीत प्रयसे महे ॥१॥ ता हि क्षत्रं अविऽहुतं सम्यक् असुर्यं आशाते॰ अध व्रताऽइव मानुषं स्वः न धायि दर्शतं ॥२॥ ता वां एषे रथानां उर्वीं गव्यूतिं एषां रातऽहव्यस्य सुऽस्तुतिं दधृक् स्तोमैः मनामहे ॥३॥ अध हि काव्या युवं दक्षस्य पूःऽभिः अद्भुता नि केतुना जनानां चिकेथे॰ पूतऽदक्षसा ॥४॥ तत् ऋतं पृथिवि बृहत् श्रवःऽएषे ऋषीणां जयसानौ अरं पृथु अति क्षरंति यामऽभिः ॥५॥ आ यत् वां ईयऽचक्षसा मित्रा वयं च सूरयः व्यचिष्ठे बहुऽपाय्ये यतेमहि स्वऽराज्ये ॥ ६ ॥ ४ ॥

---

॥६७॥ बट् इत्था देवा निःऽकृतं आदित्या यजतं बृहत् वरुण मित्र अर्यमन् वर्षिष्ठं क्षत्रं आशाथे॰ ॥१॥ आ यत् योनिं हिरण्ययं वरुण मित्र सदथः धर्तारा चर्षणीनां यंतं सुम्नं रिशादसा ॥२॥ विश्वे हि विश्वऽवेदसः वरुणः मित्रः अर्यमा व्रता पदाऽइव सश्चिरे पांति मर्त्यं रिषः ॥ ३ ॥ ते हि सत्याः ऋतऽस्पृशः ऋतऽवानः

जनेजने । सुनीथासः सुदानवोऽंहोश्चिदुरुचक्रयः ॥४॥ को नु वां मित्रास्तुतो वरुणो वा तनूनां । तत्सु वामेषते मतिरत्रिभ्य एषते मतिः ॥५॥५॥

॥ ६८ ॥ १-५ यजत आत्रेयः ॥ मित्रावरुणौ ॥ गायत्री ॥

॥६८॥ प्र वो मित्राय गायत वरुणाय विपा गिरा । महिक्षत्रावृतं बृहत् ॥१॥ सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च । देवा देवेषु प्रशस्ता ॥२॥ ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥३॥ ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धेते ॥४॥ वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशाते ॥५॥६॥

॥ ६९ ॥ १-४ उरुचक्रिरात्रेयः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६९॥ त्री रोचना वरुण त्रीँरुत द्यून्त्रीणि मित्र धारयथो रजांसि । वावृधानावमतिं क्षत्रियस्यानु व्रतं रक्षमाणावजुर्यं ॥१॥ इरावतीर्वरुण धेनवो वां मधुमद्वां सिंधवो मित्र दुह्रे । त्रयस्तस्थुर्वृषभासस्तिसृणां धिषणानां रेतोधा वि द्युमंतः ॥२॥ प्रातर्देवीमदितिं जोहवीमि मध्यंदिन उदिता सूर्यस्य । राये मित्रावरुणा सर्वतातेळे तोकाय तनयाय शं योः ॥३॥ या धर्तारा रजसो रोचनस्योतादित्या दिव्या पार्थिवस्य । न वां देवा अमृता आ मिनंति व्रतानि मित्रावरुणा ध्रुवाणि ॥४॥७॥

॥ ७० ॥ १-४ उरुचक्रिरात्रेयः ॥ मित्रावरुणौ ॥ गायत्री ॥

॥७०॥ पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वंसि वां सुमतिं ॥१॥ ता वां सम्यगद्रुह्वाणेषमश्याम धायसे । वयं ते रुद्रा स्याम ॥२॥ पातं नो रुद्रा पायुभिरुत त्रायेथां

जनेऽजने सुऽनीथासः सुऽदानवः अंहोः चित् उरुऽचक्रयः ॥४॥ कः नु वां मित्र अस्तुतः वरुणः वा तनूनां तत् सु वां आ ईषते मतिः अत्रिऽभ्यः आ ईषते मतिः ॥ ५ ॥ ५ ॥

---

॥६८॥ प्र वः मित्राय गायत वरुणाय विपा गिरा महिऽक्षत्रौ ऋतं बृहत् ॥१॥ संऽराजा या घृतऽयोनी॰ मित्रः च उभा वरुणः च देवा देवेषु प्रऽशस्ता ॥२॥ ता नः शक्तं पार्थिवस्य महः रायः दिव्यस्य महि वां क्षत्रं देवेषु ॥३॥ ऋतं ऋतेन सपंता इषिरं दक्षं आशाते॰ अद्रुहा देवौ वर्धेते॰ ॥४॥ वृष्टिऽद्यावा रीतिऽआपा इषः पती॰ दानुऽमत्याः बृहंतं गर्तं आशाते॰ ॥ ५ ॥ ६ ॥

---

॥६९॥ त्री रोचना वरुण त्रीन् उत द्यून् त्रीणि मित्र धारयथः रजांसि ववृधानौ अमतिं क्षत्रियस्य अनु व्रतं रक्षमाणौ अजुर्यं ॥१॥ इरावतीः वरुण धेनवः वां मधुऽमत् वां सिंधवः मित्र दुह्रे त्रयः तस्थुः वृषभासः तिसृणां धिषणानां रेतःऽधाः वि द्युऽमंतः ॥२॥ प्रातः देवीं अदितिं जोहवीमि मध्यंदिने उतऽइता सूर्यस्य राये मित्रावरुणा सर्वऽताता ईळे तोकाय तनयाय शं योः ॥३॥ या धर्तारा रजसः रोचनस्य उत आदित्या दिव्या पार्थिवस्य न वां देवाः अमृताः आ मिनंति व्रतानि मित्रावरुणा ध्रुवाणि ॥ ४ ॥ ७ ॥

---

॥७०॥ पुरुऽउरुणा चित् हि अस्ति अवः नूनं वां वरुण मित्र वंसि वां सुऽमतिं ॥१॥ ता वां सम्यक् अद्रुह्वाणा इषं अश्याम धायसे वयं ते रुद्रा स्याम ॥२॥ पातं नः रुद्रा पायुऽभिः उत त्रायेथां

सुषाचा। तुर्याम दस्यून्तनूभिः ॥३॥ मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः। मा शेषसा मा तनसा ॥४॥८॥

॥ ७१ ॥ १-३ बाहुवृक्त आत्रेयः ॥ मित्रावरुणौ ॥ गायत्री ॥

॥७१॥ आ नो गन्तं रिशादसा वरुण मित्र बर्हणा। उपेमं चारुमध्वरं ॥१॥ विश्वस्य हि प्रचेतसा वरुण मित्र राजथः। ईशाना पिप्यतं धियः ॥२॥ उप नः सुतमा गतं वरुण मित्र दाशुषः। अस्य सोमस्य पीतये ॥३॥९॥

॥ ७२ ॥ १-३ बाहुवृक्त आत्रेयः ॥ मित्रावरुणौ ॥ उष्णिक् ॥

॥७२॥ आ मित्रे वरुणे वयं गीर्भिर्जुहुमो अत्रिवत्। नि बर्हिषि सदतं सोमपीतये ॥१॥ व्रतेन स्थो ध्रुवक्षेमा धर्मणा यातयज्जना। नि बर्हिषि सदतं सोमपीतये ॥२॥ मित्रश्च नो वरुणश्च जुषेतां यज्ञमिष्टये। नि बर्हिषि सदतां सोमपीतये ॥३॥१०॥५॥

॥ ७३ ॥ १-१० पौर आत्रेयः ॥ अश्विनौ ॥ अनुष्टुप् ॥

॥७३॥ यदद्य स्थः परावति यदर्वावत्यश्विना। यद्वा पुरू पुरुभुजा यदन्तरिक्ष आ गतं ॥१॥ इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता। वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजे ॥२॥ ईर्मान्यद्वपुषे वपुश्चक्रं रथस्य येमथुः। पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥३॥ तदू षु वामेना कृतं विश्वा यद्वामनु ष्टवे। नाना जातावरेपसा समस्मे बन्धुमेयथुः ॥४॥ आ यद्वां सूर्या रथं तिष्ठद्रघुष्यदं सदा। परि वामरुषा वयो घृणा वरन्त आतपः ॥५॥११॥ युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा। घर्मं यद्वामरेपसं नासत्यास्ना भुरण्यति ॥६॥ उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः। यद्वां दंसोभि-

सुऽत्रात्रा तुर्याम दस्यून् तनूभिः ॥३॥ मा कस्य अद्भुतऽक्रतू॰ यक्षं भुजेम तनूभिः मा शेषसा मा तनसा ॥ ४ ॥ ८ ॥

---

॥७१॥ आ नः गंतं रिशादसा वरुण मित्र बर्हणा उप इमं चारुं अध्वरं ॥१॥ विश्वस्य हि प्रऽचेतसा वरुण मित्र राजथः ईशाना पिप्यतं धियः ॥२॥ उप नः सुतं आ गतं वरुण मित्र दाशुषः अस्य सोमस्य पीतये ॥ ३ ॥ ९ ॥

---

॥७२॥ आ मित्रे वरुणे वयं गीःऽभिः जुहुमः अत्रिऽवत् नि बर्हिषि सदतं सोमऽपीतये ॥१॥ व्रतेन स्थः ध्रुवऽक्षेमा धर्मणा यातयत्ऽजना नि बर्हिषि सदतं सोमऽपीतये ॥२॥ मित्रः च नः वरुणः च जुषेतां यज्ञं इष्टये नि बर्हिषि सदतां सोमऽपीतये ॥ ३ ॥ १० ॥ ५ ॥

---

॥७३॥ यत् अद्य स्थः पराऽवति यत् अर्वाऽवति अश्विना यत् वा पुरु पुरुऽभुजा यत् अंतरिक्षे आ गतं ॥१॥ इह त्या पुरुऽभूतमा पुरु दंसांसि बिभ्रता वरस्या यामि अध्रिऽगू॰ हुवे तुविःऽतमा भुजे ॥२॥ ईर्मा अन्यत् वपुषे वपुः चक्रं रथस्य येमथुः परि अन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥३॥ तत् ऊं॰ सु वां एना कृतं विश्वा यत् वां अनु स्तवै नाना जातौ अरेपसा सं अस्मे॰ बंधुं आ ईयथुः ॥४॥ आ यत् वां सूर्या रथं तिष्ठत् रघुऽस्यदं सदा परि वां अरुषाः वयः घृणा वरंते आऽतपः ॥५॥ ११ ॥ युवोः अत्रिः चिकेतति नरा सुम्नेन चेतसा घर्मं यत् वां अरेपसं नासत्या आस्ना भुरण्यति ॥६॥ उग्रः वां ककुहः ययिः शृण्वे यामेषु संऽतनिः यत् वां दंसःऽभिः

रश्विनाचिर्नेराववर्तति ॥७॥ मध्वं ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी। यत्समुद्राति पर्षथः पक्वाः पृक्षो भरंत वां ॥८॥ सत्यमिद्वा उ अश्विना युवामाहुर्मयोभुवा। ता यामन्यामहूतमा यामन्ना मृळयत्तमा ॥९॥ इमा ब्रह्माणि वर्धनाश्विभ्यां संतु शंतमा । या तक्षाम रथाँ इवावोचाम बृहन्नमः ॥१०॥१२॥

॥ ७४ ॥ १–१० पौर आत्रेयः ॥ अश्विनौ ॥ अनुष्टुप् ॥

॥७४॥ कूष्ठो देवावश्विनाद्या दिवो मनावसू। तच्छ्रवथो वृषण्वसू अत्रिर्वामा विवासति ॥१॥ कुह त्या कुह नु श्रुता दिवि देवा नासत्या। कस्मिन्ना यतथो जने को वां नदीनां सचा ॥२॥ कं याथः कं ह गच्छथः कमच्छा युंजाथे रथं। कस्य ब्रह्माणि रण्यथो वयं वामुश्मसीष्टये ॥३॥ पौरं चिद्ध्युदप्रुतं पौर पौराय जिन्वथः। यदीं गृभीततातये सिंहमिव द्रुहस्पदे ॥४॥ प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुंचथः। युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥५॥१३॥ अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये। नू श्रुतं म आ गतमवोभिर्वाजिनीवसू ॥६॥ को वामद्य पुरूणामा वव्ने मर्त्यानां। को विप्रो विप्रवाहसा को यज्ञैर्वाजिनीवसू॥७॥ आ वां रथो रथानां येष्ठो यात्वश्विना। पुरू चिदस्मयुस्तिर आंगूषो मर्त्येष्वा ॥८॥ शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः। अर्वाचीना विचेतसा विभिः श्येनेव दीयतं ॥९॥ अश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवं। वस्वीरू षु वां भुजः पृंचंति सु वां पृचः ॥१०॥१४॥

॥ ७५ ॥ १–९ अवस्युरात्रेयः ॥ अश्विनौ ॥ पंक्तिः ॥

॥७५॥ प्रति प्रियतमं रथं वृषणं वसुवाहनं। स्तोता वामश्वि-

अश्विना अर्चिः नरा आऽववर्तीति ॥७॥ मध्वः ऊं सु मधुऽयुवा रुद्रा सिसक्ति पिप्युषी यत् समुद्रा अति पर्षथः पक्वाः पृक्षः भरंत वां ॥८॥ सत्यं इत् वै ऊं अश्विना युवां आहुः मयःऽभुवा ता यामन् यामऽहूतमा यामन् आ मृळयत्ऽतमा ॥९॥ इमा ब्रह्माणि वर्धना अश्विऽभ्यां संतु शंऽतमा या तक्षाम रथान्ऽइव अवोचाम बृहत् नमः ॥१०॥१२॥

---

॥७४॥ कूऽस्थः देवौ अश्विना अद्य दिवः मनावसू तत् श्रवथः वृषण्ऽवसू॰ अत्रिः वां आ विवासति ॥१॥ कुह त्या कुह नु श्रुता दिवि देवा नासत्या कस्मिन् आ यतथः जने कः वां नदीनां सचा ॥२॥ कं याथः कं ह गच्छथः कं अच्छ युंजाथे रथं कस्य ब्रह्माणि रण्यथः वयं वां उश्मसि इष्टये ॥३॥ पौरं चित् हि उदऽप्रुतं पौर पौराय जिन्वथः यत् ईं गृभीतऽतातये सिंहंऽइव द्रुहः पदे ॥४॥ प्र च्यवानात् जुजुरुषः वव्रिं अत्कं न मुंचथः युवा यदि कृथः पुनः आ कामं ऋण्वे वध्वः ॥५॥१३॥ अस्ति हि वां इह स्तोता स्मसि वां संऽदृशि श्रिये नु श्रुतं मे आ गतं अवःऽभिः वाजिनीऽवसू॰ ॥६॥ कः वां अद्य पुरूणां आ वव्ने मर्त्यानां कः विप्रः विप्रऽवाहसा कः यज्ञैः वाजिनीऽवसू॰ ॥७॥ आ वां रथः रथानां येष्ठः यातु अश्विना पुरु चित् अस्मऽयुः तिरः आंगूषः मर्त्येषु आ ॥८॥ शं ऊं सु वां मधुऽयुवा अस्माकं अस्तु चर्कृतिः अर्वाचीना विऽचेतसा विऽभिः श्येनाऽइव दीयतं ॥९॥ अश्विना यत् ह कर्हि चित् शुश्रुयातं इमं हवं वस्वीः ऊं सु वां भुजः पृंचंति सु वां पृचः ॥१०॥१४॥

---

॥७५॥ प्रति प्रियऽतमं रथं वृषणं वसुऽवाहनं स्तोता वां अश्वि-

नावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवं ॥१॥ अत्यायातमश्विना तिरो विश्वा अहं सना। दस्रा हिरण्यवर्तनी सुषुम्ना सिंधुवाहसा माध्वी मम श्रुतं हवं ॥२॥ आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवं। रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवं ॥३॥ सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता। उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवं ॥४॥ बोधिन्मनसा रथ्येषिरा हवनश्रुता। विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवं ॥५॥१५॥ आ वां नरा मनोयुजोऽश्वासः प्रुषितप्सवः। वयो वहंतु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवं ॥६॥ अश्विनावेह गच्छतं नासत्या मा वि वेनतं। तिरश्चिदर्ययया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवं ॥७॥ अस्मिन्यज्ञे अदाभ्या जरितारं शुभस्पती। अवस्युमश्विना युवं गृणंतमुप भूषथो माध्वी मम श्रुतं हवं ॥८॥ अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः। अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवं ॥९॥१६॥

---

॥७६॥ १-५ अत्रिः॥ अश्विनौ॥ त्रिष्टुप्॥

॥ ७६ ॥ आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः। अर्वाचा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥१॥ न संस्कृतं प्र मिमीतो गमिष्ठांति नूनमश्विनोपस्तुतेह। दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥२॥ उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य। दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥३॥ इदं हि वां प्रदिवि स्थानमोक

नौ ऋषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवं ॥१॥ अति-ऽआयातं अश्विना तिरः विश्वाः अहं सना दस्रा हिरण्यऽवर्तनी॰ सुऽमुम्ना सिंधुऽवाहसा माध्वी मम श्रुतं हवं ॥२॥ आ नः रत्नानि बिभ्रतौ अश्विना गच्छतं युवं रुद्रा हिरण्यऽवर्तनी॰ जुषाणा वाजिनीऽवसू॰ माध्वी मम श्रुतं हवं ॥३॥ सुऽस्तुभः वां वृषण्ऽवसू॰ रथे वाणीची आऽहिता उत वां ककुहः मृगः पृक्षः कृणोति वापुषः माध्वी मम श्रुतं हवं ॥४॥ बोधित्ऽमनसा रथ्या इषिरा हवनऽश्रुता विऽभिः च्यवानं अश्विना नि याथः अद्वयाविनं माध्वी मम श्रुतं हवं ॥५॥१५॥ आ वां नरा मनःऽयुजः अश्वासः प्रुषितऽप्सवः वयः वहंतु पीतये सह सुम्नेभिः अश्विना माध्वी मम श्रुतं हवं ॥६॥ अश्विनौ आ इह गच्छतं नासत्या मा वि वेनतं तिरःचित् अर्यऽया परि वर्तिः यातं अदाभ्या माध्वी मम श्रुतं हवं ॥७॥ अस्मिन् यज्ञे अदाभ्या जरितारं शुभः पती अवस्युं अश्विना युवं गृणंतं उप भूषथः माध्वी मम श्रुतं हवं ॥८॥ अभूत् उषाः रुशत्ऽपशुः आ अग्निः अधायि ऋत्वियः अयोजि वां वृषण्ऽवसू॰ रथः दस्रौ अमर्त्यः माध्वी मम श्रुतं हवं ॥९॥१६॥

---

॥७६॥ आ भाति अग्निः उषसां अनीकं उत् विप्राणां देवऽयाः वाचः अस्थुः अर्वाचा नूनं रथ्या इह यातं पीपिऽवांसं अश्विना घर्मं अच्छ ॥१॥ न संस्कृतं प्र मिमीतः गमिष्ठा अंति नूनं अश्विना उपऽस्तुता इह दिवा अभिऽपित्वे अवसा आऽगमिष्ठा प्रति अवर्तिं दाशुषे शंऽभविष्ठा ॥२॥ उत आ यातं संऽगवे प्रातः अह्नः मध्यंदिने उत्ऽइता सूर्यस्य दिवा नक्तं अवसा शंऽतमेन न इदानीं पीतिः अश्विना आ ततान ॥३॥ इदं हि वां प्रऽदिवि स्थानं ओकः

इमे गृहा अश्विनेदं दुरोणं। आ नो दिवो बृहतः पर्वतादाऽद्भ्यो यातमिषमूर्जं वहन्ता ॥४॥ समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम। आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥१७॥

॥७७॥ १-५ अत्रिः॥ अश्विनौ॥ त्रिष्टुप्॥

॥७७॥ प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः। प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥१॥ प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टं। उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥२॥ हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वां। मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥३॥ यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे। स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥४॥ समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम। आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥५॥१८॥

॥७८॥ १-९ सप्तवध्रिरात्रेयः॥ अश्विनौ॥ १-३ उष्णिक्॥ ४ त्रिष्टुप्। ५-९ अनुष्टुप्॥

॥७८॥ अश्विनावेह गच्छतं नासत्या मा वि वेनतं। हंसाविव पततमा सुताँ उप ॥१॥ अश्विना हरिणाविव गौराविवानु यवसं। हंसाविव पततमा सुताँ उप ॥२॥ अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये। हंसाविव पततमा सुताँ उप ॥३॥ अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा। श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥४॥१९॥ वि जिहीष्व वनस्पते योनिः सूष्यन्त्या इव। श्रुतं मे अ-

इमे गृहाः अश्विना इदं दुरोणं आ नः दिवः बृहतः पर्वतात् आ
अत्ऽभ्यः यातं इषं ऊर्जं वहंता ॥४॥ सं अश्विनोः अवसा नूतनेन
मयःऽभुवा सुऽप्रनीती गमेम आ नः रयिं वहतं आ उत वीरान्
आ विश्वानि अमृता सौभगानि ॥ ५ ॥ १७ ॥

---

॥७७॥ प्रातःऽयावाना प्रथमा यजध्वं पुरा गृध्रात् अररुषः पि-
बातः प्रातः हि यज्ञं अश्विना दधाते प्र शंसंति कवयः पूर्वऽभाजः
॥१॥ प्रातः यजध्वं अश्विना हिनोत न सायं अस्ति देवऽयाः अजुष्टं
उत अन्यः अस्मत् यजते वि च आवः पूर्वःऽपूर्वः यजमानः व-
नीयान् ॥२॥ हिरण्यऽत्वक् मधुऽवर्णः घृतऽस्नुः पृक्षः वहन् आ
रथः वर्तते वां मनःऽजवाः अश्विना वातऽरंहाः येन अतिऽयाथः
दुःऽइतानि विश्वा ॥३॥ यः भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पि-
त्वः ररते विऽभागे सः तोकं अस्य पीपरत् शमीभिः अनूर्ध्वऽभासः
सदं इत् तुतुर्यात् ॥४॥ सं अश्विनोः अवसा नूतनेन मयःऽभुवा सु-
ऽप्रनीती गमेम आ नः रयिं वहतं आ उत वीरान् आ विश्वानि
अमृता सौभगानि ॥ ५ ॥ १८ ॥

---

॥७८॥ अश्विनौ आ इह गच्छतं नासत्या मा वि वेनतं हंसौऽइव
पततं आ सुतान् उप ॥१॥ अश्विना हरिणौऽइव गौरौऽइव अनु
यवसं हंसौऽइव पततं आ सुतान् उप ॥२॥ अश्विना वाजिनीऽव-
सू॰ जुषेथां यज्ञं इष्टये हंसौऽइव पततं आ सुतान् उप ॥३॥ अत्रिः
यत् वां अवऽरोहन् ऋबीसं अजोहवीत् माधमानाऽइव योषा
श्येनस्य चित् जवसा नूतनेन आ अगच्छतं अश्विना शंऽतमेन
॥४॥ १९॥ वि जिहीष्व वनस्पते योनिः सूष्यंत्याःऽइव श्रुतं मे अ-

श्विना हवं सप्तवध्रिं च मुंचतं ॥५॥ भीताय नाधमानाय
ऋषये सप्तवध्रये। मायाभिरश्विना युवं वृक्षं सं च वि चा-
चथः ॥६॥ यथा वातः पुष्करिणीं समिंगयति सर्वतः। एवा
ते गर्भ एजतु निरैतु दशमास्यः ॥७॥ यथा वातो यथा वनं
यथा समुद्र एजति। एवा त्वं दशमास्य सहावेहि जरायुणा
॥८॥ दश मासाञ्छशयानः कुमारो अधि मातरि। निरैतु जीवो
अक्षतो जीवो जीवंत्या अधि ॥९॥२०॥

---

॥ ७९ ॥ १-१० सत्यश्रवा आत्रेयः ॥ उषाः ॥ पंक्तिः ॥

॥७९॥ महे नो अद्य बोधयोषो राये दिवित्मती। यथा
चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥१॥
या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः। सा व्युच्छ सहीं-
यसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥२॥ सा नो अ-
द्याभरद्वसुर्व्युच्छा दुहितर्दिवः। यो व्यौच्छः सहीयसि सत्यश्र-
वसि वाय्ये सुजाते अश्वसूनृते ॥३॥ अभि ये त्वा विभावरि
स्तोमैर्गृणंति वह्नयः। मघैर्मघोनि सुश्रियो दामन्वंतः सुरा-
तयः सुजाते अश्वसूनृते ॥४॥ यच्चिद्धि ते गणा इमे छदयंति
मघत्तये। परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अ-
श्वसूनृते ॥५॥२१॥ ऐषु धा वीरवद्यश उषो मघोनि सूरिषु।
ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृते
॥६॥ तेभ्यो द्युम्नं बृहद्यश उषो मघोन्या वह। ये नो राधां-
स्यश्व्या गव्या भजंत सूरयः सुजाते अश्वसूनृते ॥७॥ उत नो
गोमतीरिष आ वहा दुहितर्दिवः। साकं सूर्यस्य रश्मिभिः
शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृते ॥८॥ व्युच्छा दुहि-
तर्दिवो मा चिरं तनुथा अपः। नेत्त्वा स्तेनं यथा रिपुं

श्विना हवं सप्तऽवध्रिं च मुंचतं ॥५॥ भीताय नाधमानाय ऋषये
सप्तऽवध्रये मायाभिः अश्विना युवं वृक्षं सं च वि च अचथः ॥६॥
यथा वातः पुष्करिणीं संऽइंगयति सर्वतः एव ते गर्भः एजतु निः-
ऽएतु दशऽमास्यः ॥७॥ यथा वातः यथा वनं यथा समुद्रः एजति
एव त्वं दशऽमास्य सह अव इहि जरायुणा ॥८॥ दश मासान् श-
शयानः कुमारः अधि मातरि निःऽएतु जीवः अक्षतः जीवः जी-
वंत्याः अधि ॥ ९ ॥ २० ॥

---

॥७९॥ महे नः अद्य बोधय उषः राये दिवित्मती यथा चित् नः
अबोधयः सत्यऽश्रवसि वाय्ये सुऽजाते अश्वऽसूनृते ॥१॥ या सु-
ऽनीथे शौचत्ऽरथे वि औच्छः दुहितः दिवः सा वि उच्छ सहीय-
सि सत्यऽश्रवसि वाय्ये सुऽजाते अश्वऽसूनृते ॥२॥ सा नः अद्य
आभरत्ऽवसुः वि उच्छ दुहितः दिवः यो इति वि औच्छः सहीयसि
सत्यऽश्रवसि वाय्ये सुऽजाते अश्वऽसूनृते ॥३॥ अभि ये त्वा विभा-
ऽवरि स्तोमैः गृणंति वह्नयः मघैः मघोनि सुऽश्रियः दामन्ऽवंतः
सुऽरातयः सुऽजाते अश्वऽसूनृते ॥४॥ यत् चित् हि ते गणाः इमे
छदयंति मघत्तये परि चित् वष्टयः दधुः ददतः राधः अह्रयं सुऽजाते
अश्वऽसूनृते ॥५॥२१॥ आ एषु धाः वीरऽवत् यशः उषः मघोनि
सूरिषु ये नः राधांसि अह्रया मघऽवानः अरासत सुऽजाते अश्व-
ऽसूनृते ॥६॥ तेभ्यः द्युम्नं बृहत् यशः उषः मघोनि आ वह ये नः
राधांसि अश्व्या गव्या भजंत सूरयः सुऽजाते अश्वऽसूनृते ॥७॥ उत
नः गोऽमतीः इषः आ वह दुहितः दिवः साकं सूर्यस्य रश्मिऽभिः
शुक्रैः शोचत्ऽभिः अर्चिऽभिः सुऽजाते अश्वऽसूनृते ॥८॥ वि उच्छ
दुहितः दिवः मा चिरं तनुथाः अपः न इत् त्वा स्तेनं यथा रिपुं

तपाति सूरो अर्चिषा सुजाते अश्वसूनृते ॥९॥ एतावद्वेदु-षस्त्वं भूयो वा दातुमर्हसि । या स्तोतृभ्यो विभावर्युच्छंती न प्रमीयसे सुजाते अश्वसूनृते ॥ १० ॥ २२ ॥

॥ ८० ॥ १-६ सत्यश्रवा आत्रेयः ॥ उषाः ॥ त्रिष्टुप् ॥

॥८०॥ द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभा-तीं । देवीमुषसं स्वरावहंतीं प्रति विप्रासो मतिभिर्जरंते ॥१॥ एषा जनं दर्शता बोधयंती सुगान्पथः कृण्वती यात्यग्रे । बृ-हद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नां ॥२॥ एषा गोभिररुणेभिर्युजानास्रेधंती रयिमप्रायु चक्रे । पथो रदंती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥३॥ एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् । ऋतस्य पंथामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥४॥ एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् । अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥ ५॥ एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः । व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्यो-तिर्युवतिः पूर्वथाकः ॥ ६ ॥ २३ ॥

॥ ८१ ॥ १-५ श्यावाश्व आत्रेयः ॥ सविता ॥ जगती ॥

॥८१॥ युंजते मन उत युंजते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवि-तुः परिष्टुतिः ॥१॥ विश्वा रूपाणि प्रति मुंचते कविः प्रासा-वीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥२॥ यस्य प्रयाणमन्वन्य इद्ययुर्दे-वा देवस्य महिमानमोजसा । यः पार्थिवानि विममे स ए-

भ्राति सूरः अर्चिषा सुऽजाते अश्वऽसूनृते ॥९॥ एतावत् वा इत् उषः त्वं भूयः वा दातुं अर्हसि या स्तोतृऽभ्यः विभाऽवरि उच्छंती न प्रऽमीयसे सुऽजाते अश्वऽसूनृते ॥ १० ॥ २२ ॥

---

॥ ८० ॥ द्युतत्ऽयामानं बृहतीं ऋतेन ऋतऽवरीं अरुणऽप्सुं विऽभातीं देवीं उषसं स्वः आऽवहंतीं प्रति विप्रासः मतिऽभिः जरंते ॥१॥ एषा जनं दर्शता बोधयंती सुऽगान् पथः कृण्वती याति अग्रे बृहत्ऽरथा बृहती विश्वंऽइन्वा उषाः ज्योतिः यच्छति अग्रे अह्नां ॥२॥ एषा गोभिः अरुणेभिः युजाना अस्रेधंती रयिं अप्रऽआयु चक्रे पथः रदंती सुविताय देवी पुरुऽस्तुता विश्वऽवारा वि भाति ॥३॥ एषा विऽएनी भवति द्विऽबर्हाः आविःऽकृण्वाना तन्वं पुरस्तात् ऋतस्य पंथां अनु एति साधु प्रजानतीऽइव न दिशः मिनाति ॥४॥ एषा शुभ्रा न तन्वः विदाना ऊर्ध्वाऽइव स्नाती दृशये नः अस्थात् अप द्वेषः बाधमाना तमांसि उषाः दिवः दुहिता ज्योतिषा आ अगात् ॥५॥ एषा प्रतीची दुहिता दिवः नॄन् योषाऽइव भद्रा नि रिणीते अप्सः विऽऊर्ण्वती दाशुषे वार्याणि पुनः ज्योतिः युवतिः पूर्वऽथा अकः॰ ॥ ६ ॥ २३ ॥

---

॥८१॥ युंजते मनः उत युंजते धियः विप्राः विप्रस्य बृहतः विपःऽचितः वि होत्राः दधे वयुनऽवित् एकः इत् मही देवस्य सवितुः परिऽस्तुतिः ॥१॥ विश्वा रूपाणि प्रति मुंचते कविः प्र असावीत् भद्रं द्विऽपदे चतुःऽपदे वि नाकं अख्यत् सविता वरेण्यः अनु प्रऽयानं उषसः वि राजति ॥ २ ॥ यस्य प्रऽयानं अनु अन्ये इत् ययुः देवाः देवस्य महिमानं ओजसा यः पार्थिवानि विऽममे सः ए-

तंशो रजांसि देवः सविता महित्वना ॥३॥ उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि। उत रात्रीमुभयतः परीयस उत मित्रो भवसि देव धर्मभिः ॥४॥ उतेशिषे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः। उतेदं विश्वं भुवनं वि राजसि श्यावाश्वस्ते सवितः स्तोममानशे ॥५॥२४॥

॥८२॥ १–९ श्यावाश्व आत्रेयः॥ सविता॥ १ अनुष्टुप्। २–९ गायत्री॥

॥८२॥ तत्सवितुर्वृणीमहे वयं देवस्य भोजनं। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥१॥ अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियं। न मिनंति स्वराज्यं ॥२॥ स हि रत्नानि दाशुषे सुवाति सविता भगः। तं भागं चित्रमीमहे ॥३॥ अद्या नो देव सवितः प्रजावत्सावीः सौभगं। परा दुःष्वप्न्यं सुव ॥४॥ विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव ॥५॥२५॥ अनागसो अदितये देवस्य सवितुः सवे। विश्वा वामानि धीमहि ॥६॥ आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे। सत्यसवं सवितारं ॥७॥ य इमे उभे अहनी पुर एत्यप्रयुच्छन्। स्वाधीर्देवः सविता ॥८॥ य इमा विश्वा जातान्याश्रावयति श्लोकेन। प्र च सुवाति सविता ॥९॥२६॥

॥८३॥ १–१० अत्रिः॥ पर्जन्यः॥ १. ५–८. १० त्रिष्टुप्। २–४ जगती। ९ अनुष्टुप्॥

॥८३॥ अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास। कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भं ॥१॥ वि वृक्षान् हंत्युत हंति रक्षसो विश्वं बिभाय भुवनं महावधात्। उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हंति दुष्कृतः ॥२॥ रथीव कशयाश्वाँ अभिक्षिपन्ना-

तंशः रजांसि देवः सविता महिऽत्वना ॥३॥ उत यासि सवितः॰ त्रीणि रोचना उत सूर्यस्य रश्मिऽभिः सं उच्यसि उत रात्रीं उभ-यतः परि ईयसे उत मित्रः भवसि देव धर्मऽभिः ॥४॥ उत ईशिषे प्रऽसवस्य त्वं एकः इत् उत पूषा भवसि देव यामऽभिः उत इदं विश्वं भुवनं वि राजसि श्यावऽअश्वः ते सवितः॰ स्तोमं आनशे ॥ ५ ॥ २४ ॥

---

॥८२॥ तत् सवितुः वृणीमहे वयं देवस्य भोजनं श्रेष्ठं सर्वऽधा-तमं तुरं भगस्य धीमहि ॥१॥ अस्य हि स्वयशःऽतरं सवितुः कत् चन प्रियं न मिनंति स्वऽराज्यं ॥२॥ सः हि रत्नानि दाशुषे सुवाति सविता भगः तं भागं चित्रं ईमहे ॥३॥ अद्य नः देव सवितः॰ प्र-जाऽवत् सावीः सौभगं परा दुःऽस्वप्न्यं सुव ॥४॥ विश्वानि देव सवितः दुःऽइतानि परा सुव यत् भद्रं तत् नः आ सुव ॥५॥२५॥ अ-नागसः अदितये देवस्य सवितुः सवे विश्वा वामानि धीमहि ॥६॥ आ विश्वऽदेवं सत्ऽपतिं सुऽउक्तैः अद्य वृणीमहे सत्यऽसवं सवितारं ॥७॥ यः इमे॰ उभे॰ अहनी॰ पुरः एति अप्रऽयुच्छन् सु-ऽआधीः देवः सविता ॥८॥ यः इमा विश्वा जातानि आऽश्रवयति श्लोकेन प्र च सुवाति सविता ॥ ९ ॥ २६ ॥

---

॥८३॥ अच्छ वद तवसं गीःऽभिः आभिः स्तुहि पर्जन्यं नमसा आ विवास कनिक्रदत् वृषभः जीरऽदानुः रेतः दधाति ओषधीषु गर्भं ॥१॥ वि वृक्षान् हंति उत हंति रक्षसः विश्वं बिभाय भुवनं म-हाऽवधात् उत अनागाः ईषते वृष्ण्यऽवतः यत् पर्जन्यः स्तनयन् हंति दुःऽकृतः ॥२॥ रथीऽइव कशया अश्वान् अभिऽक्षिपन् आ-

विर्दूतान्कृणुते वर्ष्याँ३ अह । दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः ॥३॥ प्र वाता वांति पतयंति विद्युत उदोषधीर्जिहते पिन्वते स्वः । इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥४॥ यस्य व्रते पृथिवी नंनमीति यस्य व्रते शफवज्जर्भुरीति । यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥५॥२७॥ दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिंचन्नसुरः पिता नः ॥६॥ अभि क्रंद स्तनय गर्भमा धा उदन्वता परि दीया रथेन । दृतिं सु कर्ष विषितं न्यंचं समा भवंतूद्वतो निपादाः ॥७॥ महांतं कोशमुदचा नि षिंच स्यंदंतां कुल्या विषिताः पुरस्तात् । घृतेन द्यावापृथिवी व्युंधि सुप्रपाणं भवत्वघ्न्याभ्यः ॥८॥ यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृतः । प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥९॥ अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ । अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषां ॥१०॥२८॥

---

॥ ८४ ॥ १–३ अत्रिः ॥ पृथिवी ॥ अनुष्टुप् ॥

॥८४॥ बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥१॥ स्तोमासस्त्वा विचारिणि प्रति ष्टोभंत्यक्तुभिः । प्र या वाजं न हेषंतं पेरुमस्यस्यर्जुनि ॥२॥ दृळ्हा चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योजसा । यत्ते अभ्रस्य विद्युतो दिवो वर्षंति वृष्टयः ॥३॥२९॥

---

॥ ८५ ॥ १–८ अत्रिः ॥ वरुणः ॥ त्रिष्टुप् ॥

॥८५॥ प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।

विः दूतान् कृणुते वर्ष्यान् अहं दूरात् सिंहस्य स्तनथाः उत् ईरते
यत् पर्जन्यः कृणुते वर्ष्यं नभः ॥३॥ प्र वाताः वान्ति पतयन्ति वि-
ऽद्युतः उत् ओषधीः जिहते पिन्वते स्वः॰ इरा विश्वस्मै भुवनाय
जायते यत् पर्जन्यः पृथिवीं रेतसा अवति ॥४॥ यस्य व्रते पृथिवी
नंनमीति यस्य व्रते शफऽवत् जर्भुरीति यस्य व्रते ओषधीः विश्व-
ऽरूपाः सः नः पर्जन्य महि शर्म यच्छ ॥५॥२७॥ दिवः नः वृष्टिं मरुतः
ररीध्वं प्र पिन्वत वृष्णः अश्वस्य धाराः अर्वाङ् एतेन स्तनयित्नुना
आ इहि अपः निऽसिंचन् असुरः पिता नः ॥६॥ अभि क्रंद स्तनय
गर्भं आ धाः उदन्ऽवता परि दीय रथेन दृतिं सु कर्ष विऽसितं
न्यंचं समाः भवंतु उतऽवतः निऽपादाः ॥७॥ महांतं कोशं उत् अच
नि सिंच स्यंदंतां कुल्याः विऽसिताः पुरस्तात् घृतेन द्यावापृथि-
वी' वि उंधि सुऽप्रपानं भवतु अघ्न्याभ्यः ॥८॥ यत् पर्जन्य कनि-
क्रदत् स्तनयन् हंसि दुःऽकृतः प्रति इदं विश्वं मोदते यत् किं च
पृथिव्यां अधि ॥९॥ अवर्षीः वर्षं उत् ऊं' सु गृभाय अकः धन्वानि
अतिऽएतवै ऊं' अजीजनः ओषधीः भोजनाय कं उत प्रऽजाभ्यः
अविदः मनीषां ॥ १० ॥ २८ ॥

---

॥८४॥ बट् इत्था पर्वतानां खिद्रं बिभर्षि पृथिवि प्र या भूमिं
प्रवत्वति मह्ना जिनोषि महिनि ॥१॥ स्तोमासः त्वा विऽचारिणि
प्रति स्तोभंति अक्तुऽभिः प्र या वाजं न हेषंतं पेरुं अस्यसि अर्जुनि
॥२॥ दृळ्हा चित् या वनस्पतीन् क्ष्मया दर्धर्षि ओजसा यत् ते अ-
भ्रस्य विऽद्युतः दिवः वर्षंति वृष्टयः ॥ ३ ॥ २९ ॥

---

॥८५॥ प्र संऽराजे बृहत् अर्च गभीरं ब्रह्म प्रियं वरुणाय श्रुताय

वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ १ ॥ वनेषु व्यं१तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात्सोममद्रौ ॥ २ ॥ नीचीनवारं वरुणः कवंधं प्र ससर्ज रोदसी अंतरिक्षं । तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३ ॥ उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् । समभ्रेण वसत पर्वतासस्तविषीयंतः श्रथयंत वीराः ॥ ४ ॥ इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचं । मानेनेव तस्थिवाँ अंतरिक्षे वि यो ममे पृथिवीं सूर्येण ॥ ५ ॥ ३० ॥ इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष । एकं यदुद्ना न पृणंत्येनीरासिंचंतीरवनयः समुद्रं ॥ ६ ॥ अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा । वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥ ७ ॥ कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म । सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥ ८ ॥ ३१ ॥

---

॥ ८६ ॥ १–६ अत्रिः ॥ इंद्राग्नी ॥ १–५ अनुष्टुप् । ६ विराट्पूर्वा ॥

॥ ८६ ॥ इंद्राग्नी यमवथ उभा वाजेषु मर्त्यं । दृळ्हा चित्स प्र भेदति द्युम्ना वाणीरिव त्रितः ॥ १ ॥ या पृतनासु दुष्टरा या वाजेषु श्रवाय्या । या पंच चर्षणीरभींद्राग्नी ता हवामहे ॥ २ ॥ तयोरिदमवच्छवस्तिग्मा दिद्युन्मघोनोः । प्रति द्रुणा गभस्त्योर्गवां वृत्रघ्न एषते ॥ ३ ॥ ता वामेषे रथानामिंद्राग्नी हवामहे । पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ॥ ४ ॥ ता वृधंतावनु द्यून्मर्ताय देवावदभा । अर्हंता चित्पुरो दधेऽशेव देवा-

वि यः जघान शमिताऽइव चर्म उपऽस्तिरे पृथिवीं सूर्याय ॥१॥ वनेषु वि अंतरिक्षं ततान वाजं अर्वत्ऽसु पयः उस्रियासु हृत्ऽसु क्रतुं वरुणः अप्ऽसु अग्निं दिवि सूर्यं अदधात् सोमं अद्रौ ॥२॥ नीचीनऽबारं वरुणः कवंधं प्र ससर्ज रोदसी अंतरिक्षं तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिः वि उनत्ति भूम ॥३॥ उनत्ति भूमिं पृथिवीं उत द्यां यदा दुग्धं वरुणः वष्टि आत् इत् सं अभ्रेण वसत पर्वतासः तविषीऽयंतः श्रथयंत वीराः ॥४॥ इमां ऊं सु आसुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचं मानेनऽइव तस्थिऽवान् अंतरिक्षे वि यः ममे पृथिवीं सूर्येण ॥५॥३०॥ इमां ऊं नु कविऽतमस्य मायां महीं देवस्य नकिः आ दधर्ष एकं यत् उद्ना न पृणंति एनीः आऽसिंचंतीः अवनयः समुद्रं ॥६॥ अर्यम्यं वरुण मित्र्यं वा सखायं वा सदं इत् भ्रातरं वा वेशं वा नित्यं वरुण अरणं वा यत् सीं आगः चकृम शिश्रथः तत् ॥७॥ कितवासः यत् रिरिपुः न दीवि यत् वा घ सत्यं उत यत् न विद्म सर्वा ता वि स्य शिथिराऽइव देव अध ते स्याम वरुण प्रियासः ॥ ८ ॥ ३१ ॥

---

॥८६॥ इंद्राग्नी यं अवथः उभा वाजेषु मर्त्यं दृळ्हा चित् सः प्र भेदति द्युम्ना वाणीःऽइव त्रितः ॥१॥ या पृतनासु दुस्तरा या वाजेषु श्रवाय्या या पंच चर्षणीः अभि इंद्राग्नी ता हवामहे ॥२॥ तयोः इत् अमऽवत् शवः तिग्मा दिद्युत् मघोनोः प्रति द्रुणा गभस्त्योः गवां वृत्रऽघ्ने आ ईषते ॥३॥ ता वां एषे रथानां इंद्राग्नी हवामहे पती तुरस्य राधसः विद्वांसा गिर्वणःऽतमा ॥४॥ ता वृधंतौ अनु द्यून् मर्ताय देवौ अदभा अर्हंता चित् पुरः दधे अंशाऽइव देवौ

धर्वते ॥५॥ एवेंद्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः। ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतं ॥६॥३२॥

॥८७॥१-९ एवयामरुदात्रेयः॥ मरुतः॥ अतिजगती॥

॥८७॥ प्र वो महे मतयो यंतु विष्णवे मरुत्वते गिरिजा एवयामरुत्। प्र शर्धाय प्रयज्यवे सुखादये तवसे भंददिष्टये धुनिव्रताय शवसे ॥१॥ प्र ये जाता महिना ये च नु स्वयं प्र विद्मना ब्रुवत एवयामरुत्। क्रत्वा तद्वो मरुतो नाधृषे शवो दाना मह्ना तदेषामधृष्टासो नाद्रयः ॥२॥ प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत्। न येषामिरी सधस्थ ईष्ट आँ अग्नयो न स्वविद्युतः प्र स्यंद्रासो धुनीनां ॥३॥ स चक्रमे महतो निरुरुक्रमः समानस्मात्सदस एवयामरुत्। यदायुक्त त्मना स्वादधि ष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥४॥ स्वनो न वोऽमवान्रेजयद्वृषा त्वेषो ययिस्तविष एवयामरुत्। येना सहंत ऋंजत स्वरोचिषः स्थारश्मानो हिरण्ययाः स्वायुधास इष्मिणः ॥५॥३३॥ अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽवत्वेवयामरुत्। स्थातारो हि प्रसितौ संदृशि स्थन ते न उरुष्यता निदः शुशुक्वांसो नाग्नयः ॥६॥ ते रुद्रासः सुमखा अग्नयो यथा तुविद्युम्ना अवंत्वेवयामरुत्। दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महः शर्धांस्यद्भुतैनसां ॥७॥ अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत्। विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो३ न दंसनाप द्वेषांसि सनुतः ॥८॥ गंता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत्। ज्येष्ठासो न

अर्वंति ॥५॥ एव इंद्राग्निऽभ्यां अहावि हव्यं शूष्यं घृतं न पूतं अद्रिऽभिः ता सूरिषु श्रवः बृहत् रयिं गृणत्ऽसु दिधृतं इषं गृणत्ऽसु दिधृतं ॥ ६ ॥ ३२ ॥

---

॥८७॥ प्र वः महे मतयः यंतु विष्णवे मरुत्वते गिरिऽजाः एवयामरुत् प्र शर्धाय प्रऽयज्यवे सुऽखादये तवसे भंदत्ऽइष्टये धुनिऽव्रताय शवसे ॥ १ ॥ प्र ये जाताः महिना ये च नु स्वयं प्र विद्मना ब्रुवते एवयामरुत् क्रत्वा तत् वः मरुतः न आऽधृषे शवः दाना मह्ना तत् एषां अधृष्टासः न अद्रयः ॥ २ ॥ प्र ये दिवः बृहतः शृण्विरे गिरा सुऽशुक्वानः सुऽभ्वः एवयामरुत् न येषां इरी सधऽस्थे ईष्टे आ अग्नयः न स्वऽविद्युतः प्र स्यंद्रासः धुनीनां ॥ ३ ॥ सः चक्रमे महतः निः उरुऽक्रमः समानस्मात् सदसः एवयामरुत् यदा अयुक्त त्मना स्वात् अधि स्नुऽभिः विऽस्पर्धसः विऽमहसः जिगाति शेऽवृधः नृऽभिः ॥ ४ ॥ स्वनः न वः अमऽवान् रेजयत् वृषा त्वेषः ययिः तविषः एवयामरुत् येन सहंतः ऋंजत स्वऽरोचिषः स्थाःऽरश्मानः हिरण्ययाः सुऽआयुधासः इष्मिणः ॥ ५ ॥ ३३ ॥ अपारः वः महिमा वृद्धऽशवसः त्वेषं शवः अवतु एवयामरुत् स्थातारः हि प्रऽसितौ संऽदृशि स्थन ते नः उरुष्यत निदः शुशुक्वांसः न अग्नयः ॥ ६ ॥ ते रुद्रासः सुऽमखाः अग्नयः यथा तुविऽद्युम्नाः अवंतु एवयामरुत् दीर्घं पृथु पप्रथे सद्म पार्थिवं येषां अज्मेषु आ महः शर्धांसि अद्भुतऽएनसां ॥ ७ ॥ अद्वेषः नः मरुतः गातुं आ इतन श्रोत हवं जरितुः एवयामरुत् विष्णोः महः सऽमन्यवः युयोतन स्मत् रथ्यः न दंसना अप द्वेषांसि सनुतः ॥ ८ ॥ गंत नः यज्ञं यज्ञियाः सुऽशमि श्रोत हवं अरक्षः एवयामरुत् ज्येष्ठासः न

पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥ ९ ॥ ३४ ॥ ६ ॥ ५ ॥

॥ इति पंचमं मंडलं समाप्तं ॥

---

॥ १ ॥ १–१३ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१॥ त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता । त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥१॥ अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् । तं त्वा नरः प्रथमं देवयंतो महो राये चितयंतो अनु ग्मन् ॥२॥ वृतेव यंतं बहुभिर्वसव्यै३स्त्वे रयिं जागृवांसो अनु ग्मन् । रुशंतमग्निं दर्शतं बृहंतं वपावंतं विश्वहा दीदिवांसं ॥३॥ पदं देवस्य नमसा व्यंतः श्रवस्यवः श्रव आपन्नमृक्तं । नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयंत संदृष्टौ ॥४॥ त्वां वर्धंति क्षितयः पृथिव्यां त्वां राय उभयासो जनानां । त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणां ॥५॥३५॥ सपर्येण्यः स प्रियो विक्ष्व१ग्निर्होता मंद्रो नि षसादा यजीयान् । तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥६॥ तं त्वा वयं सुध्यो३ नव्यमग्ने सुम्नायव ईमहे देवयंतः । त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ ७ ॥ विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनां । प्रेतीषणिमिषयंतं पावकं राजंतमग्निं यजतं रयीणां ॥ ८ ॥ सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिं । य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः ॥९॥ अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः । वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ

पर्वतासः विऽओमनि यूयं तस्य प्रऽचेतसः स्यात दुःऽधर्तवः निदः ॥ ९ ॥ ३४ ॥ ६ ॥ ५ ॥

॥ इति पंचमं मंडलं समाप्तं ॥

---

॥१॥ त्वं हि अग्ने प्रथमः मनोता अस्याः धियः अभवः दस्म होता त्वं सीं वृषन् अकृणोः दुस्तरीतु सहः विश्वस्मै सहसे सहध्यै ॥१॥ अध होता नि असीदः यजीयान् इळः पदे इषयन् ईड्यः सन् तं त्वा नरः प्रथमं देवऽयंतः महः राये चितयंतः अनु ग्मन् ॥२॥ वृताऽइव यंतं बहुऽभिः वसव्यैः त्वे रयिं जागृऽवांसः अनु ग्मन् रुशंतं अग्निं दर्शतं बृहंतं वपाऽवंतं विश्वहा दीदिऽवांसं ॥३॥ पदं देवस्य नमसा व्यंतः श्रवस्यवः श्रवः आपन् अमृक्तं नामानि चित् दधिरे यज्ञियानि भद्रायां ते रणयंत संऽदृष्टौ ॥४॥ त्वां वर्धंति क्षितयः पृथिव्यां त्वां रायः उभयासः जनानां त्वं त्राता तरणे चेत्यः भूः पिता माता सदं इत् मानुषाणां ॥५॥३५॥ सपर्येण्यः सः प्रियः विक्षु अग्निः होता मंद्रः नि ससाद यजीयान् तं त्वा वयं दमे आ दीदिऽवांसं उप ज्ञुऽबाधः नमसा सदेम ॥६॥ तं त्वा वयं सुऽध्यः नव्यं अग्ने सुम्नऽयवः ईमहे देवऽयंतः त्वं विशः अनयः दीद्यानः दिवः अग्ने बृहता रोचनेन ॥७॥ विशां कविं विश्पतिं शश्वतीनां निऽतोशनं वृषभं चर्षणीनां प्रेतिऽइषणिं इषयंतं पावकं राजंतं अग्निं यजतं रयीणां ॥८॥ सः अग्ने ईजे शशमे च मर्तः यः ते आनट् संऽइधा हव्यऽदातिं यः आऽहुतिं परि वेद नमःऽभिः विश्वा इत् सः वामा दधते त्वाऽऊतः ॥९॥ अस्मै ऊं इति ते महि महे विधेम नमःऽभिः अग्ने संऽइधा उत हव्यैः वेदी सूनो इति सहसः गीःऽभिः उक्थैः आ ते भद्रायां सुऽमतौ

यतेम ॥१०॥ आ यस्ततंथ रोदसी वि भासा श्रवोभिश्च श्रवस्य१-
स्तरुत्रः । बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भा-
हि ॥११॥ नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि संतु ॥१२॥
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्यां । पुरूणि
हि त्वे पुरुवार संत्यग्ने वसु विधते राजनि त्वे ॥१३॥३६॥४॥

---

॥ २ ॥ १–११ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ १–१० अनुष्टुप् । ११ शक्वरी ॥

॥२॥ त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे । त्वं विचर्षणे श्रवो
वसो पुष्टिं न पुष्यसि ॥१॥ त्वां हि ष्मा चर्षणयो यज्ञेभिर्गी-
र्भिरीळते । त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥२॥ स-
जोषस्त्वा दिवो नरो यज्ञस्य केतुमिंधते । यद्ध स्य मानुषो जनः
सुम्नायुर्जुह्वे अध्वरे ॥३॥ ऋधद्यस्ते सुदानवे धिया मर्तः शशमते ।
ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥४॥ समिधा यस्त
आहुतिं निशितिं मर्त्यो नशत् । वयावंतं स पुष्यति क्षयमग्ने
शतायुषं ॥५॥१॥ त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥६॥ अधा हि वि-
क्ष्वीड्योऽसि प्रियो नो अतिथिः । रण्वः पुरीव जूर्यः सूनुर्न
त्रययाय्यः ॥७॥ क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः ।
परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः ॥८॥ त्वं त्वा चिद-
च्युताग्ने पशुर्न यवसे । धामा ह यत्ते अजर वना वृश्चंति शिक्वसः
॥९॥ वेषि ह्यध्वरीयतामग्ने होता दमे विशां । समृधो विश्पते
कृणु जुषस्व हव्यमंगिरः ॥१०॥ अच्छा नो मित्रमहो देव देवा-
नग्ने वोचः सुमतिं रोदस्योः । वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्वि-
षो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥११॥२॥

यतेम ॥१०॥ आ यः ततंथ रोदसी इति वि भासा श्रवःऽभिः च श्रवस्यः तरुत्रः बृहत्ऽभिः वाजैः स्थविरेभिः अस्मे रेवत्ऽभिः अग्ने विऽतर वि भाहि ॥११॥ नृऽवत् वसो इति सदं इत् धेहि अस्मे इति भूरि तोकाय तनयाय पश्वः पूर्वीः इषः बृहतीः आरेऽअघाः अस्मे इति भद्रा सौश्रवसानि संतु ॥१२॥ पुरूणि अग्ने पुरुधा त्वाऽया वसूनि राजन् वसुता ते अश्यां पुरूणि हि त्वे इति पुरुऽवार संति अग्ने वसु विधते राजनि त्वे इति ॥ १३ ॥ ३६ ॥ ४ ॥

---

॥२॥ त्वं हि क्षैतऽवत् यशः अग्ने मित्रः न पत्यसे त्वं विऽचर्षणे श्रवः वसो इति पुष्टिं न पुष्यसि ॥१॥ त्वां हि स्म चर्षणयः यज्ञेभिः गीःऽभिः ईळते त्वां वाजी याति अवृकः रजःऽतूः विश्वऽचर्षणिः ॥२॥ सऽजोषः त्वा दिवः नरः यज्ञस्य केतुं इंधते यत् ह स्यः मानुषः जनः सुम्नऽयुः जुह्वे अध्वरे ॥३॥ ऋधत् यः ते सुऽदानवे धिया मर्तः शशमते ऊती सः बृहतः दिवः द्विषः अंहः न तरति ॥४॥ संऽइधा यः ते आऽहुतिं निऽशितिं मर्त्यः नशत् वयाऽवंतं सः पुष्यति क्षयं अग्ने शतऽआयुषं ॥५॥१॥ त्वेषः ते धूमः ऋण्वति दिवि सन् शुक्रः आऽततः सूरः न हि द्युता त्वं कृपा पावक रोचसे ॥६॥ अध हि विक्षु ईड्यः असि प्रियः नः अतिथिः रण्वः पुरिऽइव जूर्यः सूनुः न त्रययाय्यः ॥७॥ क्रत्वा हि द्रोणे अज्यसे अग्ने वाजी न कृत्व्यः परिज्माऽइव स्वधा गयः अत्यः न ह्वार्यः शिशुः ॥८॥ त्वं त्या चित् अच्युता अग्ने पशुः न यवसे धाम ह यत् ते अजर वना वृश्चंति शिक्वसः ॥९॥ वेषि हि अध्वरिऽयतां अग्ने होता दमे विशां संऽऋधः विश्पते कृणु जुषस्व हव्यं अंगिरः ॥१०॥ अच्छ नः मित्रऽमहः देव देवान् अग्ने वोचः सुऽमतिं रोदस्योः वीहि स्वस्तिं सुऽक्षितिं दिवः नॄन् द्विषः अंहांसि दुःऽइता तरेम ता तरेम तव अवसा तरेम ॥ ११ ॥ २ ॥

॥ ३ ॥ १-८ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥३॥ अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे। यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ १ ॥ ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश। एवा चन तं यशसामजुष्टिर्नाहो मर्तं नशते न प्रदृप्तिः ॥२॥ सूरो न यस्य दृशतिररेपा भीमा यदेति शुचतस्त आ धीः। हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः ॥ ३ ॥ तिग्मं चिदेम महि वर्पो अस्य भसदश्वो न यमसान आसा। विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥४॥ स इदस्तेव प्रति धादसिष्यञ्छिशीत तेजोऽयसो न धाराम्। चित्रध्रजतिररतिर्यो अक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥५॥३॥ स ईं रेभो न प्रति वस्त उस्राः शोचिषा रारपीति मित्रमहाः। नक्तं य ईमरुषो यो दिवा नॄनमर्त्यो अरुषो यो दिवा नॄन् ॥ ६ ॥ दिवो न यस्य विधतो नवीनोद्वृषा रुक्ष ओषधीषु नूनोत्। घृणा न यो ध्रजसा पत्मना यन्ना रोदसी वसुना दं सुपत्नी ॥७॥ धायोभिर्वा यो युज्येभिरर्कैर्विद्युन्न दविद्योत्स्वेभिः शुष्मैः। शर्धो वा यो मरुतां ततक्ष ऋभुर्न त्वेषो रभसानो अद्यौत् ॥ ८ ॥ ४ ॥

---

॥ ४ ॥ १-८ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥४॥ यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि। एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान् ॥१॥ स नो विभावा चक्षणिर्न वस्तोरग्निर्वन्दारु वेद्यश्चनो धात्। विश्वायुर्यो अमृतो मर्त्येषूषर्भुद्भूदतिथिर्जातवेदाः ॥२॥ द्यावो न यस्य पनयन्त्यभ्वं भासांसि वस्ते सूर्यो न शुक्रः। वि य इनोत्यजरः पावकोऽश्नस्य चिच्छिश्नथत्पू-

॥३॥ अग्ने सः क्षेषत् ऋतऽपाः ऋतेऽजाः उरु ज्योतिः नशते देवऽयुः ते यं त्वं मित्रेण वरुणः सऽजोषाः देव पासि त्यजसा मर्तं अंहः ॥१॥ ईजे यज्ञेभिः शशमे शमीभिः ऋधत्ऽवाराय अग्नये द-दाश एव चन तं यशसां अजुष्टिः न अंहः मर्तं नशते न प्रऽदृप्तिः ॥२॥ सूरः न यस्य दृशतिः अरेपाः भीमा यत् एति शुचतः ते आ धीः हेषस्वतः शुरुधः न अयं अक्तोः कुत्र चित् रण्वः वसतिः वनेऽजाः ॥३॥ तिग्मं चित् एम महि वर्पः अस्य भसत् अश्वः न यमसानः आसा विऽजेहमानः परशुः न जिह्वां द्रविः न द्रवयति दारु धक्षत् ॥४॥ सः इत् अस्ताऽइव प्रति धात् असिष्यन् शिशीत तेजः अयसः न धारां चित्रऽध्रजतिः अरतिः यः अक्तोः वेः न द्रुऽसद्वा रघुपत्म-ऽजंहाः ॥५॥३॥ सः ईं रेभः न प्रति वस्ते उस्राः शोचिषा रारपीति मित्रऽमहाः नक्तं यः ईं अरुषः यः दिवा नॄन् अमर्त्यः अरुषः यः दि-वा नॄन् ॥६॥ दिवः न यस्य विधतः नवीनोत् वृषा रुक्षः ओषधीषु नूनोत् घृणा न यः ध्रजसा पत्मना यन् आ रोदसी' वसुना दं सु-ऽपत्नीं° ॥७॥ धायःऽभिः वा यः युज्येभिः अर्कैः विऽद्युत् न दवि-द्योत् स्वेभिः शुष्मैः शर्धः वा यः मरुतां ततक्ष ऋभुः न त्वेषः रभ-सानः अद्यौत् ॥ ८ ॥ ४ ॥

---

॥४॥ यथा होतः मनुषः देवऽताता यज्ञेभिः सूनो' सहसः यजा-सि एव नः अद्य समना समानान् उशन् अग्ने उशतः यक्षि देवान् ॥१॥ सः नः विभाऽवा चक्षणिः न वस्तोः अग्निः वंदारु वेद्यः चनः धात् विश्वऽआयुः यः अमृतः मर्त्येषु उषःऽभुत् भूत् अतिथिः जा-तऽवेदाः ॥२॥ द्यावः न यस्य पनयंति अभ्वं भासांसि वस्ते सूर्यः न शुक्रः वि यः इनोति अजरः पावकः अश्नस्य चित् शिश्नथत् पू-

र्व्याणि ॥ ३ ॥ वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषा-ज्मान्नं । स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यंतः ॥४॥ नितिक्ति यो वारणमन्नमत्ति वायुर्न राष्ट्र्यत्येत्यक्तून् । तुर्याम यस्त आदिशामरातीरत्यो न ह्रुतः पततः परिह्रुत् ॥५॥५॥ आ सूर्यो न भानुमद्भिरर्कैरग्ने ततंथ रोदसी वि भासा । चित्रो नयत्परि तमांस्यक्तः शोचिषा पत्मन्नौशिजो न दीयन् ॥ ६ ॥ त्वां हि मंद्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने । इंद्रं न त्वा शवसा देवता वायुं पृणंति राधसा नृतमाः ॥७॥ नू नो अग्ने-ऽवृकेभिः स्वस्ति वेषि रायः पथिभिः पर्ष्यंहः । ता सूरिभ्यो गृणते रासि सुम्नं मदेम शतहिमाः सुवीराः ॥ ८ ॥ ६ ॥

---

॥५॥ १–७ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥५॥ हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठं । य इन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो अध्रुक् ॥१॥ त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः । क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥२॥ त्वं विक्षु प्रदिवः सीद आसु क्रत्वा रथीरभवो वार्याणां । अत इनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥३॥ यो नः सनुत्यो अभिदासदग्ने यो अंतरो मित्रमहो वनुष्यात् । तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥४॥ यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत् । स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥५॥ स तत्कृधीषितस्तूयमग्ने स्पृधो बाधस्व सहसा सहस्वान् । यच्छस्यसे द्युभिरक्तो वचोभिस्तज्जुषस्व जरितुर्घोषि

व्योणिं ॥३॥ वद्मा हि सूनो असि अद्मऽसद्वा चक्रे अग्निः जनुषा
अज्म अन्नं सः त्वं नः ऊर्जऽसने ऊर्जं धाः राजाऽइव जेः अवृके क्षे-
षि अंतरिति ॥४॥ निऽतिक्ति यः वारणं अन्नं अत्ति वायुः न राष्ट्री अति
एति अक्तून् तुर्याम यः ते आऽदिशां अरातीः अत्यः न ह्रुतः पततः
परिऽह्रुत् ॥५॥५॥ आ सूर्यः न भानुमत्ऽभिः अर्कैः अग्ने ततंथ रो-
दसी विभासा चित्रः नयत् परि तमांसि अक्तः शोचिषा पत्मन्
औशिजः न दीयन् ॥६॥ त्वां हि मंद्रऽतमं अर्कऽशोकैः ववृमहे म-
हि नः श्रोषि अग्ने इंद्रं न त्वा शवसा देवता वायुं पृणंति राधसा
नृऽतमाः ॥७॥ नु नः अग्ने अवृकेभिः स्वस्ति वेषि रायः पथिऽभिः
पर्षि अंहः ता सूरिऽभ्यः गृणते रासि सुम्नं मदेम शतऽहिमाः सु-
ऽवीराः ॥८॥६॥

---

॥५॥ हुवे वः सूनुं सहसः युवानं अद्रोघऽवाचं मतिऽभिः यविष्ठं
यः इन्वति द्रविणानि प्रऽचेताः विश्वऽवाराणि पुरुऽवारः अध्रुक्
॥१॥ त्वे वसूनि पुरुऽअनीक होतः दोषा वस्तोः आ ईरिरे यज्ञि-
यासः क्षामऽइव विश्वा भुवनानि यस्मिन् सं सौभगानि दधिरे
पावके ॥२॥ त्वं विक्षु प्रऽदिवः सीदः आसु क्रत्वा रथीः अभवः वा-
र्याणां अतः इनोषि विधते चिकित्वः वि आनुषक् जातऽवेदः
वसूनि ॥३॥ यः नः सनुत्यः अभिऽदासत् अग्ने यः अंतरः मित्रऽमहः
वनुष्यात् तं अजरेभिः वृषऽभिः तव स्वैः तप तपिष्ठ तपसा तप-
स्वान् ॥४॥ यः ते यज्ञेन संऽइधा यः उक्थैः अर्केभिः सूनो सहसः
ददाशत् सः मर्त्येषु अमृत प्रऽचेताः राया द्युम्नेन श्रवसा वि भाति
॥५॥ सः तत् कृधि इषितः तूयं अग्ने स्पृधः बाधस्व सहसा सहस्वान्
यत् शस्यसे द्युऽभिः अक्तः वचःऽभिः तत् जुषस्व जरितुः घोषि

मन्म ॥६॥ अश्याम तं काममग्ने तवोती अश्याम रयिं रयिवः सुवीरं। अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥७॥७॥

॥६॥ १–७ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥६॥ प्र नव्यसा सहसः सूनुमच्छा यज्ञेन गातुमव इच्छमानः। वृश्चद्वनं कृष्णयामं रुशन्तं वीती होतारं दिव्यं जिगाति ॥१॥ स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः। यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन् ॥२॥ वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ॥३॥ ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति विषितासो अश्वाः। अध भ्रमस्त उर्विया वि भाति यातयमानो अधि सानु पृश्नेः ॥४॥ अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना। शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥५॥ आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततन्थ। स बाधस्वाप भया सहोभिः स्पृधो वनुष्यन्वनुषो नि जूर्व ॥६॥ स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम्। चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥७॥८॥

॥७॥ १–७ भरद्वाजो बार्हस्पत्यः ॥ वैश्वानरः ॥ १–५ त्रिष्टुप्। ६. ७ जगती ॥

॥७॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥१॥ नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त। वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥२॥ त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो अभिमातिषाहः। वै-

मन्म॥६॥ अश्याम तं कामं अग्ने तव ऊती अश्याम रयिं रयिऽवः सुऽवीरं अश्याम वाजं अभि वाजयंतः अश्याम द्युम्नं अजर अजरं ते ॥ ७ ॥ ७ ॥

---

॥६॥ प्र नव्यसा सहसः सूनुं अच्छ यज्ञेन गातुं अवः इच्छमानः वृश्चत्ऽवनं कृष्णऽयामं रुशंतं वीती होतारं दिव्यं जिगाति॥१॥ सः श्वितानः तन्यतुः रोचनऽस्थाः अजरेभिः नानदत्ऽभिः यविष्ठः यः पावकः पुरुऽतमः पुरूणि पृथूनि अग्निः अनुऽयाति भर्वन्॥२॥ वि ते विष्वक् वातऽजूतासः अग्ने भामासः शुचे शुचयः चरंति तुविऽम्रक्षासः दिव्याः नवऽग्वाः वना वनंति धृषता रुजंतः॥३॥ ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपंति विऽसितासः अश्वाः अध भ्रमः ते उर्विया वि भाति यातयमानः अधि सानु पृश्नेः॥४॥ अध जिह्वा पापतीति प्र वृष्णः गोषुऽयुधः न अशनिः सृजाना शूरस्यऽइव प्रऽसितिः क्षातिः अग्नेः दुःऽवर्तुः भीमः दयते वनानि ॥५॥ आ भानुना पार्थिवानि ज्रयांसि महः तोदस्य धृषता ततंथ सः बाधस्व अप भया सहःऽभिः स्पृधः वनुष्यन् वनुषः नि जूर्व ॥६॥ सः चित्र चित्रं चितयंतं अस्मे चित्रऽक्षत्र चित्रऽतमं वयःऽधां चंद्रं रयिं पुरुऽवीरं बृहंतं चंद्र चंद्राभिः गृणते युवस्व॥७॥८॥

---

॥७॥ मूर्धानं दिवः अरतिं पृथिव्याः वैश्वानरं ऋते आ जातं अग्निं कविं संऽराजं अतिथिं जनानां आसन् आ पात्रं जनयंत देवाः॥१॥ नाभिं यज्ञानां सदनं रयीणां महां आऽहावं अभि सं नवंत वैश्वानरं रथ्यं अध्वराणां यज्ञस्य केतुं जनयंत देवाः ॥२॥ त्वत् विप्रः जायते वाजी अग्ने त्वत् वीरासः अभिमातिऽसहः वै-

श्वानर त्वमस्मासु धेहि वसूनि राजन्त्स्पृहयाय्याणि ॥३॥ त्वां
विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवंते । तव
क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥४॥ वैश्वानर तव
तानि व्रतानि महान्यग्ने नकिरा दधर्ष । यज्जायमानः पित्रो-
रुपस्थेऽविंदः केतुं वयुनेष्वह्नां ॥ ५ ॥ वैश्वानरस्य विमितानि
चक्षसा सानूनि दिवो अमृतस्य केतुना । तस्येदु विश्वा भु-
वनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥ ६ ॥ वि यो
रजांस्यमिमीत सुक्रतुर्वैश्वानरो वि दिवो रोचना कविः ।
परि यो विश्वा भुवनानि पप्रथेऽदब्धो गोपा अमृतस्य
रक्षिता ॥ ७ ॥ ९ ॥

---

॥ ८ ॥ १-७ भरद्वाजो बार्हस्पत्यः ॥ वैश्वानरः ॥ १-६ जगती । ७ त्रिष्टुप् ॥

॥८॥ पृक्षस्य वृष्णो अरुषस्य नू सहः प्र नु वोचं विदथा
जातवेदसः । वैश्वानराय मतिर्नव्यसी शुचिः सोम इव पवते
चारुरग्नये ॥१॥ स जायमानः परमे व्योमनि व्रतान्यग्निर्व्रतपा
अरक्षत । व्यंतरिक्षममिमीत सुक्रतुर्वैश्वानरो महिना ना-
कमस्पृशत् ॥ २ ॥ व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोऽंतर्वावदकृ-
णोज्ज्योतिषा तमः । वि चर्मणीव धिषणे अवर्तयद्वैश्वानरो
विश्वमधत्त वृष्ण्यं ॥३॥ अपामुपस्थे महिषा अगृभ्णत विशो
राजानमुप तस्थुरृग्मियं । आ दूतो अग्निमभरद्विवस्वतो
वैश्वानरं मातरिश्वा परावतः ॥४॥ युगेयुगे विदथ्यं गृणद्भ्यो-
ऽग्ने रयिं यशसं धेहि नव्यसीं । पव्येव राजन्नघशंसमजर
नीचा नि वृश्च वनिनं न तेजसा ॥ ५ ॥ अस्माकमग्ने
मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यं । वयं जयेम शतिनं
सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥ ६ ॥ अदब्धे-

श्वानर त्वं अस्मासु धेहि वसूनि राजन् स्पृहयाय्याणि ॥३॥ त्वां विश्वे अमृत जायमानं शिशुं न देवाः अभि सं नवंते तव क्रतुऽभिः अमृतऽत्वं आयन् वैश्वानर यत् पित्रोः अदीदेः ॥४॥ वैश्वानर तव तानि व्रतानि महानि अग्ने नकिः आ दधर्ष यत् जायमानः पित्रोः उपऽस्थे अविंदः केतुं वयुनेषु अह्नां ॥५॥ वैश्वानरस्य विऽमितानि चक्षसा सानूनि दिवः अमृतस्य केतुना तस्य इत् ऊं इति विश्वा भुवना अधि मूर्धनि वयाःऽइव रुरुहुः सप्त विऽस्रुहः ॥६॥ वि यः रजांसि अमिमीत सुऽक्रतुः वैश्वानरः वि दिवः रोचना कविः परि यः विश्वा भुवनानि पप्रथे अदब्धः गोपाः अमृतस्य रक्षिता ॥७॥९॥

---

॥८॥ पृक्षस्य वृष्णः अरुषस्य नु सहः प्र नु वोचं विदथा जातऽवेदसः वैश्वानराय मतिः नव्यसी शुचिः सोमःऽइव पवते चारुः अग्नये ॥१॥ सः जायमानः परमे विऽओमनि व्रतानि अग्निः व्रतऽपाः अरक्षत वि अंतरिक्षं अमिमीत सुऽक्रतुः वैश्वानरः महिना नाकं अस्पृशत् ॥२॥ वि अस्तभ्नात् रोदसी इति मित्रः अद्भुतः अंतःऽवावत् अकृणोत् ज्योतिषा तमः वि चर्मणीऽइवेति चर्मणीऽइव धिषणे इति अवर्तयत् वैश्वानरः विश्वं अधत्त वृष्ण्यं ॥३॥ अपां उपऽस्थे महिषाः अगृभ्णत विशः राजानं उप तस्थुः ऋग्मियं आ दूतः अग्निं अभरत् विवस्वतः वैश्वानरं मातरिश्वा पराऽवतः ॥४॥ युगेऽयुगे विदथ्यं गृणत्ऽभ्यः अग्ने रयिं यशसं धेहि नव्यसीं पत्नीऽइव राजन् अघऽशंसं अजर नीचा नि वृश्च वनिनं न तेजसा ॥५॥ अस्माकं अग्ने मघवत्ऽसु धारय अनामि क्षत्रं अजरं सुऽवीर्यं वयं जयेम शतिनं सहस्रिणं वैश्वानर वाजं अग्ने तव ऊतिऽभिः ॥६॥ अदब्धे-

भिस्त्वं गोपाभिरिष्टेऽस्माकं पाहि त्रिषधस्थ सूरीन्। रक्षा च नो दुदुषां शर्धो अग्ने वैश्वानर प्र च तारीः स्तवानः ॥७॥१०॥

॥ ९ ॥ १-७ भरद्वाजो बार्हस्पत्यः ॥ वैश्वानरः ॥ त्रिष्टुप् ॥

॥९॥ अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः। वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥१॥ नाहं तंतुं न वि जानाम्योतुं न यं वयंति समरेऽतमानाः। कस्य स्वित्पुत्र इह वक्त्वानि परो वदात्यवरेण पित्रा ॥२॥ स इत्तंतुं स वि जानात्योतुं स वक्त्वान्यृतुथा वदाति। य ईं चिकेतदमृतस्य गोपा अवश्चरन्परो अन्येन पश्यन् ॥३॥ अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु। अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा३ वर्धमानः ॥४॥ ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वंतः। विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यंति साधु ॥५॥ वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत्। वि मे मनश्चरति दूरआधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥६॥ विश्वे देवा अनमस्यन्भियानास्त्वामग्ने तमसि तस्थिवांसं। वैश्वानरोऽवतूतये नोऽमर्त्योऽवतूतये नः ॥७॥११॥

॥ १० ॥ १-७ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ १-६ त्रिष्टुप्। ७ द्विपदा ॥

॥१०॥ पुरो वो मंद्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वं। पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥१॥ तमु द्युमः पुर्वणीक होतरग्ने अग्निभिर्मनुष इधानः। स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवंते ॥२॥ पीपाय स श्रवसा मर्त्येषु यो अग्नये ददाश विप्र उक्थैः। चि-

भिः तव गोपाभिः इष्टे अस्माकं पाहि त्रिऽसधस्थ सूरीन् रक्ष च नः ददुषां शर्धः अग्ने वैश्वानर प्र च तारीः स्तवानः ॥ ७ ॥ १० ॥

---

॥९॥ अहः च कृष्णं अहः अर्जुनं च वि वर्तेते इति रजसी वेद्याभिः वैश्वानरः जायमानः न राजा अव अतिरत् ज्योतिषा अग्निः तमांसि ॥ १ ॥ न अहं तंतुं न वि जानामि ओतुं न यं वयंति संऽअरे अतमानाः कस्य स्वित् पुत्रः इह वक्त्वानि परः वदाति अवरेण पित्रा ॥२॥ सः इत् तंतुं सः वि जानाति ओतुं सः वक्त्वानि ऋतुऽथा वदाति यः ईं चिकेतत् अमृतस्य गोपाः अवः चरन् परः अन्येन पश्यन् ॥३॥ अयं होता प्रथमः पश्यत इमं इदं ज्योतिः अमृतं मर्त्येषु अयं सः जज्ञे ध्रुवः आ निऽसत्तः अमर्त्यः तन्वा वर्धमानः ॥ ४ ॥ ध्रुवं ज्योतिः निऽहितं दृशये कं मनः जविष्ठं पतयत्ऽसु अंतरिति विश्वे देवाः सऽमनसः सऽकेताः एकं क्रतुं अभि वि यंति साधु ॥५॥ वि मे कर्णा पतयतः वि चक्षुः वि इदं ज्योतिः हृदये आऽहितं यत् वि मे मनः चरति दूरेऽआधीः किं स्वित् वक्ष्यामि किं ऊं इति नु मनिष्ये ॥ ६ ॥ विश्वे देवाः अनमस्यन् भियानाः त्वां अग्ने तमसि तस्थिऽवांसं वैश्वानरः अवतु ऊतये नः अमर्त्यः अवतु ऊतये नः ॥ ७ ॥ ११ ॥

---

॥१०॥ पुरः वः मंद्रं दिव्यं सुऽवृक्तिं प्रऽयति यज्ञे अग्निं अध्वरे दधिध्वं पुरः उक्थेभिः सः हि नः विभाऽवा सुऽअध्वरा करति जातऽवेदाः ॥१॥ तं ऊं इति द्युऽमः पुरुऽअनीक होतरिति अग्ने अग्निऽभिः मनुषः इधानः स्तोमं यं अस्मै ममताऽइव शूषं घृतं न शुचि मतयः पवंते ॥२॥ पीपाय सः श्रवसा मर्त्येषु यः अग्नये ददाश विप्रः उक्थैः चि-

चाभिस्तमूतिभिश्चित्रशोचिर्वाजस्य साता गोमतो दधाति ॥३॥ आ यः पप्रौ जायमान उर्वी दूरेदृशा भासा कृष्णाध्वा । अध बहु चित्तम ऊर्म्यायास्तिरः शोचिषा ददृशे पावकः ॥४॥ नू नश्चित्रं पुरुवाजाभिरूती अग्ने रयिं मघवद्भ्यश्च धेहि । ये राधसा श्रवसा चात्यन्यान्त्सुवीर्येभिश्चाभि संति जनान् ॥५॥ इमं यज्ञं चनो धा अग्न उशन्यं त आसानो जुहुते हविष्मान् । भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ ॥६॥ वि द्वेषांसीनुहि वर्धयेळां मदेम शतहिमाः सुवीराः ॥ ७ ॥ १२ ॥

॥ ११ ॥ १-६ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ ११ ॥ यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति । आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥ १ ॥ त्वं होता मंद्रतमो नो अध्रुगंतर्देवो विदथा मर्त्येषु । पावकया जुह्वा३ वह्निरासाग्ने यजस्व तन्वं१ तव स्वां ॥२॥ धन्या चिद्धि त्वे धिषणा वष्टि प्र देवाञ्जन्म गृणते यजध्यै । वेपिष्ठो अंगिरसां यद्ध विप्रो मधु छंदो भनति रेभ इष्टौ ॥३॥ अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी उरूची । आयुं न यं नमसा रातहव्या अंजंति सुप्रयसं पंच जनाः ॥४॥ वृंजे ह यन्नमसा बर्हिरग्नावयामि स्रुग्घृतवती सुवृक्तिः । अम्यक्षि सद्म सदने पृथिव्या अश्रायि यज्ञः सूर्ये न चक्षुः ॥५॥ दशस्या नः पुर्वणीक होतर्देवेभिरग्ने अग्निभिरिधानः । रायः सूनो सहसो वावसाना अति स्रसेम वृजनं नांहः ॥ ६ ॥ १३ ॥

॥ १२ ॥ १-६ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ १२ ॥ मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी

याभिः तं ऊतिऽभिः चित्रऽशोचिः व्रजस्य साता गोऽमतः दधाति ॥३॥ आ यः पप्रौ जायमानः उर्वी दूरेऽदृशा भासा कृष्णऽअध्वा अधं बहु चित् तमः ऊर्म्याः तिरः शोचिषा ददृशे पावकः ॥४॥ नु नः चित्रं पुरुऽवाजाभिः ऊती अग्ने रयिं मघवत्ऽभ्यः च धेहि ये राधसा श्रवसा च अति अन्यान् सुऽवीर्येभिः च अभि संति जनान् ॥५॥ इमं यज्ञं चनः धाः अग्ने उशन् यं ते आसानः जुहुते हविष्मान् भरत्ऽवाजेषु दधिषे सुऽवृक्तिं अवीः वाजस्य गध्यस्य सातौ ॥६॥ वि द्वेषांसि इनुहि वर्धय इळां मदेम शतऽहिमाः सुऽवीराः ॥ ७ ॥ १२ ॥

---

॥११॥ यजस्व होतः इषितः यजीयान् अग्ने बाधः मरुतां न प्रऽयुक्ति आ नः मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥१॥ त्वं होता मंद्रऽतमः नः अध्रुक् अंतः देवः विदथा मर्त्येषु पावकया जुह्वा वह्निः आसा अग्ने यजस्व तन्वं तव स्वां ॥२॥ धन्या चित् हि त्वे धिषणा वष्टि प्र देवान् जन्म गृणते यजध्यै वेपिष्ठः अंगिरसां यत् ह विप्रः मधु छंदः भनति रेभः इष्टौ ॥३॥ अदिद्युतत् सु अपाकः विऽभावा अग्ने यजस्व रोदसी उरूची आयुं न यं नमसा रातऽहव्याः अंजंति सुऽप्रयसं पंच जनाः ॥४॥ वृंजे ह यत् नमसा बर्हिः अग्नौ अयामि स्रुक् घृतऽवती सुऽवृक्तिः अम्यक्षि सद्म सदने पृथिव्याः अश्रायि यज्ञः सूर्ये न चक्षुः ॥५॥ दशस्य नः पुरुऽअनीक होतः देवेभिः अग्ने अग्निऽभिः इधानः रायः सूनो सहसः ववसानाः अति स्रसेम वृजनं न अंहः ॥ ६ ॥ १३ ॥

---

॥१२॥ मध्ये होता दुरोणे बर्हिषः राट् अग्निः तोदस्य रोदसी

यजध्यै । अयं स सूनुः सहस ऋतावा दूरात्सूर्यो न शोचिषा
ततान ॥१॥ आ यस्मिन्त्वे स्वपाके यजत्र यक्षद्राजन्सर्वतातेव
नु द्यौः । त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा
यजध्यै ॥२॥ तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन्न वृधसानो
अद्यौत् । अद्रोघो न द्रविता चेतति त्मन्नमर्त्योऽवर्त्र ओषधीषु
॥३॥ सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः ।
द्र्वन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥४॥ अध
स्मास्य पनयंति भासो वृथा यत्तक्षदनुयाति पृथ्वी । सद्यो यः
स्यंद्रो विषितो धवीयानृणो न तायुरति धन्वा राट् ॥५॥ स
त्वं नो अर्वन्निदाया विश्वेभिरग्ने अग्निभिरिधानः । वेषि रायो
वि यासि दुच्छुना मदेम शतहिमाः सुवीराः ॥ ६ ॥ १४ ॥

॥ १३ ॥ १-६ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ १३ ॥ त्वद्विश्वा सुभग सौभगान्यग्ने वि यंति वनिनो न
वयाः । श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपां
॥१॥ त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।
अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥२॥
स सत्पतिः शवसा हंति वृत्रमग्ने विप्रो वि पणेर्भर्ति वाजं । यं
त्वं प्रचेत ऋतजात राया सजोषा नप्त्रापां हिनोषि ॥३॥ यस्ते
सूनो सहसो गीर्भिरुक्थैर्यज्ञैर्मर्तो निशितिं वेद्यानट् । विश्वं
स देव प्रति वारमग्ने धत्ते धान्यं१ पत्यते वसव्यैः ॥ ४ ॥ ता
नृभ्य आ सौश्रवसा सुवीराग्ने सूनो सहसः पुष्यसे धाः । कृणो-
षि यच्छवसा भूरि पश्वो वयो वृकायारये जसुरये ॥५॥ वद्मा
सूनो सहसो नो विहाया अग्ने तोकं तनयं वाजिनो दाः । विश्वा-

यजध्यै अयं सः सूनुः सहसः ऋतऽवा दूरात् सूर्यः न शोचिषा ततान ॥१॥ आ यस्मिन् त्वे सु अपाके यजत्र यक्षत् राजन् सर्वताताऽइव नु द्यौः चिऽसधस्थः ततरुषः न जंहः हव्या मघानि मानुषा यजध्यै ॥२॥ तेजिष्ठा यस्य अरतिः वनेऽराट् तोदः अध्वन् न वृधसानः अद्यौत् अद्रोघः न द्रविता चेतति त्मन् अमर्त्यः अवर्त्रः ओषधीषु ॥३॥ सः अस्माकेभिः एतरि न शूषैः अग्निः स्तवे दमे आ जातऽवेदाः द्रुऽअन्नः वन्वन् क्रत्वा न अर्वा उस्रः पिताऽइव जारयायि यज्ञैः ॥४॥ अध स्म अस्य पनयंति भासः वृथा यत् तक्षत् अनुऽयाति पृथ्वी सद्यः यः स्यंद्रः विऽसितः धवीयान् ऋणः न तायुः अति धन्व राट् ॥५॥ सः त्वं नः अर्वन् निदायाः विश्वेभिः अग्ने अग्निऽभिः इधानः वेषि रायः वि यासि दुच्छुनाः मदेम शतऽहिमाः सुऽवीराः ॥ ६ ॥ १४ ॥

---

॥१३॥ त्वत् विश्वा सुऽभग सौभगानि अग्ने वि यंति वनिनः न वयाः श्रुष्टी रयिः वाजः वृत्रऽतूर्ये दिवः वृष्टिः ईड्यः रीतिः अपां ॥१॥ त्वं भगः नः आ हि रत्नं इषे परिज्माऽइव क्षयसि दस्मऽवर्चाः अग्ने मित्रः न बृहतः ऋतस्य असि क्षत्ता वामस्य देव भूरेः ॥२॥ सः सत्ऽपतिः शवसा हंति वृत्रं अग्ने विप्रः वि पणेः भर्ति वाजं यं त्वं प्रऽचेतः ऋतऽजात राया सऽजोषाः नप्त्रा अपां हिनोषि ॥३॥ यः ते सूनो सहसः गीःऽभिः उक्थैः यज्ञैः मर्तः निऽशितिं वेद्या आनट् विश्वं सः देव प्रति वा अरं अग्ने धत्ते धान्यं पत्यते वसव्यैः ॥४॥ ता नृऽभ्यः आ सौश्रवसा सुऽवीरा अग्ने सूनो सहसः पुष्यसे धाः कृणोषि यत् शवसा भूरि पश्वः वयः वृकाय अरये जसुरये ॥५॥ वद्मा सूनो सहसः नः विऽहायाः अग्ने तोकं तनयं वाजिनः दाः विश्वा-

भिर्गीर्भिरभि पूर्तिमश्यां मदेम शतहिमाः सुवीराः ॥६॥१५॥

---

॥ १४ ॥ १–६ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ १–५ अनुष्टुप् । ६ शक्वरी ॥

॥१४॥ अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः । भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥१॥ अग्निरिद्धि प्रचेता अग्निर्वेधस्तम ऋषिः । अग्निं होतारमीळते यज्ञेषु मनुषो विशः ॥२॥ नाना ह्य१ग्नेऽवसे स्पर्धन्ते रायो अर्यः । तूर्वन्तो दस्युमायवो व्रतैः सीक्षन्तो अव्रतम् ॥३॥ अग्निरप्सामृतीषहं वीरं ददाति सत्पतिम् । यस्य त्रसन्ति शवसः संचक्षि शत्रवो भिया ॥४॥ अग्निर्हि विद्मना निदो देवो मर्तमुरुष्यति । सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥५॥ अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः । वीहि स्वस्तिं सुक्षितिं दिवो नॄन्द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥६॥१६॥

---

॥१५॥ १–१९ भरद्वाजो बार्हस्पत्यो वीतहव्यो वा ॥ अग्निः ॥ १. २. ४. ५. ७–९ जगती । ३. १५ शक्वरी । ६ अतिशक्वरी । १०–१४. १६. १९ त्रिष्टुप् । १७ अनुष्टुप् । १८ बृहती ॥

॥१५॥ इममू षु वो अतिथिमुषर्बुधं विश्वासां विशां पतिमृञ्जसे गिरा । वेतीद्दिवो जनुषा कच्चिदा शुचिर्ज्योक्चिदत्ति गर्भो यदच्युतम् ॥१॥ मित्रं न यं सुधितं भृगवो दधुर्वनस्पतावीड्यमूर्ध्वशोचिषम् । स त्वं सुप्रीतो वीतहव्ये अद्भुत प्रशस्तिभिर्महयसे दिवेदिवे ॥२॥ स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यान्तरस्य तरुषः । रायः सूनो सहसो मर्त्येष्वा छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः ॥३॥ द्युतानं वो अतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरम् । विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृञ्जसे ॥४॥ पावकया

भिः गीःऽभिः अभि पूर्तिं अश्यां मदेम शतऽहिमाः सुऽवीराः ॥ ६ ॥ १५ ॥

---

॥१४॥ अग्ना यः मर्त्यः दुवः धियं जुजोष धीतिऽभिः भसत् नु सः प्र पूर्व्यः इषं वुरीत अवसे ॥१॥ अग्निः इत् हि प्रऽचेताः अग्निः वेधःऽतमः ऋषिः अग्निं होतारं ईळते यज्ञेषु मनुषः विशः ॥२॥ नाना हि अग्ने अवसे स्पर्धन्ते रायः अर्यः तूर्वन्तः दस्युं आयवः व्रतैः सीक्षन्तः अव्रतं ॥३॥ अग्निः अप्सां ऋतिऽसहं वीरं ददाति सत्ऽपतिं यस्य त्रसन्ति शवसः संऽचक्षि शत्रवः भिया ॥४॥ अग्निः हि विद्मना निदः देवः मर्तं उरुष्यति सहऽवा यस्य अवृतः रयिः वाजेषु अवृतः ॥५॥ अच्छ नः मित्रऽमहः देव देवान् अग्ने वोचः सुऽमतिं रोदस्योः वीहि स्वस्तिं सुऽक्षितिं दिवः नॄन् द्विषः अंहांसि दुःऽइता तरेम ता तरेम तव अवसा तरेम ॥ ६ ॥ १६ ॥

---

॥१५॥ इमं ऊं सु वः अतिथिं उषःऽबुधं विश्वासां विशां पतिं ऋंजसे गिरा वेति इत् दिवः जनुषा कत् चित् आ शुचिः ज्योक् चित् अत्ति गर्भः यत् अच्युतं ॥१॥ मित्रं न यं सुऽधितं भृगवः दधुः वनस्पतौ ईड्यं ऊर्ध्वऽशोचिषं सः त्वं सुऽप्रीतः वीतऽहव्ये अद्भुत प्रशस्तिऽभिः महयसे दिवेऽदिवे ॥२॥ सः त्वं दक्षस्य अवृकः वृधः भूः अर्यः परस्य अंतरस्य तरुषः रायः सूनो सहसः मर्त्येषु आ छर्दिः यच्छ वीतऽहव्याय सऽप्रथः भरत्ऽवाजाय सऽप्रथः ॥३॥ द्युतानं वः अतिथिं स्वःऽनरं अग्निं होतारं मनुषः सुऽअध्वरं विप्रं न द्युक्षऽवचसं सुवृक्तिऽभिः हव्यऽवाहं अरतिं देवं ऋंजसे ॥४॥ पावकया

यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना। तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥५॥१७॥ अग्निमग्निं वः समिधा दुवस्यत प्रियंप्रियं वो अतिथिं गृणीषणि। उप वो गीर्भिरमृतं विवासत देवो देवेषु वनते हि वार्यं देवो देवेषु वनते हि नो दुवः ॥६॥ समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवं। विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसं ॥७॥ त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यं। देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥८॥ विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे। यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥९॥ तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम। स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥१०॥१८॥ तमग्ने पास्युत तं पिपर्षि यस्त आनट् कवये शूर धीतिं। यज्ञस्य वा निशितिं वोदितिं वा तमित्पृणक्षि शवसोत राया ॥११॥ त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात्। सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥१२॥ अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः। देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥१३॥ अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा। ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ॥१४॥ अभि प्रयांसि सुधितानि हि ख्यो नि त्वा दधीत रोदसी यजध्यै। अवा नो मघवन्वाजसातावग्ने विश्वानि दुरिता तरेम ता तरेम तवावसा तरेम ॥१५॥१९॥ अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं

यः चितयन्त्या कृपा क्षामन् रुरुचे उषसः न भानुना तूर्वन् न यामन् एतशस्य नु रणे आ यः घृणे न ततृषाणः अजरः ॥ ५ ॥ १७ ॥ अग्निंऽअग्निं वः संऽइधा दुवस्यत प्रियंऽप्रियं वः अतिथिं गृणीषणि उप वः गीःऽभिः अमृतं विवासत देवः देवेषु वनते हि वार्यं देवः देवेषु वनते हि नः दुवः ॥ ६ ॥ संऽइद्धं अग्निं संऽइधा गिरा गृणे शुचिं पावकं पुरः अध्वरे ध्रुवं विप्रं होतारं पुरुऽवारं अद्रुहं कविं सुम्नैः ईमहे जातऽवेदसं ॥ ७ ॥ त्वां दूतं अग्ने अमृतं युगेऽयुगे हव्यऽवाहं दधिरे पायुं ईड्यं देवासः च मर्तासः च जागृविं विऽभुं विश्पतिं नमसा नि सेदिरे ॥ ८ ॥ विऽभूषन् अग्ने उभयान् अनु व्रता दूतः देवानां रजसी इति सं ईयसे यत् ते धीतिं सुऽमतिं आऽवृणीमहे अध स्म नः त्रिऽवरूथः शिवः भव ॥ ९ ॥ तं सुऽप्रतीकं सुऽदृशं सुऽअञ्चं अविद्वांसः विदुःऽतरं सपेम सः यक्षत् विश्वा वयुनानि विद्वान् प्र हव्यं अग्निः अमृतेषु वोचत ॥ १० ॥ १८ ॥ तं अग्ने पासि उत तं पिपर्षि यः ते आनट् कवये शूर धीतिं यज्ञस्य वा निऽशितिं वा उतऽइतिं वा तं इत् पृणक्षि शवसा उत राया ॥ ११ ॥ त्वं अग्ने वनुष्यतः नि पाहि त्वं ऊं इति नः सहसाऽवन् अवद्यात् सं त्वा ध्वस्मन्ऽवत् अभि एतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥ १२ ॥ अग्निः होता गृहऽपतिः सः राजा विश्वा वेद जनिमा जातऽवेदाः देवानां उत यः मर्त्यानां यजिष्ठः सः प्र यजतां ऋतऽवा ॥ १३ ॥ अग्ने यत् अद्य विशः अध्वरस्य होतरिति पावकऽशोचे वेः त्वं हि यज्वा ऋता यजासि महिना वि यत् भूः हव्या वह यविष्ठ या ते अद्य ॥ १४ ॥ अभि प्रयांसि सुऽधितानि हि ख्यः नि त्वा दधीत रोदसी इति यजध्यै अव नः मघऽवन् वाजऽसातौ अग्ने विश्वानि दुःऽइता तरेम ता तरेम तव अवसा तरेम ॥ १५ ॥ १९ ॥ अग्ने विश्वेभिः सुऽअनीक देवैः ऊर्णाऽवन्तं

प्रथमः सीद योनिं । कुलायिनं घृतवंतं सवित्रे यज्ञं नय यजमानाय साधु ॥१६॥ इममु त्यमथर्ववदग्निं मंथंति वेधसः । यमंकूयंतमानयन्नमूरं श्याव्याभ्यः ॥१७॥ जनिष्वा देववीतये सर्वताता स्वस्तये । आ देवान्वक्ष्यमृताँ ऋतावृधो यज्ञं देवेषु पिस्पृशः ॥१८॥ वयमु त्वा गृहपते जनानामग्ने अकर्म समिधा बृहंतं । अस्थूरि नो गार्हपत्यानि संतु तिग्मेन नस्तेजसा सं शिशाधि ॥१९॥२०॥१॥

---

॥ १६ ॥ १-४८ भरद्वाजो बार्हस्पत्यः ॥ अग्निः ॥ १. ६. वर्धमाना । २-५. ७-२६. २८-४५ गायत्री । ४६ त्रिष्टुप् । २७. ४७. ४८ अनुष्टुप् ॥

॥१६॥ त्वमग्ने यज्ञानां होता विश्वेषां हितः । देवेभिर्मानुषे जने ॥१॥ स नो मंद्राभिरध्वरे जिह्वाभिर्यजा महः । आ देवान्वक्षि यक्षि च ॥२॥ वेत्था हि वेधो अध्वनः पथश्च देवांजसा । अग्ने यज्ञेषु सुक्रतो ॥३॥ त्वामीळे अध द्विता भरतो वाजिभिः शुनं । ईजे यज्ञेषु यज्ञियं ॥४॥ त्वमिमा वार्या पुरु दिवोदासाय सुन्वते । भरद्वाजाय दाशुषे ॥५॥२१॥ त्वं दूतो अमर्त्य आ वहा दैव्यं जनं । शृण्वन्विप्रस्य सुष्टुतिं ॥६॥ त्वामग्ने स्वाध्यो३ मर्तासो देववीतये । यज्ञेषु देवमीळते ॥७॥ तव प्र यक्षि संदृशमुत क्रतुं सुदानवः । विश्वे जुषंत कामिनः ॥८॥ त्वं होता मनुर्हितो वह्निरासा विदुष्टरः । अग्ने यक्षि दिवो विशः ॥९॥ अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥१०॥२२॥ तं त्वा समिद्भिरंगिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥११॥ स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यं ॥१२॥ त्वामग्ने पुष्करादध्यथर्वा निरमंथत । मूर्ध्नो विश्वस्य वाघतः ॥१३॥ तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरं ॥१४॥ तमु त्वा पाथ्यो वृषा समीधे दस्युहंतमं । धनंजयं रणेरणे

प्रथमः सीद योनिं कुलायिनं घृतऽवंतं सवित्रे यज्ञं नय यजमानाय साधु ॥ १६ ॥ इमं ऊं इति त्यं अथर्वऽवत् अग्निं मंथंति वेधसः यं अंकुऽयंतं आ अनयन् अमूरं श्याव्याभ्यः ॥ १७ ॥ जनिष्व देवऽवीतये सर्वऽताता स्वस्तये आ देवान् वक्षि अमृतान् ऋतऽवृधः यज्ञं देवेषु पिस्पृशः ॥ १८ ॥ वयं ऊं इति त्वा गृहऽपते जनानां अग्ने अकर्म संऽइधा बृहंतं अस्थूरि नः गार्हऽपत्यानि संतु तिग्मेन नः तेजसा सं शिशाधि ॥ १९ ॥ २० ॥ १ ॥

---

॥ १६ ॥ त्वं अग्ने यज्ञानां होता विश्वेषां हितः देवेभिः मानुषे जने ॥ १ ॥ सः नः मंद्राभिः अध्वरे जिह्वाभिः यज महः आ देवान् वक्षि यक्षि च ॥ २ ॥ वेत्थ हि वेधः अध्वनः पथः च देव अंजसा अग्ने यज्ञेषु सुऽक्रतो इति ॥ ३ ॥ त्वां ईळे अध द्विता भरतः वाजिऽभिः शुनं ईजे यज्ञेषु यज्ञियं ॥ ४ ॥ त्वं इमा वार्या पुरु दिवःऽदासाय सुन्वते भरत्ऽवाजाय दाशुषे ॥ ५ ॥ २१ ॥ त्वं दूतः अमर्त्यः आ वह दैव्यं जनं शृण्वन् विप्रस्य सुऽस्तुतिं ॥ ६ ॥ त्वां अग्ने सुऽआध्यः मर्तासः देवऽवीतये यज्ञेषु देवं ईळते ॥ ७ ॥ तव प्र यक्षि संऽदृशं उत क्रतुं सुऽदानवः विश्वे जुषंत कामिनः ॥ ८ ॥ त्वं होता मनुःऽहितः वह्निः आसा विदुःऽतरः अग्ने यक्षि दिवः विशः ॥ ९ ॥ अग्ने आ याहि वीतये गृणानः हव्यऽदातये नि होता सत्सि बर्हिषि ॥ १० ॥ २२ ॥ तं त्वा समित्ऽभिः अंगिरः घृतेन वर्धयामसि बृहत् शोच यविष्ठ्य ॥ ११ ॥ सः नः पृथु श्रवाय्यं अच्छ देव विवाससि बृहत् अग्ने सुऽवीर्यं ॥ १२ ॥ त्वां अग्ने पुष्करात् अधि अथर्वा निः अमंथत मूर्ध्नः विश्वस्य वाघतः ॥ १३ ॥ तं ऊं इति त्वा दध्यङ् ऋषिः पुत्रः ईधे अथर्वणः वृत्रऽहनं पुरंऽदरं ॥ १४ ॥ तं ऊं इति त्वा पाथ्यः वृषा सं ईधे दस्युहन्ऽतमं धनंऽजयं रणेऽरणे

॥१५॥२३॥ एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्धास इंदुभिः ॥१६॥ यत्र क्व च ते मनो दक्षं दधस उत्तरं। तत्रा सदः कृणवसे ॥ १७॥ नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो। अथा दुवो वनवसे॥१८॥ आग्निरगामि भारतो वृत्रहा पुरुचेतनः। दिवोदासस्य सत्पतिः॥१९॥ स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना। वन्वन्नवातो अस्तृतः॥२०॥२४॥ स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता। बृहत्ततंथ भानुना॥२१॥ प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया। अर्च गाय च वेधसे ॥२२॥ स हि यो मानुषा युगा सीदद्धोता कविक्रतुः। दूतश्च हव्यवाहनः॥२३॥ ता राजाना शुचिव्रतादित्यान्मारुतं गणं। वसो यक्षीह रोदसी॥२४॥ वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय। ऊर्जो नपादमृतस्य॥२५॥२५॥ क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्त्सुरेक्णाः। मर्त आनाश सुवृक्तिं॥२६॥ ते ते अग्ने त्वोता इषयंतो विश्वमायुः। तरंतो अर्यो अरातीर्वन्वंतो अर्यो अरातीः॥२७॥ अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्य१त्रिणं। अग्निर्नो वनते रयिं॥२८॥ सुवीरं रयिमा भर जातवेदो विचर्षणे। जहि रक्षांसि सुक्रतो॥२९॥ त्वं नः पाह्यंहसो जातवेदो अघायतः। रक्षा णो ब्रह्मणस्कवे॥३०॥२६॥ यो नो अग्ने दुरेव आ मर्तो वधाय दाशति। तस्मान्नः पाह्यंहसः॥३१॥ त्वं तं देव जिह्वया परि बाधस्व दुष्कृतं। मर्तो यो नो जिघांसति॥३२॥ भरद्वाजाय सप्रथः शर्म यच्छ सहंत्य। अग्ने वरेण्यं वसु॥३३॥ अग्निर्वृत्राणि जंघनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥३४॥ गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे। सीदन्नृतस्य योनिमा॥३५॥२७॥ ब्रह्म प्रजावदा भर जातवेदो

॥१५॥२३॥ आ इहि ऊं सु ब्रवाणि ते अग्ने इत्था इतराः गिरः एभिः
वर्धासे इंदुऽभिः ॥१६॥ यत्र क्व च ते मनः दक्षं दधसे उत्ऽतरं तत्र सदः
कृणवसे ॥१७॥ नहि ते पूर्तं अक्षिऽपत् भुवत् नेमानां वसो अथ
दुवः वनवसे ॥१८॥ आ अग्निः अगामि भारतः वृत्रऽहा पुरुऽचे-
तनः दिवःऽदासस्य सत्ऽपतिः ॥१९॥ सः हि विश्वा अति पार्थिवा
रयिं दाशत् महिऽत्वना वन्वन् अवातः अस्तृतः ॥२०॥२४॥ सः प्र-
त्नऽवत् नवीयसा अग्ने द्युम्नेन संऽयता बृहत् ततंथ भानुना ॥२१॥
प्र वः सखायः अग्नये स्तोमं यज्ञं च धृष्णुऽया अर्च गाय च वेधसे
॥२२॥ सः हि यः मानुषा युगा सीदत् होता कविऽक्रतुः दूतः च
हव्यऽवाहनः ॥२३॥ ता राजाना शुचिऽव्रता आदित्यान् मारुतं
गणं वसो यक्षि इह रोदसी ॥२४॥ वस्वी ते अग्ने संऽदृष्टिः इषऽयते
मर्त्याय ऊर्जः नपात् अमृतस्य ॥२५॥२५॥ क्रत्वा दाः अस्तु श्रेष्ठः
अद्य त्वा वन्वन् सुऽरेक्णाः मर्तः आनाश सुऽवृक्तिं ॥२६॥ ते ते अग्ने
त्वाऽऊताः इषयंतः विश्वं आयुः तरंतः अर्यः अरातीः वन्वंतः अर्यः
अरातीः ॥२७॥ अग्निः तिग्मेन शोचिषा यासत् विश्वं नि अत्रिणं
अग्निः नः वनते रयिं ॥२८॥ सुऽवीरं रयिं आ भर जातऽवेदः विऽच-
र्षणे जहि रक्षांसि सुऽक्रतो ॥२९॥ त्वं नः पाहि अंहसः जातऽवेदः
अघऽयतः रक्ष नः ब्रह्मणः कवे ॥३०॥२६॥ यः नः अग्ने दुःऽएवः आ
मर्तः वधाय दाशति तस्मात् नः पाहि अंहसः ॥३१॥ त्वं तं देव
जिह्वया परि बाधस्व दुःऽकृतं मर्तः यः नः जिघांसति ॥३२॥
भरत्ऽवाजाय सऽप्रथः शर्म यच्छ सहंत्य अग्ने वरेण्यं वसु ॥३३॥
अग्निः वृत्राणि जंघनत् द्रविणस्युः विपन्यया संऽइद्धः शुक्रः आ-
ऽहुतः ॥३४॥ गर्भे मातुः पितुः पिता विऽदिद्युतानः अक्षरे सीदन्
ऋतस्य योनिं आ ॥३५॥२७॥ ब्रह्म प्रजाऽवत् आ भर जातऽवेदः

विचर्षणे। अग्ने यद्दीदयद्दिवि ॥३६॥ उप त्वा रण्वसंदृशं प्रयस्वंतः सहस्कृत। अग्ने ससृज्महे गिरः ॥३७॥ उप छायामिव घृणेरगन्म शर्म ते वयं। अग्ने हिरण्यसंदृशः ॥३८॥ य उग्र इव शर्यहा तिग्मशृंगो न वंसगः। अग्ने पुरो रुरोजिथ ॥३९॥ आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति। विशामग्निं स्वध्वरं ॥४०॥२८॥ प्र देवं देववीतये भरता वसुवित्तमं। आ स्वे योनौ नि षीदतु ॥४१॥ आ जातं जातवेदसि प्रियं शिशीतातिथिं। स्योन आ गृहपतिं ॥४२॥ अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः। अरं वहंति मन्यवे ॥४३॥ अच्छा नो याह्या वहाभि प्रयांसि वीतये। आ देवान्त्सोमपीतये ॥४४॥ उदग्ने भारत द्युमदजस्रेण दविद्युतत्। शोचा वि भाह्यजर ॥४५॥२९॥ वीती यो देवं मर्तो दुवस्येदग्निमीळीताध्वरे हविष्मान्। होतारं सत्ययजं रोदस्योरुत्तानहस्तो नमसा विवासेत् ॥४६॥ आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि। ते ते भवंतूक्षण ऋषभासो वशा उत ॥४७॥ अग्निं देवासो अग्रियमिंधते वृत्रहंतमं। येना वसून्याभृता तृळ्हा रक्षांसि वाजिना ॥४८॥३०॥५॥

---

॥ १७ ॥ १–१५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ १–१४ त्रिष्टुप्। १५ द्विपदा ॥

॥१७॥ पिबा सोममभि यमुग्र तर्द ऊर्वं गव्यं महि गृणान इंद्र। वि यो धृष्णो वधिषो वज्रहस्त विश्वा वृत्रममित्रिया शवोभिः ॥१॥ स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनां। यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इंद्र चित्राँ अभि तृंधि वाजान् ॥२॥ एवा पाहि प्रत्नथा मंदतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः। आविः सूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इंद्र तृंधि ॥३॥ ते त्वा मदा बृहदिंद्र स्वधाव इमे

विऽचर्षणे अग्ने यत् दीदयत् दिवि ॥३६॥ उप त्वा रण्वऽसंदृशं प्र-
यस्वंतः सहःऽकृत अग्ने ससृज्महे गिरः ॥३७॥ उप छायांऽइव घृणेः
अगन्म शर्म ते वयं अग्ने हिरण्यऽसंदृशः ॥३८॥ यः उग्रःऽइव शर्य-
ऽहा तिग्मऽशृंगः न वंसगः अग्ने पुरः रुरोजिथ ॥३९॥ आ यं हस्ते न
खादिनं शिशुं जातं न बिभ्रति विशां अग्निं सुऽअध्वरं ॥४०॥२८॥
प्र देवं देवऽवीतये भरत वसुवित्ऽतमं आ स्वे योनौ नि सीदतु
॥४१॥ आ जातं जातऽवेदसि प्रियं शिशीत अतिथिं स्योने आ
गृहऽपतिं ॥४२॥ अग्ने युक्ष्व हि ये तव अश्वासः देव साधवः अरं
वहंति मन्यवे ॥४३॥ अच्छ नः याहि आ वह अभि प्रयांसि वीतये
आ देवान् सोमऽपीतये ॥४४॥ उत् अग्ने भारत द्युऽमत् अजस्रेण
दविद्युतत् शोच वि भाहि अजर ॥४५॥२९॥ वीती यः देवं मर्तः दु-
वस्येत् अग्निं ईळीत अध्वरे हविष्मान् होतारं सत्यऽयजं रोदस्योः
उत्तानऽहस्तः नमसा आ विवासेत् ॥४६॥ आ ते अग्ने ऋचा हविः
हृदा तष्टं भरामसि ते ते भवंतु उक्षणः ऋषभासः वशाः उत ॥४७॥
अग्निं देवासः अग्रियं इंधते वृत्रहन्ऽतमं येन वसूनि आऽभृता
तृळ्हा रक्षांसि वाजिना ॥ ४८ ॥ ३० ॥ ५ ॥

---

॥१७॥ पिब सोमं अभि यं उग्र तर्दः ऊर्वं गव्यं महि गृणानः इंद्र
वि यः धृष्णो वधिषः वज्रऽहस्त विश्वा वृत्रं अमित्रिया शवः-
ऽभिः ॥१॥ सः ईं पाहि यः ऋजीषी तरुत्रः यः शिप्रऽवान् वृषभः यः
मतीनां यः गोत्रऽभित् वज्रऽभृत् यः हरिऽस्थाः सः इंद्र चित्रान्
अभि तृंधि वाजान् ॥२॥ एव पाहि प्रत्नऽथा मंदतु त्वा श्रुधि ब्रह्म
ववृधस्व उत गीःऽभिः आविः सूर्यं कृणुहि पीपिहि इषः जहि श-
त्रून् अभि गाः इंद्र तृंधि ॥३॥ ते त्वा मदाः बृहत् इंद्र स्वधाऽवः इमे

पीता उंध्ययंत द्युमंतं । महामनूनं तवसं विभूतिं मत्सरासो जर्हृषंत प्रसाहं ॥४॥ येभिः सूर्यमुषसं मंदसानोऽवासयोऽप दृळ्हानि दर्द्रत् । महामद्रिं परि गा इंद्र संतं नुत्था अच्युतं सदसः परि स्वात् ॥५॥१॥ तव क्रत्वा तव तद्दंसनाभिरामासु पक्वं शच्या नि दीधः । और्णोर्दुर उस्रियाभ्यो वि दृळ्होदूर्वाद्गा असृजो अंगिरस्वान् ॥६॥ पप्राथ क्षां महि दंसो व्युर्वीमुप द्यामृष्वो बृहदिंद्र स्तभायः । अधारयो रोदसी देवपुत्रे प्रत्ने मातरा यह्वी ऋतस्य ॥७॥ अध त्वा विश्वे पुर इंद्र देवा एकं तवसं दधिरे भराय । अदेवो यदभ्यौहिष्ट देवान्त्स्वर्षाता वृणत इंद्रमत्र ॥८॥ अध द्यौश्चित्ते अप सा नु वज्राद्द्वितानमद्भियसा स्वस्य मन्योः । अहिं यदिंद्रो अभ्योहसानं नि चिद्विश्वायुः शयथे जघान ॥९॥ अध त्वष्टा ते मह उग्र वज्रं सहस्रभृष्टिं ववृतच्छताश्रिं । निकाममरमणसं येन नवंतमहिं सं पिणगृजीषिन् ॥१०॥२॥ वर्धान्यं विश्वे मरुतः सजोषाः पचच्छतं महिषाँ इंद्र तुभ्यं । पूषा विष्णुस्त्रीणि सरांसि धावन्वृत्रहणं मदिरमंशुमस्मै ॥११॥ आ क्षोदो महि वृतं नदीनां परिष्ठितमसृज ऊर्मिमपां । तासामनु प्रवत इंद्र पंथां प्रार्दयो नीचीरपसः समुद्रं ॥१२॥ एवा ता विश्वा चकृवांसमिंद्रं महामुग्रमजुर्यं सहोदां । सुवीरं त्वा स्वायुधं सुवज्रमा ब्रह्म नव्यमवसे ववृत्यात् ॥१३॥ स नो वाजाय श्रवस इषे च राये धेहि द्युमत इंद्र विप्रान् । भरद्वाजे नृवत इंद्र सूरीन्दिवि च स्मैधि पार्ये न इंद्र ॥१४॥ अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥१५॥३॥

॥ १८ ॥ १-१५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१८॥ तमु ष्टुहि यो अभिभूत्योजा वन्वन्नवातः पुरु-

पीताः उक्षयंत द्युऽमंतं महां अनूनं तवसं विऽभूतिं मत्सरासः जर्हृषंत प्रऽसहं ॥४॥ येभिः सूर्यं उषसं मंदसानः अवासयः अप दृळ्हानि दर्द्रत् महां अद्रिं परि गाः इंद्र संतं नुत्थाः अच्युतं सदसः परि स्वात् ॥५॥१॥ तव क्रत्वा तव तत् दंसनाभिः आमासु पक्वं शच्या नि दीधः॰ और्णोः दुरः उस्रियाभ्यः वि दृळ्हा उत् ऊर्वात् गाः असृजः अंगिरस्वान् ॥६॥ पप्राथ क्षां महि दंसः वि उर्वीं उप द्यां ऋष्वः बृहत् इंद्र स्तभायः अधारयः रोदसी देवपुत्रे॰ प्रत्ने मातरा यह्वी॰ ऋतस्य ॥७॥ अध त्वा विश्वे पुरः इंद्र देवाः एकं तवसं दधिरे भराय अदेवः यत् अभि औहिष्ट देवान् स्वःऽसाता वृणते इंद्रं अत्र ॥८॥ अध द्यौः चित् ते अप सा नु वज्रात् द्विता अनमत् भियसा स्वस्य मन्योः अहिं यत् इंद्रः अभि ओहसानं नि चित् विश्वऽआयुः शयथे जघान ॥९॥ अध त्वष्टा ते महः उग्र वज्रं सहस्रऽभृष्टिं ववृतत् शतऽअश्रिं निऽकामं अरऽमनसं येन नवंतं अहिं सं पिणक् ऋजीषिन् ॥१०॥२॥ वर्धान् यं विश्वे मरुतः सऽजोषाः पचत् शतं महिषान् इंद्र तुभ्यं पूषा विष्णुः त्रीणि सरांसि धावन् वृत्रऽहनं मदिरं अंशुं अस्मै ॥११॥ आ क्षोदः महि वृतं नदीनां परिऽस्थितं असृजः ऊर्मिं अपां तासां अनु प्रऽवतः इंद्र पंथां प्र आर्दयः नीचीः अपसः समुद्रं ॥१२॥ एव ता विश्वा चकृऽवांसं इंद्रं महां उग्रं अजुर्यं सहःऽदां सुऽवीरं त्वा सुऽआयुधं सुऽवज्रं आ ब्रह्म नव्यं अवसे ववृत्यात् ॥१३॥ सः नः वाजाय श्रवसे इषे च राये धेहि द्युऽमतः इंद्र विप्रान् भरत्ऽवाजे नृऽवतः इंद्र सूरीन् दिवि च स्म एधि पार्ये नः इंद्र ॥१४॥ अया वाजं देवऽहितं सनेम मदेम शतऽहिमाः सुऽवीराः ॥ १५ ॥ ३ ॥

---

॥१८॥ तं ऊं स्तुहि यः अभिभूतिऽओजाः वन्वन् अवातः पुरु-

हूत इंद्रः । अषाळ्हमुग्रं सहमानमाभिर्गीर्भिर्वर्ध वृषभं चर्षणीनां ॥१॥ स युध्मः सत्वा खजकृत्समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी । बृहद्रेणुश्च्यवनो मानुषीणामेकः कृष्टीनामभवत्सहावा ॥२॥ त्वं ह नु त्यददमायो दस्यूँरेकः कृष्टीरवनोरार्याय । अस्ति स्विन्नु वीर्यं१ तत्त इंद्र न स्विदस्ति तदृतुथा वि वोचः ॥३॥ सदिद्धि ते तुविजातस्य मन्ये सहः सहिष्ठ तुरतस्तुरस्य । उग्रमुग्रस्य तवसस्तवीयोऽरध्रस्य रध्रतुरो बभूव ॥४॥ तन्नः प्रत्नं सख्यमस्तु युष्मे इत्था वदद्भिर्वलमंगिरोभिः । हन्नच्युतच्युद्दस्मेषयंतमृणोः पुरो वि दुरो अस्य विश्वाः ॥५॥४॥ स हि धीभिर्हव्यो अस्त्युग्र ईशानकृन्महति वृत्रतूर्ये । स तोकसाता तनये स वज्री वितंतसाय्यो अभवत्समत्सु ॥६॥ स मज्मना जनिम मानुषाणाममर्त्येन नाम्नाति प्र सर्स्रे । स द्युम्नेन स शवसोत राया स वीर्येण नृतमः समोकाः ॥७॥ स यो न मुहे न मिथू जनो भूत्सुमंतुनामा चुमुरिं धुनिं च । वृणक्पिप्रुं शंबरं शुष्णमिंद्रः पुरां च्यौत्नाय शयथाय नू चित् ॥८॥ उदावता त्वक्षसा पन्यसा च वृत्रहत्याय रथमिंद्र तिष्ठ । धिष्व वज्रं हस्त आ दक्षिणत्राभि प्र मंद पुरुदत्र मायाः ॥९॥ अग्निर्न शुष्कं वनमिंद्र हेती रक्षो नि धक्ष्यशनिर्न भीमा । गंभीरय ऋष्वया यो रुरोजाध्वानयद्दुरिता दंभयच्च ॥१०॥५॥ आ सहस्रं पथिभिरिंद्र राया तुविद्युम्न तुविवाजेभिरर्वाक् । याहि सूनो सहसो यस्य नू चिददेव ईशे पुरुहूत योतोः ॥११॥ प्र तुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः । नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥१२॥ प्र तत्ते अद्या करणं कृतं

ऽहूतः इंद्रः अषाळ्हं उग्रं सहमानं आभिः गीःऽभिः वर्ध वृषभं चर्षणीनां ॥१॥ सः युध्मः सत्वा खजऽकृत् समत्ऽवा तुविऽम्रक्षः नदनुऽमान् ऋजीषी बृहत्ऽरेणुः च्यवनः मानुषीणां एकः कृष्टीनां अभवत् सहऽवा ॥२॥ त्वं ह नु त्यत् अदमयः दस्यून् एकः कृष्टीः अवनोः आर्याय अस्ति स्वित् नु वीर्यं तत् ते इंद्र न स्वित् अस्ति तत् ऋतुऽथा वि वोचः ॥३॥ सत् इत् हि ते तुविऽजातस्य मन्ये सहः सहिष्ठ तुरतः तुरस्य उग्रं उग्रस्य तवसः तवीयः अरध्रस्य रध्रऽतुरः बभूव ॥४॥ तत् नः प्रत्नं सख्यं अस्तु युष्मे इत्था वदत्ऽभिः वलं अंगिरःऽभिः हन् अच्युतऽच्युत् दस्म इषयंतं ऋणोः पुरः वि दुरः अस्य विश्वाः ॥५॥४॥ सः हि धीभिः हव्यः अस्ति उग्रः ईशानऽकृत् महति वृत्रऽतूर्ये सः तोकऽसाता तनये सः वज्री वितंतसाय्यः अभवत् समत्ऽसु ॥६॥ सः मज्मना जनिम मानुषाणां अमर्त्येन नाम्ना अति प्र सर्स्रे सः द्युम्नेन सः शवसा उत राया सः वीर्येण नृऽतमः संऽओकाः ॥७॥ सः यः न मुहे न मिथु जनः भूत् सुमंतुऽनामा चुमुरिं धुनिं च वृणक् पिप्रुं शंबरं शुष्णं इंद्रः पुरां च्यौत्नाय शयथाय नु चित् ॥८॥ उतऽअवता त्वक्षसा पन्यसा च वृत्रऽहत्याय रथं इंद्र तिष्ठ धिष्व वज्रं हस्ते आ दक्षिणऽत्रा अभि प्र मंद पुरुऽदत्र मायाः ॥९॥ अग्निः न शुष्कं वनं इंद्र हेतिः रक्षः नि धक्षि अशनिः न भीमा गंभीरया ऋष्वया यः रुरोज अध्वनयत् दुःऽइता दंभयत् च ॥१०॥५॥ आ सहस्रं पथिऽभिः इंद्र राया तुविऽद्युम्न तुविऽवाजेभिः अर्वाक् याहि सूनो सहसः यस्य नु चित् अदेवः ईशे पुरुऽहूत योतोः ॥११॥ प्र तुविऽद्युम्नस्य स्थविरस्य घृष्वेः दिवः ररप्शे महिमा पृथिव्याः न अस्य शत्रुः न प्रतिऽमानं अस्ति न प्रतिऽस्थिः पुरुऽमायस्य सह्योः ॥१२॥ प्र तत् ते अद्य करणं कृतं

भूत्कुत्सं यदायुमतिथिग्वमस्मै । पुरू सहस्रा नि शिशा अभि क्षामुत्तूर्वयाणं धृषता निनेथ ॥१३॥ अनु त्वाहिघ्ने अध देव देवा मदन्विश्वे कवितमं कवीनां । करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः ॥१४॥ अनु द्यावापृथिवी तत्त ओजोऽमर्त्या जिहत इंद्र देवाः । कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥१५॥६॥

---

॥१९॥ १-१३ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१९॥ महाँ इंद्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥१॥ इंद्रमेव धिषणा सातये धाद्बृहंतमृष्वमजरं युवानं । अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद्यो वावृधे असामि ॥२॥ पृथू करस्ना बहुला गभस्ती अस्मद्र्य१क्सं मिमीहि श्रवांसि । यूथेव पश्वः पशुपा दमूना अस्माँ इंद्राभ्या ववृत्स्वाजौ ॥३॥ तं व इंद्रं चतिनमस्य शाकैरिह नूनं वाजयंतो हुवेम । यथा चित्पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥४॥ धृतव्रतो धनदाः सोमवृद्धः स हि वामस्य वसुनः पुरुक्षुः । सं जग्मिरे पथ्या३ रायो अस्मिन्त्समुद्रे न सिंधवो यादमानाः ॥५॥७॥ शविष्ठं न आ भर शूर शव ओजिष्ठमोजो अभिभूत उग्रं । विश्वा द्युम्ना वृष्ण्या मानुषाणामस्मभ्यं दा हरिवो मादयध्यै ॥६॥ यस्ते मदः पृतनाषाळमृध्र इंद्र तं न आ भर शूशुवांसं । येन तोकस्य तनयस्य सातौ मंसीमहि जिगीवांसस्त्वोताः ॥७॥ आ नो भर वृषणं शुष्ममिंद्र धनस्पृतं शूशुवांसं सुदक्षं । येन वंसाम पृतनासु शत्रून्तवोतिभिरुत जामीँरजामीन् ॥८॥ आ ते शुष्मो वृषभ एतु पश्चादोत्तरादध-

भूत् कुत्सं यत् आयुं अतिथिऽग्वं अस्मै पुरु सहस्रा नि शिशाः अभि क्षां उत् तूर्वयाणं धृषता निनेथ॥१३॥ अनु त्वा अहिऽघ्ने अध देव देवाः मदन् विश्वे कविऽतमं कवीनां करः यत्र वरिवः बाधिताय दिवे जनाय तन्वे गृणानः॥१४॥ अनु द्यावापृथिवी इति तत् ते ओजः अमर्त्याः जिहते इंद्र देवाः कृष्व कृत्नो इति अकृतं यत् ते अस्ति उक्थं नवीयः जनयस्व यज्ञैः॥१५॥६॥

---

॥१९॥ महान् इंद्रः नृऽवत् आ चर्षणिऽप्राः उत द्विऽबर्हाः अमिनः सहःऽभिः अस्मद्र्यक् ववृधे वीर्याय उरुः पृथुः सुऽकृतः कर्तृऽभिः भूत्॥१॥ इंद्रं एव धिषणा सातये धात् बृहंतं ऋष्वं अजरं युवानं अषाळ्हेन शवसा शूशुऽवांसं सद्यः चित् यः ववृधे असामि॥२॥ पृथू इति करस्ना बहुला गभस्ती इति अस्मद्र्यक् सं मिमीहि श्रवांसि यूथाऽइव पश्वः पशुऽपाः दमूनाः अस्मान् इंद्र अभि आ ववृत्स्व आजौ॥३॥ तं वः इंद्रं चतिनं अस्य शाकैः इह नूनं वाजऽयंतः हुवेम यथा चित् पूर्वे जरितारः आसुः अनेद्याः अनवद्याः अरिष्टाः॥४॥ धृतऽव्रतः धनऽदाः सोमऽवृद्धः सः हि वामस्य वसुनः पुरुऽक्षुः सं जग्मिरे पथ्याः रायः अस्मिन् समुद्रे न सिंधवः यादमानाः॥५॥७॥ शविष्ठं नः आ भर शूर शवः ओजिष्ठं ओजः अभिऽभूते उग्रं विश्वा द्युम्ना वृष्ण्या मानुषाणां अस्मभ्यं दाः हरिऽवः मादयध्यै॥६॥ यः ते मदः पृतनाषाट् अमृध्रः इंद्र तं नः आ भर शूशुऽवांसं येन तोकस्य तनयस्य सातौ मंसीमहि जिगीवांसः त्वाऽऊताः॥७॥ आ नः भर वृषणं शुष्मं इंद्र धनऽस्पृतं शूशुऽवांसं सुऽदक्षं येन वंसाम पृतनासु शत्रून् तव ऊतिऽभिः उत जामीन् अजामीन्॥८॥ आ ते शुष्मः वृषभः एतु पश्चात् आ उत्तरात् अध-

रादा पुरस्तात्। आ विश्वतो अभि समेत्वर्वाङिंद्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ ९ ॥ नृवत्त इंद्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः। ईक्षे हि वस्व उभयस्य राजन्धा रत्नं महि स्थूरं बृहंतं ॥ १० ॥ मरुत्वंतं वृषभं वावृधानमकवारिं दिव्यं शासमिंद्रं। विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ११ ॥ जनं वज्रिन्महि चिन्मन्यमानमेभ्यो नृभ्यो रंधया येष्वस्मि। अधा हि त्वा पृथिव्यां शूरसातौ हवामहे तनये गोष्वप्सु ॥ १२ ॥ वयं त एभिः पुरुहूत सख्यैः शत्रोःशत्रोरुत्तर इत्स्याम। घ्नंतो वृत्राण्युभयानि शूर राया मदेम बृहता त्वोताः ॥ १३ ॥ ८ ॥

---

॥ २० ॥ १–१३ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ १–६. ८–१३ त्रिष्टुप्। ७ विराट् ॥

॥ २० ॥ द्यौर्न य इंद्राभि भूमार्यस्तस्थौ रयिः शवसा पृत्सु जनान्। तं नः सहस्रभरमुर्वरासां दद्धि सूनो सहसो वृत्रतुरं ॥ १ ॥ दिवो न तुभ्यमन्विंद्र सत्रासुर्यं देवेभिर्धायि विश्वं। अहिं यद्वृत्रमपो वव्रिवांसं हन्नृजीषिन्विष्णुना सचानः ॥ २ ॥ तूर्वन्नोजीयान्तवसस्तवीयान्कृतब्रह्मेंद्रो वृद्धमहाः। राजाभवन्मधुनः सोम्यस्य विश्वासां यत्पुरां दर्त्नुमावत् ॥ ३ ॥ शतैरपद्रन्पणय इंद्रात्र दशोणये कवयेऽर्कसातौ। वधैः शुष्णस्याशुषस्य मायाः पित्वो नारिरेचीत्किं चन प्र ॥ ४ ॥ महो द्रुहो अप विश्वायु धायि वज्रस्य यत्पतने पादि शुष्णः। उरु ष सरथं सारथये करिंद्रः कुत्साय सूर्यस्य सातौ ॥ ५ ॥ ९ ॥ प्र श्येनो न मदिरमंशुमस्मै शिरो दासस्य नमुचेर्मथायन्। प्रावन्नमीं साप्यं ससंतं पृणग्राया समिषा सं स्वस्ति ॥ ६ ॥ वि पिप्रोरहिमायस्य दृळ्हाः पुरो वज्रिञ्छवसा न दर्दः।

रात् आ पुरस्तात् आ विश्वतः अभि सं एतु अर्वाङ् इंद्र द्युम्नं स्वः-
ऽवत् धेहि अस्मे ॥९॥ नृऽवत् ते इंद्र नृऽतमाभिः ऊती वंसीमहि
वामं श्रोमतेभिः ईक्षे हि वस्वः उभयस्य राजन् धाः रत्नं महि स्थूरं
बृहंतं ॥१०॥ मरुत्वंतं वृषभं ववृधानं अकवऽअरिं दिव्यं शासं इंद्रं
विश्वऽसहं अवसे नूतनाय उग्रं सहःऽदां इह तं हुवेम ॥११॥ जनं
वज्रिन् महि चित् मन्यमानं एभ्यः नृऽभ्यः रंधय येषु अस्मि अध
हि त्वा पृथिव्यां शूरऽसातौ हवामहे तनये गोषु अप्ऽसु ॥१२॥
वयं ते एभिः पुरुऽहूत सख्यैः शत्रोःऽशत्रोः उत्ऽतरे इत् स्याम
घ्नंतः वृत्राणि उभयानि शूर राया मदेम बृहता त्वाऽऊताः
॥ १३ ॥ ८ ॥

---

॥२०॥ द्यौः न यः इंद्र अभि भूम अर्यः तस्थौ रयिः शवसा पृत्ऽसु
जनान् तं नः सहस्रऽभरं उर्वराऽसां दद्धि सूनो सहसः वृत्रऽतुरं
॥१॥ दिवः न तुभ्यं अनु इंद्र सत्रा असुर्यं देवेभिः धायि विश्वं अहिं
यत् वृत्रं अपः वव्रिऽवांसं हन् ऋजीषिन् विष्णुना सचानः ॥२॥
तूर्वन् ओजीयान् तवसः तवीयान् कृतऽब्रह्मा इंद्रः वृद्धऽमहाः
राजा अभवत् मधुनः सोम्यस्य विश्वासां यत् पुरां दर्त्नुं आवत्
॥३॥ शतैः अपद्रन् पणयः इंद्र अत्र दशऽओणये कवये अर्कऽसातौ
वधैः शुष्णस्य अशुषस्य मायाः पित्वः न अरिरेचीत् किं चन प्र
॥४॥ महः द्रुहः अप विश्वऽआयु धायि वज्रस्य यत् पतने पादि
शुष्णः उरु सः सऽरथं सारथये कः इंद्रः कुत्साय सूर्यस्य सातौ
॥५॥९॥ प्र श्येनः न मदिरं अंशुं अस्मै शिरः दासस्य नमुचेः मथा-
यन् प्र आवत् नमीं साप्यं ससंतं पृणक् राया सं इषा सं स्वस्ति
॥६॥ वि पिप्रोः अहिऽमायस्य दृळ्हाः पुरः वज्रिन् शवसा न दर्दः

सुदामन्तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः ॥७॥ स वेतसुं दशमायं दशोणिं तूतुजिमिंद्रः स्वभिष्टिसुम्नः। आ तुग्रं शश्वदिभं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ॥८॥ स ईं स्पृधो वनते अप्रतीतो बिभ्रद्वज्रं वृत्रहणं गभस्तौ। तिष्ठद्धरी अध्यस्तेव गर्ते वचोयुजा वहत इंद्रमृष्वं ॥९॥ सनेम तेऽवसा नव्य इंद्र प्र पूरवः स्तवंत एना यज्ञैः। सप्त यत्पुरः शर्म शारदीर्दर्द्धन्दासीः पुरुकुत्साय शिक्षन् ॥१०॥ त्वं वृध इंद्र पूर्व्यो भूर्वरिवस्यन्नुशने काव्याय। परा नववास्त्वमनुदेयं महे पित्रे ददाथ स्वं नपातं ॥११॥ त्वं धुनिरिंद्र धुनिमतीर्ऋणोरपः सीरा न स्रवंतीः। प्र यत्समुद्रमति शूर पर्षि पारया तुर्वशं यदुं स्वस्ति ॥१२॥ तव ह त्यदिंद्र विश्वमाजौ सस्तो धुनीचुमुरी या ह सिष्वप्। दीदयदित्तुभ्यं सोमेभिः सुन्वन्दभीतिरिध्मभृतिः पक्थ्य१र्कैः ॥१३॥१०॥

---

॥ २१ ॥ १–१२ भरद्वाजो बार्हस्पत्यः॥ १–८. १०. १२ इंद्रः। ९. ११ विश्वे देवाः॥ त्रिष्टुप्॥

॥२१॥ इमा उ त्वा पुरुतमस्य कारोर्हव्यं वीर हव्या हवंते। धियो रथेष्ठामजरं नवीयो रयिर्विभूतिरीयते वचस्या ॥१॥ तमु स्तुष इंद्रं यो विदानो गिर्वाहसं गीर्भिर्यज्ञवृद्धं। यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वं ॥२॥ स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार। कदा ते मर्ता अमृतस्य धामेयक्षंतो न मिनंति स्वधावः ॥३॥ यस्ता चकार स कुह स्विदिंद्रः कमा जनं चरति कासु विक्षु। कस्ते यज्ञो मनसे शं वराय को अर्क इंद्र कतमः स होता ॥४॥ इदा हि ते वेविषतः पुराजाः प्रत्नास आसुः पुरुकृत्सखायः। ये मध्यमास उत नूतनास उतावमस्य पुरुहूत बोधि ॥५॥११॥ तं पृच्छंतोऽवरासः

सुऽदामन् तत् रेक्णः अप्रऽमृष्यं ऋजिश्वने दात्रं दाशुषे दाः ॥ ७ ॥
सः वेतसुं दशऽमायं दशऽओणिं तूतुजिं इंद्रः स्वभिष्टिऽसुम्नः आ
तुग्रं शश्वत् इभं द्योतनाय मातुः न सीं उप सृज इयध्यै ॥ ८ ॥ सः ई
स्पृधः वनते अप्रतिऽइतः बिभ्रत् वज्रं वृत्रऽहनं गभस्तौ तिष्ठत्
हरी अधि अस्ताऽइव गर्ते वचःऽयुजा वहतः इंद्रं ऋष्वं ॥ ९ ॥ स-
नेम ते अवसा नव्यः इंद्र प्र पूरवः स्तवंते एना यज्ञैः सप्त यत् पुरः
शर्म शारदीः दर्त् हन् दासीः पुरुऽकुत्साय शिक्षन् ॥ १० ॥ त्वं वृधः इंद्र
पूर्व्यः भूः वरिवस्यन् उशने काव्याय परा नवऽवास्त्वं अनुऽदेयं
महे पित्रे ददाथ स्वं नपातं ॥ ११ ॥ त्वं धुनिः इंद्र धुनिऽमतीः ऋणोः
अपः सीराः न स्रवंतीः प्र यत् समुद्रं अति शूर पर्षि पारय तुर्वशं
यदुं स्वस्ति ॥ १२ ॥ तव ह त्यत् इंद्र विश्वं आजौ सस्तः धुनीचुमुरी
या ह सिस्वप् दीदयत् इत् तुभ्यं सोमेभिः सुन्वन् दभीतिः इध्मऽभृ-
तिः पक्थी अर्कैः ॥ १३ ॥ १० ॥

---

॥ २१ ॥ इमाः ऊं त्वा पुरुऽतमस्य कारोः हव्यं वीर हव्याः हवंते
धियः रथेऽस्थां अजरं नवीयः रयिः विऽभूतिः ईयते वचस्या ॥ १ ॥
तं ऊं स्तुषे इंद्रं यः विदानः गिर्वाहसं गीःऽभिः यज्ञऽवृद्धं यस्य दिवं
अति मह्ना पृथिव्याः पुरुऽमायस्य रिरिचे महिऽत्वं ॥ २ ॥ सः इत्
तमः अवयुनं ततन्वत् सूर्येण वयुनऽवत् चकार कदा ते मर्ताः
अमृतस्य धाम इयक्षंतः न मिनंति स्वधाऽवः ॥ ३ ॥ यः ता चकार
सः कुह स्वित् इंद्रः कं आ जनं चरति कासु विक्षु कः ते यज्ञः मनसे
शं वराय कः अर्कः इंद्र कतमः सः होता ॥ ४ ॥ इदा हि ते वेविषतः
पुराऽजाः प्रत्नासः आसुः पुरुऽकृत् सखायः ये मध्यमासः उत नू-
तनासः उत अवमस्य पुरुऽहूत बोधि ॥ ५ ॥ ११ ॥ तं पृच्छंतः अवरासः

परांयि प्रत्ना तं इंद्र श्रुत्यानुं येमुः । अर्चामसि वीर ब्रह्मवाहो यादेव विद्म तात्त्वा महांतं ॥६॥ अभि त्वा पाजो रक्षसो वि तस्थे महि जज्ञानमभि तत्सु तिष्ठ । तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥७॥ स तु श्रुधींद्र नूतनस्य ब्रह्मण्यतो वीर कारुधायः । त्वं ह्याऽपिः प्रदिवि पितॄणां शश्वद्बभूथ सुहव एष्टौ ॥८॥ प्रोतये वरुणं मित्रमिंद्रं मरुतः कृष्वावसे नो अद्य । प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वतांश्च ॥९॥ इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चंत्यर्कैः । श्रुधी हवमा हुवतो हुवानो न त्वावाँ अन्यो अमृत त्वदस्ति ॥१०॥ नू म आ वाचमुप याहि विद्वान्विश्वेभिः सूनो सहसो यजत्रैः । ये अग्निजिह्वा ऋतसाप आसुर्ये मनुं चक्रुरुपरं दसाय ॥११॥ स नो बोधि पुरएता सुगेषूत दुर्गेषु पथिकृद्विदानः । ये अश्रमास उरवो वहिष्ठास्तेभिर्न इंद्राभि वक्षि वाजं ॥१२॥१२॥

---

॥ २२ ॥ १-११ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२२॥ य एक इद्धव्यश्चर्षणीनामिंद्रं तं गीर्भिरभ्यर्च आभिः । यः पत्यते वृषभो वृष्ण्यावान्सत्यः सत्वा पुरुमायः सहस्वान् ॥१॥ तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयंतः । नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठं ॥२॥ तमीमह इंद्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः । यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै ॥३॥ तन्नो वि वोचो यदि ते पुरा चिज्जरितार आनशुः सुम्नमिंद्र । कस्ते भागः किं वयो दुध्र खिद्वः पुरुहूत पुरूवसोऽसुरघ्नः ॥४॥ तं पृच्छंती वज्रहस्तं रथेष्ठामिंद्रं वेपी वक्वरी यस्य नू

पराणि प्रत्ना ते इंद्र श्रुत्या अनु येमुः अचीमसि वीर ब्रह्मऽवाहः याति एव विद्म तात् त्वा महांतं ॥ ६ ॥ अभि त्वा पाजः रक्षसः वि तस्थे महि जज्ञानं अभि तत् सु तिष्ठ तव प्रत्नेन युज्येन सख्या वज्रेण धृष्णो अप ता नुदस्व ॥ ७ ॥ सः तु श्रुधि इंद्र नूतनस्य ब्रह्मण्यतः वीर कारुऽधायः त्वं हि आपिः प्रऽदिवि पितॄणां शश्वत् बभूथ सुऽहवः आऽइष्टौ ॥ ८ ॥ प्र ऊतये वरुणं मित्रं इंद्रं मरुतः कृष्व अवसे नः अद्य प्र पूषणं विष्णुं अग्निं पुरंऽधिं सवितारं ओषधीः पर्वतान् च ॥ ९ ॥ इमे ऊं इति त्वा पुरुऽशाक प्रऽयज्यो इति जरितारः अभि अर्चंति अर्कैः श्रुधि हवं आ हुवतः हुवानः न त्वाऽवान् अन्यः अमृत त्वत् अस्ति ॥ १० ॥ नु मे आ वाचं उप याहि विद्वान् विश्वेभिः सूनो इति सहसः यजत्रैः ये अग्निऽजिह्वाः ऋतऽसापः आसुः ये मनुं चक्रुः उपरं दसाय ॥ ११ ॥ सः नः बोधि पुरःऽएता सुऽगेषु उत दुःऽगेषु पथिऽकृत् विदानः ये अश्रमासः उरवः वहिष्ठाः तेभिः नः इंद्र अभि वक्षि वाजं ॥ १२ ॥ १२ ॥

---

॥ २२ ॥ यः एकः इत् हव्यः चर्षणीनां इंद्रं तं गीःऽभिः अभि अर्चे आभिः यः पत्यते वृषभः वृष्ण्यऽवान् सत्यः सत्वा पुरुऽमायः सहस्वान् ॥ १ ॥ तं ऊं इति नः पूर्वे पितरः नवऽग्वाः सप्त विप्रासः अभि वाजयंतः नक्षत्ऽदाभं ततुरिं पर्वतेऽस्थां अद्रोघऽवाचं मतिऽभिः शविष्ठं ॥ २ ॥ तं ईमहे इंद्रं अस्य रायः पुरुऽवीरस्य नृऽवतः पुरुऽक्षोः यः अस्कृधोयुः अजरः स्वःऽवान् तं आ भर हरिऽवः मादयध्यै ॥ ३ ॥ तत् नः वि वोचः यदि ते पुरा चित् जरितारः आनशुः सुम्नं इंद्र कः ते भागः किं वयः दुध्र खिद्वः पुरुऽहूत पुरुऽवसो इति असुरऽघ्नः ॥ ४ ॥ तं पृच्छंती वज्रऽहस्तं रथेऽस्थां इंद्रं वेपी वक्वरी यस्य नु

गीः। तुविग्राभं तुविकूर्मिं रभोदां गातुमिषे नक्षते तुम्रमच्छ ॥५॥१३॥ अया ह त्यं मायया वावृधानं मनोजुवा स्वतवः पर्वतेन। अच्युता चिद्वीळिता स्वोजो रुजो वि दृळ्हा धृषता विरप्शिन् ॥६॥ तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत्परितंसयध्यै। स नो वक्षदनिमानः सुवह्मेंद्रो विश्वान्यति दुर्गहाणि ॥७॥ आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा। तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च ॥८॥ भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेषसंदृक्। धिष्व वज्रं दक्षिण इंद्र हस्ते विश्वा अजुर्य दयसे वि मायाः ॥९॥ आ संयतमिंद्र णः स्वस्तिं शत्रुतूर्याय बृहतीममृध्रां। यया दासान्यार्याणि वृत्रा करो वज्रिन्त्सुतुका नाहुषाणि ॥१०॥ स नो नियुद्भिः पुरुहूत वेधो विश्ववाराभिरा गहि प्रयज्यो। न या अदेवो वरते न देव आभिर्याहि तूयमा मद्र्यद्रिक् ॥११॥१४॥

॥ २३ ॥ १-१० भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२३॥ सुत इत्त्वं निमिश्ल इंद्र सोमे स्तोमे ब्रह्मणि शस्यमान उक्थे। यद्वा युक्ताभ्यां मघवन्हरिभ्यां बिभ्रद्वज्रं बाह्वोरिंद्र यासि ॥१॥ यद्वा दिवि पार्ये सुष्विमिंद्र वृत्रहत्येऽवसि शूरसातौ। यद्वा दक्षस्य बिभ्युषो अबिभ्यदरंधयः शर्धत इंद्र दस्यून् ॥२॥ पाता सुतमिंद्रो अस्तु सोमं प्रणेनीरुग्रो जरितारमूती। कर्ता वीराय सुष्वय उ लोकं दाता वसु स्तुवते कीरये चित् ॥३॥ गंतेयांति सवना हरिभ्यां बभ्रिर्वज्रं पपिः सोमं ददिर्गाः। कर्ता वीरं नर्यं सर्ववीरं श्रोता हवं गृणतः स्तोमवाहाः ॥४॥ अस्मै वयं यद्वावान तद्विविष्म इंद्राय यो नः प्रदिवो अप-

गीः तुविऽयाभं तुविऽकूर्मिं रभःऽदां गातुं इषे नक्षते तुम्रं अच्छ ॥५॥१३॥ अया ह त्यं मायया ववृधानं मनःऽजुवा स्वऽतवः पर्वतेन अच्युता चित् वीळिता सुऽओजः रुजः वि दृळ्हा धृषता विऽरप्शिन् ॥६॥ तं वः धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नऽवत् परिऽतंसयध्यै सः नः वक्षत् अनिऽमानः सुऽवह्मा इंद्रः विश्वानि अति दुःऽगहानि ॥७॥ आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयः अंतरिक्षा तपं वृषन् विश्वतः शोचिषा तान् ब्रह्मऽद्विषे शोचय क्षां अपः च ॥८॥ भुवः जनस्य दिव्यस्य राजा पार्थिवस्य जगतः त्वेषऽसंदृक् धिष्व वज्रं दक्षिणे इंद्र हस्ते विश्वाः अजुर्य दयसे वि मायाः ॥९॥ आ संऽयतं इंद्र नः स्वस्तिं शत्रुऽतूर्याय बृहतीं अमृध्रां यया दासानि आर्याणि वृत्रा करः वज्रिन् सुऽतुका नाहुषाणि ॥१०॥ सः नः नियुत्ऽभिः पुरुऽहूत वेधः विश्वऽवाराभिः आ गहि प्रऽयज्यो॰ न याः अदेवः वरते न देवः आ आभिः याहि तूयं आ मद्र्यद्रिक् ॥ ११ ॥ १४ ॥

---

॥२३॥ सुते इत् त्वं निऽमिश्लः इंद्र सोमे स्तोमे ब्रह्मणि शस्यमाने उक्थे यत् वा युक्ताभ्यां मघऽवन् हरिऽभ्यां बिभ्रत् वज्रं बाह्वोः इंद्र यासि ॥१॥ यत् वा दिवि पार्ये सुस्विं इंद्र वृत्रऽहत्ये अवसि शूरऽसातौ यत् वा दक्षस्य बिभ्युषः अबिभ्यत् अरंधयः शर्धतः इंद्र दस्यून् ॥२॥ पाता सुतं इंद्रः अस्तु सोमं प्रऽनेनीः उग्रः जरितारं ऊती कर्ता वीराय सुस्वये ऊं लोकं दाता वसु स्तुवते कीरये चित् ॥३॥ गंता इयंति सवना हरिऽभ्यां बभ्रिः वज्रं पपिः सोमं ददिः गाः कर्ता वीरं नर्यं सर्वऽवीरं श्रोता हवं गृणतः स्तोमऽवाहाः ॥४॥ अस्मै वयं यत् ववान तत् विविष्मः इंद्राय यः नः प्रऽदिवः अपः

स्कः । सुते सोमे स्तुमसि शंसदुक्थेंद्राय ब्रह्म वर्धनं यथासत् ॥५॥१५॥ ब्रह्माणि हि चकृषे वर्धनानि तावत्त इंद्र मतिभिर्विविष्मः । सुते सोमे सुतपाः शंतमानि रांद्र्या क्रियास्म वक्षणानि यज्ञैः ॥ ६ ॥ स नो बोधि पुरोळाशं रराणः पिबा तु सोमं गोऋजीकमिंद्र । एदं बर्हिर्यजमानस्य सीदोरुं कृधि त्वायत उ लोकं ॥ ७ ॥ स मंदस्वा ह्यनु जोषमुग्र प्र त्वा यज्ञास इमे अश्नुवंतु । प्रेमे हवासः पुरुहूतमस्मे आ त्वेयं धीरवस इंद्र यम्याः ॥ ८ ॥ तं वः सखायः सं यथा सुतेषु सोमेभिरीं पृणता भोजमिंद्रं । कुवित्तस्मा असति नो भराय न सुष्विमिंद्रोऽवसे मृधाति ॥ ९ ॥ एवेदिंद्रः सुते अस्तावि सोमे भरद्वाजेषु क्षयदिन्मघोनः । असद्यथा जरित्र उत सूरिरिंद्रो रायो विश्ववारस्य दाता ॥ १० ॥ १६ ॥ २ ॥

---

॥ २४ ॥ १-१० भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ २४ ॥ वृषा मद इंद्रे श्लोक उक्था सचा सोमेषु सुतपा ऋजीषी । अर्चत्र्यो मघवा नृभ्य उक्थैर्द्युक्षो राजा गिरामक्षितोतिः ॥ १ ॥ ततुरिर्वीरो नर्यो विचेताः श्रोता हवं गृणत उर्व्यूतिः । वसुः शंसो नरां कारुधाया वाजी स्तुतो विदथे दाति वाजं ॥२॥ अक्षो न चक्र्योः शूर बृहन्प्र ते मह्ना रिरिचे रोदस्योः । वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिंद्र पूर्वीः ॥३॥ शचीवतस्ते पुरुशाक शाका गवामिव स्रुतयः संचरणीः । वत्सानां न तंतयस्त इंद्र दामन्वंतो अदामानः सुदामन् ॥४॥ अन्यदद्य कर्वरमन्यदु श्वोऽसच्च सन्मुहुराचक्रिरिंद्रः । मित्रो नो अत्र वरुणश्च पूषार्यो वशस्य पर्येतास्ति ॥ ५ ॥ १७ ॥ वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिंद्रानयंत

कः॰ सुते सोमे स्तुमसि शंसत् उक्था इंद्राय ब्रह्म वर्धनं यथा
असत् ॥५॥१५॥ ब्रह्माणि हि चकृषे वर्धनानि तावत् ते इंद्र मति-
ऽभिः विविष्मः सुते सोमे सुतऽपाः शंऽतमानि रांड्या क्रियास्म
वक्षणानि यज्ञैः ॥६॥ सः नः बोधि पुरोळाशं रराणः पिब तु सोमं
गोऽऋजीकं इंद्र आ इदं बर्हिः यजमानस्य सीद उरुं कृधि त्वा-
ऽयतः ऊं' लोकं ॥७॥ सः मंदस्व हि अनु जोषं उग्र प्र त्वा यज्ञासः
इमे अश्नुवंतु प्र इमे हवासः पुरुऽहूतं अस्मे आ त्वा इयं धीः अवसे
इंद्र यम्याः ॥८॥ तं वः सखायः सं यथा सुतेषु सोमेभिः ईं पृणत भोजं
इंद्रं कुवित् तस्मै असति नः भराय न सुष्विं इंद्रः अवसे मृधाति
॥९॥ एव इत् इंद्रः सुते अस्तावि सोमे भरतऽवाजेषु क्षयत् इत् म-
घोनः असत् यथा जरित्रे उत सूरिः इंद्रः रायः विश्वऽवारस्य दाता
॥ १० ॥ १६ ॥ २ ॥

---

॥२४॥ वृषा मदः इंद्रे श्लोकः उक्था सचा सोमेषु सुतऽपाः
ऋजीषी अर्चत्र्यः मघऽवा नृऽभ्यः उक्थैः द्युक्षः राजा गिरां अ-
क्षितऽऊतिः ॥१॥ ततुरिः वीरः नर्यः विऽचेताः श्रोता हवं गृणतः
उर्विऽऊतिः वसुः शंसः नरां कारुऽधायाः वाजी स्तुतः विदथे
दाति वाजं ॥२॥ अक्षः न चक्र्योः शूर बृहन् प्र ते मह्ना रिरिचे रोद-
स्योः वृक्षस्य नु ते पुरुऽहूत वयाः वि ऊतयः रुरुहुः इंद्र पूर्वीः ॥३॥
शचीऽवतः ते पुरुऽशाक शाकाः गवांऽइव स्रुतयः संऽचरणीः
वत्सानां न तंतयः ते इंद्र दामन्ऽवंतः अदामानः सुऽदामन् ॥४॥
अन्यत् अद्य कर्वरं अन्यत् ऊं' श्वः असत् च सत् मुहुः आऽचक्रिः
इंद्रः मित्रः नः अत्र वरुणः च पूषा अर्यः वशस्य परिऽएता अस्ति
॥५॥१७॥ वि त्वत् आपः न पर्वतस्य पृष्ठात् उक्थेभिः इंद्र अनयंत

यज्ञैः । तं त्वाभिः सुष्टुतिभिर्वाजयंत आजिं न जग्मुर्गिर्वाहो
अश्वाः ॥६॥ न यं जरंति शरदो न मासा न द्याव इंद्रमवक-
र्शयंति । वृद्धस्य चिद्वर्धतामस्य तनूः स्तोमेभिरुक्थैश्च शस्यमा-
ना ॥ ७ ॥ न वीळवे नमते न स्थिराय न शर्धते दस्युजूताय
स्तवान् । अज्रा इंद्रस्य गिरयश्चिदृष्वा गंभीरे चिद्भवति
गाधमस्मै ॥ ८ ॥ गंभीरेण न उरुणामत्रिन्प्रेषो यंधि सुतपा-
वन्वाजान् । स्था ऊ षु ऊर्ध्व ऊती अरिषण्यन्नक्तोर्व्युष्टौ परि-
तक्म्यायां ॥ ९ ॥ सचस्व नायमवसे अभीक इतो वा तमिंद्र
पाहि रिषः । अमा चैनमरण्ये पाहि रिषो मदेम शतहिमाः
सुवीराः ॥ १० ॥ १८ ॥

॥ २५ ॥ १–९ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ २५ ॥ या त ऊतिरवमा या परमा या मध्यमेंद्र शुष्मि-
न्नस्ति । ताभिरू षु वृत्रहत्येऽवीर्न एभिश्च वाजैर्महान्न उग्र
॥ १ ॥ आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य व्यथया मन्यु-
मिंद्र । आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽव
तारीर्दासीः ॥ २ ॥ इंद्र जामय उत येऽजामयोऽर्वाचीनासो
वनुषो युयुज्रे । त्वमेषां विथुरा शवांसि जहि वृष्ण्यानि कृणु-
ही पराचः ॥ ३ ॥ शूरो वा शूरं वनते शरीरैस्तनूरुचा तरुषि
यत्कृण्वैते । तोके वा गोषु तनये यदप्सु वि क्रंदसी उर्वरासु
ब्रवैते ॥ ४ ॥ नहि त्वा शूरो न तुरो न धृष्णुर्न त्वा योधो मन्य-
मानो युयोध । इंद्र नकिष्ट्वा प्रत्यस्त्येषां विश्वा जातान्यभ्यसि
तानि ॥ ५ ॥ १९ ॥ स पत्यत उभयोर्नृम्णमयोर्यदी वेधसः समिथे
हवंते । वृत्रे वा महो नृवति क्षये वा व्यचस्वंता यदि वितंतसैते
॥ ६ ॥ अध स्मा ते चर्षणयो यदेजानिंद्र त्रातोत भवा वरूता ।

यज्ञैः तं त्वा आभिः सुस्तुतिऽभिः वाजयंतः आजिं न जग्मुः गिर्वाहः अश्वाः ॥६॥ न यं जरंति शरदः न मासाः न द्यावः इंद्रं अवऽकर्शयंति वृद्धस्य चित् वर्धतां अस्य तनूः स्तोमेभिः उक्थैः च शस्यमाना ॥७॥ न वीळवे नमते न स्थिराय न शर्धते दस्युऽजूताय स्तवान् अज्राः इंद्रस्य गिरयः चित् ऋष्वाः गंभीरे चित् भवति गाधं अस्मै ॥८॥ गंभीरेण नः उरुणा अमत्रिन् प्र इषः यंधि सुतऽपावन् वाजान् स्थाः ऊं ऊं सु ऊर्ध्वः ऊती अरिषण्यन् अक्तोः विऽउष्टौ परिऽतक्म्यायां ॥९॥ सचस्व नायं अवसे अभीके इतः वा तं इंद्र पाहि रिषः अमा च एनं अरण्ये पाहि रिषः मदेम शतऽहिमाः सुऽवीराः ॥ १० ॥ १८ ॥

---

॥२५॥ या ते ऊतिः अवमा या परमा या मध्यमा इंद्र शुष्मिन् अस्ति ताभिः ऊं सु वृत्रऽहत्ये अवीः नः एभिः च वाजैः महान् नः उग्र ॥१॥ आभिः स्पृधः मिथतीः अरिषण्यन् अमित्रस्य व्यथय मन्युं इंद्र आभिः विश्वाः अभिऽयुजः विषूचीः आर्याय विशः अव तारीः दासीः ॥२॥ इंद्र जामयः उत ये अजामयः अर्वाचीनासः वनुषः युयुज्रे त्वं एषां विथुरा शवांसि जहि वृष्ण्यानि कृणुहि पराचः ॥३॥ शूरः वा शूरं वनते शरीरैः तनूऽरुचा तरुषि यत् कृण्वैते तोके वा गोषु तनये यत् अप्ऽसु वि क्रंदसी उर्वरासु ब्रवैते ॥४॥ नहि त्वा शूरः न तुरः न धृष्णुः न त्वा योधः मन्यमानः युयोध इंद्र नकिः त्वा प्रति अस्ति एषां विश्वा जातानि अभि असि तानि ॥५॥१९॥ सः पत्यते उभयोः नृम्णं अयोः यदि वेधसः संऽइथे हवंते वृत्रे वा महः नृऽवति क्षये वा व्यचस्वंता यदि वितंतसैते ॥६॥ अध स्म ते चर्षणयः यत् एजान् इंद्र त्राता उत भव वरूता

अस्माकासो ये नृतमासो अर्य इंद्र सूरयो दधिरे पुरो नः ॥७॥ अनु ते दायि मह इंद्रियाय सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो यजत्रेंद्र देवेभिरनु ते नृषह्ये ॥८॥ एवा न स्पृधः समजा समत्स्विंद्र रारंधि मिथतीरदेवीः । विद्याम वस्तोरवसा गृणंतो भरद्वाजा उत त इंद्र नूनं ॥९॥२०॥

---

॥ २६ ॥ १-८ भरद्वाजो बार्हस्पत्यः । इंद्रः । त्रिष्टुप् ।

॥२६॥ श्रुधी न इंद्र ह्वयामसि त्वा महो वाजस्य सातौ वावृषाणाः । सं यद्विशोऽयंत शूरसाता उग्रं नोऽवः पार्ये अहन्दाः ॥१॥ त्वां वाजी हवते वाजिनेयो महो वाजस्य गध्यस्य सातौ । त्वां वृत्रेष्विंद्र सत्पतिं तरुत्रं त्वां चष्टे मुष्टिहा गोषु युध्यन् ॥२॥ त्वं कविं चोदयोऽर्कसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क् । त्वं शिरो अमर्मणः पराहन्नतिथिग्वाय शंस्यं करिष्यन् ॥३॥ त्वं रथं प्र भरो योधमृष्वमावो युध्यंतं वृषभं दशद्युं । त्वं तुग्रं वेतसवे सचाहन्त्वं तुजिं गृणंतमिंद्र तूतोः ॥४॥ त्वं तदुक्थमिंद्र बर्हणा कः प्र यच्छता सहस्रा शूर दर्षि । अव गिरेर्दासं शंबरं हन्प्रावो दिवोदासं चित्राभिरूती ॥५॥२१॥ त्वं श्रद्धाभिर्मंदसानः सोमैर्दभीतये चुमुरिमिंद्र सिष्वप् । त्वं रजिं पिठीनसे दशस्यन्षष्टिं सहस्रा शच्या सचाहन् ॥६॥ अहं चन तत्सूरिभिरानश्यां तव ज्याय इंद्र सुम्नमोजः । त्वया यत्स्तवंते सधवीर वीरास्त्रिवरूथेन नहुषा शविष्ठ ॥७॥ वयं ते अस्यामिंद्र द्युम्नहूतौ सखायः स्याम महिन प्रेष्ठाः । प्रातर्दनिः क्षत्रश्रीरस्तु श्रेष्ठो घने वृत्राणां सनये धनानां ॥८॥२२॥

---

॥ २७ ॥ १-८ भरद्वाजो बार्हस्पत्यः । १-७ इंद्रः । ८ अभ्यावर्तिनश्चायमानस्य दानस्तुतिः । त्रिष्टुप् ।

॥२७॥ किमस्य मदे किम्वस्य पीताविंद्रः किमस्य सख्ये

अस्माकासः ये नृऽतमासः अर्यः इंद्र सूरयः दधिरे पुरः नः ॥७॥ अनु ते दायि महे इंद्रियाय सत्रा ते विश्वं अनु वृत्रऽहत्ये अनु क्षत्रं अनु सहः यजत्र इंद्र देवेभिः अनु ते नृऽसह्ये ॥८॥ एव नः स्पृधः सं अज समत्ऽसु इंद्र ररंधि मिथतीः अदेवीः विद्याम वस्तोः अवसा गृणंतः भरत्ऽवाजाः उत ते इंद्र नूनं ॥९॥२०॥

---

॥२६॥ श्रुधि नः इंद्र ह्वयामसि त्वा महः वाजस्य सातौ ववृषाणाः सं यत् विशः अयंत शूरऽसातौ उग्रं नः अवः पार्ये अहन् दाः ॥१॥ त्वां वाजी हवते वाजिनेयः महः वाजस्य गध्यस्य सातौ त्वां वृत्रेषु इंद्र सत्ऽपतिं तरुत्रं त्वां चष्टे मुष्टिऽहा गोषु युध्यन् ॥२॥ त्वं कविं चोदयः अर्कऽसातौ त्वं कुत्साय शुष्णं दाशुषे वर्क् त्वं शिरः अमर्मणः परा अहन् अतिथिऽग्वाय शंस्यं करिष्यन् ॥३॥ त्वं रथं प्र भरः योधं ऋष्वं आवः युध्यंतं वृषभं दशऽद्युं त्वं तुग्रं वेतसवे सचा अहन् त्वं तुजिं गृणंतं इंद्र तूतोः° ॥४॥ त्वं तत् उक्थं इंद्र बर्हणा कः° प्र यत् शता सहस्रा शूर दर्षि अव गिरेः दासं शंबरं हन् प्र आवः दिवःऽदासं चित्राभिः ऊती ॥५॥२१॥ त्वं श्रद्धाभिः मंदसानः सोमैः दभीतये चुमुरिं इंद्र सिस्वप् त्वं रजिं पिठीनसे दशस्यन् षष्टिं सहस्रा शच्या सचा अहन् ॥६॥ अहं चन तत् सूरिऽभिः आनश्यां तव ज्यायः इंद्र सुम्नं ओजः त्वया यत् स्तवंते सधऽवीर वीराः त्रिऽवरूथेन नहुषा शविष्ठ ॥७॥ वयं ते अस्यां इंद्र द्युम्नऽहूतौ सखायः स्याम महिन प्रेष्ठाः प्रातर्दनिः क्षत्रऽश्रीः अस्तु श्रेष्ठः घने वृत्राणां सनये धनानां ॥ ८ ॥ २२ ॥

---

॥२७॥ किं अस्य मदे किं ऊं अस्य पीतौ इंद्रः किं अस्य सख्ये

चकार। रणा वा ये निषदि किं ते अस्य पुरा विविद्रे किमु नूतनासः ॥१॥ सदस्य मदे सद्वस्य पीताविंद्रः सदस्य सख्ये चकार। रणा वा ये निषदि सत्ते अस्य पुरा विविद्रे सदु नूतनासः ॥२॥ नहि नु ते महिमनः समस्य न मघवन्मघवत्त्वस्य विद्म। न राधसोराधसो नूतनस्येंद्र नकिर्ददृश इंद्रियं ते ॥३॥ एतत्त्यत्त इंद्रियमचेति येनावधीर्वरशिखस्य शेषः। वज्रस्य यत्ते निहतस्य शुष्मात्स्वनाच्चिदिंद्र परमो ददार ॥४॥ वधीदिंद्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन्। वृचीवतो यद्धरियूपीयायां हन्पूर्वे अर्धे भियसापरो दर्त् ॥५॥२३॥ त्रिंशच्छतं वर्मिण इंद्र साकं यव्यावत्यां पुरुहूत श्रवस्या। वृचीवंतः शरवे पत्यमानाः पात्रा भिंदाना न्यर्थान्यायन् ॥६॥ यस्य गावावरुषा सूयवस्यू अंतरू षु चरतो रेरिहाणा। स सृंजयाय तुर्वशं परादाद्वृचीवतो दैववाताय शिक्षन् ॥७॥ द्वयाँ अग्ने रथिनो विंशतिं गा वधूमंतो मघवा मह्यं सम्राट्। अभ्यावर्ती चायमानो ददाति दूणाशेयं दक्षिणा पार्थवानां ॥८॥२४॥

---

॥२८॥ १–८ भरद्वाजो बार्हस्पत्यः। १. ३–८[३] गावः। २. ८[४] गाव इंद्रो वा॥ १. ५–७ त्रिष्टुप्। २–४ जगती। ८ अनुष्टुप्॥

॥२८॥ आ गावो अग्मन्नुत भद्रमक्रन्त्सीदंतु गोष्ठे रणयंत्वस्मे। प्रजावतीः पुरुरूपा इह स्युरिंद्राय पूर्वीरुषसो दुहानाः ॥१॥ इंद्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं मुषायति। भूयोभूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुं ॥२॥ न ता नशंति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति। देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥३॥ न ता अर्वा रेणुककाटो

चकार्॒ एणाः॑ वा॒ ये निऽसदि॑ किं ते॑ अ॒स्य॒ पु॒रा वि॑वि॒द्रे किं ऊं॒ नूत॑नासः ॥१॥ सत् अ॒स्य॒ मदे॑ सत् ऊं॒ अ॒स्य॒ पी॒तौ इंद्रः॑ सत् अ॒स्य॒ स॒ख्ये च॒कार्॒ एणाः॑ वा॒ ये नि॒ऽसदि॑ सत् ते अ॒स्य॒ पु॒रा वि॑वि॒द्रे सत् ऊं॒ नूतनासः ॥२॥ न॒हि नु ते म॒हि॒मनः॑ स॒मस्य॒ न म॒घ॒ऽवन् म॒घ॒वत्ऽत्वस्य॑ वि॒द्म न राधसः॑ऽराधसः नूत॑नस्य इंद्र॒ नकिः॑ द॒दृश्रे॑ इं॒द्रि॒यं ते ॥३॥ ए॒तत् त्यत् ते॒ इं॒द्रि॒यं अ॒चे॒ति॒ येन॑ अव॑धीः व॒र॒ऽशि॑खस्य शेषः॑ व्र॒जस्य॑ यत् ते॒ नि॒ऽह॑तस्य शुष्मा॑त् स्व॒नात् चि॒त् इंद्र॒ प॒र॒मः द॒दार॑ ॥४॥ वधी॑त् इंद्रः॑ व॒र॒ऽशि॑खस्य शेषः॑ अ॒भि॒ऽआ॒व॒र्तिने॑ चा॒य॒मा॒नाय॑ शिक्षन् वृ॒चीव॑तः यत् ह॒रि॒ऽयूपीयायां ह॒न् पूर्वे॑ अर्धे॑ भि॒यसा अप॑रः दर्त् ॥५॥२३॥ त्रिं॒शत्ऽश॑तं व॒र्मिणः॑ इंद्र सा॒कं य॒व्याऽव॑त्यां पुरु॒ऽहू॒त॒ श्र॒व॒स्या वृ॒चीव॑तः शरवे॑ पत्य॑मानाः पात्रा॑ भिं॒दा॒नाः नि॒ऽअ॒र्थानि॑ आ॒य॒न् ॥६॥ यस्य॑ गावौ॑ अ॒रु॒षा सु॒ऽय॒व॒स्यू॰ अं॒तः ऊं॒ सु चर॑तः रेरि॑हाणा सः सृंज॑याय तु॒र्वशं॑ परा॑ अ॒दा॒त् वृ॒चीव॑तः दैव॒ऽवा॒ताय॑ शिक्षन् ॥७॥ द्व॒या॒न् अ॒ग्ने॒ र॒थिनः॑ विं॒श॒तिं गाः व॒धूऽम॑तः म॒घ॒ऽवा मह्यं॑ स॒म्ऽराट् अ॒भि॒ऽआ॒व॒र्ती चा॒य॒मा॒नः द॒दा॒ति॒ दुः॒ऽनशा॑ इ॒यं दक्षि॑णा पार्थ॒वानां ॥८॥२४॥

---

॥२८॥ आ गावः॑ अ॒ग्म॒न् उ॒त भ॒द्रं अ॒क्र॒न् सीदं॑तु गो॒ऽस्थे र॒णयं॑तु अ॒स्मे॒ प्र॒जाऽव॑तीः पु॒रु॒ऽरू॒पाः इ॒ह स्युः॒ इंद्रा॑य पू॒र्वीः उ॒षसः॑ दुहा॑नाः ॥१॥ इंद्रः॑ यज्व॑ने पृ॒ण॒ते च॒ शि॒क्ष॒ति॒ उप॑ इत् द॒दा॒ति॒ न स्वं मु॒षा॒य॒ति॒ भूयः॑ऽभूयः र॒यिं इत् अ॒स्य॒ व॒र्धय॑न् अभि॑न्ने खि॒ल्ये नि द॒धा॒ति॒ दे॒व॒ऽयुं ॥२॥ न ताः न॒शं॒ति॒ न द॒भा॒ति॒ तस्क॑रः न आ॒सां आ॒मि॒त्रः व्यथिः॑ आ द॒ध॒र्ष॒ति॒ दे॒वा॒न् च॒ याभिः॑ यज॑ते ददा॑ति च॒ ज्योक् इत् ताभिः॑ स॒च॒ते॒ गो॒ऽप॑तिः स॒ह ॥३॥ न ताः अर्वा॑ रे॒णु॒ऽक॑काटः

अभुते न संस्कृतत्रमुप यंति ता अभि। उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरंति यज्वनः ॥४॥ गावो भगो गाव इंद्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः। इमा या गावः स जनास इंद्र इच्छामीद्धृदा मनसा चिदिंद्रं ॥५॥ यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकं। भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥६॥ प्रजावतीः सूयवसं रिशंतीः शुद्धा अपः सुप्रपाणे पिबंतीः। मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः ॥७॥ उपेदमुपपर्चनमासु गोषूप पृच्यतां। उप ऋषभस्य रेतस्युपेंद्र तव वीर्ये ॥८॥२५॥६॥

---

॥ २९ ॥ १-६ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२९॥ इंद्रं वो नरः सख्याय सेपुर्महो यंतः सुमतये चकानाः। महो हि दाता वज्रहस्तो अस्ति महामु रण्वमवसे यजध्वं ॥१॥ आ यस्मिन्हस्ते नर्या मिमिक्षुरा रथे हिरण्यये रथेष्ठाः। आ रश्मयो गभस्त्योः स्थूरयोराध्वन्नश्वासो वृषणो युजानाः ॥२॥ श्रिये ते पादा दुव आ मिमिक्षुर्धृष्णुर्वज्री शवसा दक्षिणावान्। वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नृतविषिरो बभूथ ॥३॥ स सोम आमिश्लतमः सुतो भूद्यस्मिन्पक्तिः पच्यते संति धानाः। इंद्रं नरः स्तुवंतो ब्रह्मकारा उक्था शंसंतो देववाततमाः ॥४॥ न ते अंतः शवसो धाय्यस्य वि तु बाबधे रोदसी महित्वा। आ ता सूरिः पृणति तूतुजानो यूथेवाप्सु समीजमान ऊती ॥५॥ एवेदिंद्रः सुहव ऋष्वो अस्तूती अनूती हिरिशिप्रः सत्वा। एवा हि जातो असमात्योजाः पुरू च वृत्रा हनति नि दस्यून् ॥६॥१॥

अश्नुते न संस्कृतऽत्रं उप यंति ताः अभि उरुऽगायं अभयं तस्य ताः अनु गावः मर्तस्य वि चरंति यज्वनः ॥४॥ गावः भगः गावः इंद्रः मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः इमाः याः गावः सः जनासः इंद्रः इच्छामि इत् हृदा मनसा चित् इंद्रं ॥५॥ यूयं गावः मेदयथ कृशं चित् अश्रीरं चित् कृणुथ सुऽप्रतीकं भद्रं गृहं कृणुथ भद्रऽवाचः बृहत् वः वयः उच्यते सभासु ॥६॥ प्रजाऽवतीः सुऽयवसं रिशंतीः शुद्धाः अपः सुऽप्रपाने पिबंतीः मा वः स्तेनः ईशत मा अघऽशंसः परि वः हेतिः रुद्रस्य वृज्याः ॥७॥ उप इदं उपऽपर्चनं आसु गोषु उप पृच्यतां उप ऋषभस्य रेतसि उप इंद्र तव वीर्ये ॥ ८ ॥ २५ ॥ ६ ॥

---

॥२९॥ इंद्रं वः नरः सख्याय सेपुः महः यंतः सुऽमतये चकानाः महः हि दाता वज्रऽहस्तः अस्ति महां ऊं रण्वं अवसे यजध्वं ॥१॥ आ यस्मिन् हस्ते नर्याः मिमिक्षुः आ रथे हिरण्यये रथेऽस्थाः आ रश्मयः गभस्त्योः स्थूरयोः आ अध्वन् अश्वासः वृषणः युजानाः ॥२॥ श्रिये ते पादा दुवः आ मिमिक्षुः धृष्णुः वज्री शवसा दक्षिणऽवान् वसानः अत्कं सुरभिं दृशे कं स्वः न नृतो इषिरः बभूथ ॥३॥ सः सोमः आमिश्लऽतमः सुतः भूत् यस्मिन् पक्तिः पच्यते संति धानाः इंद्रं नरः स्तुवंतः ब्रह्मऽकाराः उक्था शंसंतः देववातऽतमाः ॥४॥ न ते अंतः शवसः धायि अस्य वि तु बाबधे रोदसी महिऽत्वा आ ता सूरिः पृणति तूतुजानः यूथाऽइव अप्ऽसु संऽईजमानः ऊती ॥५॥ एव इत् इंद्रः सुऽहवः ऋष्वः अस्तु ऊती अनूती हिरिऽशिप्रः सत्वा एव हि जातः असमातिऽओजाः पुरु च वृत्रा हनति नि दस्यून् ॥ ६ ॥ १ ॥

॥ ३० ॥ १–५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३०॥ भूय इद्वावृधे वीर्यायँ एको अजुर्यो दयते वसूनि। प्र रिरिचे दिव इंद्रः पृथिव्या अर्धमिदस्य प्रति रोदसी उभे॥१॥ अधा मन्ये बृहदसुर्यमस्य यानि दाधार नकिरा मिनाति। दिवेदिवे सूर्यो दर्शतो भूद्वि सद्मान्युर्विया सुक्रतुर्धात्॥२॥ अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिंद्र। नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि॥३॥ सत्यमित्तन्न त्वावाँ अन्यो अस्तींद्र देवो न मर्त्यो ज्यायान्। अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रं॥४॥ त्वमपो वि दुरो विषूचीरिंद्र दृळ्हमरुजः पर्वतस्य। राजाभवो जगतश्चर्षणीनां साकं सूर्यं जनयन्द्यामुषासं॥५॥२॥

---

॥ ३१ ॥ १–५ सुहोत्रः ॥ इंद्रः ॥ १–३. ५ त्रिष्टुप्। ४ शक्वरी ॥

॥३१॥ अभूरेको रयिपते रयीणामा हस्तयोरधिथा इंद्र कृष्टीः। वि तोके अप्सु तनये च सूरेऽवोचंत चर्षणयो विवाचः॥१॥ त्वद्भियेंद्र पार्थिवानि विश्वाच्युता चिच्च्यावयंते रजांसि। द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्ना ते॥२॥ त्वं कुत्सेनाभि शुष्णमिंद्राशुषं युध्य कुयवं गविष्टौ। दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि॥३॥ त्वं शतान्यव शंबरस्य पुरो जघंथाप्रतीनि दस्योः। अशिक्षो यत्र शच्या शचीवो दिवोदासाय सुन्वते सुतक्रे भरद्वाजाय गृणते वसूनि॥४॥ स सत्यसत्वन्महते रणाय रथमा तिष्ठ तुविनृम्ण भीमं। याहि प्रपथिन्नवसोप मद्रिक्प्र च श्रुत श्रावय चर्षणिभ्यः॥५॥३॥

---

॥ ३२ ॥ १–५ सुहोत्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३२॥ अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय।

॥३०॥ भूयः इत् ववृधे वीर्याय एकः अजुर्यः दयते वसूनि प्र रि-
रिचे दिवः इंद्रः पृथिव्याः अर्धं इत् अस्य प्रति रोदसी उभे ॥१॥
अध मन्ये बृहत् असुर्यं अस्य यानि दाधार नकिः आ मिनाति
दिवेऽदिवे सूर्यः दर्शतः भूत् वि सद्मानि उर्विया सुऽक्रतुः धात्
॥२॥ अद्य चित् नु चित् तत् अपः नदीनां यत् आभ्यः अरदः गातुं
इंद्र नि पर्वताः अद्मऽसदः न सेदुः त्वया दृळ्हानि सुऽक्रतो ॰रजांसि
॥३॥ सत्यं इत् तत् न त्वाऽवान् अन्यः अस्ति इंद्र देवः न मर्त्यः ज्या-
यान् अहन् अहिं परिऽशयानं अर्णः अव असृजः अपः अच्छ
समुद्रं ॥४॥ त्वं अपः वि दुरः विषूचीः इंद्र दृळ्हं अरुजः पर्वतस्य
राजा अभवः जगतः चर्षणीनां साकं सूर्यं जनयन् द्यां उषसं
॥ ५ ॥ २ ॥

---

॥ ३१ ॥ अभूः एकः रयिऽपते रयीणां आ हस्तयोः अधिथाः इंद्र
कृष्टीः वि तोके अप्ऽसु तनये च सूरे अवोचंत चर्षणयः विऽवा-
चः ॥१॥ त्वत् भिया इंद्र पार्थिवानि विश्वा अच्युता चित् च्यवयंते
रजांसि द्यावाक्षामा पर्वतासः वनानि विश्वं दृळ्हं भयते अज्मन्
आ ते ॥२॥ त्वं कुत्सेन अभि शुष्णं इंद्र अशुषं युध्य कुयवं गोऽइष्टौ
दश प्रऽपित्वे अध सूर्यस्य मुषायः चक्रं अविवेः रपांसि ॥३॥ त्वं
शतानि अव शंबरस्य पुरः जघंथ अप्रतीनि दस्योः अशिक्षः यत्र
शच्या शचीऽवः दिवःऽदासाय सुन्वते सुतऽक्रे भरत्ऽवाजाय गृ-
णते वसूनि ॥४॥ सः सत्यऽसत्वन् महते रणाय रथं आ तिष्ठ तुवि-
ऽनृम्ण भीमं याहि प्रऽपथिन् अवसा उप मद्रिक् प्र च श्रुत श्रवय
चर्षणिऽभ्यः ॥ ५ ॥ ३ ॥

---

॥३२॥ अपूर्व्या पुरुऽतमानि अस्मै महे वीराय तवसे तुराय

विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षं ॥ १ ॥ स मातरा सूर्येणा कवीनामवासयद्रुजदद्रिं गृणानः । स्वाधीभिर्ऋक्वभिर्वावशान उदुस्रियाणामसृजन्निदानं ॥ २ ॥ स वह्निभिर्ऋक्वभिर्गोषु शश्वन्मितज्ञुभिः पुरुकृत्वा जिगाय । पुरः पुरोहा सखिभिः सखीयन्दृळ्हा रुरोज कविभिः कविः सन् ॥ ३ ॥ स नीव्याभिर्जरितारमच्छा महो वाजेभिर्महद्भिश्च शुष्मैः । पुरुवीराभिर्वृषभ क्षितीनामा गिर्वणः सुविताय प्र याहि ॥ ४ ॥ स सर्गेण शवसा तक्तो अत्यैरप इंद्रो दक्षिणतस्तुराषाट् । इत्था सृजाना अनपावृदर्थं दिवेदिवे विविषुरप्रमृष्यं ॥ ५ ॥ ४ ॥

---

॥ ३३ ॥ १-५ शुनहोत्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३३ ॥ य ओजिष्ठ इंद्र तं सु नो दा मदो वृषन्स्वभिष्टिर्दास्वान् । सौवश्व्यं यो वनवत्स्वश्वो वृत्रा समत्सु सासहदमित्रान् ॥ १ ॥ त्वां हीं३द्रावसे विवाचो हवंते चर्षणयः शूरसातौ । त्वं विप्रेभिर्वि पणीँरशायस्त्वोत इत्सनिता वाजमर्वा ॥ २ ॥ त्वं ताँ इंद्रोभयाँ अमित्रान्दासा वृत्राण्यार्या च शूर । वधीर्वनेव सुधितेभिरत्कैरा पृत्सु दर्षि नृणां नृतम ॥ ३ ॥ स त्वं न इंद्राकवाभिरूती सखा विश्वायुरविता वृधे भूः । स्वर्षाता यद्ध्वयामसि त्वा युध्यंतो नेमधिता पृत्सु शूर ॥ ४ ॥ नूनं न इंद्रापराय च स्या भवा मृळीक उत नो अभिष्टौ । इत्था गृणंतो महिनस्य शर्मन्दिवि ष्याम पार्ये गोषतमाः ॥ ५ ॥ ५ ॥

---

॥ ३४ ॥ १-५ शुनहोत्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३४ ॥ सं च त्वे जग्मुर्गिर इंद्र पूर्वीर्वि च त्वद्यंति विभ्वो

विऽरप्शिने वज्रिणे शंऽतमानि वचांसि आसा स्थविराय तक्षं ॥१॥ सः मातरा सूर्येण कवीनां अवासयत् रुजत् अद्रिं गृणानः सुऽआधीभिः ऋक्वऽभिः वावशानः उत् उस्रियाणां असृजत् निऽदानं ॥२॥ सः वह्निऽभिः ऋक्वऽभिः गोषु शश्वत् मितज्ञुऽभिः पुरुऽकृत्वा जिगाय पुरः पुरःऽहा सखिऽभिः सखिऽयन् दृळ्हाः रुरोज कविऽभिः कविः सन् ॥३॥ सः नीव्याभिः जरितारं अच्छ महः वाजेभिः महत्ऽभिः च शुष्मैः पुरुऽवीराभिः वृषभ क्षितीनां आ गिर्वणः सुविताय प्र याहि ॥४॥ सः सर्गेण शवसा तक्तः अत्यैः अपः इंद्रः दक्षिणतः तुराषाट् इत्था सृजानाः अनपऽवृत् अर्थं दिवेऽदिवे विविषुः अप्रऽमृष्यं ॥ ५ ॥ ४ ॥

---

॥३३॥ यः ओजिष्ठः इंद्र तं सु नः दाः मदः वृषन् सुऽअभिष्टिः दास्वान् सौवश्व्यं यः वनवत् सुऽअश्वः वृत्रा समत्ऽसु ससहत् अमित्रान् ॥१॥ त्वां हि इंद्र अवसे विऽवाचः हवंते चर्षणयः शूरऽसातौ त्वं विप्रेभिः वि पणीन् अशायः त्वाऽऊतः इत् सनिता वाजं अर्वा ॥२॥ त्वं तान् इंद्र उभयान् अमित्रान् दासा वृत्राणि आर्या च शूर वधीः वनाऽइव सुऽधितेभिः अत्कैः आ पृत्ऽसु दर्षि नृणां नृऽतम ॥३॥ सः त्वं नः इंद्र अकवाभिः ऊती सखा विश्वऽआयुः अविता वृधे भूः स्वःऽसाता यत् ह्वयामसि त्वा युध्यंतः नेमऽधिता पृत्ऽसु शूर ॥४॥ नूनं नः इंद्र अपराय च स्याः भव मृळीकः उत नः अभिष्टौ इत्था गृणंतः महिनस्य शर्मन् दिवि स्याम पार्ये गोसऽतमाः ॥ ५ ॥ ५ ॥

---

॥३४॥ सं च त्वे जग्मुः गिरः इंद्र पूर्वीः वि च त्वत् यंति विऽभ्वः

मनीषाः । पुरा नूनं च स्तुतय ऋषीणां पस्पृध्र इंद्रे अध्युक्थार्का ॥ १ ॥ पुरुहूतो यः पुरुगूर्त ऋभ्वाँ एकः पुरुप्रशस्तो अस्ति यज्ञैः । रथो न महे शवसे युजानो३ऽस्माभिरिंद्रो अनुमाद्यो भूत् ॥ २ ॥ न यं हिंसंति धीतयो न वाणीरिंद्रं नक्षंतीदभि वर्धयंतीः । यदि स्तोतारः शतं यत्सहस्रं गृणंति गिर्वणसं शं तदस्मै ॥ ३ ॥ अस्मा एतद्दिव्य१र्चेव मासा मिमिक्ष इंद्रे न्ययामि सोमः । जनं न धन्वन्नभि सं यदापः सत्रा वावृधुर्हवनानि यज्ञैः ॥ ४ ॥ अस्मा एतन्मह्यांगूषमस्मा इंद्राय स्तोत्रं मतिभिरवाचि । असद्यथा महति वृत्रतूर्य इंद्रो विश्वायुरविता वृधश्च ॥ ५ ॥ ६ ॥

॥ ३५ ॥ १-५ नरः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३५ ॥ कदा भुवन्रथक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रपोष्यं दाः । कदा स्तोमं वासयोऽस्य राया कदा धियः करसि वाजरत्नाः ॥ १ ॥ कर्हि स्वित्तदिंद्र यन्नृभिर्नॄन्वीरैर्वीरान्नीळयासे जयाजीन् । त्रिधातु गा अधि जयासि गोष्विंद्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ २ ॥ कर्हि स्वित्तदिंद्र यज्जरित्रे विश्वप्सु ब्रह्म कृणवः शविष्ठ । कदा धियो न नियुतो युवासे कदा गोमघा हवनानि गच्छाः ॥ ३ ॥ स गोमघा जरित्रे अश्वश्चंद्रा वाजश्रवसो अधि धेहि पृक्षः । पीपिहीषः सुदुघामिंद्र धेनुं भरद्वाजेषु सुरुचो रुरुच्याः ॥ ४ ॥ तमा नूनं वृजनमन्यथा चिच्छूरो यच्छक्र वि दुरो गृणीषे । मा निररं शुक्रदुघस्य धेनोरांगिरसान्ब्रह्मणा विप्र जिन्व ॥ ५ ॥ ७ ॥

॥ ३६ ॥ १-५ नरः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ३६ ॥ सत्रा मदासस्तव विश्वजन्याः सत्रा रायोऽध ये पा-

मनीषाः पुरा नूनं च स्तुतयः ऋषीणां पस्पृध्रे इंद्रे अधि उक्थऽअ॒र्का ॥१॥ पुरुऽहूतः यः पुरुऽगूर्तः ऋभ्वा एकः पुरुऽप्रशस्तः अस्ति यज्ञैः रथः न महे शवसे युजानः अस्माभिः इंद्रः अनुमाद्यः भूत् ॥२॥ न यं हिंसंति धीतयः न वाणीः इंद्रं नक्षंति इत् अभि वर्धयंतीः यदि स्तोतारः शतं यत् सहस्रं गृणंति गिर्वणसं शं तत् अस्मै ॥३॥ अस्मै एतत् दिवि अर्चाऽइव मासा मिमिक्षः इंद्रे नि अयामि सोमः जनं न धन्वन् अभि सं यत् आपः सत्रा ववृधुः हवनानि यज्ञैः ॥४॥ अस्मै एतत् महि आंगूषं अस्मै इंद्राय स्तोत्रं मतिऽभिः अवाचि असत् यथा महति वृत्रऽतूर्ये इंद्रः विश्वऽआयुः अविता वृधः च ॥ ५ ॥ ६ ॥

---

॥३५॥ कदा भुवन् रथऽक्षयाणि ब्रह्म कदा स्तोत्रे सहस्रऽपोष्यं दाः कदा स्तोमं वासयः अस्य राया कदा धियः करसि वाजऽरत्नाः ॥१॥ कर्हि स्वित् तत् इंद्र यत् नृऽभिः नॄन् वीरैः वीरान् नीळयासे जय आजीन् त्रिऽधातु गाः अधि जयासि गोषु इंद्र द्युम्नं स्वःऽवत् धेहि अस्मे ॥२॥ कर्हि स्वित् तत् इंद्र यत् जरित्रे विश्वऽप्सु ब्रह्म कृणवः शविष्ठ कदा धियः न नि॒ऽयुतः युवासे कदा गोऽमघा हवनानि गच्छाः ॥३॥ सः गोऽमघाः जरित्रे अश्वऽचंद्राः वाजऽश्रवसः अधि धेहि पृक्षः पीपिहि इषः सुऽदुघां इंद्र धेनुं भरत्ऽवाजेषु सुऽरुचः रुरुच्याः ॥४॥ तं आ नूनं वृजनं अन्यथा चित् शूरः यत् शक्र वि दुरः गृणीषे मा निः अरं शुक्रऽदुघस्य धेनोः आंगिरसान् ब्रह्मणा विप्र जिन्व ॥ ५ ॥ ७ ॥

---

॥३६॥ सत्रा मदासः तव विश्वऽजन्याः सत्रा रायः अध ये पा-

थिवासः । सत्रा वाजानामभवो विभक्ता यद्देवेषु धारयथा असुर्यं ॥१॥ अनु प्र येजे जन ओजो अस्य सत्रा दधिरे अनु वीर्याय । स्यूमगृभे दुधयेऽर्वते च क्रतुं वृंजंत्यपि वृत्रहत्ये ॥२॥ तं सध्रीचीरूतयो वृष्ण्यानि पौंस्यानि नियुतः सश्चुरिंद्रं । समुद्रं न सिंधव उक्थशुष्मा उरुव्यचसं गिर आ विशंति ॥३॥ स रायस्खामुप सृजा गृणानः पुरुश्चंद्रस्य त्वमिंद्र वस्वः । पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा ॥४॥ स तु श्रुधि श्रुत्या यो दुवोयुर्द्यौर्न भूमाभि रायो अर्यः । असो यथा नः शवसा चकानो युगेयुगे वयसा चेकितानः ॥५॥८॥

॥ ३७ ॥ १-५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३७॥ अर्वाग्रथं विश्ववारं त उग्रेंद्र युक्तासो हरयो वहंतु । कीरिश्चिद्धि त्वा हवते स्वर्वानृधीमहि सधमादस्ते अद्य ॥१॥ प्रो द्रोणे हरयः कर्माग्मन्पुनानास ऋज्यंतो अभूवन् । इंद्रो नो अस्य पूर्व्यः पपीयाद्द्युक्षो मदस्य सोम्यस्य राजा ॥२॥ आसस्राणासः शवसानमच्छेंद्रं सुचक्रे रथ्यासो अश्वाः । अभि श्रव ऋज्यंतो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ॥३॥ वरिष्ठो अस्य दक्षिणामियर्तींद्रो मघोनां तुविकूर्मितमः । यया वज्रिवः परियास्यंहो मघा च धृष्णो दयसे वि सूरीन् ॥४॥ इंद्रो वाजस्य स्थविरस्य दातेंद्रो गीर्भिर्वर्धतां वृद्धमहाः । इंद्रो वृत्रं हनिष्ठो अस्तु सत्वा ता सूरिः पृणति तूतुजानः ॥५॥९॥

॥ ३८ ॥ १-५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३८॥ अपादित उदु नश्चित्रतमो महीं भर्षद्द्युमतीमिंद्रहूतिं । पन्यसीं धीतिं दैव्यस्य यामञ्जनस्य रातिं वनते सुदानुः ॥१॥ दूराच्चिदा वसतो अस्य कर्णा घोषादिंद्रस्य

थिवासः सत्रा वाजानां अभवः विऽभक्ता यत् देवेषु धारयथाः असुर्यं ॥१॥ अनु प्र येजे जनः ओजः अस्य सत्रा दधिरे अनु वीर्याय स्यूमऽगृभे दुधये अर्वते च क्रतुं वृंजंति अपि वृत्रऽहत्ये ॥२॥ तं सध्रीचीः ऊतयः वृष्ण्यानि पौंस्यानि निऽयुतः सश्चुः इंद्रं समुद्रं न सिंधवः उक्थऽशुष्माः उरुऽव्यचसं गिरः आ विशंति ॥३॥ सः रायः खां उप सृज गृणानः पुरुऽचंद्रस्य त्वं इंद्र वस्वः पतिः बभूथ असमः जनानां एकः विश्वस्य भुवनस्य राजा ॥४॥ सः तु श्रुधि श्रुत्या यः दुवःऽयुः द्यौः न भूम अभि रायः अर्यः असः यथा नः शवसा चकानः युगेऽयुगे वयसा चेकितानः ॥ ५ ॥ ८ ॥

॥३७॥ अर्वाक् रथं विश्वऽवारं ते उग्र इंद्र युक्तासः हरयः वहंतु कीरिः चित् हि त्वा हवते स्वःऽवान् ऋधीमहि सधऽमादः ते अद्य ॥१॥ प्रो' द्रोणे हरयः कर्म अग्मन् पुनानासः ऋज्यंतः अभूवन् इंद्रः नः अस्य पूर्व्यः पपीयात् द्युक्षः मदस्य सोम्यस्य राजा ॥२॥ आऽसस्राणासः शवसानं अच्छ इंद्रं सुऽचक्रे रथ्यासः अश्वाः अभि श्रवः ऋज्यंतः वहेयुः नु चित् नु वायोः अमृतं वि दस्येत् ॥ ३ ॥ वरिष्ठः अस्य दक्षिणां इयर्ति इंद्रः मघोनां तुविकूर्मिऽतमः यया वज्रिऽवः परिऽयासि अंहः मघा च धृष्णो' दयसे वि सूरीन् ॥४॥ इंद्रः वाजस्य स्थविरस्य दाता इंद्रः गीःऽभिः वर्धतां वृद्धऽमहाः इंद्रः वृत्रं हनिष्ठः अस्तु सत्वा आ ता सूरिः पृणति तूतुजानः ॥५॥९॥

॥३८॥ अपात् इतः उत् ऊं' नः चित्रऽतमः मही भर्षत् द्युऽमती इंद्रऽहूतिं पन्यसी धीतिं दैव्यस्य यामन् जनस्य रातिं वनते सुऽदानुः ॥१॥ दूरात् चित् आ वसतः अस्य कर्णा घोषात् इंद्रस्य

न्यति ब्रुवाणः। एयमेनं देवहूतिर्ववृत्यान्मद्र्य१गिंद्रमियमृच्यमाना ॥२॥ तं वो धिया परमया पुराजामजरमिंद्रमभ्यनूष्यर्कैः। ब्रह्मा च गिरो दधिरे समस्मिन्महांश्च स्तोमो अधि वर्धदिंद्रे ॥३॥ वर्धाद्यं यज्ञ उत सोम इंद्रं वर्धाद्ब्रह्म गिर उक्था च मन्म। वर्धाहैनमुषसो यामन्नक्तोर्वर्धान्मासाः शरदो द्याव इंद्रं ॥४॥ एवा जज्ञानं सहसे असामि वावृधानं राधसे च श्रुताय। महामुग्रमवसे विप्र नूनमा विवासेम वृत्रतूर्येषु ॥५॥१०॥

---

॥ ३९ ॥ १-५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३९॥ मंद्रस्य कवेर्दिव्यस्य वह्नेर्विप्रमन्मनो वचनस्य मध्वः। अपा नस्तस्य सचनस्य देवेषो युवस्व गृणते गोअग्राः ॥१॥ अयमुशानः पर्यद्रिमुस्रा ऋतधीतिभिर्ऋतयुग्युजानः। रुजदरुग्णं वि वलस्य सानुं पणींर्वचोभिरभि योधदिंद्रः ॥२॥ अयं द्योतयदद्युतो व्य१क्तून्दोषा वस्तोः शरद इंदुरिंद्र। इमं केतुमदधुर्नू चिदह्नां शुचिजन्मन उषसश्चकार ॥३॥ अयं रोचयदरुचो रुचानो३यं वासयद्व्यृ१तेन पूर्वीः। अयमीयत ऋतयुग्भिरश्वैः स्वर्विदा नाभिना चर्षणिप्राः ॥४॥ नू गृणानो गृणते प्रत्न राजन्निषः पिन्व वसुदेयाय पूर्वीः। अप ओषधीरविषा वनानि गा अर्वतो नॄनृचसे रिरीहि ॥५॥११॥

---

॥ ४० ॥ १-५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥४०॥ इंद्र पिब तुभ्यं सुतो मदायाव स्य हरी वि मुचा सखाया। उत प्र गाय गण आ निषद्याथा यज्ञाय गृणते वयो धाः ॥१॥ अस्य पिब यस्य जज्ञान इंद्र मदाय क्रत्वे अपिबो विरप्शिन्।

तन्यति ब्रुवाणः आ इयं एनं देवऽहूतिः ववृत्यात् मद्र्यक् इंद्रं इयं ऋच्यमाना ॥२॥ तं वः धिया परमया पुराऽजां अजरं इंद्रं अभि अनूषि अर्कैः ब्रह्म च गिरः दधिरे सं अस्मिन् महान् च स्तोमः अधि वर्धत् इंद्रे ॥३॥ वर्धात् यं यज्ञः उत सोमः इंद्रं वर्धात् ब्रह्म गिरः उक्था च मन्म वर्ध अह एनं उषसः यामन् अक्तोः वर्धान् मासाः शरदः द्यावः इंद्रं ॥४॥ एव जज्ञानं सहसे असामि ववृधानं राधसे च श्रुताय महां उग्रं अवसे विप्र नूनं आ विवासेम वृत्रऽतूर्येषु ॥ ५ ॥ १० ॥

---

॥३९॥ मंद्रस्य कवेः दिव्यस्य वह्नेः विप्रऽमन्मनः वचनस्य मध्वः अपाः नः तस्य सचनस्य देव इषः युवस्व गृणते गोऽअग्राः ॥१॥ अयं उशानः परि अद्रिं उस्राः ऋतधीतिऽभिः ऋतऽयुक् युजानः रुजत् अरुग्णं वि वलस्य सानुं पणीन् वचःऽभिः अभि योधत् इंद्रः ॥२॥ अयं द्योतयत् अद्युतः वि अक्तून् दोषा वस्तोः शरदः इंदुः इंद्र इमं केतुं अदधुः नु चित् अह्नां शुचिऽजन्मनः उषसः चकार ॥३॥ अयं रोचयत् अरुचः रुचानः अयं वासयत् वि ऋतेन पूर्वीः अयं ईयते ऋतयुक्ऽभिः अश्वैः स्वःऽविदा नाभिना चर्षणिऽप्राः ॥४॥ नु गृणानः गृणते प्रत्न राजन् इषः पिन्व वसुऽदेयाय पूर्वीः अपः ओषधीः अविषा वनानि गाः अर्वतः नॄन् ऋचसे रिरीहि ॥ ५ ॥ ११ ॥

---

॥४०॥ इंद्र पिब तुभ्यं सुतः मदाय अव स्य हरी इति वि मुच सखाया उत प्र गाय गणे आ निऽसद्य अथ यज्ञाय गृणते वयः धाः ॥१॥ अस्य पिब यस्य जज्ञानः इंद्र मदाय क्रत्वे अपिबः विऽरप्शिन्

तमु ते गावो नर आपो अद्रिरिंदुं समंह्यन्पीतये समंस्मै ॥२॥ समिद्धे अग्नौ सुत इंद्र सोम आ त्वा वहंतु हरयो वहिष्ठाः । त्वायता मनसा जोहवीमींद्रा याहि सुविताय महे नः ॥३॥ आ याहि शश्वदुशता ययाथेंद्र महा मनसा सोमपेयं । उप ब्रह्माणि शृणव इमा नोऽथा ते यज्ञस्तन्वे३ वयो धात् ॥४॥ यदिंद्र दिवि पार्ये यदृधग्यद्वा स्वे सदने यत्र वासि । अतो नो यज्ञमवसे नियुत्वान्सजोषाः पाहि गिर्वणो मरुद्भिः ॥५॥१२॥

---

॥ ४१ ॥ १–५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥४१॥ अहेळमान उप याहि यज्ञं तुभ्यं पवंत इंदवः सुतासः । गावो न वज्रिन्स्वमोको अच्छेंद्रा गहि प्रथमो यज्ञियानां ॥१॥ या ते काकुत्सुकृता या वरिष्ठा यया शश्वत्पिबसि मध्व ऊर्मिं । तया पाहि प्र ते अध्वर्युरस्थात्सं ते वज्रो वर्ततामिंद्र गव्युः ॥२॥ एष द्रप्सो वृषभो विश्वरूप इंद्राय वृष्णे समकारि सोमः । एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते अन्नं ॥३॥ सुतः सोमो असुतादिंद्र वस्यानयं श्रेयाञ्चिकितुषे रणाय । एतं तितिर्व उप याहि यज्ञं तेन विश्वास्तविषीरा पृणस्व ॥४॥ ह्वयामसि त्वेंद्र याह्यर्वाङरं ते सोमस्तन्वे भवाति । शतक्रतो मादयस्वा सुतेषु प्रास्माँ अव पृतनासु प्र विक्षु ॥५॥१३॥

---

॥ ४२ ॥ १–४ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ १–३ अनुष्टुप् । ४ बृहती ॥

॥४२॥ प्रत्यस्मै पिपीषते विश्वानि विदुषे भर । अरंगमाय जग्मयेऽपश्चाद्दघ्वने नरे ॥१॥ एमेनं प्रत्येतन सोमेभिः सोमपातमं । अमत्रेभिर्ऋजीषिणमिंद्रं सुतेभिरिंदुभिः ॥२॥ यदी सुतेभिरिंदुभिः सोमेभिः प्रतिभूषथ । वेदा विश्वस्य मेधिरो

तं ऊं॰ ते गावः नरः आपः अद्रिः इंदुं सं अह्यन् पीतये सं अस्मै ॥२॥ संऽइद्धे अग्नौ सुते इंद्र सोमे आ त्वा वहंतु हरयः वहिष्ठाः त्वाऽयता मनसा जोहवीमि इंद्रं आ याहि सुविताय महे नः ॥३॥ आ याहि शश्वत् उशता ययाथ इंद्र महा मनसा सोमऽपेयं उप ब्रह्माणि शृणवः इमा नः अथ ते यज्ञः तन्वे वयः धात् ॥४॥ यत् इंद्र दिवि पार्ये यत् ऋधक् यत् वा स्वे सदने यत्र वा असि अतः नः यज्ञं अवसे नियुत्वान् सऽजोषाः पाहि गिर्वणः मरुत्ऽभिः ॥५॥१२॥

---

॥४१॥ अहेळमानः उप याहि यज्ञं तुभ्यं पवंते इंदवः सुतासः गावः न वज्रिन् स्वं ओकः अच्छ इंद्र आ गहि प्रथमः यज्ञियानां ॥१॥ या ते काकुत् सुऽकृता या वरिष्ठा यया शश्वत् पिबसि मध्वः ऊर्मिं तया पाहि प्र ते अध्वर्युः अस्थात् सं ते वज्रः वर्ततां इंद्र गव्युः ॥२॥ एषः द्रप्सः वृषभः विश्वऽरूपः इंद्राय वृष्णे सं अकारि सोमः एतं पिब हरिऽवः स्थातः उग्र यस्य ईशिषे प्रऽदिवि यः ते अन्नं ॥३॥ सुतः सोमः असुतात् इंद्र वस्यान् अयं श्रेयान् चिकितुषे रणाय एतं तितिर्वः उप याहि यज्ञं तेन विश्वाः तविषीः आ पृणस्व ॥४॥ ह्वयामसि त्वा आ इंद्र याहि अर्वाङ् अरं ते सोमः तन्वे भवाति शतऽक्रतो॰ मादयस्व सुतेषु प्र अस्मान् अव पृतनासु प्र विक्षु ॥ ५ ॥ १३ ॥

---

॥४२॥ प्रति अस्मै पिपीषते विश्वानि विदुषे भर अरंऽगमाय जग्मये अपश्चात्ऽदघ्वने नरे ॥१॥ आ ईं एनं प्रतिऽएतन सोमेभिः सोमऽपातमं अमत्रेभिः ऋजीषिणं इंद्रं सुतेभिः इंदुऽभिः ॥२॥ यदि सुतेभिः इंदुऽभिः सोमेभिः प्रतिऽभूषथ वेद विश्वस्य मेधिरः

धृषद्वंतमिदेषते ॥३॥ अस्माअस्मा इदंधसोऽध्वर्यो प्र भरा
सुतं। कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्परत् ॥४॥१४॥

---

॥ ४३ ॥ १-४ भरद्वाजो बार्हस्पत्यः ॥ इंद्रः ॥ उष्णिक् ॥

॥४३॥ यस्य त्यच्छंबरं मदे दिवोदासाय रंधयः। अयं स सोम
इंद्र ते सुतः पिब ॥१॥ यस्य तीव्रसुतं मदं मध्यमंतं च रक्षसे। अयं
स सोम इंद्र ते सुतः पिब ॥२॥ यस्य गा अंतरश्मनो मदे दृळ्हा अ-
वासृजः। अयं स सोम इंद्र ते सुतः पिब ॥३॥ यस्य मंदानो अंधसो
माघोनं दधिषे शवः। अयं स सोम इंद्र ते सुतः पिब ॥४॥१५॥३॥

---

॥ ४४ ॥ १-२४ शंयुर्बार्हस्पत्यः ॥ इंद्रः ॥ १-६ अनुष्टुप्। ७.९ विराट्। ८ विराट्
त्रिष्टुबा। १०-२४ त्रिष्टुप् ॥

॥४४॥ यो रयिवो रयिंतमो यो द्युम्नैर्द्युम्नवत्तमः। सोमः सुतः
स इंद्र तेऽस्ति स्वधापते मदः ॥१॥ यः शग्मस्तुविशग्म ते रायो
दामा मतीनां। सोमः सुतः स इंद्र तेऽस्ति स्वधापते मदः ॥२॥
येन वृद्धो न शवसा तुरो न स्वाभिरूतिभिः। सोमः सुतः स इंद्र
तेऽस्ति स्वधापते मदः ॥३॥ त्यमु वो अप्रहणं गृणीषे शवसस्प-
तिं। इंद्रं विश्वासाहं नरं मंहिष्ठं विश्वचर्षणिं ॥४॥ यं वर्धयंती-
द्गिरः पतिं तुरस्य राधसः। तमिन्न्वस्य रोदसी देवी शुष्मं
सपर्यतः ॥५॥१६॥ तद्व उक्थस्य बर्हणेंद्रायोपस्तृणीषणि।
विपो न यस्योतयो वि यद्रोहंति सक्षितः ॥६॥ अविदद्दक्षं
मित्रो नवीयान्पपानो देवेभ्यो वस्यो अचैत्। ससवान्स्तौ-
लाभिर्धौतरीभिरुरुष्या पायुरभवत्सखिभ्यः ॥७॥ ऋतस्य
पथि वेधा अपायि श्रिये मनांसि देवासो अक्रन्। दधानो
नाम महो वचोभिर्वपुर्दृशये वेन्यो व्यावः ॥८॥ द्युमत्तमं

धृषत् तंऽतं इत् आ ईषते ॥३॥ अस्मैऽअस्मै इत् अंधसः अध्वर्यो प्र भर सुतं कुवित् समस्य जेन्यस्य शर्धतः अभिऽशस्तेः अवऽस्परत् ॥ ४ ॥ १४ ॥

---

॥४३॥ यस्य त्यत् शंबरं मदे दिवःऽदासाय रंधयः अयं सः सोमः इंद्र ते सुतः पिब ॥१॥ यस्य तीव्रऽसुतं मदं मध्यं अंतं च रक्षसे अयं सः सोमः इंद्र ते सुतः पिब ॥२॥ यस्य गाः अंतः अश्मनः मदे दृळ्हाः अवऽअसृजः अयं सः सोमः इंद्र ते सुतः पिब ॥३॥ यस्य मंदानः अंधसः माघोनं दधिषे शवः अयं सः सोमः इंद्र ते सुतः पिब ॥ ४ ॥ १५ ॥ ३ ॥

---

॥४४॥ यः रयिऽवः रयिंऽतमः यः द्युम्नैः द्युम्नवत्ऽतमः सोमः सुतः सः इंद्र ते अस्ति स्वधाऽपते मदः ॥१॥ यः शग्मः तुविऽशग्म ते रायः दामा मतीनां सोमः सुतः सः इंद्र ते अस्ति स्वधाऽपते मदः ॥२॥ येन वृद्धः न शवसा तुरः न स्वाभिः ऊतिऽभिः सोमः सुतः सः इंद्र ते अस्ति स्वधाऽपते मदः ॥३॥ त्यं ऊं वः अप्रऽहनं गृणीषे शवसः पतिं इंद्रं विश्वऽसहं नरं मंहिष्ठं विश्वऽचर्षणिं ॥४॥ यं वर्धयंति इत् गिरः पतिं तुरस्य राधसः तं इत् नु अस्य रोदसी देवी शुष्मं सपर्यतः ॥५॥१६॥ तत् वः उक्थस्य बर्हणा इंद्राय उपऽस्तृणीषणि विपः न यस्य ऊतयः वि यत् रोहंति सऽक्षितः ॥६॥ अविदत् दक्षं मित्रः नवीयान् पपानः देवेभ्यः वस्यः अचैत् ससऽवान् स्तौला-भिः धौतरीभिः उरुष्या पायुः अभवत् सखिऽभ्यः ॥७॥ ऋतस्य पथि वेधाः अपायि श्रिये मनांसि देवासः अक्रन् दधानः नाम महः वचःऽभिः वपुः दृशये वेन्यः वि आवः० ॥८॥ द्युमत्ऽतमं

दक्षं धेह्यस्मे सेधा जनानां पूर्वीररातीः । वर्षीयो वयः कृणुहि
शचीभिर्धनस्य सातावस्माँ अविड्ढि ॥ ९ ॥ इंद्र तुभ्यमिन्मघ-
वन्नभूम वयं दात्रे हरिवो मा वि वेनः । नकिरापिर्ददृशे
मर्त्यत्रा किमंग रध्रचोदनं त्वाहुः ॥१०॥१७॥ मा जस्वने वृषभ
नो ररीथा मा ते रेवतः सख्ये रिषाम । पूर्वीष्ट इंद्र निःषिधो
जनेषु जह्यसुष्वीन्प्र वृहापृणतः ॥११॥ उदभ्राणीव स्तनयन्नि-
यर्तींद्रो राधांस्यश्व्यानि गव्या । त्वमसि प्रदिवः कारुधाया
मा त्वादामान आ दभन्मघोनः ॥ १२ ॥ अध्वर्यो वीर प्र महे
सुतानामिंद्राय भर स ह्यस्य राजा । यः पूर्व्याभिरुत नूतना-
भिर्गीर्भिर्वावृधे गृणतामृषीणां ॥१३॥ अस्य मदे पुरु वर्पांसि
विद्वानिंद्रो वृत्राण्यप्रती जघान । तमु प्र होषि मधुमंतमस्मै
सोमं वीराय शिप्रिणे पिबध्यै ॥१४॥ पाता सुतमिंद्रो अस्तु
सोमं हंता वृत्रं वज्रेण मंदसानः । गंता यज्ञं परावतश्चिद-
च्छा वसुर्धीनामविता कारुधायाः ॥१५॥१८॥ इदं त्यत्पात्र-
मिंद्रपानमिंद्रस्य प्रियममृतमपायि । मत्सद्यथा सौमनसाय
देवं व्य१स्मद्द्वेषो युयवद्व्यंहः ॥१६॥ एना मंदानो जहि शूर
शत्रूंजामिमजामिं मघवन्नमित्रान् । अभिषेणाँ अभ्या३दे-
दिशानान्पराच इंद्र प्र मृणा जही च ॥१७॥ आसु ष्मा णो
मघवन्निंद्र पृत्स्व१स्मभ्यं महि वरिवः सुगं कः । अपां तोकस्य
तनयस्य जेष इंद्र सूरीन्कृणुहि स्मा नो अर्धं ॥१८॥ आ त्वा
हरयो वृषणो युजाना वृषरथासो वृषरश्मयोऽत्याः । अस्म-
त्रांचो वृषणो वज्रवाहो वृष्णे मदाय सुयुजो वहंतु ॥१९॥ आ
ते वृषन्वृषणो द्रोणमस्थुर्घृतप्रुषो नोर्मयो मदंतः । इंद्र प्र तुभ्यं
वृषभिः सुतानां वृष्णे भरंति वृषभाय सोमं ॥२०॥१९॥ वृषासि

दक्षं धेहि अस्मे सेध जनानां पूर्वीः अरातीः वर्षीयः वयः कृणुहि
शचीभिः धनस्य सातौ अस्मान् अविड्ढि ॥९॥ इंद्र तुभ्यं इत् मघ-
ऽवन् अभूम वयं दात्रे हरिऽवः मा वि वेनः नकिः आपिः ददृशे
मर्त्यऽत्रा किं अंग रध्रऽचोदनं त्वा आहुः ॥१०॥१७॥ मा जस्वने
वृषभ नः ररीथाः मा ते रेवतः सख्ये रिषाम पूर्वीः ते इंद्र निःऽसिधः
जनेषु जहि असुस्वीन् प्र वृह अपृणतः ॥११॥ उत् अभ्राणिऽइव
स्तनयन् इयर्ति इंद्रः राधांसि अश्व्यानि गव्या त्वं असि प्रऽदिवः
कारुऽधायाः मा त्वा अदामानः आ दभन् मघोनः ॥१२॥ अध्वर्यो
वीर प्र महे सुतानां इंद्राय भर सः हि अस्य राजा यः पूर्व्याभिः उत
नूतनाभिः गीःऽभिः ववृधे गृणतां ऋषीणां ॥१३॥ अस्य मदे पुरु
वर्पांसि विद्वान् इंद्रः वृत्राणि अप्रति जघान तं ऊं प्र होषि मधु-
ऽमंतं अस्मै सोमं वीराय शिप्रिणे पिबध्यै ॥१४॥ पाता सुतं इंद्रः
अस्तु सोमं हंता वृत्रं वज्रेण मंदसानः गंता यज्ञं पराऽवतः चित्
अच्छ वसुः धीनां अविता कारुऽधायाः ॥१५॥१८॥ इदं त्यत् पात्रं
इंद्रऽपानं इंद्रस्य प्रियं अमृतं अपायि मत्सत् यथा सौमनसाय
देवं वि अस्मत् द्वेषः युयवत् वि अंहः ॥१६॥ एना मंदानः जहि शूर
शत्रून् जामिं अजामिं मघऽवन् अमित्रान् अभिऽसेनान् अभि
आऽदेदिशानान् पराचः इंद्र प्र मृण जहि च ॥१७॥ आसु स्म नः
मघऽवन् इंद्र पृत्ऽसु अस्मभ्यं महि वरिवः सुऽगं कः० अपां तो-
कस्य तनयस्य जेषे इंद्र सूरीन् कृणुहि स्म नः अर्धं ॥१८॥ आ त्वा
हरयः वृषणः युजानाः वृषऽरथासः वृषऽरश्मयः अत्याः अस्म-
त्राचः वृषणः वज्रऽवाहः वृष्णे मदाय सुऽयुजः वहंतु ॥१९॥ आ ते
वृषन् वृषणः द्रोणं अस्थुः घृतऽप्रुषः न ऊर्मयः मदंतः इंद्र प्र तुभ्यं
वृषऽभिः सुतानां वृष्णे भरंति वृषभाय सोमं ॥२०॥१९॥ वृषा असि

दिवो वृषभः पृथिव्या वृषा सिंधूनां वृषभः स्तियानां । वृष्णे त इंदुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥२१॥ अयं देवः सहसा जायमान इंद्रेण युजा पणिमस्तभायत् । अयं स्वस्य पितुरायुधानींदुरमुष्णादशिवस्य मायाः ॥२२॥ अयमकृणोदुषसः सुपत्नीरयं सूर्ये अदधाज्ज्योतिरंतः । अयं त्रिधातु दिवि रोचनेषु त्रितेषु विंददमृतं निगूळ्हं ॥२३॥ अयं द्यावापृथिवी वि ष्कभायदयं रथमयुनक्सप्तरश्मिं । अयं गोषु शच्या पक्वमंतः सोमो दाधार दशयंत्रमुत्सं ॥ २४ ॥ २० ॥

---

॥ ४५ ॥ १–३३ शंयुर्बार्हस्पत्यः ॥ १–३० इंद्रः । ३१–३३ बृबुस्तक्षा ॥ १–२८. ३०–३२ गायत्री । २९ अतिनिचृत् । ३३ अनुष्टुप् ॥

॥४५॥ य आनयत्परावतः सुनीती तुर्वशं यदुं । इंद्रः स नो युवा सखा ॥१॥ अविप्रे चिद्वयो दधदनाशुना चिदर्वता । इंद्रो जेता हितं धनं ॥२॥ महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः । नास्य क्षीयंत ऊतयः ॥३॥ सखायो ब्रह्मवाहसेऽर्चत प्र च गायत । स हि नः प्रमतिर्मही ॥४॥ त्वमेकस्य वृत्रहन्नविता द्वयोरसि । उतेदृशे यथा वयं ॥५॥२१॥ नयसीद्वति द्विषः कृणोष्युक्थशंसिनः । नृभिः सुवीर उच्यसे ॥६॥ ब्रह्माणं ब्रह्मवाहसं गीर्भिः सखायमृग्मियं । गां न दोहसे हुवे ॥७॥ यस्य विश्वानि हस्तयोरूचुर्वसूनि नि द्विता । वीरस्य पृतनाषहः ॥८॥ वि दृळ्हानि चिदद्रिवो जनानां शचीपते । वृह माया अनानत ॥९॥ तमु त्वा सत्य सोमपा इंद्र वाजानां पते । अहूमहि श्रवस्यवः ॥१०॥२२॥ तमु त्वा यः पुरासिथ यो वा नूनं हिते धने । हव्यः स श्रुधी हवं ॥११॥ धीभिरर्वद्भिरर्वतो वाजाँ इंद्र श्रवाय्यान् । त्वया जेष्म हितं धनं ॥१२॥ अभूरु वीर गिर्वणो महाँ इंद्र धने हिते । भरे वितंतसाय्यः ॥१३॥ या त ऊति-

दिवः वृषभः पृथिव्याः वृषा सिंधूनां वृषभः स्तियानां वृष्णः ते इंदुः वृषभ पीपाय स्वादुः रसः मधुऽपेयः वराय ॥२१॥ अयं देवः सहसा जायमानः इंद्रेण युजा पणिं अस्तभायत् अयं स्वस्य पितुः आयुधानि इंदुः अमुष्णात् अशिवस्य मायाः ॥ २२ ॥ अयं अकृणोत् उषसः सुऽपत्नीः अयं सूर्ये अदधात् ज्योतिः अंतः अयं त्रिऽधातु दिवि रोचनेषु त्रितेषु विंदत् अमृतं निऽगूळ्हं ॥२३॥ अयं द्यावापृथिवी वि स्कभायत् अयं रथं अयुनक् सप्तऽरश्मिं अयं गोषु शच्या पक्वं अंतः सोमः दाधार दशऽयंत्रं उत्सं ॥ २४ ॥ २० ॥

---

॥४५॥ यः आ अनयत् पराऽवतः सुऽनीती तुर्वशं यदुं इंद्रः सः नः युवा सखा ॥१॥ अविप्रे चित् वयः दधत् अनाशुना चित् अर्वता इंद्रः जेता हितं धनं ॥२॥ महीः अस्य प्रऽनीतयः पूर्वीः उत प्रऽशस्तयः न अस्य क्षीयंते ऊतयः ॥३॥ सखायः ब्रह्मऽवाहसे अर्चत प्र च गायत सः हि नः प्रऽमतिः मही ॥४॥ त्वं एकस्य वृत्रऽहन् अविता द्वयोः असि उत ईदृशे यथा वयं ॥५॥२१॥ नयसि इत् ऊं अति द्विषः कृणोषि उक्थऽशंसिनः नृऽभिः सुऽवीरः उच्यसे ॥६॥ ब्रह्माणं ब्रह्मऽवाहसं गीःऽभिः सखायं ऋग्मियं गां न दोहसे हुवे ॥७॥ यस्य विश्वानि हस्तयोः ऊचुः वसूनि नि द्विता वीरस्य पृतनाऽसहः ॥८॥ वि दृळ्हानि चित् अद्रिऽवः जनानां शचीऽपते वृह मायाः अनानत ॥९॥ तं ऊं त्वा सत्य सोमऽपाः इंद्र वाजानां पते अहूमहि श्रवस्यवः ॥१०॥२२॥ तं ऊं त्वा यः पुरा आसिथ यः वा नूनं हिते धने हव्यः सः श्रुधि हवं ॥११॥ धीभिः अर्वत्ऽभिः अर्वतः वाजान् इंद्र श्रवाय्यान् त्वया जेष्म हितं धनं ॥१२॥ अभूः ऊं वीर गिर्वणः महान् इंद्र धने हिते भरे वितंतसाय्यः ॥१३॥ या ते ऊतिः

रमिवहन्मक्षूजवस्तमासति । तया नो हिनुही रथं ॥१४॥ स रथेन रथीतमोऽस्माकेनाभियुग्वना । जेषि जिष्णो हितं धनं ॥१५॥२३॥ य एक इत्तमु ष्टुहि कृष्टीनां विचर्षणिः । पतिर्जज्ञे वृषक्रतुः ॥१६॥ यो गृणतामिदासिथापिरूती शिवः सखा । स त्वं न इंद्र मृळय ॥१७॥ धिष्व वज्रं गभस्त्यो रक्षोहत्याय वज्रिवः । सासहीष्ठा अभि स्पृधः ॥१८॥ प्रत्नं रयीणां युजं सखायं कीरिचोदनं । ब्रह्मवाहस्तमं हुवे ॥१९॥ स हि विश्वानि पार्थिवाँ एको वसूनि पत्यते । गिर्वणस्तमो अध्रिगुः ॥२०॥२४॥ स नो नियुद्भिरा पृण कामं वाजेभिरश्विभिः । गोमद्भिर्गोपते धृषत् ॥२१॥ तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥२२॥ न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुप श्रवद्गिरः ॥२३॥ कुवित्सस्य प्र हि व्रजं गोमंतं दस्युहा गमत् । शचीभिरप नो वरत् ॥२४॥ इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः । इंद्र वत्सं न मातरः ॥२५॥२५॥ दूणाशं सख्यं तव गौरसि वीर गव्यते । अश्वो अश्वायते भव ॥२६॥ स मंदस्वा ह्यंधसो राधसे तन्वा महे । न स्तोतारं निदे करः ॥२७॥ इमा उ त्वा सुतेसुते नक्षंते गिर्वणो गिरः । वत्सं गावो न धेनवः ॥२८॥ पुरूतमं पुरूणां स्तोतॄणां विवाचि । वाजेभिर्वाजयतां ॥२९॥ अस्माकमिंद्र भूतु ते स्तोमो वाहिष्ठो अंतमः । अस्मान्राये महे हिनु ॥३०॥ अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात् । उरुः कक्षो न गांग्यः ॥३१॥ यस्य वायोरिव द्रवद्भद्रा रातिः सहस्रिणी । सद्यो दानाय मंहते ॥३२॥ तत्सु नो विश्वे अर्य आ सदा गृणंति कारवः । बृबुं सहस्रदातमं सूरिं सहस्रसातमं ॥३३॥२६॥

अमित्रऽहन् मक्षुजवःऽतमा असति तया नः हिनुहि रथं ॥१४॥
सः रथेन रथिऽतमः अस्माकेन अभिऽयुग्वना जेषि जिष्णो हितं
धनं ॥१५॥२३॥ यः एकः इत् तं ऊं स्तुहि कृष्टीनां विऽचर्षणिः पतिः
जज्ञे वृषऽक्रतुः ॥१६॥ यः गृणतां इत् आसिथ आपिः ऊती शिवः
सखा सः त्वं नः इंद्र मृळय ॥१७॥ धिष्व वज्रं गभस्त्योः रक्षःऽहत्याय
वज्रिऽवः ससहीष्ठाः अभि स्पृधः ॥१८॥ प्रत्नं रयीणां युजं सखायं
कीरिऽचोदनं ब्रह्मऽवाहःऽतमं हुवे ॥१९॥ सः हि विश्वानि पार्थिवा
एकः वसूनि पत्यते गिर्वणःऽतमः अध्रिऽगुः ॥२०॥२४॥ सः नः नि-
युत्ऽभिः आ पृण कामं वाजेभिः अश्विऽभिः गोमत्ऽभिः गोऽपते
धृषत् ॥२१॥ तत् वः गाय सुते सचा पुरुऽहूताय सत्वने शं यत् गवे
न शाकिने ॥२२॥ न घ वसुः नि यमते दानं वाजस्य गोऽमतः यत्
सीं उप श्रवत् गिरः ॥२३॥ कुवित्ऽसस्य प्र हि व्रजं गोऽमंतं दस्यु-
ऽहा गमत् शचीभिः अप नः वरत् ॥२४॥ इमाः ऊं त्वा शतऽक्रतो॰
अभि प्र नोनुवुः गिरः इंद्र वत्सं न मातरः ॥२५॥२५॥ दुःऽनशं
सख्यं तव गौः असि वीर गव्यते अश्वः अश्वऽयते भव ॥२६॥
सः मंदस्व हि अंधसः राधसे तन्वा महे न स्तोतारं निदे करः
॥२७॥ इमाः ऊं त्वा सुतेऽसुते नक्षंते गिर्वणः गिरः वत्सं गावः न
धेनवः ॥२८॥ पुरुऽतमं पुरूणां स्तोतॄणां विऽवाचि वाजेभिः
वाजऽयतां ॥२९॥ अस्माकं इंद्र भूतु ते स्तोमः वाहिष्ठः अंतमः
अस्मान् राये महे हिनु ॥३०॥ अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्
अस्थात् उरुः कक्षः न गांग्यः ॥३१॥ यस्य वायोःऽइव द्रवत्
भद्रा रातिः सहस्रिणी सद्यः दानाय मंहते ॥३२॥ तत् सु नः विश्वे
अर्यः आ सदा गृणंति कारवः बृबुं सहस्रऽदातमं सूरिं सहस्र-
ऽसातमं ॥३३॥२६॥

॥ ४६ ॥ १-१४ शंयुर्बार्हस्पत्यः ॥ इंद्रः ॥ प्रागाथं ॥

॥४६॥ त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विंद्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥१॥ स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः। गामश्वं रथ्यमिंद्र सं किर सत्रा वाजं न जिग्युषे ॥२॥ यः सत्राहा विचर्षणिरिंद्रं तं हूमहे वयं। सहस्रमुष्क तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥३॥ बाधसे जनान्वृषभेव मन्युना घृषौ मीळ्ह ऋचीषम। अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥४॥ इंद्र ज्येष्ठं न आ भरँ ओजिष्ठं पपुरि श्रवः। येनेमे चित्र वज्रहस्त रोदसी ओभे सुशिप्र प्राः ॥५॥२७॥ त्वामुग्रमवसे चर्षणीसहं राजन्देवेषु हूमहे। विश्वा सु नो विथुरा पिब्दना वसोऽमित्रान्सुषहान्कृधि ॥६॥ यदिंद्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु। यद्वा पंच क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥७॥ यद्वा तृक्षौ मघवन्द्रुह्यावा जने यत्पूरौ कच्च वृष्ण्यं। अस्मभ्यं तद्रिरीहि सं नृषाह्येऽमित्रान्पृत्सु तुर्वणे ॥८॥ इंद्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत्। छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥९॥ ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नंति धृष्णुया। अध स्मा नो मघवन्निंद्र गिर्वणस्तनूपा अंतमो भव ॥१०॥२८॥ अध स्मा नो वृधे भवेंद्र नायमवा युधि। यदंतरिक्षे पतयंति पर्णिनो दिद्यवस्तिग्ममूर्धानः ॥११॥ यत्र शूरासस्तन्वो वितन्वते प्रिया शर्म पितॄणां। अध स्मा यच्छ तन्वे३ तने च छर्दिरचित्तं यावय द्वेषः ॥१२॥ यदिंद्र सर्गे अर्वतश्चोदयासे महाधने। असमने अध्वनि वृजिने पथि श्येनाँ इव श्रवस्यतः ॥१३॥ सिंधूँरिव प्रवण आशुया यतो यदि क्लोशमनु ष्वणि। आ ये वयो न वर्वृतत्यामिषि गृभीता बाह्वोर्गवि ॥१४॥२९॥

॥४६॥ त्वां इत् हि हवामहे साता वाजस्य कारवः त्वां वृत्रेषु इंद्र सत्ऽपतिं नरः त्वां काष्ठासु अर्वतः ॥१॥ सः त्वं नः चित्र वज्रऽहस्त धृष्णुऽया महः स्तवानः अद्रिऽवः गां अश्वं रथ्यं इंद्र सं किर सत्रा वाजं न जिग्युषे ॥२॥ यः सत्राऽहा विऽचर्षणिः इंद्रं तं हूमहे वयं सहस्रऽमुष्क तुविऽनृम्ण सत्ऽपते भव समत्ऽसु नः वृधे ॥३॥ बाधसे जनान् वृषभाऽइव मन्युना घृषौ मीळ्हे ऋचीषम अस्माकं बोधि अविता महाऽधने तनूषु अप्ऽसु सूर्ये ॥४॥ इंद्र ज्येष्ठं नः आ भर ओजिष्ठं पपुरि श्रवः येन इमे चित्र वज्रऽहस्त रोदसी आ उभे सुऽशिप्र प्राः ॥५॥२७॥ त्वां उग्रं अवसे चर्षणिऽसहं राजन् देवेषु हूमहे विश्वा सु नः विथुरा पिब्दना वसो अमित्रान् सुऽसहान् कृधि ॥६॥ यत् इंद्र नाहुषीषु आ ओजः नृम्णं च कृष्टिषु यत् वा पंच क्षितीनां द्युम्नं आ भर सत्रा विश्वानि पौंस्या ॥७॥ यत् वा तृक्षौ मघऽवन् द्रुह्यौ आ जने यत् पूरौ कत् च वृष्ण्यं अस्मभ्यं तत् रिरीहि सं नृऽसह्ये अमित्रान् पृत्ऽसु तुर्वणे ॥८॥ इंद्र त्रिऽधातु शरणं त्रिऽवरूथं स्वस्तिऽमत् छर्दिः यच्छ मघवत्ऽभ्यः च मह्यं च यवय दिद्युं एभ्यः ॥९॥ ये गव्यता मनसा शत्रुं आऽदभुः अभिऽप्रघ्नंति धृष्णुऽया अध स्म नः मघऽवन् इंद्र गिर्वणः तनूऽपाः अंतमः भव ॥१०॥२८॥ अध स्म नः वृधे भव इंद्र नायं अव युधि यत् अंतरिक्षे पतयंति पर्णिनः दिद्यवः तिग्मऽमूर्धानः ॥११॥ यत्र शूरासः तन्वः विऽतन्वते प्रिया शर्म पितॄणां अध स्म यच्छ तन्वे तने च छर्दिः अचित्तं यवय द्वेषः ॥१२॥ यत् इंद्र सर्गे अर्वतः चोदयासे महाऽधने असमने अध्वनि वृजिने पथि श्येनान्ऽइव श्रवस्यतः ॥१३॥ सिंधून्ऽइव प्रवणे आशुऽया यतः यदि क्रोशं अनु स्वनि आ ये वयः न वर्वृतति आमिषि गृभीताः बाह्वोः गवि ॥ १४ ॥ २९ ॥

॥ ४७ ॥ १–३१ गर्गः ॥ १–५ सोमः । ६–१९. २०[२]. २१. ३१[२] इंद्रः । २०[१] लिंगोक्तदेवताः । २२–२५ प्रस्तोकस्य सार्ञ्जयस्य दानस्तुतिः । २६–२८ रथः । २९–३१[१] दुंदुभिः ॥ १–१८. २०–२२. २६. २८–३१ त्रिष्टुप् । १९ बृहती । २३ अनुष्टुप् । २४ गायत्री । २५ द्विपदा । २७ जगती ॥

॥४७॥ स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायं । उतो न्व१स्य पपिवांसमिंद्रं न कश्चन सहत आहवेषु ॥१॥ अयं स्वादुरिह मदिष्ठ आस यस्येंद्रो वृत्रहत्ये ममाद । पुरूणि यश्च्यौत्ना शंबरस्य वि नवतिं नव च देह्यो३ हन् ॥२॥ अयं मे पीत उदियर्ति वाचमयं मनीषामुशतीमजीगः । अयं षळुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥३॥ अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः । अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्व१न्तरिक्षं ॥४॥ अयं विदच्चित्रदृशीकमर्णः शुक्रसद्मनामुषसामनीके । अयं महान्महता स्कंभनेनोद्द्यामस्तभ्नाद्वृषभो मरुत्वान् ॥५॥३०॥ धृषत्पिब कलशे सोममिंद्र वृत्रहा शूर समरे वसूनां । माध्यंदिने सवन आ वृषस्व रयिस्थानो रयिमस्मासु धेहि ॥६॥ इंद्र प्र णः पुरएतेव पश्य प्र नो नय प्रतरं वस्यो अच्छ । भवा सुपारो अतिपारयो नो भवा सुनीतिरुत वामनीतिः ॥७॥ उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति । ऋष्वा त इंद्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहंता ॥८॥ वरिष्ठे न इंद्र वंधुरे धा वहिष्ठयोः शतावन्नश्वयोरा । इषमा वक्षीषां वर्षिष्ठां मा नस्तारीन्मघवन्रायो अर्यः ॥९॥ इंद्र मृळ मह्यं जीवातुमिच्छ चोदय धियमयसो न धारां । यत्किंचाहं त्वायुरिदं वदामि तज्जुषस्व कृधि मा देववंतं ॥१०॥३१॥ त्रातारमिंद्रमवितारमिंद्रं हवेहवे सुहवं शूरमिंद्रं । ह्वयामि शक्रं पुरुहूतमिंद्रं स्वस्ति नो मघवा धात्विंद्रः ॥११॥ इंद्रः सुत्रामा स्ववाँ अवोभिः सुमृळी-

॥४७॥ स्वादुः किल अयं मधुऽमान् उत अयं तीव्रः किल
अयं रसऽवान् उत अयं उतो’ नु अस्य पपिऽवांसं इंद्रं न कः
चन सहते आऽहवेषु ॥१॥ अयं स्वादुः इह मदिष्ठः आस यस्य
इंद्रः वृत्रऽहत्ये ममाद पुरूणि यः च्यौत्ना शंबरस्य वि नवतिं
नव च देह्यः हन् ॥२॥ अयं मे पीतः उत् इयर्ति वाचं अयं
मनीषां उशतीं अजीगः’ अयं षट् उर्वीः अमिमीत धीरः न
याभ्यः भुवनं कत् चन आरे ॥३॥ अयं सः यः वरिमाणं पृथि-
व्याः वर्ष्माणं दिवः अकृणोत् अयं सः अयं पीयूषं तिसृषु
प्रवत्ऽसु सोमः दाधार उरु अंतरिक्षं ॥४॥ अयं विदत् चित्र-
ऽदृशीकं अर्णः शुक्रऽसद्मनां उषसां अनीके अयं महान् महता
स्कंभनेन उत् द्यां अस्तभ्नात् वृषभः मरुत्वान् ॥५॥३०॥ धृषत्
पिब कलशे सोमं इंद्र वृत्रऽहा शूर संऽअरे वसूनां माध्यंदिने
सवने आ वृषस्व रयिऽस्थानः रयिं अस्मासु धेहि ॥६॥ इंद्र प्र
नः पुरएताऽइव पश्य प्र नः नय प्रऽतरं वस्यः अच्छ भव सु-
ऽपारः अतिऽपारयः नः भव सुऽनीतिः उत वामऽनीतिः ॥७॥
उरुं नः लोकं अनु नेषि विद्वान् स्वःऽवत् ज्योतिः अभयं
स्वस्ति ऋष्वा ते इंद्र स्थविरस्य बाहू’ उप स्थेयाम शरणा बृ-
हंता ॥८॥ वरिष्ठे नः इंद्र वंधुरे धाः वहिष्ठयोः शतऽवन् अश्व-
योः आ इषं आ वक्षि इषां वर्षिष्ठां मा नः तारीत् मघऽवन्
रायः अर्यः ॥९॥ इंद्र मृळ मह्यं जीवातुं इच्छ चोदय धियं अ-
यसः न धारां यत् किं च अहं त्वाऽयुः इदं वदामि तत् जुषस्व
कृधि मा देवऽवंतं ॥१०॥३१॥ त्रातारं इंद्रं अवितारं इंद्रं हवेऽहवे
सुऽहवं शूरं इंद्रं ह्वयामि शक्रं पुरुऽहूतं इंद्रं स्वस्ति नः मघऽवा
धातु इंद्रः ॥११॥ इंद्रः सुऽत्रामा स्वऽवान् अवःऽभिः सुऽमृळी-

को भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥१२॥ तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाँ इंद्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥१३॥ अव त्वे इंद्र प्रवतो नोर्मिर्गिरो ब्रह्माणि नियुतो धवंते । उरु न राधः सवना पुरूण्यपो गा वज्रिन्युवसे समिंदून् ॥१४॥ क ईं स्तवत्कः पृणात्को यजाते यदुग्रमिन्मघवा विश्वहावेत् । पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥१५॥३२॥ शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इंद्रो मनुष्यान् ॥१६॥ परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति । अनानुभूतीरवधून्वानः पूर्वीरिंद्रः शरदस्तर्तरीति ॥१७॥ रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥१८॥ युजानो हरिता रथे भूरि त्वष्टेह राजति । को विश्वाहा द्विषतः पक्ष आसत उतासीनेषु सूरिषु ॥१९॥ अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाभूत् । बृहस्पते प्र चिकित्सा गविष्टावित्था सते जरित्र इंद्र पंथां ॥२०॥३३॥ दिवेदिवे सदृशीरन्यमर्धं कृष्णा असेधदप सद्मनो जाः । अहन्दासा वृषभो वस्नयंतोदव्रजे वर्चिनं शंबरं च ॥२१॥ प्रस्तोक इन्नु राधसस्त इंद्र दश कोशयीर्दश वाजिनोऽदात् । दिवोदासादतिथिग्वस्य राधः शांबरं वसु प्रत्यग्रभीष्म ॥२२॥ दशाश्वान्दश कोशान्दश वस्त्राधिभोजना । दशो हिरण्यपिंडान्दिवोदासादसानिषं ॥२३॥ दश रथान्प्रष्टिमतः शतं गा अथर्वभ्यः । अश्वथः पायवेऽदात् ॥२४॥ महि राधो

कः भवतु विश्वऽवेदाः बाधतां द्वेषः अभयं कृणोतु सुऽवीर्यस्य पतयः स्याम ॥१२॥ तस्य वयं सुऽमतौ यज्ञियस्य अपि भद्रे सौमनसे स्याम सः सुऽत्रामा स्वऽवान् इंद्रः अस्मे आरात् चित् द्वेषः सनुतः युयोतु ॥१३॥ अव त्वे इंद्र प्रऽवतः न ऊर्मिः गिरः ब्रह्माणि निऽयुतः धवंते उरु न राधः सवना पुरूणि अपः गाः वज्रिन् युवसे सं इंदून् ॥१४॥ कः ईं स्तवत् कः पृणात् कः यजाते यत् उग्रं इत् मघऽवा विश्वहा अवेत् पादौऽइव प्रऽहरन् अन्यंऽअन्यं कृणोति पूर्वं अपरं शचीभिः ॥१५॥३२॥ शृण्वे वीरः उग्रंऽउग्रं दमऽयन् अन्यंऽअन्यं अतिऽनेनीयमानः एधमानऽद्विट् उभयस्य राजा चोष्कूयते विशः इंद्रः मनुष्यान् ॥१६॥ परा पूर्वेषां सख्या वृणक्ति विऽतर्तुराणः अपरेभिः एति अननुऽभूतीः अवऽधून्वानः पूर्वीः इंद्रः शरदः तर्तरीति ॥१७॥ रूपंऽरूपं प्रतिऽरूपः बभूव तत् अस्य रूपं प्रतिऽचक्षणाय इंद्रः मायाभिः पुरुऽरूपः ईयते युक्ताः हि अस्य हरयः शता दश ॥१८॥ युजानः हरिता रथे भूरि त्वष्टा इह राजति कः विश्वाहा द्विषतः पक्षः आसते उत आसीनेषु सूरिषु ॥१९॥ अगव्यूति क्षेत्रं आ अगन्म देवाः उर्वी सती भूमिः अंहूरणा अभूत् बृहस्पते प्र चिकित्स गोऽइष्टौ इत्था सते जरित्रे इंद्र पंथां ॥२०॥३३॥ दिवेऽदिवे सऽदृशीः अन्यं अर्धं कृष्णाः असेधत् अप सद्मनः जाः अहन् दासा वृषभः वस्नऽयंता उदऽव्रजे वर्चिनं शंबरं च ॥२१॥ प्रऽस्तोकः इत् नु राधसः ते इंद्र दश कोशयीः दश वाजिनः अदात् दिवःऽदासात् अतिथिऽग्वस्य राधः शांबरं वसु प्रति अग्रभीष्म ॥२२॥ दश अश्वान् दश कोशान् दश वस्त्रा अधिऽभोजना दशो हिरण्यऽपिंडान् दिवःऽदासात् असानिषं ॥२३॥ दश रथान् प्रष्टिऽमतः शतं गाः अथर्वऽभ्यः अश्वथः पायवे अदात् ॥२४॥ महि राधः

विश्वजन्यं दधाना भरद्वाजान्त्सार्ञ्जयो अभ्ययष्ट ॥२५॥३४॥ वनस्पते वीड्वंगो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥२६॥ दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः । अपामोज्मानं परि गोभिरावृतमिंद्रस्य वज्रं हविषा रथं यज ॥२७॥ इंद्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः । सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥२८॥ उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुंदुभे सजूरिंद्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥२९॥ आ क्रंदय बलमोजो न आ धा निः ष्टनिहि दुरिता बाधमानः । अप प्रोथ दुंदुभे दुच्छुना इत इंद्रस्य मुष्टिरसि वीळयस्व ॥३०॥ आमूरज प्रत्यावर्तयेमाः केतुमद्दुंदुभिर्वावदीति । समश्वपर्णाश्चरंति नो नरोऽस्माकमिंद्र रथिनो जयंतु ॥३१॥३५॥७॥

---

॥४८॥ १–२२ शंयुर्बार्हस्पत्यः ॥ तृणपाणिकं पृश्निसूक्तं । १–१० अग्निः । ११. १२. २०. २१ मरुतः । १३–१५ मरुतो लिंगोक्ता वा । १६–१९ पूषा । २२ मरुतः पृश्निर्द्यावाभूमी वा ॥ १. ३. ५. ९. १४. १९. २० बृहती । २. ४. १०. १२. १७ सतोबृहती । ६. ८ महासतोबृहती । ७ महाबृहती । ११. १६ ककुप् । १३. १८ पुरउष्णिक् । १५ अतिजगती । २१ यवमध्या महाबृहती । २२ अनुष्टुप् ॥

॥४८॥ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषं ॥१॥ ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये । भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनां ॥२॥ वृषा ह्यग्ने अजरो महान्विभास्यर्चिषा । अजस्रेण शोचिषा शोशुचच्छुचे सुदीतिभिः सु दीदिहि ॥३॥ महो देवान्यजसि यक्ष्यानुषक्तव क्रत्वोत दंसना । अर्वाचः सीं कृणुह्यग्नेऽवसे रास्व वाजोत वंस्व ॥४॥

विश्वऽजन्यं दधानान् भरतऽवाजान् साञ्जेयः अभि अयष्ट ॥२५॥३४॥ वनस्पते वीळुऽअंगः हि भूयाः अस्मत्ऽसखा प्रऽतरणः सुऽवीरः गोभिः संऽनद्धः असि वीळयस्व आऽस्थाता ते जयतु जेत्वानि ॥२६॥ दिवः पृथिव्याः परि ओजः उत्ऽभृतं वनस्पतिऽभ्यः परि आऽभृतं सहः अपां ओज्मानं परि गोभिः आऽवृतं इंद्रस्य वज्रं हविषा रथं यज ॥ २७ ॥ इंद्रस्य वज्रः मरुतां अनीकं मित्रस्य गर्भः वरुणस्य नाभिः सः इमां नः हव्यऽदातिं जुषाणः देव रथ प्रति हव्या गृभाय ॥२८॥ उप श्वासय पृथिवीं उत द्यां पुरुऽत्रा ते मनुतां विऽस्थितं जगत् सः दुंदुभे सऽजूः इंद्रेण देवैः दूरात् दवीयः अप सेध शत्रून् ॥ २९ ॥ आ क्रंदय बलं ओजः नः आ धाः निः स्तनिहि दुःऽइता बाधमानः अप प्रोथ दुंदुभे दुच्छुनाः इतः इंद्रस्य मुष्टिः असि वीळयस्व ॥३०॥ आ अमूः अज प्रतिऽआवर्तय इमाः केतुऽमत् दुंदुभिः वावदीति सं अश्वऽपर्णाः चरंति नः नरः अस्माकं इंद्र रथिनः जयंतु ॥ ३१ ॥ ३५ ॥ ७ ॥

---

॥४८॥ यज्ञाऽयज्ञा वः अग्नये गिराऽगिरा च दक्षसे प्रऽप्र वयं अमृतं जातऽवेदसं प्रियं मित्रं न शंसिषं ॥१॥ ऊर्जः नपातं सः हिन अयं अस्मऽयुः दाशेम हव्यऽदातये भुवत् वाजेषु अविता भुवत् वृधः उत त्राता तनूनां ॥२॥ वृषा हि अग्ने अजरः महान् विऽभासि अर्चिषा अजस्रेण शोचिषा शोशुचत् शुचे सुदीतिऽभिः सु दीदिहि ॥३॥ महः देवान् यजसि यक्षि आनुषक् तव क्रत्वा उत दंसना अर्वाचः सीं कृणुहि अग्ने अवसे रास्व वाजा उत वंस्व ॥४॥

यमापो अद्रयो वना गर्भमृतस्य पिप्रति। सहसा यो मथितो
जायते नृभिः पृथिव्या अधि सानवि ॥५॥१॥ आ यः पप्रौ भा-
नुना रोदसी उभे धूमेन धावते दिवि। तिरस्तमो ददृश ऊर्म्या-
स्वा श्यावास्वरुषो वृषा श्यावा अरुषो वृषा ॥६॥ बृहद्भि-
रग्ने अर्चिभिः शुक्रेण देव शोचिषा। भरद्वाजे समिधानो
यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥७॥ वि-
श्वासां गृहपतिर्विशामसि त्वमग्ने मानुषीणां। शतं पूर्भि-
र्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः स्तोतृभ्यो ये च ददति
॥८॥ त्वं नश्चित्र ऊत्या वसो राधांसि चोदय। अस्य रायस्त्व-
मग्ने रथीरसि विदा गाधं तुचे तु नः ॥९॥ पर्षि तोकं तनयं
पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः। अग्ने हेळांसि दैव्या युयोधि नो-
ऽदेवानि ह्वरांसि च ॥१०॥२॥ आ सखायः सबर्दुघां धेनुमज-
ध्वमुप नव्यसा वचः। सृजध्वमनपस्फुरां ॥११॥ या शर्धाय
मारुताय स्वभानवे श्रवोऽमृत्यु धुक्षत। या मृळीके मरुतां
तुराणां या सुम्नैरेवयावरी ॥१२॥ भरद्वाजायाव धुक्षत द्विता।
धेनुं च विश्वदोहसमिषं च विश्वभोजसं ॥१३॥ तं व इंद्रं न सु-
क्रतुं वरुणमिव मायिनं। अर्यमणं न मंद्रं सृप्रभोजसं विष्णुं न
स्तुष आदिशे ॥१४॥ त्वेषं शर्धो न मारुतं तुविष्वण्यनर्वाणं
पूषणं सं यथा शता। सं सहस्रा कारिषच्चर्षणिभ्य आँ आविर्गू-
ळ्हा वसू करत्सुवेदा नो वसू करत् ॥१५॥ आ मा पूषन्नुप द्रव
शंसिषं नु ते अपिकर्ण आघृणे। अघा अर्यो अरातयः ॥१६॥३॥
मा काकंबीरमुद्वृहो वनस्पतिमशस्तीर्वि हि नीनशः। मोत सू-
रो अह एवा चन ग्रीवा आदधते वेः ॥१७॥ दृतेरिव तेऽवृक-
मस्तु सख्यं। अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः ॥१८॥

यं आपः अद्रयः वना गर्भं ऋतस्य पिप्रति सहसा यः मथितः जायते नृऽभिः पृथिव्याः अधि सानवि ॥५॥१॥ आ यः पप्रौ भानुना रोदसी इति उभे इति धूमेन धावते दिवि तिरः तमः ददृशे ऊर्म्यासु आ श्यावासु अरुषः वृषा आ श्यावाः अरुषः वृषा ॥६॥ बृहत्ऽभिः अग्ने अर्चिःऽभिः शुक्रेण देव शोचिषा भरत्ऽवाजे संऽइधानः यविष्ठ्य रेवत् नः शुक्र दीदिहि द्युऽमत् पावक दीदिहि ॥७॥ विश्वासां गृहऽपतिः विशां असि त्वं अग्ने मानुषीणां शतं पूःऽभिः यविष्ठ पाहि अंहसः संऽएद्धारं शतं हिमाः स्तोतृऽभ्यः ये च ददति ॥८॥ त्वं नः चित्रः ऊत्या वसो इति राधांसि चोदय अस्य रायः त्वं अग्ने रथीः असि विदाः गाधं तुचे तु नः ॥९॥ पर्षि तोकं तनयं पर्तृऽभिः त्वं अदब्धैः अप्रयुत्वऽभिः अग्ने हेळांसि दैव्या युयोधि नः अदेवानि ह्वरांसि च ॥१०॥२॥ आ सखायः सबःऽदुघां धेनुं अजध्वं उप नव्यसा वचः सृजध्वं अनपऽस्फुरां ॥११॥ या शर्धाय मारुताय स्वऽभानवे श्रवः अमृत्यु धुक्षत या मृळीके मरुतां तुराणां या सुम्नैः एवऽयावरी ॥१२॥ भरत्ऽवाजाय अव धुक्षत द्विता धेनुं च विश्वऽदोहसं इषं च विश्वऽभोजसं ॥१३॥ तं वः इंद्रं न सुऽक्रतुं वरुणंऽइव मायिनं अर्यमणं न मंद्रं सृप्रऽभोजसं विष्णुं न स्तुषे आऽदिशे ॥१४॥ त्वेषं शर्धः न मारुतं तुविऽस्वनि अनर्वाणं पूषणं सं यथा शता सं सहस्रा कारिषत् चर्षणिऽभ्यः आ आविः गूळ्हा वसु करत् सुऽवेदा नः वसु करत् ॥१५॥ आ मा पूषन् उप द्रव शंसिषं नु ते अपिऽकर्णे आघृणे अघाः अर्यः अरातयः ॥१६॥३॥ मा काकंबीरं उत् वृहः वनस्पतिं अशस्तीः वि हि नीनशः मा उत सूरः अहरिति एव चन ग्रीवाः आऽदधते वेरिति वेः ॥१७॥ दृतेःऽइव ते अवृकं अस्तु सख्यं अच्छिद्रस्य दधन्ऽवतः सुऽपूर्णस्य दधन्ऽवतः ॥१८॥

परो हि मर्त्यैरसि समो देवैरुत श्रिया । अभि ख्यः पूषन्पृतनासु नस्त्वमवा नूनं यथा पुरा ॥१९॥ वामी वामस्य धूतयः प्रणीतिरस्तु सूनृता । देवस्य वा मरुतो मर्त्यस्य वेजानस्य प्रयज्यवः ॥२०॥ सद्यश्चिद्यस्य चर्कृतिः परि द्यां देवो नैति सूर्यः । त्वेषं शवो दधिरे नाम यज्ञियं मरुतो वृत्रहं शवो ज्येष्ठं वृत्रहं शवः ॥२१॥ सकृद्ध द्यौरजायत सकृद्भूमिरजायत । पृश्न्या दुग्धं सकृत्पयस्तदन्यो नानु जायते ॥ २२ ॥ ४ ॥

---

॥ ४९ ॥ १–१५ ऋजिश्वा ॥ विश्वे देवाः ॥ १–१४ त्रिष्टुप् । १५ शक्वरी ॥

॥ ४९ ॥ स्तुषे जनं सुव्रतं नव्यसीभिर्गीर्भिर्मित्रावरुणा सुम्नयंता । त आ गमंतु त इह श्रुवंतु सुक्षत्रासो वरुणो मित्रो अग्निः ॥१॥ विशोविश ईड्यमध्वरेष्वदृप्तक्रतुमरतिं युवत्योः । दिवः शिशुं सहसः सूनुमग्निं यज्ञस्य केतुमरुषं यजध्यै ॥२॥ अरुषस्य दुहितरा विरूपे स्तृभिरन्या पिपिशे सूरो अन्या । मिथस्तुरा विचरंती पावके मन्म श्रुतं नक्षत ऋच्यमाने ॥३॥ प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारं रथप्रां । द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ॥४॥ स मे वपुश्छदयदश्विनोर्यो रथो विरुक्मान्मनसा युजानः । येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥५॥५॥ पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतमप्यानि । सत्यश्रुतः कवयो यस्य गीर्भिर्जगतः स्थातर्जगदा कृणुध्वं ॥६॥ पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् । ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥७॥ पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कं । स नो रासच्छुरुधश्चंद्राग्रा धियंधियं सीषधाति

परः हि मर्त्यैः असि समः देवैः उत श्रिया अभि ख्यः पूषन् पृतनासु
नः त्वं अव नूनं यथा पुरा ॥१९॥ वामी वामस्य धूतयः प्रऽनीतिः
अस्तु सूनृता देवस्य वा मरुतः मर्त्यस्य वा ईजानस्य प्रऽयज्यवः
॥२०॥ सद्यः चित् यस्य चर्कृतिः परि द्यां देवः न एति सूर्यः त्वेषं शवः
दधिरे नाम यज्ञियं मरुतः वृत्रऽहं शवः ज्येष्ठं वृत्रऽहं शवः ॥२१॥
सकृत् ह द्यौः अजायत सकृत् भूमिः अजायत पृश्न्याः दुग्धं सकृत्
पयः तत् अन्यः न अनु जायते ॥ २२ ॥ ४ ॥

---

॥४९॥ स्तुषे जनं सुऽव्रतं नव्यसीभिः गीःऽभिः मित्रावरुणा
सुम्नऽयंता ते आ गमंतु ते इह श्रुवंतु सुऽक्षत्रासः वरुणः मित्रः
अग्निः ॥१॥ विशःऽविशः ईड्यं अध्वरेषु अदृप्तऽक्रतुं अरतिं युवत्योः
दिवः शिशुं सहसः सूनुं अग्निं यज्ञस्य केतुं अरुषं यजध्यै ॥२॥ अरु-
षस्य दुहितरा विऽरूपे॰ स्तृऽभिः अन्या पिपिशे सूरः अन्या मि-
थःऽतुरा विऽचरंती॰ पावके॰ मन्म श्रुतं नक्षतः ऋच्यमाने॰ ॥३॥
प्र वायुं अच्छ बृहती मनीषा बृहत्ऽरयिं विश्वऽवारं रथऽप्रां द्यु-
तत्ऽयामा निऽयुतः पत्यमानः कविः कविं इयक्षसि प्रऽयज्यो॰
॥४॥ सः मे वपुः छदयत् अश्विनोः यः रथः विरुक्मान् मनसा यु-
जानः येन नरा नासत्या इषयध्यै वर्तिः याथः तनयाय त्मने च
॥५॥५॥ पर्जन्यवाता वृषभा पृथिव्याः पुरीषाणि जिन्वतं अप्यानि
सत्यऽश्रुतः कवयः यस्य गीःऽभिः जगतः स्थातः जगत् आ कृणुध्वं
॥६॥ पावीरवी कन्या चित्रऽआयुः सरस्वती वीरऽपत्नी धियं
धात् ग्नाभिः अच्छिद्रं शरणं सऽजोषाः दुःऽआधर्षं गृणते शर्म
यंसत् ॥७॥ पथःऽपथः परिऽपतिं वचस्या कामेन कृतः अभि आ-
नट् अर्कं सः नः रासत् शुरुधः चंद्रऽअग्राः धियंऽधियं सीसधाति

प्र पूषा ॥८॥ प्रथमभाजं यशसं वयोधां सुपाणिं देवं सुगभस्तिमृभ्वं । होता यक्षद्यजतं पस्त्यानामग्निस्त्वष्टारं सुहवं विभावा ॥९॥ भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रमक्तौ । बृहंतमृष्वमजरं सुषुम्नमृधग्घुवेम कविनेषितासः ॥१०॥६॥ आ युवानः कवयो यज्ञियासो मरुतो गंत गृणतो वरस्यां । अचित्रं चिद्धि जिन्वथा वृधंत इत्था नक्षंतो नरो अंगिरस्वत् ॥११॥ प्र वीराय प्र तवसे तुरायाजा यूथेव पशुरक्षिरस्तं । स पिस्पृशति तन्विं श्रुतस्य स्तृभिर्न नाकं वचनस्य विपः ॥१२॥ यो रजांसि विममे पार्थिवानि त्रिश्चिद्विष्णुर्मनवे बाधिताय । तस्य ते शर्मन्नुपदद्यमाने राया मदेम तन्वा३ तना च ॥१३॥ तन्नोऽहिर्बुध्न्यो अद्भिरर्कैस्तत्पर्वतस्तत्सविता चनो धात् । तदोषधीभिरभि रातिषाचो भगः पुरंधिर्जिन्वतु प्र राये ॥१४॥ नू नो रयिं रथ्यं चर्षणिप्रां पुरुवीरं मह ऋतस्य गोपां । क्षयं दाताजरं येन जनान्स्पृधो अदेवीरभि च क्रमाम विश आदेवीरभ्य१श्नवाम ॥१५॥७॥४॥

---

॥५०॥ १-१५ ऋजिश्वा ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥५०॥ हुवे वो देवीमदितिं नमोभिर्मृळीकाय वरुणं मित्रमग्निं । अभिक्षदामर्यमणं सुशेवं त्रातॄन्देवान्त्सवितारं भगं च ॥१॥ सुज्योतिषः सूर्य दक्षपितॄननागास्त्वे सुमहो वीहि देवान् । द्विजन्मानो य ऋतसापः सत्याः स्वर्वतो यजता अग्निजिह्वाः ॥२॥ उत द्यावापृथिवी क्षत्रमुरु बृहद्रोदसी शरणं सुषुम्ने । महस्करथो वरिवो यथा नोऽस्मे क्षयाय धिषणे अनेहः ॥३॥ आ नो रुद्रस्य सूनवो नमंतामद्या हूतासो वसवोऽधृष्टाः । यदीमर्भे महति वा हितासो बाधे मरुतो अह्वाम देवान्

प्र पूषा ॥८॥ प्रथमऽभाजं यशसं वयःऽधां सुऽपाणिं देवं सुऽगभस्तिं ऋभ्वं होता यक्षत् यजतं पस्त्यानां अग्निः त्वष्टारं सुऽहवं विभाऽवा ॥९॥ भुवनस्य पितरं गीःऽभिः आभिः रुद्रं दिवा वर्धय रुद्रं अक्तौ बृहंतं ऋष्वं अजरं सुऽसुम्नं ऋधक् हुवेम कविना इषितासः ॥१०॥६॥ आ युवानः कवयः यज्ञियासः मरुतः गंत गृणतः वरस्यां अचित्रं चित् हि जिन्वथ वृधंतः इत्था नक्षंतः नरः अंगिरस्वत् ॥११॥ प्र वीराय प्र तवसे तुराय अज यूथाऽइव पशुऽरक्षिः अस्तं सः पिस्पृशति तन्वि श्रुतस्य स्तृऽभिः न नाकं वचनस्य विपः ॥१२॥ यः रजांसि विऽममे पार्थिवानि त्रिः चित् विष्णुः मनवे बाधिताय तस्य ते शर्मन् उपऽदद्यमाने राया मदेम तन्वा तना च ॥१३॥ तत् नः अहिः बुध्न्यः अत्ऽभिः अर्कैः तत् पर्वतः तत् सविता चनः धात् तत् ओषधीभिः अभि रातिऽसाचः भगः पुरंऽधिः जिन्वतु प्र राये ॥१४॥ नु नः रयिं रथ्यं चर्षणिऽप्रां पुरुऽवीरं महः ऋतस्य गोपां क्षयं दात अजरं येन जनान् स्पृधः अदेवीः अभि च क्रमाम विशः आऽदेवीः अभि अश्नवाम ॥१५॥७॥४॥

---

॥५०॥ हुवे वः देवीं अदितिं नमःऽभिः मृळीकाय वरुणं मित्रं अग्निं अभिऽक्षदां अर्यमणं सुऽशेवं त्रातॄन् देवान् सवितारं भगं च ॥१॥ सुऽज्योतिषः सूर्य दक्षऽपितॄन् अनागाःऽत्वे सुऽमहः वीहि देवान् द्विऽजन्मानः ये ऋतऽसापः सत्याः स्वःऽवंतः यजताः अग्निऽजिह्वाः ॥२॥ उत द्यावापृथिवी क्षत्रं उरु बृहत् रोदसी शरणं सुसुम्ने° महः करथः वरिवः यथा नः अस्मे क्षयाय धिषणे अनेहः ॥३॥ आ नः रुद्रस्य सूनवः नमंतां अद्य हूतासः वसवः अधृष्टाः यत् ईं अर्भे महति वा हितासः बाधे मरुतः अह्वाम देवान्

॥४॥ मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्धयज्वा। श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजंते अध्वनि प्रविक्ते ॥५॥८॥ अभि त्यं वीरं गिर्वणसमर्चेंद्रं ब्रह्मणा जरितर्नवेन। श्रवदिद्ध-वमुप च स्तवानो रासद्वाजाँ उप महो गृणानः ॥६॥ ओमा-नमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः। यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः ॥७॥ आ नो देवः सविता त्रायमाणो हिरण्यपाणिर्यजतो जंग-म्यात्। यो दत्रवाँ उषसो न प्रतीकं व्यूर्णुते दाशुषे वार्याणि ॥८॥ उत त्वं सूनो सहसो नो अद्या देवाँ अस्मिन्नध्वरे ववृत्याः। स्यामहं ते सदमिद्राती तव स्यामग्नेऽवसा सुवीरः ॥९॥ उत त्या मे हवमा जग्म्यातं नासत्या धीभिर्युवमंग विप्रा। अत्रिं न महस्तमसोऽमुमुक्तं तूर्वतं नरा दुरितादभीके ॥१०॥९॥ ते नो रायो द्युमतो वाजवतो दातारो भूत नृवतः पुरुक्षोः। दशस्यंतो दिव्याः पार्थिवासो गोजाता अप्या मृळता च देवाः ॥११॥ ते नो रुद्रः सरस्वती सजोषा मीळ्हुष्मंतो विष्णुर्मृळंतु वायुः। ऋभुक्षा वाजो दैव्यो विधाता पर्जन्यावाता पिप्यतामिषं नः ॥१२॥ उत स्य देवः सविता भगो नोऽपां नपादवतु दानु प-प्रिः। त्वष्टा देवेभिर्जनिभिः सजोषा द्यौर्देवेभिः पृथिवी समुद्रैः ॥१३॥ उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानाः स्तुता मंत्राः कविशस्ता अवंतु ॥१४॥ एवा नपातो मम तस्य धीभिर्भरद्वाजा अभ्यर्चंत्यर्कैः। ग्ना हुतासो वसवोऽधृष्टा विश्वे स्तुतासो भूता यजत्राः ॥१५॥१०॥

---

॥५१॥ १–१६ ऋजिश्वा॥ विश्वे देवाः॥ १–१२ त्रिष्टुप्। १३–१५ उष्णिक्। १६ अनुष्टुप्॥

॥ ५१ ॥ उदु त्यच्चक्षुर्महि मित्रयोराँ एति प्रियं वरुण-

॥४॥ मिम्यक्ष येषु रोदसी नु देवी सिसक्ति पूषा अभ्यर्धऽयज्वा श्रुत्वा हवं मरुतः यत् ह याथ भूम रेजंते अध्वनि प्रऽविक्ते ॥५॥८॥ अभि त्यं वीरं गिर्वणसं अर्च इंद्रं ब्रह्मणा जरितः नवेन श्रवत् इत् हवं उप च स्तवानः रासत् वाजान् उप महः गृणानः ॥६॥ ओमानं आपः मानुषीः अमृक्तं धात तोकाय तनयाय शं योः यूयं हि स्थ भिषजः मातृऽतमाः विश्वस्य स्थातुः जगतः जनित्रीः ॥७॥ आ नः देवः सविता त्रायमाणः हिरण्यऽपाणिः यजतः जगम्यात् यः दत्रऽवान् उषसः न प्रतीकं विऽऊर्णुते दाशुषे वार्याणि ॥८॥ उत त्वं सूनो सहसः नः अद्य आ देवान् अस्मिन् अध्वरे ववृत्याः स्यां अहं ते सदं इत् रातौ तव स्यां अग्ने अवसा सुऽवीरः ॥९॥ उत त्या मे हवं आ जग्म्यातं नासत्या धीभिः युवं अंग विप्रा अत्रिं न महः तमसः अमुमुक्तं तूर्वतं नरा दुःऽइतात् अभीके ॥१०॥९॥ ते नः रायः द्युऽमतः वाजऽवतः दातारः भूत नृऽवतः पुरुऽक्षोः दशस्यंतः दिव्याः पार्थिवासः गोऽजाताः अप्याः मृळत च देवाः ॥११॥ ते नः रुद्रः सरस्वती सऽजोषाः मीळ्हुष्मंतः विष्णुः मृळंतु वायुः ऋभुक्षाः वाजः दैव्यः विऽधाता पर्जन्यावाता पिप्यतां इषं नः ॥१२॥ उत स्यः देवः सविता भगः नः अपां नपात् अवतु दानु पप्रिः त्वष्टा देवेभिः जनिऽभिः सऽजोषाः द्यौः देवेभिः पृथिवी समुद्रैः ॥१३॥ उत नः अहिः बुध्न्यः शृणोतु अजः एकऽपात् पृथिवी समुद्रः विश्वे देवाः ऋतऽवृधः हुवानाः स्तुताः मंत्राः कविऽशस्ताः अवंतु ॥१४॥ एव नपातः मम तस्य धीभिः भरत्ऽवाजाः अभि अर्चंति अर्कैः ग्नाः हुतासः वसवः अधृष्टाः विश्वे स्तुतासः भूत यजत्राः ॥ १५ ॥ १० ॥

---

॥५१॥ उत् ऊं त्यत् चक्षुः महि मित्रयोः आ एति प्रियं वरुण-

योरदब्धं। ऋतस्य शुचि दर्शतमनीकं रुक्मो न दिव उदिता व्यद्यौत् ॥१॥ वेद यस्त्रीणि विदथान्येषां देवानां जन्म सनुतरा च विप्रः। ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूरो अर्य एवान् ॥२॥ स्तुष उ वो मह ऋतस्य गोपानदितिं मित्रं वरुणं सुजातान्। अर्यमणं भगमदब्धधीतीनच्छा वोचे सधन्यः पावकान् ॥३॥ रिशादसः सत्पतीँरदब्धान्महो राज्ञः सुवसनस्य दातॄन्। यूनः सुक्षत्रान्क्षयतो दिवो नॄनादित्यान्याम्यदितिं दुवोयु ॥४॥ द्यौ३ष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृळता नः। विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यंत ॥५॥११॥ मा नो वृकाय वृक्ये समस्मा अघायते रीरधता यजत्राः। यूयं हि ष्ठा रथ्यो नस्तनूनां यूयं दक्षस्य वचसो बभूव ॥६॥ मा व एनो अन्यकृतं भुजेम मा तत्कर्म वसवो यच्चयध्वे। विश्वस्य हि क्षयथ विश्वदेवाः स्वयं रिपुस्तन्वं रीरिषीष्ट ॥७॥ नम इदुग्रं नम आ विवासे नमो दाधार पृथिवीमुत द्याम्। नमो देवेभ्यो नम ईश एषां कृतं चिदेनो नमसा विवासे ॥८॥ ऋतस्य वो रथ्यः पूतदक्षानृतस्य पस्त्यसदो अदब्धान्। ताँ आ नमोभिरुरुचक्षसो नॄन्विश्वान्व आ नमे महो यजत्राः ॥९॥ ते हि श्रेष्ठवर्चसस्त उ नस्तिरो विश्वानि दुरिता नयंति। सुक्षत्रासो वरुणो मित्रो अग्निर्ऋतधीतयो वक्मराजसत्याः ॥१०॥१२॥ ते न इंद्रः पृथिवी क्षाम वर्धन्पूषा भगो अदितिः पंच जनाः। सुशर्माणः स्ववसः सुनीथा भवंतु नः सुत्रात्रासः सुगोपाः ॥११॥ नू सद्मानं दिव्यं नंशि देवा भारद्वाजः सुमतिं याति होता। आसानेभिर्यजमानो मियेधैर्देवानां जन्म वसूयुर्ववंद ॥१२॥ अप त्यं वृजिनं रिपुं स्तेन-

योः अदब्धं ऋतस्य शुचि दर्शतं अनीकं रुक्मः न दिवः उत्ऽइता वि अद्यौत् ॥१॥ वेद यः त्रीणि विदथानि एषां देवानां जन्म सनुतः आ च विप्रः ऋजु मर्तेषु वृजिना च पश्यन् अभि चष्टे सूरः अर्यः एवान् ॥२॥ स्तुषे ऊं वः महः ऋतस्य गोपान् अदितिं मित्रं वरुणं सुऽजातान् अर्यमणं भगं अदब्धऽधीतीन् अच्छ वोचे सऽधन्यः पावकान् ॥३॥ रिशादसः सत्ऽपतीन् अदब्धान् महः राज्ञः सुऽवसनस्य दातॄन् यूनः सुऽक्षत्रान् क्षयतः दिवः नॄन् आदित्यान् यामि अदितिं दुवःऽयु ॥४॥ द्यौः पितः पृथिवि मातः अध्रुक् अग्ने भ्रातः वसवः मृळत नः विश्वे आदित्याः अदिते सऽजोषाः अस्मभ्यं शर्म बहुलं वि यंत ॥५॥११॥ मा नः वृकाय वृक्ये समस्मै अघऽयते रीरधत यजत्राः यूयं हि स्थ रथ्यः नः तनूनां यूयं दक्षस्य वचसः बभूव ॥६॥ मा वः एनः अन्यऽकृतं भुजेम मा तत् कर्म वसवः यत् चयध्वे विश्वस्य हि क्षयथ विश्वऽदेवाः स्वयं रिपुः तन्वं रिरिषीष्ट ॥७॥ नमः इत् उग्रं नमः आ विवासे नमः दाधार पृथिवीं उत द्यां नमः देवेभ्यः नमः ईशे एषां कृतं चित् एनः नमसा आ विवासे ॥८॥ ऋतस्य वः रथ्यः पूतऽदक्षान् ऋतस्य पस्त्यऽसदः अदब्धान् तान् आ नमःऽभिः उरुऽचक्षसः नॄन् विश्वान् वः आ नमे महः यजत्राः ॥९॥ ते हि श्रेष्ठऽवर्चसः ते ऊं नः तिरः विश्वानि दुःऽइता नयंति सुऽक्षत्रासः वरुणः मित्रः अग्निः ऋतऽधीतयः वक्मराजऽसत्याः ॥१०॥१२॥ ते नः इंद्रः पृथिवी क्षाम वर्धन् पूषा भगः अदितिः पंच जनाः सुऽशर्माणः सुऽअवसः सुऽनीथाः भवंतु नः सुऽत्रात्रासः सुऽगोपाः ॥११॥ नु सद्मानं दिव्यं नंशि देवाः भारत्ऽवाजः सुऽमतिं याति होता आसानेभिः यजमानः मियेधैः देवानां जन्म वसुऽयुः ववंद ॥१२॥ अप त्यं वृजिनं रिपुं स्तेनं

मर्त्ये दुराध्यं। द्विष्टमस्य सत्पते कृधी सुगं ॥१३॥ ग्रावाणः सोम नो हि कं सखित्वनाय वावशुः। जही न्य१त्रिणं पणिं वृको हि षः ॥१४॥ यूयं हि ष्ठा सुदानव इंद्रज्येष्ठा अभिद्यवः। कर्ता नो अध्वन्ना सुगं गोपा अमा ॥१५॥ अपि पंथामगन्महि स्वस्तिगामनेहसं। येन विश्वाः परि द्विषो वृणक्ति विंदते वसु ॥१६॥१३॥

---

॥ ५२ ॥ १-१७ ऋजिश्वा ॥ विश्वे देवाः ॥ १-६. १३. १५-१७ त्रिष्टुप्। ७-१२ गायत्री। १४ जगती ॥

॥५२॥ न तद्दिवा न पृथिव्यानु मन्ये न यज्ञेन नोत शमीभिराभिः। उब्जंतु तं सुभ्व१ः पर्वतासो नि हीयतामतियाजस्य यष्टा ॥१॥ अति वा यो मरुतो मन्यते नो ब्रह्म वा यः क्रियमाणं निनित्सात्। तपूंषि तस्मै वृजिनानि संतु ब्रह्मद्विषमभि तं शोचतु द्यौः ॥२॥ किमंग त्वा ब्रह्मणः सोम गोपां किमंग त्वाहुरभिशस्तिपां नः। किमंग नः पश्यसि निद्यमानान्ब्रह्मद्विषे तपुषिं हेतिमस्य ॥३॥ अवंतु मामुषसो जायमाना अवंतु मा सिंधवः पिन्वमानाः। अवंतु मा पर्वतासो ध्रुवासोऽवंतु मा पितरो देवहूतौ ॥४॥ विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरंतं। तथा करद्वसुपतिर्वसूनां देवाँ ओहानोऽवसागमिष्ठः ॥५॥१४॥ इंद्रो नेदिष्ठमवसागमिष्ठः सरस्वती सिंधुभिः पिन्वमाना। पर्जन्यो न ओषधीभिर्मयोभुरग्निः सुशंसः सुहवः पितेव ॥६॥ विश्वे देवास आ गत शृणुता म इमं हवं। एदं बर्हिर्नि षीदत ॥७॥ यो वो देवा घृतस्नुना हव्येन प्रतिभूषति। तं विश्व उप गच्छथ ॥८॥ उप नः सूनवो गिरः शृण्वंत्वमृतस्य ये। सुमृळीका भवंतु नः ॥९॥ विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः। जुषंतां युज्यं पयः ॥१०॥१५॥ स्तो-

अपे दुःऽआध्यं दविष्ठं अस्य सत्ऽपते कृधि सुऽगं ॥१३॥ ग्रावाणः सोम नः हि कं सखिऽत्वनाय वावशुः जहि नि अत्रिणं पणिं वृकः हि सः ॥१४॥ यूयं हि स्थ सुऽदानवः इंद्रऽज्येष्ठाः अभिऽद्यवः कर्त नः अध्वन् आ सुऽगं गोपाः अमा ॥१५॥ अपि पंथां अगन्महि स्वस्तिऽगां अनेहसं येन विश्वाः परि द्विषः वृणक्ति विंदते वसु ॥ १६ ॥ १३ ॥

---

॥५२॥ न तत् दिवा न पृथिव्या अनु मन्ये न यज्ञेन न उत शमीभिः आभिः उब्जंतु तं सुऽभ्वः पर्वतासः नि हीयतां अतिऽयाजस्य यष्टा ॥१॥ अति वा यः मरुतः मन्यते नः ब्रह्म वा यः क्रियमाणं निनित्सात् तपूंषि तस्मै वृजिनानि संतु ब्रह्मऽद्विषं अभि तं शोचतु द्यौः ॥२॥ किं अंग त्वा ब्रह्मणः सोम गोपां किं अंग त्वा आहुः अभिशस्तिऽपां नः किं अंग नः पश्यसि निद्यमानान् ब्रह्मऽद्विषे तपुषिं हेतिं अस्य ॥३॥ अवंतु मां उषसः जायमानाः अवंतु मा सिंधवः पिन्वमानाः अवंतु मा पर्वतासः ध्रुवासः अवंतु मा पितरः देवऽहूतौ ॥४॥ विश्वऽदानीं सुऽमनसः स्याम पश्येम नु सूर्यं उत्ऽचरंतं तथा करत् वसुऽपतिः वसूनां देवान् ओहानः अवसा आऽगमिष्ठः ॥५॥१४॥ इंद्रः नेदिष्ठं अवसा आऽगमिष्ठः सरस्वती सिंधुऽभिः पिन्वमाना पर्जन्यः नः ओषधीभिः मयःऽभुः अग्निः सुऽशंसः सुऽहवः पिताऽइव ॥६॥ विश्वे देवासः आ गत शृणुत मे इमं हवं आ इदं बर्हिः नि सीदत ॥७॥ यः वः देवाः घृतऽस्नुना हव्येन प्रतिऽभूषति तं विश्वे उप गच्छथ ॥८॥ उप नः सूनवः गिरः शृण्वंतु अमृतस्य ये सुऽमृळीकाः भवंतु नः ॥९॥ विश्वे देवाः ऋतऽवृधः ऋतुऽभिः हवनऽश्रुतः जुषंतां युज्यं पयः ॥१०॥१५॥ स्तो-

चमिंद्रो मरुद्गणस्त्वष्टृमान्मित्रो अर्यमा। इमा हव्या जुषंत नः ॥११॥ इमं नो अग्ने अध्वरं होतर्वयुनशो यज। चिकित्वान्दैव्यं जनं ॥१२॥ विश्वे देवाः शृणुतेमं हवं मे ये अंतरिक्षे य उप द्यवि ष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वं ॥१३॥ विश्वे देवा मम शृण्वंतु यज्ञिया उभे रोदसी अपां नपाच्च मन्म। मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अंतमा मदेम ॥१४॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे। ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यंतु देवाः ॥१५॥ अग्नीपर्जन्याववतं धियं मेऽस्मिन्हवे सुहवा सुष्टुतिं नः। इळामन्यो जनयद्गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे ॥१६॥ स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा नमसा विवासे। अस्मिन्नो अद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वं ॥१७॥१६॥

---

॥५३॥ १—१० भरद्वाजो बार्हस्पत्यः ॥ पूषा ॥ १—७. ९. १० गायत्री। ८ अनुष्टुप् ॥

॥५३॥ वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्नयुज्महि ॥१॥ अभि नो नर्यं वसु वीरं प्रयतदक्षिणं। वामं गृहपतिं नय ॥२॥ अदित्सतं चिदाघृणे पूषन्दानाय चोदय। पणेश्चिद्वि म्रदा मनः ॥३॥ वि पथो वाजसातये चिनुहि वि मृधो जहि। साधंतामुग्र नो धियः ॥४॥ परि तृंधि पणीनामारया हृदया कवे। अथेमस्मभ्यं रंधय ॥५॥१७॥ वि पूषन्नारया तुद पणेरिच्छ हृदि प्रियं। अथेमस्मभ्यं रंधय ॥६॥ आ रिख किकिरा कृणु पणीनां हृदया कवे। अथेमस्मभ्यं रंधय ॥७॥ यां पूषन्ब्रह्मचोदनीमारां बिभर्ष्याघृणे। तया समस्य हृदयमा रिख किकिरा कृणु ॥८॥ या ते अष्ट्रा गोओपशाघृणे पशुसाधनी। तस्यास्ते

मं इंद्रः मरुत्ऽगणः त्वष्टृऽमान् मित्रः अर्यमा इमा हव्या जुषंत नः ॥११॥ इमं नः अग्ने अध्वरं होतः वयुनऽशः यज चिकित्वान् दैव्यं जनं ॥१२॥ विश्वे देवाः शृणुत इमं हवं मे ये अंतरिक्षे ये उप द्यवि स्थ ये अग्निऽजिह्वाः उत वा यजत्राः आऽसद्य अस्मिन् बर्हिषि मादयध्वं ॥१३॥ विश्वे देवाः मम शृण्वंतु यज्ञियाः उभे रोदसी अपां नपात् च मन्म मा वः वचांसि परिऽचक्ष्याणि वोचं सुम्नेषु इत् वः अंतमाः मदेम ॥१४॥ ये के च ज्मा महिनः अहिऽमायाः दिवः जज्ञिरे अपां सधऽस्थे ते अस्मभ्यं इषये विश्वं आयुः क्षपः उस्राः वरिवस्यंतु देवाः ॥१५॥ अग्नीपर्जन्यौ अवतं धियं मे अस्मिन् हवे सुऽहवा सुऽस्तुतिं नः इळां अन्यः जनयत् गर्भं अन्यः प्रजाऽवतीः इषः आ धत्तं अस्मे ॥१६॥ स्तीर्णे बर्हिषि संऽइधाने अग्नौ सुऽउक्तेन महा नमसा आ विवासे अस्मिन् नः अद्य विदथे यजत्राः विश्वे देवाः हविषि मादयध्वं ॥ १७ ॥ १६ ॥

---

॥५३॥ वयं ऊं इति त्वा पथः पते रथं न वाजऽसातये धिये पूषन् अयुज्महि ॥१॥ अभि नः नर्यं वसु वीरं प्रयतऽदक्षिणं वामं गृहऽपतिं नय ॥२॥ अदित्संतं चित् आघृणे पूषन् दानाय चोदय पणेः चित् वि म्रद मनः ॥३॥ वि पथः वाजऽसातये चिनुहि वि मृधः जहि साधंतां उग्र नः धियः ॥४॥ परि तृंधि पणीनां आरया हृदया कवे अथ ईं अस्मभ्यं रंधय ॥५॥१७॥ वि पूषन् आरया तुद पणेः इच्छ हृदि प्रियं अथ ईं अस्मभ्यं रंधय ॥६॥ आ रिख किकिरा कृणु पणीनां हृदया कवे अथ ईं अस्मभ्यं रंधय ॥७॥ यां पूषन् ब्रह्मऽचोदनीं आरां बिभर्षि आघृणे तया समस्य हृदयं आ रिख किकिरा कृणु ॥८॥ या ते अष्ट्रा गोऽओपशा आघृणे पशुऽसाधनी तस्याः ते

सुम्नमीमहे ॥ ९॥ उत नो गोषणिं धियमश्वसां वाजसामुत । नृवत्कृणुहि वीतये ॥ १० ॥ १८ ॥

॥ ५४ ॥ १-१० भरद्वाजो बार्हस्पत्यः ॥ पूषा ॥ गायत्री ॥

॥५४॥ सं पूषन्विदुषा नय यो अंजसानुशासति । य एवेदमिति ब्रवत् ॥१॥ समु पूष्णा गमेमहि यो गृहाँ अभिशासति । इम एवेति च ब्रवत् ॥२॥ पूष्णश्चक्रं न रिष्यति न कोशोऽव पद्यते । नो अस्य व्यथते पविः ॥३॥ यो अस्मै हविषाविधन्न तं पूषापि मृष्यते । प्रथमो विंदते वसु ॥४॥ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥५॥१९॥ पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः । अस्माकं स्तुवतामुत ॥६॥ माकिर्नेशन्माकीं रिषन्माकीं सं शारि केवटे । अथारिष्टाभिरा गहि ॥७॥ शृण्वंतं पूषणं वयमिर्यमनष्टवेदसं । ईशानं राय ईमहे ॥८॥ पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥९॥ परि पूषा परस्ताद्धस्तं दधातु दक्षिणं । पुनर्नो नष्टमाजतु ॥ १० ॥ २० ॥

॥ ५५ ॥ १-६ भरद्वाजो बार्हस्पत्यः ॥ पूषा ॥ गायत्री ॥

॥५५॥ एहि वां विमुचो नपादाघृणे सं सचावहै । रथीर्ऋतस्य नो भव ॥१॥ रथीतमं कपर्दिनमीशानं राधसो महः । रायः सखायमीमहे ॥ २ ॥ रायो धारास्याघृणे वसो राशिरजाश्व । धीवतोधीवतः सखा ॥३॥ पूषणं न्व१जाश्वमुप स्तोषाम वाजिनं । स्वसुर्यो जार उच्यते ॥४॥ मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेंद्रस्य सखा मम ॥ ५ ॥ आजासः पूषणं रथे निशृंभास्ते जनश्रियं । देवं वहंतु बिभ्रतः ॥ ६ ॥ २१ ॥

॥ ५६ ॥ १-६ भरद्वाजो बार्हस्पत्यः ॥ पूषा ॥ १-५ गायत्री । ६ अनुष्टुप् ॥

॥५६॥ य एनमादिदेशति करंभादिति पूषणं । न तेन देव

सुम्नं ईमहे ॥ ९ ॥ उत नः गोऽसनिं धियं अश्वऽसां वाजऽसां उत नृऽवत् कृणुहि वीतये ॥ १० ॥ १८ ॥

---

॥ ५४ ॥ सं पूषन् विदुषा नय यः अंजसा अनुऽशासति यः एव इदं इति ब्रवत् ॥ १ ॥ सं ऊं इति पूष्णा गमेमहि यः गृहान् अभिऽशासति इमे एव इति च ब्रवत् ॥ २ ॥ पूष्णः चक्रं न रिष्यति न कोशः अव पद्यते नो इति अस्य व्यथते पविः ॥ ३ ॥ यः अस्मै हविषा अविधत् न तं पूषा अपि मृष्यते प्रथमः विंदते वसु ॥ ४ ॥ पूषा गाः अनु एतु नः पूषा रक्षतु अर्वतः पूषा वाजं सनोतु नः ॥ ५ ॥ १९ ॥ पूषन् अनु प्र गाः इहि यजमानस्य सुन्वतः अस्माकं स्तुवतां उत ॥ ६ ॥ माकिः नेशत् माकीं रिषत् माकीं सं शारि केवटे अथ अरिष्टाभिः आ गहि ॥ ७ ॥ शृण्वंतं पूषणं वयं इर्यं अनष्टऽवेदसं ईशानं रायः ईमहे ॥ ८ ॥ पूषन् तव व्रते वयं न रिष्येम कदा चन स्तोतारः ते इह स्मसि ॥ ९ ॥ परि पूषा परस्तात् हस्तं दधातु दक्षिणं पुनः नः नष्टं आ अजतु ॥ १० ॥ २० ॥

---

॥ ५५ ॥ आ इहि वां विऽमुचः नपात् आघृणे सं सचावहै रथीः ऋतस्य नः भव ॥ १ ॥ रथिऽतमं कपर्दिनं ईशानं राधसः महः रायः सखायं ईमहे ॥ २ ॥ रायः धारा असि आघृणे वसोः राशिः अजऽअश्व धीवतःऽधीवतः सखा ॥ ३ ॥ पूषणं नु अजऽअश्वं उप स्तोषाम वाजिनं स्वसुः यः जारः उच्यते ॥ ४ ॥ मातुः दिधिषुं अब्रवं स्वसुः जारः शृणोतु नः भ्राता इंद्रस्य सखा मम ॥ ५ ॥ आ अजासः पूषणं रथे निऽशृंभाः ते जनऽश्रियं देवं वहंतु बिभ्रतः ॥ ६ ॥ २१ ॥

---

॥ ५६ ॥ यः एनं आऽदिदेशति करंभऽअत् इति पूषणं न तेन देवः

आदिशे ॥१॥ उत घा स रथीतमः सख्या सत्पतिर्युजा । इंद्रो वृत्राणि जिघ्नते ॥२॥ उतादः परुषे गवि सूरश्चक्रं हिरण्ययं । न्यैरयद्रथीतमः ॥ ३ ॥ यदद्य त्वा पुरुष्टुत ब्रवाम दस्र मंतुमः । तत्सु नो मन्म साधय ॥४॥ इमं च नो गवेषणं सातये सीषधो गणं । आरात्पूषन्नसि श्रुतः ॥५॥ आ ते स्वस्तिमीमह आरेअघामुपावसुं । अद्या च सर्वतातये श्वश्च सर्वतातये ॥ ६ ॥ २२ ॥

॥ ५७ ॥ १–६ भरद्वाजो बार्हस्पत्यः ॥ इंद्रापूषणौ ॥ गायत्री ॥

॥५७॥ इंद्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥१॥ सोममन्य उपासदत्पातवे चम्वोः सुतं । करंभमन्य इच्छति ॥२॥ अजा अन्यस्य वह्नयो हरी अन्यस्य संभृता । ताभ्यां वृत्राणि जिघ्नते ॥३॥ यदिंद्रो अनयद्रितो महीरपो वृषंतमः । तत्र पूषाभवत्सचा ॥४॥ तां पूष्णः सुमतिं वयं वृक्षस्य प्र वयामिव । इंद्रस्य चा रभामहे ॥५॥ उत्पूषणं युवामहेऽभीशूँरिव सारथिः । मह्या इंद्रं स्वस्तये ॥ ६ ॥ २३ ॥

॥ ५८ १–४ भरद्वाजो बार्हस्पत्यः ॥ पूषा ॥ १. ३. ४ त्रिष्टुप् । २ जगती ॥

॥५८॥ शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥१॥ अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः । अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते ॥२॥ यास्ते पूषन्नावो अंतः समुद्रे हिरण्ययीरंतरिक्षे चरंति । ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव इच्छमानः ॥ ३ ॥ पूषा सुबंधुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः । यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वंचं ॥ ४ ॥ २४ ॥

आऽदिशे ॥१॥ उत घ सः रथिऽतमः सख्या सत्ऽपतिः युजा इंद्रः वृत्राणि जिघ्नते ॥२॥ उत अदः परुषे गवि सूरः चक्रं हिरण्ययं नि ऐरयत् रथिऽतमः ॥३॥ यत् अद्य त्वा पुरुऽस्तुत ब्रवाम दस्र मंतुऽमः तत् सु नः मन्म साधय ॥४॥ इमं च नः गोऽएषणं सातये सीसधः गणं आरात् पूषन् असि श्रुतः ॥५॥ आ ते स्वस्तिं ईमहे आरेऽअघां उपऽवसुं अद्य च सर्वऽतातये श्वः च सर्वऽतातये ॥ ६ ॥ २२ ॥

---

॥५७॥ इंद्रा नु पूषणा वयं सख्याय स्वस्तये हुवेम वाजऽसातये ॥१॥ सोमं अन्यः उप असदत् पातवे चम्वोः सुतं करंभं अन्यः इच्छति ॥२॥ अजाः अन्यस्य वह्नयः हरी॰ अन्यस्य संऽभृता ताभ्यां वृत्राणि जिघ्नते ॥३॥ यत् इंद्रः अनयत् रितः महीः अपः वृषन्ऽतमः तत्र पूषा अभवत् सचा ॥४॥ तां पूष्णः सुऽमतिं वयं वृक्षस्य प्र वयांऽइव इंद्रस्य च आ रभामहे ॥५॥ उत् पूषणं युवामहे अभीशून्ऽइव सारथिः मह्यै इंद्रं स्वस्तये ॥ ६ ॥ २३ ॥

---

॥५८॥ शुक्रं ते अन्यत् यजतं ते अन्यत् विषुरूपे॰ अहनी॰ द्यौःऽइव असि विश्वाः हि मायाः अवसि स्वधाऽवः भद्रा ते पूषन् इह रातिः अस्तु ॥१॥ अजऽअश्वः पशुऽपाः वाजऽपस्त्यः धियंऽजिन्वः भुवने विश्वे अर्पितः अष्ट्रां पूषा शिथिरां उत्ऽवरीवृजत् संऽचक्षाणः भुवना देवः ईयते ॥२॥ याः ते पूषन् नावः अंतः॰ समुद्रे हिरण्ययीः अंतरिक्षे चरंति ताभिः यासि दूत्यां सूर्यस्य कामेन कृत श्रवः इच्छमानः ॥३॥ पूषा सुऽबंधुः दिवः आ पृथिव्याः इळः पतिः मघऽवा दस्मऽवर्चाः यं देवासः अददुः सूर्यायै कामेन कृतं तवसं सुऽअंचं ॥ ४ ॥ २४ ॥

॥ ५९ ॥ १–१० भरद्वाजो बार्हस्पत्यः ॥ इंद्राग्नी ॥ १–६ बृहती । ७–१० अनुष्टुप् ॥

॥५९॥ प्र नु वोचा सुतेषु वां वीर्या३ यानि चक्रथुः । हतासो वां पितरो देवशत्रव इंद्राग्नी जीवथो युवं ॥१॥ बळित्था महिमा वामिंद्राग्नी पनिष्ठ आ । समानो वां जनिता भ्रातरा युवं यमाविहेहमातरा ॥२॥ ओकिवांसा सुते सचाँ अश्वा सप्ती इवादने । इंद्रान्व१ग्नी अवसेह वज्रिणा वयं देवा हवामहे ॥३॥ य इंद्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा । जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥४॥ इंद्राग्नी को अस्य वां देवौ मर्तश्चिकेतति । विषूचो अश्वान्युयुजान ईयत एकः समान आ रथे ॥५॥ २५ ॥ इंद्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः । हित्वी शिरो जिह्वया वावदच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥६॥ इंद्राग्नी आ हि तन्वते नरो धन्वानि बाह्वोः । मा नो अस्मिन्महाधने परा वर्क्तं गविष्टिषु ॥७॥ इंद्राग्नी तपंति माघा अर्यो अरातयः । अप द्वेषांस्या कृतं युयुतं सूर्यादधि ॥८॥ इंद्राग्नी युवोरपि वसु दिव्यानि पार्थिवा । आ न इह प्र यच्छतं रयिं विश्वायुपोषसं ॥९॥ इंद्राग्नी उक्थवाहसा स्तोमेभिर्हवनश्रुता । विश्वाभिर्गीर्भिरा गतमस्य सोमस्य पीतये ॥१०॥ २६ ॥

---

॥ ६० ॥ १–१५ भरद्वाजो बार्हस्पत्यः ॥ इंद्राग्नी ॥ १–३. १३ त्रिष्टुप् । ४–१२ गायत्री । १४ बृहती । १५ अनुष्टुप् ॥

॥६०॥ श्नथद्वृत्रमुत सनोति वाजमिंद्रा यो अग्नी सहुरी सपर्यात् । इरज्यंता वसव्यस्य भूरेः सहस्तमा सहसा वाजयंता ॥१॥ ता योधिष्टमभि गा इंद्र नूनमपः स्वरुषसो अग्न ऊळ्हाः । दिशः स्वरुषस इंद्र चित्रा अपो गा अग्ने युवसे नियुत्वान् ॥२॥ आ वृत्रहणा वृत्रहभिः शुष्मैरिंद्र यातं नमोभिरग्ने अर्वाक् । युवं राधोभिरकवेभिरिंद्राग्ने अस्मे भवतमुत्तमेभिः ॥३॥ ता

॥५९॥ प्र नु वोच सुतेषु वां वीर्या यानि चक्रथुः हतासः वां पि-
तरः देवऽशत्रवः इंद्राग्नी जीवथः युवं ॥१॥ बट् इत्था महिमा वां
इंद्राग्नी पनिष्ठः आ समानः वां जनिता भ्रातरा युवं यमौ इहेह-
ऽमातरा ॥२॥ ओकिऽवांसा सुते सचा अश्वा सप्तीऽइव॰ आदने
इंद्रा नु अग्नी अवसा इह वज्रिणा वयं देवा हवामहे ॥३॥ यः
इंद्राग्नी सुतेषु वां स्तवत् तेषु ऋतऽवृधा जोषऽवाकं वदतः प-
ज्रऽहोषिणा न देवा भसथः चन ॥४॥ इंद्राग्नी कः अस्य वां देवौ
मर्तः चिकेतति विषूचः अश्वान् युयुजानः ईयते एकः समाने आ
रथे ॥५॥२५॥ इंद्राग्नी अपात् इयं पूर्वा आ अगात् पत्ऽवतीभ्यः
हित्वी शिरः जिह्वया वावदत् चरत् त्रिंशत् पदा नि अक्रमीत्
॥६॥ इंद्राग्नी आ हि तन्वते नरः धन्वानि बाह्वोः मा नः अस्मिन्
महाऽधने परा वर्क्तं गोऽइष्टिषु ॥७॥ इंद्राग्नी तपंति मा अघाः
अर्यः अरातयः अप द्वेषांसि आ कृतं युयुतं सूर्यात् अधि ॥८॥
इंद्राग्नी युवोः अधि वसु दिव्यानि पार्थिवा आ नः इह प्र यच्छतं
रयिं विश्वायुऽपोषसं ॥९॥ इंद्राग्नी उक्थऽवाहसा स्तोमेभिः ह-
वनऽश्रुता विश्वाभिः गीःऽभिः आ गतं अस्य सोमस्य पीतये
॥१०॥२६॥

---

॥६०॥ श्नथत् वृत्रं उत सनोति वाजं इंद्रा यः अग्नी सहुरी सप-
र्यात् इरज्यंता वसव्यस्य भूरेः सहःऽतमा सहसा वाजऽयंता ॥१॥
ता योधिष्टं अभि गाः इंद्र नूनं अपः स्वः उषसः अग्ने ऊळ्हाः दिशः
स्वः उषसः इंद्र चित्राः अपः गाः अग्ने युवसे नियुत्वान् ॥२॥ आ
वृत्रहना वृत्रहऽभिः शुष्मैः इंद्र यातं नमःऽभिः अग्ने अर्वाक् युवं
राधःऽभिः अकवेभिः इंद्र अग्ने अस्मे भवतं उत्ऽतमेभिः ॥३॥ ता

हुवे ययोरिदं पप्रे विश्वं पुरा कृतं। इंद्राग्नी न मर्धतः ॥४॥ उग्रा विघनिना मृध इंद्राग्नी हवामहे। ता नो मृळात ईदृशे ॥५॥२७॥ हतो वृत्राण्यार्या हतो दासानि सत्पती। हतो विश्वा अप द्विषः ॥ ६ ॥ इंद्राग्नी युवामिमे३ऽभि स्तोमा अनूषत। पिबतं शंभुवा सुतं ॥७॥ या वां संति पुरुस्पृहो नियुतो दाशुषे नरा। इंद्राग्नी ताभिरा गतं ॥८॥ ताभिरा गच्छतं नरोपेदं सवनं सुतं। इंद्राग्नी सोमपीतये ॥९॥ तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत्। कृष्णा कृणोति जिह्वया ॥१०॥२८॥ य इद्ध आविवासति सुम्नमिंद्रस्य मर्त्यः। द्युम्नाय सुतरा अपः ॥११॥ ता नो वाजवतीरिष आशून्पिपृतमर्वतः। इंद्रमग्निं च वोळ्हवे ॥१२॥ उभा वामिंद्राग्नी आहुवध्या उभा राधसः सह मादयध्यै। उभा दाताराविषां रयीणामुभा वाजस्य सातये हुवे वां ॥१३॥ आ नो गव्येभिरश्व्यैर्वसव्यै३रुप गच्छतं। सखायौ देवौ सख्याय शंभुवेंद्राग्नी ता हवामहे ॥१४॥ इंद्राग्नी शृणुतं हवं यजमानस्य सुन्वतः। वीतं हव्यान्या गतं पिबतं सोम्यं मधु ॥ १५ ॥ २९ ॥

---

॥ ६१ ॥ १-१४ भरद्वाजो बार्हस्पत्यः ॥ सरस्वती ॥ १-३. १३ जगती । ४-१२ गायत्री । १४ त्रिष्टुप् ॥

॥ ६१ ॥ इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे। या शश्वंतमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ १ ॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः। पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥२॥ सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः। उत क्षितिभ्योऽवनीरविंदो विषमेभ्यो अस्रवो वाजिनीवति ॥३॥ प्र णो देवी सर-

हुवे ययोः इदं पप्रे विश्वं पुरा कृतं इंद्राग्नी॰ न मर्धतः ॥४॥ उग्रा वि-
ऽघनिना मृधः इंद्राग्नी॰ हवामहे ता नः मृळातः ईदृशे ॥५॥२७॥
हतः वृत्राणि आर्या हतः दासानि सत्ऽपती॰ हतः विश्वाः अप
द्विषः ॥६॥ इंद्राग्नी॰ युवां इमे अभि स्तोमाः अनूषत पिबतं शं-
ऽभुवा सुतं ॥७॥ या वां संति पुरुऽस्पृहः निऽयुतः दाशुषे नरा
इंद्राग्नी॰ ताभिः आ गतं ॥८॥ ताभिः आ गच्छतं नरा उप इदं सवनं
सुतं इंद्राग्नी॰ सोमऽपीतये ॥९॥ तं ईळिष्व यः अर्चिषा वना वि-
श्वा परिऽस्वजत् कृष्णा कृणोति जिह्वया ॥१०॥२८॥ यः इद्धे आ-
ऽविवासति सुम्नं इंद्रस्य मर्त्यः द्युम्नाय सुऽतराः अपः ॥११॥ ता नः
वाजऽवतीः इषः आशून् पिपृतं अर्वतः इंद्रं अग्निं च वोळ्हवे
॥१२॥ उभा वां इंद्राग्नी॰ आऽहुवध्यै उभा राधसः सह मादयध्यै
उभा दातारौ इषां रयीणां उभा वाजस्य सातये हुवे वां ॥१३॥ आ
नः गव्येभिः अश्व्यैः वसव्यैः उप गच्छतं सखायौ देवौ सख्याय शं-
ऽभुवा इंद्राग्नी॰ ता हवामहे ॥१४॥ इंद्राग्नी॰ शृणुतं हवं यजमानस्य
सुन्वतः वीतं हव्यानि आ गतं पिबतं सोम्यं मधु ॥१५॥२९॥

---

॥६१॥ इयं अददात् रभसं ऋणऽच्युतं दिवःऽदासं वध्रिऽअ-
श्वाय दाशुषे या शश्वंतं आऽचखाद अवसं पणिं ता ते दात्राणि
तविषा सरस्वति ॥१॥ इयं शुष्मेभिः बिसखाःऽइव अरुजत् सानु
गिरीणां तविषेभिः ऊर्मिऽभिः पारावतऽघ्नीं अवसे सुवृक्तिऽभिः
सरस्वतीं आ विवासेम धीतिऽभिः ॥२॥ सरस्वति देवऽनिदः नि
बर्हय प्रऽजां विश्वस्य बृसयस्य मायिनः उत क्षितिऽभ्यः अवनीः
अविंदः विषं एभ्यः अस्रवः वाजिनीऽवति ॥३॥ प्र नः देवी सर-

स्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु ॥४॥ यस्त्वा देवि सरस्वत्युपब्रूते धने हिते। इंद्रं न वृत्रतूर्ये ॥५॥३०॥ त्वं देवि सरस्वत्यवा वाजेषु वाजिनि। रदा पूषेव नः सनिं ॥६॥ उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः। वृत्रघ्नी वष्टि सुष्टुतिं ॥७॥ यस्या अनंतो अह्रुतस्त्वेषश्चरिष्णुरर्णवः। अमश्चरति रोरुवत् ॥८॥ सा नो विश्वा अति द्विषः स्वसॄरन्या ऋतावरी। अतन्नहेव सूर्यः ॥९॥ उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा। सरस्वती स्तोम्या भूत् ॥१०॥३१॥ आपप्रुषी पार्थिवान्युरु रजो अंतरिक्षं। सरस्वती निदस्पातु ॥११॥ त्रिषधस्था सप्तधातुः पंच जाता वर्धयंती। वाजेवाजे हव्या भूत् ॥१२॥ प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा। रथ इव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥१३॥ सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक्। जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥१४॥३२॥८॥४॥५॥

---

॥ ६२ ॥ १-११ भरद्वाजो बार्हस्पत्यः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥६२॥ स्तुषे नरा दिवो अस्य प्रसंताश्विना हुवे जरमाणो अर्कैः। या सद्य उस्रा व्युषि ज्मो अंतान्युयूषतः पर्युरू वरांसि ॥१॥ ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः। पुरू वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान् ॥२॥ ता ह त्यद्वर्तिर्यदध्रमुग्रेत्था धियं ऊहथुः शश्वदश्वैः। मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य ॥३॥ ता नव्यसो जरमाणस्य मन्मोप भूषतो युयुजानसप्ती। शुभं पृक्षमिषमूर्जं वहंता होता यक्षत्प्रत्नो अध्रुग्यु-

स्वती वाजेभिः वाजिनीऽवती धीनां अविची अवतु ॥४॥ यः त्वा देवि सरस्वति उपऽब्रूते धने हिते इंद्रं न वृचऽतूर्ये ॥५॥३०॥ त्वं देवि सरस्वति अव वाजेषु वाजिनि रद पूषाऽइव नः सनिं ॥६॥ उत स्या नः सरस्वती घोरा हिरण्यऽवर्तनिः वृचऽघ्नी वष्टि सुऽस्तुतिं ॥७॥ यस्याः अनंतः अह्रुतः त्वेषः चरिष्णुः अर्णवः अमः चरति रोरुवत् ॥८॥ सा नः विश्वाः अति द्विषः स्वसॄः अन्याः ऋतऽवरी अतन् अहाऽइव सूर्यः ॥९॥ उत नः प्रिया प्रियासु सप्तऽस्वसा सुऽजुष्टा सरस्वती स्तोम्या भूत् ॥१०॥३१॥ आऽपप्रुषी पार्थिवानि उरु रजः अंतरिक्षं सरस्वती निदः पातु ॥११॥ चिऽसधस्था सप्तऽधातुः पंच जाता वर्धयंती वाजेऽवाजे हव्या भूत् ॥१२॥ प्र या महिम्ना महिना आसु चेकिते द्युम्नेभिः अन्याः अपसां अपःऽतमा रथःऽइव बृहती विऽभ्वने कृता उपऽस्तुत्या चिकितुषा सरस्वती ॥१३॥ सरस्वति अभि नः नेषि वस्यः मा अप स्फरीः पयसा मा नः आ धक् जुषस्व नः सख्या वेश्या च मा त्वत् क्षेत्राणि अरणानि गन्म ॥ १४ ॥ ३२ ॥ ८ ॥ ४ ॥ ५ ॥

---

॥६२॥ स्तुषे नरा दिवः अस्य प्रऽसंता अश्विना हुवे जरमाणः अर्कैः या सद्यः उस्रा विऽउषि ज्मः अंतान् युयूषतः परि उरु वरांसि ॥१॥ ता यज्ञं आ शुचिऽभिः चक्रमाणा रथस्य भानुं रुरुचुः रजःऽभिः पुरु वरांसि अमिता मिमाना अपः धन्वानि अति याथः अज्रान् ॥२॥ ता ह त्यत् वर्तिः यत् अरध्रं उग्रा इत्था धियः ऊहथुः शश्वत् अश्वैः मनःऽजवेभिः इषिरैः शयध्यै परि व्यथिः दाशुषः मर्त्यस्य ॥३॥ ता नव्यसः जरमाणस्य मन्म उप भूषतः युयुजानऽसप्ती शुभं पृक्षं इषं ऊर्जं वहंता होता यक्षत् प्रत्नः अध्रुक् यु-

वाना ॥४॥ ता वल्गू दस्रा पुरुशाकतमा प्रत्ना नव्यसा वचसा विवासे । या शंसते स्तुवते शंभविष्ठा बभूवतुर्गृणते चित्ररांती ॥५॥१॥ ता भुज्युं विभिरद्भ्यः समुद्रात्तुग्रस्य सूनुमूहथू रजोभिः । अरेणुभिर्योजनेभिर्भुजंता पतत्रिभिरर्णसो निरुपस्थात् ॥६॥ वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः । दशस्यंता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥७॥ यद्रोदसी प्रदिवो अस्ति भूमा हेळो देवानामुत मर्त्यत्रा । तदादित्या वसवो रुद्रियासो रक्षोयुजे तपुरघं दधात ॥८॥ य ईं राजानावृतुथा विदधद्रजसो मित्रो वरुणश्चिकेतत् । गंभीराय रक्षसे हेतिमस्य द्रोघाय चिद्वचस आनवाय ॥९॥ अंतरैश्चक्रैस्तनयाय वर्तिर्द्युमता यातं नृवता रथेन । सनुत्येन त्यजसा मर्त्यस्य वनुष्यतामपि शीर्षा ववृक्तं ॥१०॥ आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् । दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्तं गृणते चित्ररांती ॥११॥२॥

---

॥ ६३ ॥ १-११ भरद्वाजो बार्हस्पत्यः ॥ अश्विनौ ॥ १-१० त्रिष्टुप् । ११ एकपदा ॥

॥६३॥ क्व१त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् । आ यो अर्वाङ्नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥१॥ अरं मे गंतं हवनायास्मै गृणाना यथा पिबाथो अंधः । परि ह त्यद्वर्तिर्याथो रिषो न यत्परो नांतरस्तुतुर्यात् ॥२॥ अकारि वामंधसो वरीमन्नस्तारि बर्हिः सुप्रायणतमं । उत्तानहस्तो युवयुर्ववंदा वां नक्षंतो अद्रय आंजन् ॥३॥ ऊर्ध्वो वामग्निरध्वरेष्वस्थात्प्र रातिरेति जूर्णिनी घृताची । प्र होता गूर्तमना उराणोऽयुक्त यो नासत्या हवीमन् ॥४॥

घाना ॥४॥ ता वल्गू दस्रा पुरुशाकऽतमा प्रत्ना नव्यसा वचसा आ विवासे या शंसते स्तुवते शंऽभविष्ठा बभूवतुः गृणते चित्रऽराती° ॥५॥१॥ ता भुज्युं विऽभिः अत्ऽभ्यः समुद्रात् तुग्रस्य सूनुं ऊहथुः रजःऽभिः अरेणुऽभिः योजनेभिः भुजंता पतत्रिऽभिः अश्रीसः निः उपऽस्थात् ॥६॥ वि जयुषा रथ्या यातं अद्रिं श्रुतं हवं वृषणा वध्रिऽमत्याः दशस्यंता शयवे पिप्यथुः गां इति च्यवाना सुऽमतिं भुरण्यू ॥७॥ यत् रोदसी प्रऽदिवः अस्ति भूम हेळः देवानां उत मर्त्यऽत्रा तत् आदित्याः वसवः रुद्रियासः रक्षःऽयुजे तपुः अघं दधात ॥८॥ यः ईं राजानौ ऋतुऽथा विऽदधत् रजसः मित्रः वरुणः चिकेतत् गंभीराय रक्षसे हेतिं अस्य द्रोघाय चित् वचसे आनवाय ॥९॥ अंतरैः चक्रैः तनयाय वर्तिः द्युऽमता आ यातं नृऽवता रथेन सनुत्येन त्यजसा मर्त्यस्य वनुष्यतां अपि शीर्षा ववृक्तं ॥१०॥ आ परमाभिः उत मध्यमाभिः नियुत्ऽभिः यातं अवमाभिः अर्वाक् दृळ्हस्य चित् गोऽमतः वि व्रजस्य दुरः वर्तं गृणते चित्रऽराती° ॥ ११ ॥ २ ॥

---

॥६३॥ क्व त्या वल्गू पुरुऽहूता अद्य दूतः न स्तोमः अविदत् नमस्वान् आ यः अर्वाक् नासत्या ववर्त प्रेष्ठा हि असथः अस्य मन्मन् ॥१॥ अरं मे गंतं हवनाय अस्मै गृणाना यथा पिबाथः अंधः परि ह त्यत् वर्तिः याथः रिषः न यत् परः न अंतरः तुतुर्यात् ॥२॥ अकारि वां अंधसः वरीमन् अस्तारि बर्हिः सुप्रऽअयनतमं उत्तानऽहस्तः युवयुः ववंद आ वां नक्षंतः अद्रयः आंजन् ॥३॥ ऊर्ध्वः वां अग्निः अध्वरेषु अस्थात् प्र रातिः एति जूर्णिनी घृताची प्र होता गूर्तऽमनाः उराणः अयुक्त यः नासत्या हवीमन् ॥४॥

अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिं । प्र मायाभिर्मायिना भूतमत्र नरा नृतू जनिमन्यज्ञियानां ॥५॥३॥ युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः । प्र वां वयो वपुषेऽनु पप्तन्नक्षद्वाणी सुष्टुता धिष्ण्या वां ॥६॥ आ वां वयोऽश्वासो वहिष्ठा अभि प्रयो नासत्या वहंतु । प्र वां रथो मनोजवा असर्जीषः पृक्ष इषिधो अनु पूर्वीः ॥७॥ पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्रां । स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥८॥ उत म ऋज्रे पुरयस्य रघ्वी सुमीळ्हे शतं पेरुके च पक्वा । शांडो दाद्धिरणिनः स्मद्दिष्टीन्दश वशासो अभिषाच ऋष्वान् ॥९॥ सं वां शता नासत्या सहस्राश्वानां पुरुपंथा गिरे दात् । भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥१०॥ आ वां सुम्ने वरिमन्सूरिभिः ष्यां ॥११॥४॥

---

॥ ६४ ॥ १–६ भरद्वाजो बार्हस्पत्यः ॥ उषाः ॥ त्रिष्टुप् ॥

॥६४॥ उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशंतः । कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥१॥ भद्रा ददृक्ष उर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् । आविर्वक्षः कृणुषे शुंभमानोषो देवि रोचमाना महोभिः ॥२॥ वहंति सीमरुणासो रुशंतो गावः सुभगामुर्विया प्रथानां । अपेजते शूरो अस्तेव शत्रून्बाधते तमो अजिरो न वोळ्हा ॥३॥ सुगोत ते सुपथा पर्वतेष्ववाते अपस्तरसि स्वभानो । सा न आ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥४॥ सा वह योक्षभिरवातोषो वरं वहसि जोषमनु । त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना

अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुऽभुजा शतऽऊतिं प्र मा-
याभिः मायिना भूतं अत्र नरा नृतू जनिमन् यज्ञियानां ॥५॥३॥
युवं श्रीभिः दर्शताभिः आभिः शुभे पुष्टिं ऊहथुः सूर्यायाः प्र वां
वयः वपुषे अनु पप्तन् नक्षत् वाणी सुऽस्तुता धिष्ण्या वां ॥६॥
आ वां वयः अश्वासः वहिष्ठाः अभि प्रयः नासत्या वहन्तु प्र वां
रथः मनःऽजवाः असर्जि इषः पृक्षः इषिधे अनु पूर्वीः ॥७॥ पुरु हि
वां पुरुऽभुजा देष्णं धेनुं नः इषं पिन्वतं असक्रां स्तुतः च वां मा-
ध्वी सुऽस्तुतिः च रसाः च ये वां अनु रातिं अग्मन् ॥८॥ उत मे
ऋज्रे पुरयस्य रघ्वी सुऽमीळ्हे शतं पेरुके च पक्वा शांडः दात् हि-
रण्णिनः स्मत्ऽदिष्टीन् दश वशासः अभिऽसाचः ऋष्वान् ॥९॥ सं
वां शता नासत्या सहस्रा अश्वानां पुरुऽपंथाः गिरे दात् भरत्-
ऽवाजाय वीर नु गिरे दात् हता रक्षांसि पुरुऽदंससा स्युः० ॥१०॥
आ वां सुम्ने वरिमन् सूरिऽभिः स्यां ॥ ११ ॥ ४ ॥

---

॥६४॥ उत् ऊं श्रिये उषसः रोचमानाः अस्थुः अपां न ऊर्मयः
रुशन्तः कृणोति विश्वा सुऽपथा सुऽगानि अभूत् ऊं वस्वी दक्षि-
णा मघोनी ॥१॥ भद्रा ददृक्षे उर्विया वि भासि उत् ते शोचिः
भानवः द्यां अपप्तन् आविः वक्षः कृणुषे शुम्भमाना उषः देवि रो-
चमाना महःऽभिः ॥२॥ वहन्ति सीं अरुणासः रुशन्तः गावः सुऽभ-
गां उर्विया प्रथानां अप ईजते शूरः अस्ताऽइव शत्रून् बाधते त-
मः अजिरः न वोळ्हा ॥३॥ सुऽगा उत ते सुऽपथा पर्वतेषु अवाते
अपः तरसि स्वऽभानो० सा नः आ वह पृथुऽयामन् ऋष्वे रयिं
दिवः दुहितः इषयध्यै ॥४॥ सा आ वह या उक्षऽभिः अवाता उषः
वरं वहसि जोषं अनु त्वं दिवः दुहितः या ह देवी पूर्वऽहूतौ मंहना

दृशता भूः ॥५॥ उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो
व्युष्टौ । अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय
॥६॥५॥

---

॥ ६५ ॥ १–६ भरद्वाजो बार्हस्पत्यः ॥ उषाः ॥ त्रिष्टुप् ॥

॥ ६५ ॥ एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छंती
मानुषीरजीगः । या भानुना रुशता राम्यास्वज्ञायि तिरस्त-
मसश्चिदक्तून् ॥१॥ वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भांत्युषसश्चं-
द्ररथाः । अग्रं यज्ञस्य बृहतो नयंतीर्वि ता बाधंते तम
ऊर्म्यायाः ॥२॥ श्रवो वाजमिषमूर्जं वहंतीर्नि दाशुष उषसो
मर्त्याय । मघोनीर्वीरवत्पत्यमाना अवो धात विधते रत्नमद्य
॥३॥ इदा हि वो विधते रत्नमस्तीदा वीराय दाशुष उषासः ।
इदा विप्राय जरते यदुक्था नि ष्म मावते वहथा पुरा चित्
॥४॥ इदा हि त उषो अद्रिसानो गोत्रा गवामंगिरसो गृणं-
ति । व्य१र्केण बिभिदुर्ब्रह्मणा च सत्या नृणामभवद्देवहूतिः ॥५॥
उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद्विधते मघोनि । सु-
वीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः ॥६॥६॥

---

॥ ६६ ॥ १–११ भरद्वाजो बार्हस्पत्यः ॥ मरुतः ॥ त्रिष्टुप् ॥

॥ ६६ ॥ वपुर्नु तच्चिकितुषे चिदस्तु समानं नाम धेनु प-
त्यमानं । मर्तेष्वन्यद्दोहसे पीपाय सकृच्छुक्रं दुदुहे पृश्निरूधः
॥१॥ ये अग्नयो न शोशुचन्निधाना द्विर्यत्त्रिर्मरुतो वावृधंत ।
अरेणवो हिरण्ययास एषां साकं नृम्णैः पौंस्येभिश्च भूवन्
॥२॥ रुद्रस्य ये मीळ्हुषः संति पुत्रा यांश्चो नु दाधृविर्भरध्यै ।
विदे हि माता महो मही षा सेत्पृश्निः सुभ्वे३ गर्भमाधात् ॥३॥
न य ईषंते जनुषोऽया न्वं१तः संतोऽवद्यानि पुनानाः । नि-

दृशता भूः ॥५॥ उत ते वयः चित् वसतेः अपप्तन् नरः च ये पितु-
ऽभाजः विऽउष्टौ अमा सते वहसि भूरि वामं उषः देवि दाशुषे
मर्त्याय ॥ ६ ॥ ५ ॥

---

॥६५॥ एषा स्या नः दुहिता दिवःऽजाः क्षितीः उच्छंती मानु-
षीः अजीगः॰ या भानुना रुशता राम्यासु अज्ञायि तिरः तमसः
चित् अक्तून् ॥१॥ वि तत् ययुः अरुणयुक्ऽभिः अश्वैः चित्रं भांति
उषसः चंद्रऽरथाः अग्रं यज्ञस्य बृहतः नयंतीः वि ताः बाधंते तमः
ऊर्म्यायाः ॥२॥ श्रवः वाजं इषं ऊर्जं वहंतीः नि दाशुषे उषसः म-
र्त्याय मघोनीः वीरऽवत् पत्यमानाः अवः धात विधते रत्नं अद्य
॥३॥ इदा हि वः विधते रत्नं अस्ति इदा वीराय दाशुषे उषसः इदा
विप्राय जरते यत् उक्था नि स्म माऽवते वहथ पुरा चित् ॥४॥
इदा हि ते उषः अद्रिऽसानो॰ गोत्रा गवां अंगिरसः गृणंति वि
अर्केण बिभिदुः ब्रह्मणा च सत्या नृणां अभवत् देवऽहूतिः ॥५॥
उच्छ दिवः दुहितः॰ प्रत्नऽवत् नः भरद्वाजऽवत् विधते मघोनि
सुऽवीरं रयिं गृणते रिरीहि उरुऽगायं अधि धेहि श्रवः नः ॥६॥६॥

---

॥६६॥ वपुः नु तत् चिकितुषे चित् अस्तु समानं नाम धेनु प-
त्यमानं मर्तेषु अन्यत् दोहसे पीपाय सकृत् शुक्रं दुदुहे पृश्निः ऊधः
॥१॥ ये अग्नयः न शोशुचन् इधानाः द्विः यत् त्रिः मरुतः ववृधंत
अरेणवः हिरण्ययासः एषां साकं नृम्णैः पौंस्येभिः च भूवन् ॥२॥
रुद्रस्य ये मीळ्हुषः संति पुत्राः यान् चो॰ नु दाधृविः भरध्यै विदे हि
माता महः मही सा सा इत् पृश्निः सुऽभ्वे गर्भं आ अधात् ॥३॥
न ये ईषंते जनुषः अया नु अंतः॰ संतः अवद्यानि पुनानाः निः

यद्दुह्रे शुचयोऽनु जोषमनु श्रिया तन्वमुक्षमाणाः ॥४॥ मक्षू
न येषु दोहसे चिदया आ नाम धृष्णु मारुतं दधानाः । न ये
स्तौना अयासो मह्ना नू चित्सुदानुरव यासदुग्रान् ॥५॥७॥ त
इदुग्राः शवसा धृष्णुषेणा उभे युजंत रोदसी सुमेके । अध
स्मैषु रोदसी स्वशोचिरामवत्सु तस्थौ न रोकः ॥६॥ अनेनो
वो मरुतो यामो अस्त्वनश्वश्चिद्यमजत्यरथीः । अनवसो अ-
नभीशू रजस्तूर्वि रोदसी पथ्या याति साधन् ॥७॥ नास्य
वर्ता न तरुता न्वस्ति मरुतो यमवथ वाजसातौ । तोके वा
गोषु तनये यमप्सु स व्रजं दर्ता पार्ये अध द्योः ॥८॥ प्र चि-
त्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वं । ये सहांसि
सहसा सहंते रेजते अग्ने पृथिवी मखेभ्यः ॥९॥ त्विषीमंतो
अध्वरस्येव दिद्युत्तृषुच्यवसो जुह्वो३ नाग्नेः । अर्चत्रयो धुनयो
न वीरा भ्राजज्जन्मानो मरुतो अधृष्टाः ॥१०॥ तं वृधंतं मारुतं
भ्राजदृष्टिं रुद्रस्य सूनुं हवसा विवासे । दिवः शर्धाय शुचयो
मनीषा गिरयो नाप उग्रा अस्पृध्रन् ॥११॥८॥

---

॥ ६७ ॥ १–११ भरद्वाजो बार्हस्पत्यः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६७॥ विश्वेषां वः सतां ज्येष्ठतमा गीर्भिर्मित्रावरुणा
वावृधध्यै । सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ असमा बा-
हुभिः स्वैः ॥१॥ इयं मद्वां प्र स्तृणीते मनीषोप प्रिया नमसा
बर्हिरच्छ । यंतं नो मित्रावरुणावधृष्टं छर्दिर्यद्वां वरूथ्यं सु-
दानू ॥२॥ आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा
हूयमाना । सं यावप्नःस्थो अपसेव जनाञ्छ्रुधीयतश्चिद्यत-
थो महित्वा ॥३॥ अश्वा न या वाजिना पूतबंधू ऋता यद्ग-
र्भमदितिर्भरध्यै । प्र या महि महांता जायमाना घोरा मर्ताय

यत् दुहे शुचयः अनु जोषं अनु श्रिया तन्वं उक्षमाणाः ॥४॥ मक्षु न
येषु दोहसे चित् अयाः आ नाम धृष्णु मारुतं दधानाः न ये स्तौनाः
अयासः मह्ना नु चित् सुऽदानुः अव यासत् उग्रान् ॥५॥७॥ ते इत्
उग्राः शवसा धृष्णुऽसेनाः उभे युजंत रोदसी सुऽमेके॰ अध स्म
एषु रोदसी स्वऽशोचिः आ अमवत्ऽसु तस्थौ न रोकः ॥६॥ अ-
नेनः वः मरुतः यामः अस्तु अनश्वः चित् यं अजति अरथीः अन-
वसः अनभीशुः रजःऽतूः वि रोदसी पथ्याः याति साधन् ॥७॥ न
अस्य वर्ता न तरुता नु अस्ति मरुतः यं अवथ वाजऽसातौ तोके
वा गोषु तनये यं अप्ऽसु सः व्रजं दर्ता पार्ये अध द्योः ॥८॥ प्र चित्रं
अर्कं गृणते तुराय मारुताय स्वऽतवसे भरध्वं ये सहांसि सहसा
सहंते रेजते अग्ने पृथिवी मखेभ्यः ॥९॥ त्विषिऽमंतः अध्वरस्यऽइव
दिद्युत् तृषुऽच्यवसः जुह्वः न अग्नेः अर्चत्रयः धुनयः न वीराः भ्रा-
जत्ऽजन्मानः मरुतः अधृष्टाः ॥१०॥ तं वृधंतं मारुतं भ्राजत्ऽऋष्टिं
रुद्रस्य सूनुं हवसा आ विवासे दिवः शर्धाय शुचयः मनीषाः गि-
रयः न आपः उग्राः अस्पृध्रन् ॥११॥८॥

---

॥६७॥ विश्वेषां वः सतां ज्येष्ठऽतमा गीःऽभिः मित्रावरुणा
ववृधध्यै सं या रश्माऽइव यमतुः यमिष्ठा द्वा जनान् असमा बा-
हुऽभिः स्वैः ॥१॥ इयं मत् वां प्र स्तृणीते मनीषा उप प्रिया नमसा
बर्हिः अच्छ यंतं नः मित्रावरुणौ अधृष्टं छर्दिः यत् वां वरूथ्यं सु-
ऽदानू॰ ॥२॥ आ यातं मित्रावरुणा सुऽशस्ति उप प्रिया नमसा
हूयमाना सं यौ अप्नःऽस्थः अपसाऽइव जनान् श्रुधिऽयतः चित्
यतथः महिऽत्वा ॥३॥ अश्वा न या वाजिना पूतऽबंधू॰ ऋता यत्
गर्भं अदितिः भरध्यै प्र या महि महांता जायमाना घोरा मर्ताय

रिपवे नि दीधः ॥४॥ विश्वे यद्वां मंहना मंदमानाः क्षत्रं देवासो
अदधुः सजोषाः । परि यद्भूथो रोदसी चिदुर्वी संति स्पशो अ-
दब्धासो अमूराः ॥५॥९॥ ता हि क्षत्रं धारयेथे अनु द्यून्दृंहेथे सा-
नुमुपमादिव द्योः । दृळ्हो नक्षत्र उत विश्वदेवो भूमिमातान्द्यां
धासिनायोः ॥६॥ ता विग्रं धैथे जठरं पृणध्या आ यत्सद्म सभृ-
तयः पृणंति । न मृष्यंते युवतयोऽवाता वि यत्पयो विश्वजिन्वा
भरंते ॥७॥ ता जिह्वया सदमेदं सुमेधा आ यद्वां सत्यो अरति-
र्ऋते भूत् । तद्वां महित्वं घृतान्नावस्तु युवं दाशुषे वि चयिष्टमंहः
॥८॥ प्र यद्वां मित्रावरुणा स्पूर्धन्प्रिया धाम युवधिता मिनंति ।
न ये देवास ओहसा न मर्ता अयज्ञसाचो अप्यो न पुत्राः ॥९॥
वि यद्वाचं कीस्तासो भरंते शंसंति के चिन्निविदो मनानाः ।
आद्वां ब्रवाम सत्यान्युक्था नकिर्देवेभिर्यतथो महित्वा ॥१०॥
अवोरित्था वां छर्दिषो अभिष्टौ युवोर्मित्रावरुणावस्कृधोयु ।
अनु यद्गावः स्फुरानृजिप्यं धृष्णुं यद्रणे वृषणं युनजन् ॥११॥१०॥

---

॥ ६८ ॥ १-११ भरद्वाजो बार्हस्पत्यः ॥ इंद्रावरुणौ ॥ १-८, ११ त्रिष्टुप् । ९, १०
जगती ॥

॥ ६८ ॥ श्रुष्टी वां यज्ञ उद्यतः सजोषा मनुष्वद्वृक्तबर्हिषो
यजध्यै । आ य इंद्रावरुणाविषे अद्य महे सुम्नाय मह आव-
वर्तत ॥१॥ ता हि श्रेष्ठा देवताता तुजा शूराणां शविष्ठा ता
हि भूतं । मघोनां मंहिष्ठा तुविशुष्म ऋतेन वृत्रतुरा सर्वसेना
॥२॥ ता गृणीहि नमस्येभिः शूषैः सुम्नेभिरिंद्रावरुणा चकाना ।
वज्रेणान्यः शवसा हंति वृत्रं सिषक्त्यन्यो वृजनेषु विप्रः ॥३॥
ग्नाश्च यन्नरश्च वावृधंत विश्वे देवासो नरां स्वगूर्ताः । प्रैभ्य
इंद्रावरुणा महित्वा द्यौश्च पृथिवि भूतमुर्वी ॥४॥ स इत्सु-

रिपवे नि दीधः०॥४॥ विश्वे यत् वां मंहना मंदमानाः क्षत्रं देवासः
अदधुः सऽजोषाः परि यत् भूथः रोदसी चित् उर्वी संति स्पशः
अदब्धासः अमूराः॥५॥९॥ ता हि क्षत्रं धारयेथे अनु द्यून् दृंहेथे
सानुं उपमात्ऽइव द्योः दृळ्हः नक्षत्रः उत विश्वऽदेवः भूमिं आ
अतान् द्यां धासिना आयोः॥६॥ ता विग्रं धैथे जठरं पृणध्यै आ
यत् सद्म सऽभृतयः पृणंति न मृष्यंते युवतयः अवाताः वि यत्
पयः विश्वऽजिन्वा भरंते॥७॥ ता जिह्वया सदं आ इदं सुऽमेधाः
आ यत् वां सत्यः अरतिः ऋते भूत् तत् वां महिऽत्वं घृतऽअन्नौ
अस्तु युवं दाशुषे वि चयिष्टं अंहः॥८॥ प्र यत् वां मित्रावरुणा
स्पूर्धन् प्रिया धाम युवऽधिता मिनंति न ये देवासः ओहसा न
मर्ताः अयज्ञऽसाचः अप्यः न पुत्राः॥९॥ वि यत् वाचं कीस्तासः
भरंते शंसंति के चित् निऽविदः मनानाः आत् वां ब्रवाम सत्यानि
उक्था नकिः देवेभिः यतथः महिऽत्वा॥१०॥ अवोः इत्था वां छ-
र्दिषः अभिष्टौ युवोः मित्रावरुणौ अस्कृधोयु अनु यत् गावः
स्फुरान् ऋजिप्यं धृष्णुं यत् रणे वृषणं युनजन्॥११॥१०॥

---

॥६८॥ श्रुष्टी वां यज्ञः उतऽयतः सऽजोषाः मनुष्वत् वृक्तऽब-
र्हिषः यजध्यै आ यः इंद्रावरुणौ इषे अद्य महे सुम्नाय महे आऽव-
वर्तत्॥१॥ ता हि श्रेष्ठा देवऽताता तुजा शूराणां शविष्ठा ता हि
भूतं मघोनां मंहिष्ठा तुविऽशुष्मा ऋतेन वृत्रऽतुरा सर्वऽसेना
॥२॥ ता गृणीहि नमस्येभिः शूषैः सुम्नेभिः इंद्रावरुणा चकाना
वज्रेण अन्यः शवसा हंति वृत्रं सिसक्ति अन्यः वृजनेषु विप्रः॥३॥
ग्नाः च यत् नरः च ववृधंत विश्वे देवासः नरां स्वऽगूर्ताः प्र एभ्यः
इंद्रावरुणा महिऽत्वा द्यौः च पृथिवि भूतं उर्वी॥४॥ सः इत् सु-

दानुः स्ववाँ ऋतावेंद्रा यो वां वरुण दाशति त्मन्। इषा
स द्विषस्तरेद्दास्वान्वंसद्रयिं रयिवतश्च जनान् ॥५॥११॥ यं
युवं दाश्वध्वराय देवा रयिं धत्थो वसुमंतं पुरुक्षुं। अस्मे स
इंद्रावरुणावपि ष्यात्प्र यो भनक्ति वनुषामशस्तीः ॥६॥ उत
नः सुत्रात्रो देवगोपाः सूरिभ्य इंद्रावरुणा रयिः ष्यात्। येषां
शुष्मः पृतनासु साह्वान्प्र सद्यो द्युम्ना तिरते ततुरिः ॥७॥ नू
न इंद्रावरुणा गृणाना पृंक्तं रयिं सौश्रवसाय देवा। इत्था
गृणंतो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥८॥ प्र
सम्राजे बृहते मन्म नु प्रियमर्च देवाय वरुणाय सप्रथः।
अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शो-
चिषा ॥९॥ इंद्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं
धृतव्रता। युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति
पीतये ॥१०॥ इंद्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा
वृषेथां। इदं वामंधः परिषिक्तमस्मे आसद्यास्मिन्बर्हिषि
मादयेथां ॥११॥१२॥

॥ ६९ ॥ १–८ भरद्वाजो बार्हस्पत्यः ॥ इंद्राविष्णू ॥ त्रिष्टुप् ॥

॥६९॥ सं वां कर्मणा समिषा हिनोमींद्राविष्णू अपसस्पारे
अस्य। जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयंता ॥१॥
या विश्वासां जनितारा मतीनामिंद्राविष्णू कलशा सोमधा-
ना। प्र वां गिरः शस्यमाना अवंतु प्र स्तोमासो गीयमानासो
अर्कैः ॥२॥ इंद्राविष्णू मदपती मदानामा सोमं यातं द्रविणो
दधाना। सं वामंजंत्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास
उक्थैः ॥३॥ आ वामश्वासो अभिमातिषाह इंद्राविष्णू सध-
मादो वहंतु। जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृ-

ऽदानुः स्वऽवान् ऋतऽवा इंद्रा यः वां वरुणा दाशति त्मन् इषा सः द्विषः तरेत् दास्वान् वंसत् रयिं रयिऽवतः च जनान् ॥ ५ ॥ ११ ॥ यं युवं दाशुऽअध्वराय देवा रयिं धत्थः वसुऽमंतं पुरुऽक्षुं अस्मे इति सः इंद्रावरुणौ अपि स्यात् प्र यः भनक्ति वनुषां अशस्तीः ॥ ६ ॥ उत नः सुऽत्रात्रः देवऽगोपाः सूरिऽभ्यः इंद्रावरुणा रयिः स्यात् येषां शुष्मः पृतनासु सह्वान् प्र सद्यः द्युम्ना तिरते ततुरिः ॥ ७ ॥ नु नः इंद्रावरुणा गृणाना पृंक्तं रयिं सौश्रवसाय देवा इत्था गृणंतः महिनस्य शर्धः अपः न नावा दुःऽइता तरेम ॥ ८ ॥ प्र संऽराजे बृहते मन्म नु प्रियं अर्च देवाय वरुणाय सऽप्रथः अयं यः उर्वी इति महिना महिऽव्रतः क्रत्वा विऽभाति अजरः न शोचिषा ॥ ९ ॥ इंद्रावरुणा सुतऽपौ इमं सुतं सोमं पिबतं मद्यं धृतऽव्रता युवोः रथः अध्वरं देवऽवीतये प्रति स्वसरं उप याति पीतये ॥ १० ॥ इंद्रावरुणा मधुमत्ऽतमस्य वृष्णः सोमस्य वृषणा आ वृषेथां इदं वां अंधः परिऽसिक्तं अस्मे इति आऽसद्य अस्मिन् बर्हिषि मादयेथां ॥ ११ ॥ १२ ॥

---

॥ ६९ ॥ सं वां कर्मणा सं इषा हिनोमि इंद्राविष्णू इति अपसः पारे अस्य जुषेथां यज्ञं द्रविणं च धत्तं अरिष्टैः नः पथिऽभिः पारयंता ॥ १ ॥ या विश्वासां जनितारा मतीनां इंद्राविष्णू इति कलशा सोमऽधाना प्र वां गिरः शस्यमानाः अवंतु प्र स्तोमासः गीयमानासः अर्कैः ॥ २ ॥ इंद्राविष्णू इति मदऽपती इति मदानां आ सोमं यातं द्रविणो इति दधाना सं वां अंजंतु अक्तुऽभिः मतीनां सं स्तोमासः शस्यमानासः उक्थैः ॥ ३ ॥ आ वां अश्वासः अभिमातिऽसहः इंद्राविष्णू इति सधऽमादः वहंतु जुषेथां विश्वा हवना मतीनां उप ब्रह्माणि शृ-

णुतं गिरो मे ॥ ४॥ इंद्राविष्णू तत्पनयाय्यं वां सोमस्य मद उरु चक्रमाथे। अकृणुतमंतरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥ ५॥ इंद्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या। घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानः ॥ ६॥ इंद्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथां। आ वामंधांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥ ७॥ उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः। इंद्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथां ॥ ८ ॥ १३ ॥

---

॥ ७० ॥ १–६ भरद्वाजो बार्हस्पत्यः ॥ द्यावापृथिव्यौ ॥ जगती ॥

॥ ७० ॥ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ १॥ असश्चंती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते। राजंती अस्य भुवनस्य रोदसी अस्मे रेतः सिंचतं यन्मनुर्हितं ॥ २॥ यो वामृजवे क्रमणाय रोदसी मर्तो ददाश धिषणे स साधति। प्र प्रजाभिर्जायते धर्मणस्परि युवोः सिक्ता विषुरूपाणि सव्रता ॥ ३॥ घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा। उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥ ४॥ मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते। दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यं ॥ ५॥ ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा। संरराणे रोदसी विश्वशंभुवा सनिं वाजं रयिमस्मे समिन्वतां ॥ ६ ॥ १४ ॥

णुतं गिरः मे ॥४॥ इंद्राविष्णू' तत् पनयाय्यं वां सोमस्य मदे उरु चक्रमाथे' अकृणुतं अंतरिक्षं वरीयः अप्रथतं जीवसे नः रजांसि ॥५॥ इंद्राविष्णू' हविषा ववृधाना अग्रऽअद्वाना नमसा रातऽहव्या घृतऽआसुती॰ द्रविणं धत्तं अस्मे' समुद्रः स्थः कलशः सोमऽधानः ॥६॥ इंद्राविष्णू' पिबतं मध्वः अस्य सोमस्य दस्रा जठरं पृणेथां आ वां अंधांसि मदिराणि अग्मन् उप ब्रह्माणि शृणुतं हवं मे ॥७॥ उभा जिग्यथुः न परा जयेथे' न परा जिग्ये कतरः चन एनोः इंद्रः च विष्णो' यत् अपस्पृधेथां त्रेधा सहस्रं वि तत् ऐरयेथां ॥ ८ ॥ १३ ॥

---

॥७०॥ घृतऽवती॰ भुवनानां अभिऽश्रिया उर्वी' पृथ्वी' मधुऽदुघे॰ सुऽपेशसा द्यावापृथिवी' वरुणस्य धर्मणा विऽस्कभिते॰ अजरे' भूरिऽरेतसा ॥१॥ असश्चंती' भूरिऽधारे॰ पयस्वती' घृतं दुहाते' सुऽकृते शुचिऽव्रते॰ राजंती अस्य भुवनस्य रोदसी' अस्मे' रेतः सिंचतं यत् मनुःऽहितं ॥२॥ यः वां ऋजवे क्रमणाय रोदसी' मर्तः ददाश धिषणे' सः साधति प्र प्रऽजाभिः जायते धर्मणः परि युवोः सिक्ता विषुऽरूपाणि सऽव्रता ॥३॥ घृतेन द्यावापृथिवी' अभिऽवृते॰ घृतऽश्रिया घृतऽपृचा घृतऽवृधा उर्वी' पृथ्वी' होतृऽवूर्ये पुरःऽहिते॰ ते' इत् विप्राः ईळते सुम्नं इष्टये ॥४॥ मधु नः द्यावापृथिवी' मिमिक्षतां मधुऽश्चुता मधुऽदुघे॰ मधुऽव्रते॰ दधाने' यज्ञं द्रविणं च देवता महि श्रवः वाजं अस्मे' सुऽवीर्यं ॥५॥ ऊर्जं नः द्यौः च पृथिवी च पिन्वतां पिता माता विश्वऽविदा सुऽदंससा संऽरराणे॰ रोदसी' विश्वऽशंभुवा सनिं वाजं रयिं अस्मे' सं इन्वतां ॥ ६ ॥ १४ ॥

॥ ७१ ॥ १–६ भरद्वाजो बार्हस्पत्यः ॥ सविता ॥ १–३ जगती । ४–६ त्रिष्टुप् ॥

॥७१॥ उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुः। घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥१॥ देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने। यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः॥२॥ अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि पाहि नो गयं। हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशंस ईशत ॥३॥ उदु ष्य देवः सविता दमूना हिरण्यपाणिः प्रतिदोषमस्थात्। अयोहनुर्यजतो मंद्रजिह्व आ दाशुषे सुवति भूरि वामं ॥४॥ उदू अयाँ उपवक्तेव बाहू हिरण्यया सविता सुप्रतीका। दिवो रोहांस्यरुहत्पृथिव्या अरीरमत्पतयत्कच्चिदभ्वं ॥५॥ वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः। वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ ६ ॥ १५ ॥

---

॥ ७२ ॥ १–५ भरद्वाजो बार्हस्पत्यः ॥ इंद्रासोमौ ॥ त्रिष्टुप् ॥

॥७२॥ इंद्रासोमा महि तद्वां महित्वं युवं महानि प्रथमानि चक्रथुः। युवं सूर्यं विविदथुर्युवं स्व१र्विश्वा तमांस्यहतं निदश्च ॥१॥ इंद्रासोमा वासयथ उषासमुत्सूर्यं नयथो ज्योतिषा सह। उप द्यां स्कंभथुः स्कंभनेनाप्रथतं पृथिवीं मातरं वि ॥२॥ इंद्रासोमावहिमपः परिष्ठां हथो वृत्रमनु वां द्यौरमन्यत। प्रार्णांस्यैरयतं नदीनामा समुद्राणि पप्रथुः पुरूणि ॥ ३ ॥ इंद्रासोमा पक्वमामास्वंतर्नि गवामिद्दधथुर्वक्षणासु। जगृभथुरनपिनद्धमासु रुशच्चित्रासु जगतीष्वंतः ॥ ४ ॥ इंद्रासोमा युवमंग तरुत्रमपत्यसाचं श्रुत्यं रराथे। युवं शुष्मं नर्यं चर्षणिभ्यः सं विव्यथुः पृतनाषाहमुग्रा ॥ ५ ॥ १६ ॥

॥७१॥ उत् ऊं इति स्यः देवः सविता हिरण्ययो बाहू इति अयंस्त सवनाय सुऽक्रतुः घृतेन पाणी इति अभि प्रुष्णुते मखः युवा सुऽदक्षः रजसः विऽधर्मणि ॥१॥ देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनः च दावने यः विश्वस्य द्विऽपदः यः चतुःऽपदः निऽवेशने प्रऽसवे च असि भूमनः ॥२॥ अदब्धेभिः सवितः पायुऽभिः त्वं शिवेभिः अद्य परि पाहि नः गयं हिरण्यऽजिह्वः सुविताय नव्यसे रक्ष माकिः नः अघऽशंसः ईशत ॥३॥ उत् ऊं इति स्यः देवः सविता दमूनाः हिरण्यऽपाणिः प्रतिऽदोषं अस्थात् अयःऽहनुः यजतः मंद्रऽजिह्वः आ दाशुषे सुवति भूरि वामं ॥४॥ उत् ऊं इति अयान् उपवक्ताऽइव बाहू इति हिरण्यया सविता सुऽप्रतीका दिवः रोहांसि अरुहत् पृथिव्याः अरीरमत् पतयत् कत् चित् अभ्वं ॥५॥ वामं अद्य सवितः वामं ऊं इति श्वः दिवेऽदिवे वामं अस्मभ्यं सावीः वामस्य हि क्षयस्य देव भूरेः अया धिया वामऽभाजः स्याम ॥६॥१५॥

---

॥७२॥ इंद्रासोमा महि तत् वां महिऽत्वं युवं महानि प्रथमानि चक्रथुः युवं सूर्यं विविदथुः युवं स्वः विश्वा तमांसि अहतं निदः च ॥१॥ इंद्रासोमा वासयथः उषसं उत् सूर्यं नयथः ज्योतिषा सह उप द्यां स्कंभथुः स्कंभनेन अप्रथतं पृथिवीं मातरं वि ॥२॥ इंद्रासोमौ अहिं अपः परिऽस्थां हथः वृत्रं अनु वां द्यौः अमन्यत प्र अर्णांसि ऐरयतं नदीनां आ समुद्राणि पप्रथुः पुरूणि ॥३॥ इंद्रासोमा पक्वं आमासु अंतः नि गवां इत् दधथुः वक्षणासु जगृभथुः अनपिऽनद्धं आसु रुशत् चित्रासु जगतीषु अंतः ॥४॥ इंद्रासोमा युवं अंग तरुत्रं अपत्यऽसाचं श्रुत्यं रराथे इति युवं शुष्मं नर्यं चर्षणिऽभ्यः सं विव्यथुः पृतनाऽसहं उग्रा ॥ ५ ॥ १६ ॥

॥ ७३ ॥ १–३ भरद्वाजो बार्हस्पत्यः ॥ बृहस्पतिः ॥ त्रिष्टुप् ॥

॥७३॥ यो अद्रिभित्प्रथमजा ऋतावा बृहस्पतिरांगिरसो हविष्मान्। द्विबर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो रोरवीति ॥१॥ जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार। घ्नन्वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान्पृत्सु साहन् ॥२॥ बृहस्पतिः समजयद्वसूनि महो व्रजान् गोमतो देव एषः। अपः सिषासन्त्स्व१र्प्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥३॥१७॥

---

॥ ७४ ॥ १–४ भरद्वाजो बार्हस्पत्यः ॥ सोमारुद्रौ ॥ त्रिष्टुप् ॥

॥७४॥ सोमारुद्रा धारयेथामसुर्य१ं प्र वामिष्टयोऽरमश्नुवंतु। दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥१॥ सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश। आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि संतु ॥२॥ सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तं। अव स्यतं मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥३॥ तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः। प्र नो मुंचतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमाना ॥४॥१८॥

---

॥ ७५ ॥ १–१९ पायुर्भारद्वाजः ॥ १ वर्म। २ धनुः। ३ ज्या। ४ आर्त्नी। ५ इषुधिः। ६[1] सारथिः। ६[2] रश्मयः। ७ अश्वाः। ८ रथः। ९ रथगोपाः। १० लिंगोक्तदेवताः। ११. १२. १५. १६ इषवः। १३ प्रतोदः। १४ हस्तघ्नः। १७–१९ लिंगोक्तदेवताः संग्रामाशिषः (१७ युद्धभूमिर्ब्रह्मणस्पतिरदितिश्च। १८ कवचसोमवरुणाः। १९ देवा ब्रह्म च) ॥ १–५. ७–९. ११. १४. १८ त्रिष्टुप्। ६. १० जगती। १२. १३. १५. १६. १९ अनुष्टुप्। १७ पंक्तिः ॥

॥७५॥ जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे। अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥१॥ धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो ज-

॥७३॥ यः अद्रिऽभित् प्रथमऽजाः ऋतऽवा बृहस्पतिः आंगिरसः हविष्मान् द्विबर्हऽज्मा प्राघर्मऽसत् पिता नः आ रोदसी वृषभः रोरवीति ॥१॥ जनाय चित् यः ईवते ऊं ऽ लोकं बृहस्पतिः देवऽहूतौ चकार घ्नन् वृत्राणि वि पुरः दर्दरीति जयन् शत्रून् अमित्रान् पृत्ऽसु सहन् ॥२॥ बृहस्पतिः सं अजयत् वसूनि महः व्रजान् गोऽमतः देवः एषः अपः सिसासन् स्वः अप्रतिऽइतः बृहस्पतिः हंति अमित्रं अर्कैः ॥३॥१७॥

---

॥७४॥ सोमारुद्रा धारयेथां असुर्यं प्र वां इष्टयः अरं अश्नुवंतु दमेऽदमे सप्त रत्ना दधाना शं नः भूतं द्विऽपदे शं चतुःऽपदे ॥१॥ सोमारुद्रा वि वृहतं विषूचीं अमीवा या नः गयं आऽविवेश आरे बाधेथां निःऽऋतिं पराचैः अस्मे भद्रा सौश्रवसानि संतु ॥२॥ सोमारुद्रा युवं एतानि अस्मे विश्वा तनूषु भेषजानि धत्तं अव स्यतं मुंचतं यत् नः अस्ति तनूषु बद्धं कृतं एनः अस्मत् ॥३॥ तिग्मऽआयुधौ तिग्मऽहेती॰ सुऽशेवौ सोमारुद्रौ इह सु मृळतं नः प्र नः मुंचतं वरुणस्य पाशात् गोपायतं नः सुऽमनस्यमाना ॥ ४ ॥ १८ ॥

---

॥७५॥ जीमूतस्यऽइव भवति प्रतीकं यत् वर्मी याति सऽमदां उपऽस्थे अनाविद्धया तन्वा जय त्वं सः त्वा वर्मणः महिमा पिपर्तु ॥१॥ धन्वना गाः धन्वना आजिं जयेम धन्वना तीव्राः सऽमदः जयेम धनुः शत्रोः अपऽकामं कृणोति धन्वना सर्वाः प्रऽदिशः ज-

येम ॥ २ ॥ वक्ष्यंतीवेदा गनीगंति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिंक्ते वितताधि धन्वञ्ज्या इयं समने पारयंती ॥ ३ ॥ ते आचरंती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरंती अमित्रान् ॥ ४ ॥ बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य । इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ५ ॥ १९ ॥ रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छंति रश्मयः ॥ ६ ॥ तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयंतः । अवक्रामंतः प्रपदैरमित्रान् क्षिणंति शत्रूँरनपव्ययंतः ॥ ७ ॥ रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म । तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥ ८ ॥ स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवंतो गभीराः । चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ ९ ॥ ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥ १० ॥ २० ॥ सुपर्णं वस्ते मृगो अस्या दंतो गोभिः संनद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवंति तत्रास्मभ्यमिषवः शर्म यंसन् ॥ ११ ॥ ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः । सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥ १२ ॥ आ जंघंति सान्वेषां जघनाँ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्समत्सु चोदय ॥ १३ ॥ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पु-

येम॥२॥ वक्ष्यंतीऽइव इत् आ गनीगंति कर्णं प्रियं सखायं परि-
ऽसस्वजाना योषाऽइव शिंक्ते विऽतता अधि धन्वन् ज्या इयं
समने पारयंती॥३॥ ते आऽचरंती॰ समनाऽइव योषा माता-
ऽइव पुत्रं बिभृतां उपऽस्थे अप शत्रून् विध्यतां संऽविदाने॰
आर्त्नी इमे विऽस्फुरंती॰ अमित्रान्॥४॥ बह्वीनां पिता बहुः
अस्य पुत्रः चिश्चा कृणोति समना अवऽगत्य इषुऽधिः संकाः पृ-
तनाः च सर्वाः पृष्ठे निऽनद्धः जयति प्रऽसूतः॥५॥१९॥ रथे तिष्ठन्
नयति वाजिनः पुरः यत्रऽयत्र कामयते सुऽसारथिः अभीशूनां
महिमानं पनायत मनः पश्चात् अनु यच्छंति रश्मयः॥६॥ तीव्रान्
घोषान् कृण्वते वृषऽपाणयः अश्वाः रथेभिः सह वाजयंतः अव-
ऽक्रामंतः प्रऽपदैः अमित्रान् क्षिणंति शत्रून् अनपऽव्ययंतः॥७॥
रथऽवाहनं हविः अस्य नाम यत्र आयुधं निऽहितं अस्य वर्म तत्र
रथं उप शग्मं सदेम विश्वाहा वयं सुऽमनस्यमानाः॥८॥ स्वा-
दुऽसंसदः पितरः वयःऽधाः कृच्छ्रेऽश्रितः शक्तिऽवंतः गभीराः
चित्रऽसेनाः इषुऽबलाः अमृध्राः सतःऽवीराः उरवः व्रातऽसहाः
॥९॥ ब्राह्मणासः पितरः सोम्यासः शिवे नः द्यावापृथिवी अने-
हसा पूषा नः पातु दुःऽइतात् ऋतऽवृधः रक्ष माकिः नः अघ-
ऽशंसः ईशत॥१०॥२०॥ सुऽपर्णं वस्ते मृगः अस्याः दंतः गोभिः
संऽनद्धा पतति प्रऽसूता यत्र नरः सं च वि च द्रवंति तत्र अस्मभ्यं
इषवः शर्म यंसन्॥११॥ ऋजीते परि वृङ्धि नः अश्मा भवतु नः तनूः
सोमः अधि ब्रवीतु नः अदितिः शर्म यच्छतु॥१२॥ आ जंघंति सानु
एषां जघनान् उप जिघ्नते अश्वऽअजनि प्रऽचेतसः अश्वान्
समत्ऽसु चोदय॥१३॥ अहिःऽइव भोगैः परि एति बाहुं ज्या-
याः हेतिं परिऽबाधमानः हस्तऽघ्नः विश्वा वयुनानि विद्वान् पु-

मान्युर्मांसं परि पातु विश्वतः ॥ १४ ॥ आलाक्ता या रुरुशीर्ष्ण्यथो यस्या अयो मुखं । इदं पर्जन्यरेतस इष्वै देव्यै बृहन्नमः ॥ १५ ॥ २१ ॥ अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते । गच्छामित्रान्प्र पद्यस्व मामीषां कं चनोच्छिषः ॥ १६ ॥ यत्र बाणाः संपतंति कुमारा विशिखा इव । तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ १७ ॥ मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्तां । उरोर्वरीयो वरुणस्ते कृणोतु जयंतं त्वानु देवा मदंतु ॥ १८ ॥ यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति । देवास्तं सर्वे धूर्वंतु ब्रह्म वर्म ममांतरं ॥ १९ ॥ २२ ॥ ६ ॥ ६ ॥

॥ इति षष्ठं मंडलं समाप्तं ॥

---

मान् पुमांसं परि पातु विश्वतः ॥ १४ ॥ आलेऽअक्ता या रुरुऽशीर्ष्णी अथो यस्याः अयः मुखं इदं पर्जन्यऽरेतसे इष्वै देव्यै बृहत् नमः ॥ १५ ॥ २१ ॥ अवऽसृष्टा परा पत शरव्ये ब्रह्मऽसंशिते गच्छ अमित्रान् प्र पद्यस्व मा अमीषां कं चन उत् शिषः ॥ १६ ॥ यत्र बाणाः संऽपतंति कुमाराः विशिखाःऽइव तत्र नः ब्रह्मणः पतिः अदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ १७ ॥ मर्माणि ते वर्मणा छादयामि सोमः त्वा राजा अमृतेन अनु वस्तां उरोः वरीयः वरुणः ते कृणोतु जयंतं त्वा अनु देवाः मदंतु ॥ १८ ॥ यः नः स्वः अरणः यः च निष्ट्यः जिघांसति देवाः तं सर्वे धूर्वंतु ब्रह्म वर्म मम अंतरं ॥ १९ ॥ २२ ॥ ६ ॥ ६ ॥

॥ इति षष्ठं मंडलं समाप्तं ॥

---

**Bellows.** Outline Dictionary for the use of Missionaries, Explorers, and Students of Language. By Max Müller, M.A., Taylorian Professor in the University of Oxford. With an Introduction on the proper use of the ordinary English Alphabet in transcribing Foreign Languages. The Vocabulary compiled by John Bellows. Crown 8vo. limp morocco, pp. xxxi. and 368. 7*s*. 6*d*.

**Benfey.** A Practical Grammar of the Sanskrit Language, for the use of Early Students. By Theodor Benfey, Professor of Sanskrit in the University of Göttingen. Second, revised and enlarged, edition. Royal 8vo. pp. viii. and 296, cloth. 10*s*. 6*d*.

**Benfey.** A Grammar of the Language of the Vedas. By Dr. Theodor Benfey. In 1 vol. 8vo. of about 650 pages. [*In preparation.*

**Bigandet.** The Life or Legend of Gaudama, the Buddha of the Burmese, with Annotations. The ways to Neibban, and Notice on the Phongyies, or Burmese Monks. By the Right Reverend P. Bigandet, Bishop of Ramatha, Vicar Apostolic of Ava and Pegu. 8vo., pp. xi., 538, v., sd. 1*l*. 11*s*. 6*d*.

**Brown.** Sanskrit Prosody and Numerical Symbols Explained. By Charles Philip Brown, Author of the Telugu Dictionary, Grammar, etc., Professor of Telugu in the University of London. Demy 8vo. pp. 64, cloth. 3*s*. 6*d*.

**Burnell.** The Sâmavidhânabrâhmana (being the Third Brâhmana) of the Sâma-Veda. Edited, together with the Commentary of Sâyana, an English Translation, Introduction, and Index of Words. By A. C. Burnell. Vol. I., Text and Commentary, with Introduction. 8vo. cloth, pp. xxxviii. and 104. 12*s*. 6*d*.

**Burnell.** The Vamçabrâhmana (being the Eighth Brâhmana) of the Sâma-Veda. Edited, together with the Commentary of Sâyana, a Preface and Index of Words. By A. C. Burnell. 8vo. sewed, pp. xliii., 12, and xii., with 2 coloured plates. 10*s*. 6*d*.

**Burnell.** The Devattādhyāyabrāhmana (being the Fifth Brâhmana) of the Sâma-Veda. The Sanskrit Text edited, with the Commentary of Sâyana, an Index of Words, etc. By A. C. Burnell. 8vo. and Translation pp. 34. 5*s*.

**Caldwell.** A Comparative Grammar of the Dravidian, or South Indian Family of Languages. By the Rev. R. Caldwell, D.D., LL.D., etc. A Second corrected and enlarged Edition. 8vo. pp. 804, cloth. 28*s*.

**Childers.** A Dictionary of the Pali Language. By R. C. Childers, Professor of Pali and Buddhist Literature at University College, London. The English Alphabetical System is followed, and the Pali is Romanised throughout. Imperial 8vo. double columns, pp. xxii. and 622, cloth. 3*l*. 3*s*.

**Colebrooke.** The Life and Miscellaneous Essays of Henry Thomas Colebrooke. The Biography by his Son, Sir T. E. Colebrooke, Bart., M.P. The Essays edited by Professor Cowell. In 3 vols. Vol. I. The Life. With Portrait and Map. Demy 8vo. cloth, pp. xii. and 492. 14*s*. Vols. II. and III. The Essays. A New Edition, with Notes by Professor E. B. Cowell. Demy 8vo. cloth, pp. xvi.-534, and x.-520. 1*l*. 8*s*.

**Cowell.** A short Introduction to the Ordinary Prakrit of the Sanskrit Dramas. With a list of Common Irregular Prakrit Words. By Professor E. B. Cowell. Crown 8vo. limp cloth, pp. 40. 1875. 3*s*. 6*d*.

**Cowell and Eggeling.** Catalogue of Buddhist Sanskrit Manuscripts in the Possession of the Royal Asiatic Society (Hodgson Collection). By Professors E. B. Cowell and J. Eggeling. 8vo. sd. pp. 56. 2*s*. 6*d*.

**Dathavansa, The;** or, The History of the Tooth-Relic of Gotama Buddha. The Pali Text, Translation, and Notes. By Sir R. M. Coomâra Swâmy. Demy 8vo. pp. 174, cloth. 10*s*. 6*d*. English Translation only, with Notes. pp. 100. 6*s*.

**Eitel.** Three Lectures on Buddhism. By the Rev. Ernest J. Eitel. Second Edition. Demy 8vo. pp. 130, sewed. 5*s*.

**Eitel.** Handbook for the Student of Chinese Buddhism. By the Rev. E. J. Eitel, of the London Missionary Society. Crown 8vo. pp. 232, cloth 18*s*.

